कताव्यापिका या घटत्वपटत्वद्वित्वैतत्त्रित्वनिष्ठा घटपटोभयवत् भूतल-मिति प्रतीतिसिद्धघटपटोभयत्वावच्छिन्नाधिकरणतानिरूपकतावच्छेदकता-पर्याप्त्यवच्छेदकता तत्पर्याप्तिका या तादृशत्रितयनिष्ठा निरूपकताव-च्छेदकता तत्का या तादृशोभयनिष्ठाधेयत्वरूपा निरूपकता तन्निरूपिताधि-करणता घटपटोभयाधिकरणे वर्तते इति न तादृशोभयत्वावच्छिन्नाभावस्य केवलान्वयित्वम् । घटत्वेन घटपटोभयं नास्तीति प्रतीतिविषयाभावप्रति-योगितावच्छेदकतापर्याप्त्यवच्छेदकतायाः तादृशत्रित्वघटत्वनिष्ठतद्व्य-क्तित्वयोः सत्त्वेन घटत्वेन घटपटोभयवदिति प्रतीतिविरहेण तादृशावच्छेद-कताव्यापकावच्छेदकतापर्याप्तिकावच्छेदकताकनिरूपकताया अप्रसिद्धत्वेन विरोधिनोऽभावात् तादृशाभावस्य केवलान्वयित्वमिति ।

'एकदेशिमतानुयायितया' इति । अथ विषयताया विषयस्वरूप-त्वेऽपि घटादिरूपविषयताया विषयतात्वेनैव स्वरूपसंबन्धेन घटादिवृत्तित्वं, न घटत्वादिनेति घटत्वादिना विषयत्वं नास्तीति प्रतीतिविषयाभाव इव समवायित्वेन स्वरूपसंबन्धेन वाच्यत्वाभावस्य घटादौ आवश्यकत्वात् तादृशाभावस्य लक्षणघटकत्वसंभवे मूलस्य मतविशेषपरतया संगमनमनु-चितम् । न च तथापि मूलोक्तं व्यधिकरणधर्मावच्छिन्नप्रतियोगिताकत्वं तस्य न संभवति, समवायित्वस्य प्रतियोगितासमानाधिकरणत्वादिति वाच्यम् । प्रतियोग्यंशे प्रकारीभूतधर्मावच्छिन्ना या प्रतियोगिनिष्ठाधेयता तदनवच्छेदकत्वस्य तादृशधर्मावच्छिन्ननिरूपकताकाधेयत्वाभावस्य वा प्रति-योगिताव्यधिकरणत्वपदार्थत्वात् समवायित्वादौ तादृशविषयतात्वावच्छि-न्नाधेयतानवच्छेदकत्वस्य तादृशविषयतात्वावच्छिन्ननिरूपकताकाधेयत्वा-भावस्य च सत्त्वात् तदवच्छिन्नाभावस्य व्यधिकरणधर्मावच्छिन्नप्रतियोगि-ताकत्वाक्षतेरिति चेन्न; अथेत्यादिग्रन्थस्य कूटघटितलक्षणाभिप्रायकतया व्याख्यातत्वात् तत्र च साध्याभावे समानाधिकरणधर्मावच्छिन्नाभावभिन्न-त्वविशेषणस्य आवश्यकतया समवायितया वाच्यत्वाभावस्य विषयताया विषयस्वरूपत्वे समानाधिकरणधर्मावच्छिन्नप्रतियोगिताकतया तदन्य-त्वविरहात् । न च तत्रापि समानाधिकरणधर्मे साध्यतावच्छेदकव्यापक-

**त्वविशेषणस्यावश्यकतया तस्यापि लक्षणघटकत्वं संभवतीति वाच्यम् । समामाधिकरणधर्मावच्छिन्नाभावीयप्रतियोगिताभेदस्य साध्याभावीयप्रतियोगितायां निवेशकल्पे तदना[1]वश्यकत्वात् ।।**

दीधितिः

प्रमेयसाध्यके च भावत्वेन अभावानामभावत्वेन भावानां वह्नित्वेन निर्वह्नौ अवृत्तिमात्रवृत्तिगगनत्वादिना विरुद्धघटत्व--पटत्वाभ्यां च प्रमेयमात्रस्याभावः सुलभः ।।

इति व्यधिकरणधर्मावच्छिन्नाभावावतरणम्

## गादाधरी

(५) **प्रमेयसाध्यकस्थले साध्याभावप्रसिद्ध्युपपादनम् ।।**

**ननु वाच्यत्वादिसाध्यकस्थले समवायित्वरूपव्यधिकरण-धर्मावच्छिन्नसाध्याभावप्रसिद्धेः संभवेऽपि प्रमेयत्वादिना प्रमेय-सामान्यसाध्यकस्थले साध्याभावाप्रसिद्धिर्दुवारैव, प्रमेयसामान्या-वृत्तिधर्मस्याप्रसिद्ध्या व्यधिकरणधर्मावच्छिन्नप्रतियोगिताकस्यापि तस्य असंभवादित्यत आह--**[2]प्रमेयसाध्यके चेति । **भावत्वेनेति । अभावत्वेनेति । अभावानां भावानामित्युभयत्रैवाभाव इत्य-**

[1] सत्तावान् जातेरित्यादौ विशिष्टसत्तात्वावच्छिन्नाभावघटितकूटाधिकरण-समवेतत्वाप्रसिद्ध्या प्रसक्ताव्याप्तेः साध्याभावप्रतियोगितायां तादृशप्रतियोगिता-भेदनिवेशेनैव वारणात् समानाधिकरणधर्मे तादृशविशेषणमनावश्यकमिति भावः--स्व.

[2] संबन्धसामान्येन यत्र प्रमेयसामान्यस्य साध्यता तत्रैवाभावप्रसिद्ध्यर्थमिदं न तु स्वरूपादिसंबन्धमात्रेण साध्यतास्थले, तथा सति 'वह्नित्वेन निर्वह्नौ' इत्यस्यासाङ्ग-त्यापत्तेः, साध्यतावच्छेदकतादृशसंबन्धावच्छिन्नप्रतियोगिताकप्रमेयसामान्याभावस्य

**ग्रिमस्य संबन्धः । अभावत्वभावत्वाभ्यां भावाभावयोरभावौ समनियततया अभिन्नाविति तत्प्रतियोगितात्वेन प्रमेयत्वादि-समनैयत्यमित्येतादृशाभावोऽपि कूटघटनया परिष्करणीयसाध्या-भाववदवृत्तित्वरूपप्रथमलक्षणघटको भविष्यतीत्यभिप्रायः । न च यदभावीयप्रतियोगितात्वेन साध्यतावच्छेदकसमनैयत्यमिति विवक्षणे वाच्यत्वादिसाध्यके वह्नयादिसाध्यके च तादृशाभावा-प्रसिद्धिः, निखिलव्यधिकरणधर्मावच्छिन्नाभावानां समनियतत्वे-नाभिन्नतया घटादेरपि तथाविधवाच्यत्वाभावप्रतियोगित्वात्, किंचिद्विशिष्टस्वाभावादेरपि वह्न्याद्यभावप्रतियोगित्वात् इति तत्तत्प्रतियोगितात्वेन समनैयत्यं विवक्षणीयमिति कथमुक्ता-भावस्य लक्षणघटकतेति वाच्यम्, समनैयत्यशरीरे व्यापकतायाः तदभावप्रतियोगितात्वावच्छिन्नाया व्याप्यतायाश्च विशेषरूपा-वच्छिन्नायाः निवेशनेनानुपपत्त्यभावात् ।**

वह्निमत्यपि प्रसिद्धेः संयोगादिना साध्यत्वे तु तादृशसंबन्धावच्छिन्नप्रमेयत्वावच्छिन्नप्रति-योगिताकप्रमेयाभावस्यैव गुणादौ प्रसिद्धेः वह्नित्वेनेत्यस्यासाङ्गत्यापत्तेः । न च संयोगेन प्रमेयसामान्यसाध्यकद्रव्यत्वादिहेतुकस्थले एतादृशसंबन्धावच्छिन्नाभावस्य गुणादौ प्रसिद्धावपि कूटघटितलक्षणे सत्तावान् जातेरित्यादावव्याप्तिवारणाय उपात्तस्याभावे हेतुसामानाधिकरण्यविशेषणस्य तत्रासत्त्वात् वह्नित्वेनाद्युक्तिरिति वाच्यम्, तथासति गुणत्वेन तादृशसंबन्धावच्छिन्नप्रतियोगिताकप्रमेयसामान्याभावस्य सर्वत्र प्रसिद्धत्वात् तत्परित्यागे बीजाभावः, हेतुसामानाधिकरण्यार्थमभावत्वेन भावाभावप्रसिद्धिकथनेऽपि भावत्वेनाभावाभावकथनेन संदर्भविरोधाच्च संयोगेनाभावाभावस्यैव केवलान्वयि-त्वात् । इदमवधेयं संबन्धसामान्येन साध्यताभिप्रायेऽपि ईश्वरीयज्ञानत्वहेतुकस्थलेऽपि संबन्धसामान्येनाभावस्य हेतुसामानाधिकरण्यासंभवात् विषयितासंबन्धेन साध्य-तानुसरणं 'विरुद्धे' त्यवतरणे संदर्भविरुद्धमिति संयोगसाध्यतावच्छेदकस्थलाभिप्राय-कत्वमेव पूर्वाभावानां भट्टाचार्याभिमतं गुणत्वेन प्रमेयसामान्याभावस्य यादृच्छिकमन-भिधानं भावत्वेनाभावाभावप्रदर्शनं तु अनुपदं वक्ष्यमाणाभावाभावत्वेनाभावाभाव-सजातीयतयेति ।—रा.

**ननु साध्यनिष्ठान्योन्याभावप्रतियोगितानवच्छेदकत्वरूप-व्यापकता [1]चेत्समनैयत्यशरीरे निवेश्यते तदा व्यधिकरणधर्मावच्छिन्नयोर्भावाभाववृत्तिप्रतियोगित्वयोः द्वयोरेव प्रत्येकं प्रमेय-निष्ठान्योन्याभावप्रतियोगितावच्छेदकतया नोक्ताभावस्य साध्य-तावच्छेदकसमनियतप्रतियोगिताकत्वमित्यतः अभावान्तरमाह-** वह्नित्वेनेति । प्रमेयमात्रस्य अभाव **इत्यग्रेतनेनान्वयः । वह्नित्वेन प्रमेयं नास्तीति प्रतीत्या प्रमेयसामान्य एव वह्नित्वावच्छिन्नप्रति-योगित्वावगाहनात् प्रमेयत्वव्यापिकैव तादृशाभावीयवह्नित्वा-वच्छिन्नप्रतियोगितेति भावः। यदि च--तत्र वह्निर्नास्तीति प्रतीति-सिद्धवह्निमात्रनिष्ठप्रतियोगितैव प्रमेयत्वसामान्याधिकरण्येन भासत इत्युपेयते । युक्तं चैतत्; अन्यथा प्रमेयसामान्यस्यैव तत्प्रतियोगितया भानोपगमे वह्निः नास्तीत्यादावपि तादृशप्रतीति-सिद्धनिखिलप्रमेयनिष्ठप्रतियोगिताया वह्नित्वादिविशेषितप्रति-योगिवृत्तित्वेन भानोपगमसंभवात् समानाधिकरणधर्मावच्छिन्न-वह्नित्वादिसमनियतप्रतियोगित्वाप्रसिद्ध्या वह्निभिन्नत्वादिना वह्न्याद्यभावीयवह्निमात्रनिष्ठप्रतियोगितामादाय वह्निमान् प्रमेयत्वादित्यादावतिव्याप्त्यापत्तेः इत्युच्यते ? तदा तादृशाभावस्य नोक्तरूपतेत्याशङ्क्याभावान्तरम् अनुसरति--**अवृत्तिमात्रेति । **[2]गगनं नास्तीत्यत्र गगनत्वसामानाधिकरण्येन या गगनत्वाव-च्छिन्नप्रतियोगिता प्रतीयते सैव गगनत्वेन गगनभिन्नं नास्तीत्यादौ**

[1] चेत्कदाचित् समनयत्यशरीरे--अ.

[2] गगनत्वेन प्रमेयं नास्तीति प्रतीतिसिद्धाभावप्रतियोगितायाः निखिलप्रमेय-वृत्तित्वे युक्तिमाह 'गगनं नास्ति' इत्यादिना--रा.

गगनभिन्नत्वादिसामानाधिकरण्येन प्रतीयते, अवच्छेदकैक्ये असति बाधके प्रतियोगितायाः अप्यैक्यस्वीकारात्, गगनभिन्ननिष्ठप्रतियोगिताया गगनवृत्तित्वेऽपि गगनत्वरूपप्रतियोगितावच्छेदकविशिष्टप्रतियोगिनोऽवृत्तित्वेन गगनत्वेन गगनभिन्नाभावस्य केवलान्वयित्वोपपत्तेः। [1]वह्निनत्वाद्यवच्छिन्नघटादिनिष्ठप्रतियोगितायाश्च वह्निनिष्ठतादृशप्रतियोगित्वाभेदे वह्नचादिमति वह्निनत्वादिना घटाद्यभावसत्त्वानुपपत्त्या[2] उक्तरीत्या एकप्रतियोगितापत्त्यसंभवः, एवं च गगनत्वावच्छिन्नैव प्रमेयत्वसमनियतप्रतियोगिता प्रसिद्ध्यतीति भावः। उक्तविशेषलाभायैव अवृत्तिमात्रवृत्तित्वकीर्तनम्।

नन्वेवमपि यत्र विषयितासंबन्धेन प्रमेयसामान्यं साध्यम् ईश्वरज्ञानत्वादिकं हेतुः तत्र, सत्तावान् जातेरित्यादौ साध्याभावकूटवति हेतुतावच्छेदकसंबन्धेन वृत्त्यप्रसिद्ध्या अव्याप्तेर्वारणायोपादेयसाधनसामानाधिकरण्यरूपविशेषणाक्रान्तसाध्यतावच्छेदकसमनियतसाध्यतावच्छेदकसंबन्धावच्छिन्नप्रतियोगिताकाभावाप्रसिद्धिः गगनादेरपि विषयितासंबन्धेन ईश्वरज्ञानादि संबद्धत्वात् तादृशसंबन्धेन गगनत्वादिना प्रमेयसामान्याभावस्य साधनसामानाधिकरण्यासंभवात् इत्यतः अभावान्तरमाह—विरुद्धेति। येन संबन्धेन घटत्वपटत्वाद्योर्विरोधः, तत्संबन्धावच्छिन्नतदुभयनिष्ठप्रतियोगितावच्छेदकताकप्रमेयसामान्याभाव इत्यर्थः। प्रतियोगितावच्छेदकतावच्छेदकोभयत्वविशिष्टघटत्वपटत्वाद्यवच्छिन्नप्रतियोगिनोऽप्रसिद्ध्या विरोधिविरहेणाभावस्य केवलान्वयिते-

[1] वह्नित्वेन प्रतियोगितायाः निखिलप्रमेयवृत्तित्वे बाधकमाह 'वह्नित्वावच्छिन्नेति'—रा. [2] 'असंभव' इत्यनेनान्वयः—रा.

**त्यवधेयम् । इदमुपलक्षणम्——व्यधिकरणधर्मावच्छिन्नाभाववादिनां प्रतियोगितावच्छेदकतावच्छेदकरूपेणेव तादृशसंबन्धेनाप्यवच्छेदकस्य वृत्तिमत्ताया अवच्छेदकतायामतन्त्रत्वात् समवायादिसंबन्धेन गगनाद्यवच्छिन्नप्रमेयसामान्याभावस्यापि सौलभ्यं बोध्यम् । अत्यन्ताभावस्येव अन्योन्याभावस्यापि व्यधिकरणधर्मावच्छिन्नप्रतियोगिताकत्वोपगमात् प्रमेयसामान्यस्य यत्र तादात्म्येन साध्यता तत्र घटत्वपटत्वाभ्यां समवायेन गगनादिना वा प्रमेयसामान्यभेदो लक्षणघटकः, प्रतियोगितावच्छेदकावृत्तिसमवायित्वाद्यवच्छिन्नप्रमेयत्वादिना प्रमेयसामान्यभेदो वा तथेत्यवधेयम् ॥**

## इति व्यधिकरणधर्मावच्छिन्नाभावावतरणम्

### कृष्णंभट्टीयम्

'**भावत्वेन**' इति । यद्यपि समवायित्वेन वाच्यत्वाभावस्य वाच्यत्वत्वेन वाच्यत्वभिन्नाभावस्य चैक्यात् क्लृप्ताभावेनैव प्रसिद्धेः तदन्याभावकथनं व्यर्थम् ; तथापि समवायित्वम् आश्रयत्व-सामानाधिकरण्यान्यतरसंबन्धेन समवायवत्त्वं तच्च भावत्वमिति रीत्या अस्यापि क्लृप्ताभावत्वम्; यदि प्रतियोगितैकीकरणेन समवायित्वेन वाच्यत्वाभाव-समवायित्वेन प्रमेयत्वाभावादेः समवायित्वेनासमवाय्यभावतयासमवायित्वेन समवाय्यभावैक्येनापि निर्वाहो ऽस्ति तदा ईदृशायासभयादेव तथोक्तम्, पदार्थविभाजकयोरनयोः विरुद्धत्वस्य सुव्यक्तत्वादिति । '**तत्प्रतियोगितात्वेन**' इति । सामान्याभावप्रतियोगितायाः स्वरूपसंबन्धरूपतामते धूमसामान्याभावस्य लक्षणाघटकत्वप्रसङ्गः । कस्यामपि धूमरूपप्रतियोगितायां धूमत्वसमनैयत्यासंभवात् । अतो भावप्रतियोगितात्वेन साध्यतावच्छेदकसमनैयत्यं निवेश्यम् । तच्च तेन रूपेण भावत्वाभावत्वावच्छिन्नप्रति-

योगितयोरक्षतमिति भावः । एतच्च प्रकृताभिप्रायेण । एकावच्छेदकावच्छिन्नप्रतियोगितात्वेन समनैयत्यादिपक्षे एतदभावस्य लक्षणाघटकत्वात् । '**विशेष**' इति । न च तत्प्रतियोगिताव्यापकत्वमुभयाभावादिकमादाय तद्भङ्गवारणाय साध्यतावच्छेदकवृत्तिधर्मेण प्रवेश्यम्, तथा च निरवच्छिन्नसाध्यतावच्छेदकस्थलीयव्याप्तेः अवच्छिन्नसाध्यतावच्छेदकघटितत्वापात इति वाच्यम्, वैशिष्ट्याद्यनवच्छिन्नप्रतियोगिताया एव तद्घटकत्वात् । यदि च तत्प्रतियोगिताश्रयनिष्ठभेदप्रतियोगितानवच्छेदकत्वरूपव्यापकता प्रवेश्यते, लाघवात्, तदा तुल्यरीत्या साध्यतावच्छेदकव्यापकताप्रवेशं प्रापय्योत्तरग्रन्थमवतारयति—'**ननु**' इति । '**चेत्**' इति । प्रतियोगिताव्यापकत्वस्य भेदघटितत्वेऽपि साध्यतावच्छेदकव्यापकत्वमत्यन्ताभावघटितमुपादीयते तदा न दोष इत्यावेदनाय ।

यत्तु प्रमेयसाध्यके चेति पङ्क्तेः स्वयं वक्ष्यमाणस्वपरसाधारणयावल्लक्षणेषु प्रमेयसाध्यके व्यधिकरणधर्मावच्छिन्नाभावं दर्शयतीत्यवतारणम्, तन्न, वह्नित्वेन प्रमेयसामान्याभाव इत्यस्यासंगतेः । द्वितीयलक्षणे व्यापकतावच्छेदकरूपावच्छिन्नाभावनिवेशात् वह्नित्वस्य व्यापकतानवच्छेदकत्वात् । न च प्रथमलक्षण एव तदुपदर्शनसंगतिः । तत्र समवायित्वेन वाच्यत्वाभावस्यैव संभवात्; 'स्वपरसाधारणयावद्' इत्यस्यासंगतेश्चेति ।

'**तादृशाभावीय**' इति । अन्योन्याभावघटितव्यापकत्वोपादानेऽप्येकधर्मावच्छिन्नत्वेन तत्प्रतियोगिताया ऐक्यान्नाभावाप्रसिद्धिरिति भावः । '[1]वह्निभिन्नत्वादिना' इति । नन्वेतादृशाभावानुसरणं व्यर्थम्; घटत्वादिना वह्न्याद्यभावस्य लक्षणघटकत्वसंभवात्, न च 'अवच्छेदकैक्य' इत्याद्यग्रिमनियमेन घटत्वेन पटाद्यभावप्रतियोगितातो नोक्ताभावप्रतियोगिता भिद्यते घटत्वस्यैकत्वादिति तत्प्रतियोगितायाः पटादिवृत्तित्वेन न साध्यतावच्छेदकीभूतवह्नित्वादिसमनैयत्यमिति न घटत्वेन वह्न्यभावो लक्षणघटक इति वाच्यम् । एकधर्मावच्छिन्नप्रतियोगिता एकैवेति न नियमः ।

[1]बह्निभिन्नत्वेनेति प्रतीकम्—र; वह्निभिन्नत्वादिना इत्येव गदाधरीपाठः—स्व.

घटत्वेन वह्न्यभावघटसामान्याभावप्रतियोगितयोरैक्यप्रसङ्गात् । इष्टापत्तौ च घटवति घटत्वेन वह्न्यभावासत्त्वप्रसङ्गः । न च व्यधिकरणीभूतैकधर्मावच्छिन्नप्रतियोगितानामेवैक्यमिति नियमः व्यधिकरणधर्मावच्छिन्नस्थल एवेति वाच्यम्; तावतापि वह्निभिन्नत्वेन वह्न्यभावस्य न लक्षणघटकतासंभवः । तत्प्रतियोगिताया वह्निभिन्नत्वेन वह्निघटोभयाभावप्रतियोगितैक्यापत्तेः, एकधर्मावच्छिन्नत्वात् । यदि चैवं सति तादृशाभावाप्रसिद्ध्यैव नातिव्याप्तिरित्युच्यते; तदासंभवापत्तिरिति चेन्न, व्यधिकरणीभूतैकधर्मावच्छिन्नसजातीयप्रतियोगिताया एवैक्यम् इति नियमः । 'आस्तां वा उभयाभावप्रतियोगिताया व्यासज्यवृत्तित्वम्' इति **भट्टाचार्ये**णोक्तत्वात्, वह्निभिन्नत्वेन वह्निघटोभयाभावप्रतियोगिता व्यासज्यवृत्तिरिति वह्निभिन्नत्वेन वह्न्यभावप्रतियोगितासाजात्याभावेन भिन्नैव । एवं च घटत्वेन वह्न्यभावमुपेक्ष्य वह्निभिन्नत्वेन वह्न्यभावपर्यन्तानुसरणं युक्तमेव ।

अथवा एकधर्मावच्छिन्नप्रतियोगिताया एकत्वमित्यत्र एकधर्मावच्छिन्नत्वमेकधर्मपर्याप्तावच्छेदकताकत्वं, तथा च स्वावच्छेदकतापर्याप्त्यधिकरणधर्मपर्याप्तावच्छेदकताकप्रतियोगिताया एकत्वमिति नियमनिष्कर्षः । एवं च वह्निभिन्नत्वेन वह्निघटोभयाभावप्रतियोगिता न वह्निभिन्नत्वमात्रेणावच्छिन्ना ; किंतु प्रतियोगिविशेषणेनोभयत्वेनापि इति तद्भेदः उभयत्वानवच्छिन्नप्रतियोगितायामक्षत एव । न चैवं सर्वेष्वपि व्यधिकरणधर्मावच्छिन्नाभावेषु प्रतियोगिविशेषणस्योक्तरीत्या प्रतियोगितावच्छेदकत्वात् सर्वापि तत्प्रतियोगिता नियमतो धर्मद्वयावच्छिन्नैवेति उक्तनियमकरणमसंगतमिति वाच्यम् । वह्निभिन्नत्वादिना उभयाभावस्थल एव प्रतियोग्यंशे प्रकारीभूतस्यावच्छेदकत्वं, न तु व्यधिकरणधर्मावच्छिन्नाभावमात्रस्थले मानाभावादित्याशयेन प्रतियोगितैकीकरणनियमसंगतेरिति।

'असति बाधके' इत्यस्य प्रयोजनमाह—'**वह्नित्व**°' इति । '**उक्तविशेष**°' इति । वृत्तिमद्वृत्तिधर्मस्यावृत्तित्वनियामकसंबन्धावच्छिन्नप्रति-

योगितावच्छेदकत्व एव प्रतियोगितैक्यं नान्यत्रेति विशेषेत्यर्थः। **वृत्ति-मद्वृत्तिधर्मस्य** प्रतियोगितावच्छेदकत्वे प्रतियोगितैक्यासंभवात् प्रमेयत्व-समनैयत्यं न तस्यां; किं त्वस्यामेवेति वा विशेषः। '**सत्तावान्**' इति। ननु कूटघटितलक्षणे साध्यतावच्छेदकसंवन्धावच्छिन्नाभावनिवेशेन गगनत्वा-वच्छिन्नविषयितासंवन्धावच्छिन्नाया गगनभिन्ननिष्ठप्रतियोगितायाः तथा-विधगगननिष्ठप्रतियोगित्वाभेदे विषयितासंवन्धेन गगनवति ईश्वरज्ञाने तादृशाभावासत्त्वं स्यादिति तद्भेदो वाच्यः। तथा सति साध्यतावच्छेदकी-भूतप्रमेयत्वसमनियतविषयितासंबन्धावच्छिन्नप्रतियोगिताया एवाप्रसिद्धेः साधनसामानाधिकरण्यपर्यन्ता[1]सत्त्वेऽपि संभवात् किमर्थं तदुत्कीर्तनमिति चेदत्राहुः—गगनत्वेन प्रमेयसामान्याभावप्रतियोगित्वस्य वह्नित्वेन प्रमेय-सामान्याभावप्रतियोगितातुल्यत्वेन साध्यतावच्छेदकसमनियतत्वस्य दूषित-त्वेऽपि वह्निर्नास्तीति वह्नित्वेन प्रमेयं नास्तीति प्रत्ययाभ्यां प्रतियोगित्वयो-र्भेदोपगमेऽपि कूटघटितलक्षणानिर्वाहं वक्तुं तदुत्कीर्तनमिति। विरुद्धत्व-द्विवचनयोरुपादानफलं केवलान्वयितानिर्वाह एवेत्याह—'**येन**' इत्यादि। उभयत्वस्यावच्छेदकतापर्याप्त्यवच्छेदकत्वेऽपि न क्षतिरिति तु बोध्यम्।

ननु 'वह्नित्वेन निर्वह्नौ' इत्यादिना **दीधिति**कृता केन संबन्धेन प्रमेयसामान्यस्य साध्यतायामभावप्रसिद्धिः क्रियते? न तावत् स्वरूप-संबन्धेन; तत्संबन्धावच्छिन्नप्रतियोगिताकस्य वह्नित्वेन प्रमेयाभावस्य केवलान्वयितया वह्निमत्यपि सत्त्वेन 'निर्वह्नौ' इत्यस्य वैयर्थ्यात्। नापि संयोगसमवायादिना; तत्संबन्धावच्छिन्नप्रतियोगिताकप्रमेयसामान्या-भावस्य गुणादावेव प्रसिद्धेः; वह्नित्वेनेत्यस्यासांगत्यापत्तेः। न च संयोगेन प्रमेयसामान्यसाध्यकद्रव्यत्वादिहेतौ तादृशाभावस्य गुणादौ प्रसिद्धत्वेऽपि कूटघटितलक्षणे साधनसामानाधिकरण्यस्य साध्याभावविशेषणतापक्षे तत्र तदभावात् वह्नित्वेनेत्युक्तमिति वाच्यम्; तत्संबन्धावच्छिन्नप्रतियोगिताकस्य

[1] 'असत्त्वे सत्त्वेऽपि संभवात्'—अ.

गुणत्वेन प्रमेयाभावस्य [1]सर्वत्र सुलभतया तत्त्यागस्य निर्बीजत्वापातात् । एवं तत्संबन्धावच्छिन्नप्रतियोगिताकस्याभावत्वेन भावाभावस्य समर्थनेऽपि भावत्वेनाभावाभावे भावत्वेनेत्येतदसंगतिः । संयोगावच्छिन्नप्रतियोगिताकाभावसामान्याभावस्यैव केवलान्वयित्वात् । हेतुसमानाधिकरणत्वाच्च । नापि तादात्म्येन; तथा सति तत्संबन्धेन तादृशाभावस्य वह्निभिन्न एव संभवेन 'निर्वह्नौ' इत्यनुधावनासंगतेः । न हि तस्य वह्निभिन्न इत्यर्थः संभवति । निरादिपदानामत्यन्ताभावार्थकत्वात् । नापि संबन्धसामान्येन; तथा संसर्गतायां मानाभावात् । संबन्धसामान्येन साध्यतायामेवेश्वरज्ञानत्वादिहेतौ संबन्धसामान्येन तादृशसाध्याभावस्य हेत्वसामानाधिकरण्येन दोषसंभवात् विषयितासंबन्धानुधावनस्य निर्बीजतया तदाभासविरोधाच्चेति चेत् ।

अत्राहुः—प्रत्येकं संयोगत्वसमवायत्वादिनैव संसर्गता; एवं च प्रत्येकसंबन्धेन साध्यतास्थल एव साध्याभावप्रसिद्धेः कर्तव्यत्वेन तादृशस्थले निर्वह्नौ एव प्रसिद्धेः संयोगादिसंबन्धेन साध्यस्य केवलान्वयित्वविरहेऽपि साध्यतावच्छेदकसंबन्धावच्छिन्नसाध्यतावच्छेदकसमनियतप्रतियोगिताकाभावप्रसिद्धेरावश्यकत्वात् । अन्यथा विषयितासंबन्धेन केवलान्वयित्वासंभवात् तत्र विरुद्धघटत्वपटत्वादिनाभावप्रसिद्धिकरणवैफल्यापत्तेः । यद्यपि संयोगेन संबन्धेन प्रमेयत्वावच्छिन्नाभावो गुणादौ प्रसिद्धः; तथापि साध्याभावे हेतुसामानाधिकरण्यसत्वात्, द्रव्यत्वादिहेतुके उक्ताभावो न प्रसिध्यतीति वह्नित्वेन प्रमेयाभावानुसरणम्; वह्नित्वेनेत्यस्योपलक्षणत्वेन धूमहेतुके घटत्वादिना प्रमेयाभावो द्रष्टव्यः । सर्वत्र एकाभावप्रसिद्ध्यर्थं गगनत्वेनेत्युक्तम् । गुणत्वेन प्रमेयाभावोऽपि सर्वत्र चेत् तदा गगनत्वेनेत्येतदुपलक्षणं बोध्यम् । इत्थं च विषयितासंबन्धेन साध्यतास्थले [2]न तादृशसंबन्धेन गगनत्वेन प्रमेयाभावप्र[3]सिद्धिरित्याभाससंगतिः । एवं च

[1] सद्धेतावसद्धेतौ च —संयोगेन प्रमेयसामान्यस्य साध्यत्वे संयोगेन प्रमेयाभावोऽपि सुलभ एव—अ. [2] नकारो नास्ति—अ. [3] अप्रसिद्धि—अ.

स्वरूपसंबन्धेन साध्यतास्थलमभिप्रेत्यैव भावत्वेनाभावाभावे भावत्वेनेत्युत्कीर्तनसंगतिः ।

केचित्तु––वह्नित्वेनेत्यस्य वह्न्यधिकरणतात्वेनेत्यर्थात् स्वरूपसंवन्धेन साध्यतास्थल एव इयं प्रसिद्धि[1]रित्याहुः ।

अन्ये तु––संबन्धसामान्येन साध्यतास्थल एवेयं प्रसिद्धिः; निर्वह्नावित्यस्य संबन्धसामान्येन वह्निशून्ये इत्यर्थात् । संवन्धत्वेन संवन्धानामभावप्रतियोगितावच्छेदकताया अग्रे वाच्यत्वात्; यत्र विषयितासंबन्धेनेत्याभासश्च संबन्धसामान्यत्वाक्रान्तविषयितासंबन्धेनेत्यर्थाभिप्रायेण ; तत्रपदोत्तरम् अपिकारपूरणेन संबन्धसामान्येन साध्यतास्थलसमुच्चयाभिप्रायेण वेत्याहुः ॥

अत्र **मणिकारेण** व्यधिकरणधर्मस्यैवावच्छेदकत्वोक्तावपि गगनेन प्रमेयाभावानङ्गीकारः निर्बीजः । तथा सति घटत्वपटत्वाभ्यां प्रमेयसामान्याभाव इत्यस्योन्मत्तप्रलपितत्वापत्तेः; न हि प्रतियोगितावच्छेदकताघटकरूपेण वृत्तिमत्त्वस्यातन्त्रत्वेऽपि तत्संबन्धेन वृत्तिमत्त्वं तन्त्रमिति युज्यते अविशेषात्; इत्याशयेन आह––'**इदम्**' इति । एवं च वाच्यत्वस्येच्छारूपत्वेऽपि संयोगादिना समवायितया वाच्यत्वाभावसौलभ्येऽपि वस्तुगतिमनुरुध्याश्रयतया समवायितया वाच्यत्वाभावपरत्वेऽपि न क्षतिरित्याविष्करणाय व्यधिकरणधर्मेत्यादिहेतुलभ्यधर्मत्वस्य पश्चात् वक्तव्यत्वेऽपि यथाश्रुते तस्य तन्त्रत्वेऽपि न क्षतिरित्याविष्करणाय वा वाच्यत्वं यथेत्युक्तमिति ।

इति व्यधिकरणधर्मावच्छिन्नाभावावतरणम्

[1] अन्यथा वह्नित्वेन तादृशसंबन्धावच्छिन्नप्रमेयाभावस्य पर्वतेऽपि सत्त्वात्––अ.

## न्यायरत्नम्

'इत्यत' इति। यद्यपि प्रमेयसाध्यके संयोगाद्यवच्छिन्नसमवायित्वनिष्ठावच्छेदकताकप्रतियोगिताकाभावः सुलभः; तथापि वस्तुगतिमनुरुध्येदम्।

'वह्नित्वेन' इति। अथ एतादृशाभावप्रदर्शनं किं स्वरूपसंबन्धेन प्रमेयसाध्यके, उत समवायसंयोगाभ्यां वा। नाद्यः; निर्वह्नावित्यसंगतेः, स्वरूपेण तादृशाभावस्य कवलान्वयित्वात्। नान्त्यः; संयोगसमवायादिसंबन्धावच्छिन्नाभावस्य गुणसामान्यादौ वर्तमानतया वह्नित्वेनेत्यसंगतेरिति चेन्न; संयोगादिना प्रमेयसाध्यके जलत्वादिहेतुके संयोगादिना प्रमेयसामान्याभावस्य गुणादौ सत्त्वेऽपि साधनसामानाधिकरण्याभावात् वह्नित्वेनेति संगतम्। न च जल इत्येव वक्तुमुचितम्; न निर्वह्नाविति शङ्क्यम्। जलत्वगुणत्वसत्वादिहेतुकस्थलसाधारण्येन तदुक्तेः। वस्तुतस्तु कूटघटितलक्षणे भावानामपि[1] दैशिकविशेषणतया वृत्तित्वस्य व्यवस्थापितत्वात्[2] स्वरूपसंबन्धेन प्रमेयसाध्यकस्थलाभिप्रायकमेवेदमिति ध्येयम्।

[3]'वह्निभिन्नत्वेन' इत्यादि। ननु वह्निभिन्नत्वेन वह्निगगनान्यतराभावीयप्रतियोगिताया वह्निभिन्नत्वेन वह्न्यभावीयप्रतियोगित्वाभिन्नतया वह्निमात्रनिष्ठत्वासंभवात् कथं तस्याः साध्यतावच्छेदकसमनैयत्यमिति चेन्न; अव्याप्तिवारणाय साध्यतावच्छेदकसंबन्धावच्छिन्नाधेयतावशिष्टप्रतियोगितात्वेन समनैयत्यस्य विवक्षणीयतया तेन रूपेण तादृशप्रतियोगिताया वह्निमात्रनिष्ठत्वात्; एतदभिप्रायेणैव तन्मात्रनिष्ठत्वकथनमपि। वस्तुतस्तु—नायमाभासोऽवतरति; विषयितया वह्निसाध्यक एव तथोक्तेः; तत्र वह्निभिन्नत्वेन वह्निगगनान्यतराभावीयप्रतियोगि-

1 'अपि' शब्दो नास्ति—ग.

2 घटे न घटत्वाभावः इत्यादि नञुल्लेख्यप्रतीतिव्यवहारयोरनुपपत्तिः इत्यादियुक्त्येत्यर्थः—स्व.

3 वह्निभिन्नत्वादिना इति गदाधरीपाठः—स्व.

त्ववह्निभिन्नत्वेन वह्न्यभावीयप्रतियोगित्वयोः ऐक्याभावात् । एतेन पूर्वकल्पे [1]तादात्म्यसंबन्धावच्छिन्नसाध्यताकस्थलानुरोधेन साध्यतावच्छेदकसंबन्धावच्छिन्नसंबन्धिताया विवक्षणावश्यकत्वेन दर्शितप्रतियोगिताया गगनसाधारण्येऽपि न क्षतिः ।

'[2]विषयितासंबन्धेन प्रमेयमात्रसाध्यक' इति । इदमत्र चिन्त्यम्—संयोगेन प्रमेयसाध्यकेऽपि अप्रसिद्धिसंभवात् तावत्पर्यन्तानुधावनं व्यर्थम्; न च तत्र संयोगेन गगनत्वेन प्रमेयसामान्याभावस्तथेति शङ्क्यम्; तस्य हेतुसामानाधिकरण्याभावात् । वृत्त्यनियामकसंबन्धेन गगनस्य संबन्धित्वात् । न च [3]वृत्त्यनियामकसंबन्धस्याभावप्रतियोगितानवच्छेदकत्वमताभिप्रायेणेदमिति वाच्यम् । विषयिताया अपि तथात्वेन तत्संबन्धावच्छिन्नाभावप्रदर्शनासंगतेरिति । परं तु विषयिताया वृत्तिनियामकत्वमताभिप्रायेणेदमित्यवधेयम् ॥

इति व्यधिकरणधर्मावच्छिन्नाभावावतरणम् ।

[1] 'तादात्म्यसंबन्धेन साध्यकस्थलानुरोधेन'—ग.

[2] विपयितासंबन्धेन प्रमेयसामान्यं साध्यमिति गदाधरीपाठः—स्व.

[3] 'वृत्त्यनियामकसंबन्धावच्छिन्ना यथा निरूपकता न भवति तत्संबन्धावच्छिन्न प्रतियोगितापि तथा न स्वीक्रियते'—स्व.

दीधितिः

ननु पारिभाषिकमेवाव्यभिचरितत्वम् , तथाहि––यत्समानाधिकरणाः साध्यतावच्छेदकावच्छिन्न[1]व्यापकतावच्छेदकप्रतियोगिताका यावन्तोऽभावाः प्रतियोगिसमानाधिकरणाः तत्त्वम् ।।

## गादाधरी

(६) प्रथमस्वलक्षणस्य लक्ष्ये समन्वयप्रदर्शनादि ।।

**ननु व्यधिकरणधर्मावच्छिन्नसाध्याभावप्रसिद्धावपि व्यभिचाराभावरूपव्याप्तौ साध्यतावच्छेदकावच्छिन्नसाध्याभावस्य घटकतया अप्रसिद्धिनिबन्धनाव्याप्तेः दुरुद्धरतयैव वादिनो निवृत्तेः व्यधिकरणधर्मावच्छिन्नाभावखण्डनपरग्रन्थानुत्थितिरित्यतः तादृशग्रन्थमवतारयति**––नन्वित्यादिना । पारिभाषिकमिति । **तान्त्रिकसंकेतरूपपरिभाषया व्याप्तिप्रतिपादकम्, न तु योगेनेत्यर्थः** । अव्यभिचरितत्वम्––**अव्यभिचरितत्वपदम् । [2]अथवा** पारिभाषिकमव्यभिचरितत्वम्––**परिभाषया अव्यभिचरितत्वपदप्रतिपाद्यम्; व्याप्यत्वमिति शेषः; न तु योगेन तत्पदलभ्यमित्यर्थः । तथाच व्यभिचारघटकसाध्यतावच्छेदकावच्छिन्नसाध्याभावस्य व्याप्तिघटकत्वविरहेऽपि न क्षतिरिति भावः ।**

[1] अत्र व्यापकतावच्छेदकप्रतियोगिताका इत्यत्र व्यापकताया अवच्छेदो ययेति बहुव्रीहौ कप्रत्ययः तेन प्रतियोगितया सममवच्छेदिकापदस्य समासे कोपधत्वेऽपि पुंवद्भावः––ज.

[2] अत्राव्यभिचरितत्वशब्दस्याव्यभिचरितत्वपदे शक्त्यभावात् निरूढलक्षणा वाच्या सापि न संभवति, शब्दकारकक्रियाविशेषसमभिव्यवहार एव पदानां स्वार्थकतायाः तान्त्रिकाभिप्रेतत्वादाहाथवेति ।––रा.

यदिति । यत्पदं यद्धर्मावच्छिन्नपरम्, अग्रे तत्पदमपि तद्धर्मावच्छिन्नपरम्; स च धर्मो हेतुतावच्छेदकीभूतधूमत्वादिः सद्धेतुस्थले हेतुतावच्छेदकावच्छिन्नसमानाधिकरणसाध्यतावच्छेदकावच्छिन्नेत्यादिविशेषणाक्रान्तो व्यधिकरणधर्मावच्छिन्नप्रतियोगिताको घटत्वादिना वह्न्यभावादिरेव, तस्य च प्रतियोगिसामानाधिकरण्यमावश्यकमिति लक्षणसमन्वयः ।

व्यभिचारिणि——व्यभिचारनिरूपकाधिकरणीभूतहेत्वधिकरणे साध्यतावच्छेदकेत्यादिविशेषणाक्रान्तः साध्यतावच्छेदकावच्छिन्नप्रतियोगिताकसाध्याभावादिरपि, तस्य च प्रतियोगिसामानाधिकरण्याभावात्, तादृशाभावस्य प्रतियोग्यधिकरणे कालिकसंबन्धेन वृत्तावपि विवक्षणीयस्य स्वविशिष्टयावद्धेत्वधिकरणान्तर्भावेण प्रतियोगिसामानाधिकरण्यस्य विरहात् नातिव्याप्तिः; अयमात्मा ज्ञानादित्यादौ समानाधिकरणधर्मावच्छिन्नप्रतियोगिताकसाध्याभावादिकमादायाव्याप्तेर्वारणाय हेतुसामानाधिकरण्यमभावविशेषणम्, अभाववृत्तौ संबन्धभेदानिवेशेन वह्निमान् धूमादित्यादौ वह्नित्वादिना वह्न्याद्यभावस्य प्रतियोगिमति पर्वतादौ कालिकसंबन्धेन वृत्तेर्लक्षणसमन्वयसंभवात् न तत्राव्याप्तेर्वारणं तत्फलमिति ध्येयम् । अयमात्मा पृथिव्याद्य[1]ष्टद्रव्यातिरिक्तत्वे सति द्रव्यत्वादित्यादौ द्रव्यत्वसमानाधिकरणात्मत्वत्वाद्यवच्छिन्नात्मत्वाद्यभावानां प्रतियोगिसामानाधिकरण्यविरहादव्याप्तिः, अतो हेतुसामानाधिकरण्यघटकहेतौ हेतुतावच्छेदकविशिष्टत्वनिवेशः । यद्यपि अयमात्मा ज्ञानादित्यादौ समा-

1 'आष्टकान्यत्वे सति' ।—अ ।

**नाधिकरणधर्मावच्छिन्नाभावमादायाव्याप्तिः, अभावे साध्यताव-च्छेदकविशिष्ट[1]साध्यसामानाधिकरण्यविशेषणेनापि वारयितुं शक्यते । धूमवान् वह्नेरित्यादौ धूमादिसमानाधिकरणस्य धूमाद्यभावस्य प्रतियोगिसामानाधिकरण्यावश्यकत्वेऽपि स्वविशिष्ट-यावद्धेत्वधिकरणान्तर्भावेण प्रतियोगिसामानाधिकरण्यस्यैव विवक्षणीयतया अयोगोलकान्तर्भावेन तादृशाभावस्यातथात्वान्नातिव्याप्तिः; स्वविशिष्टहेत्वधिकरणेत्यत्र यत्पदेनैव हेतोरुपादेयतया तत्त्वमित्यत्र तत्पदेन तस्यैव परामर्शात् व्याप्तेर्हेतुनिष्ठत्वोपपत्तिः इति मास्तु; तथापि कपिसंयोगाभाववान् जातित्वादित्यादौ साध्यसमानाधिकरणस्य कपिसंयोगाद्यात्मकाभावस्य स्ववि-शिष्टहेत्वधिकरणाप्रसिद्ध्या[2] सत्तावान् आत्मत्वादित्यादौ सत्ताधिकरणकाले[3] कालिकसंबन्धेन वर्तमानस्य सत्ताभावस्य तदप्रसिद्ध्या अव्याप्तिर्दुर्वारैवेति हेतुतावच्छेदकविशिष्टहेतुसामानाधिकरण्यमेवोपात्तम् ।**

## कृष्णंभट्टीयम्

'**पारिभाषिकमेवाव्यभिचरितत्वम्**' इत्यत्र,प्रतियोगित्वेन परिभाषा-विषयत्वं चेत् पारिभाषिकत्वम्, तदा प्रतिपाद्यविशेषालाभ इत्यतः '**तान्त्रिक**' इति । एवकारव्यवच्छेद्यमाह--'**न तु**' इति । अपार्थकत्वं निराकरोति--'**अव्य**' इति । '**न तावदव्यभिचरितत्वम्**' इति मूलानुसारेण इदमीयं तत्पदं

1 'अष्टद्रव्यातिरिक्तद्रव्यत्ववान्--आत्मत्वात्' इत्यादिसंग्रहाय विशिष्टसाध्य-निवेशः--रा.

2 प्रतियोगिवैयधिकरण्याघटितव्यापकत्वनिवेशे त्वाह ।--रा.

3 साध्याधिकरणनिरूपितवृत्तित्वस्य दैशिकविशेषणतया विवक्षणे तु नायं दोषः; इत्थं च स्वविशिष्टत्वमपि न देयम् ।--रा.

व्याचष्टे—'**अथवा**' इति । ईदृशांव्यभिचारपदार्थावच्छिन्नहेतुविषयताघटितधर्मावच्छिन्नत्वाभावरूपसाध्ये प्रतियोग्यवृत्तिश्चेत्यादिना प्रतियोग्यवृत्तिधर्मिकप्रतियोगितानवच्छेदकत्वज्ञानकालीने ईदृशाव्यभिचारपदार्थावच्छिन्नहेत्वविषयकज्ञाने सत्त्वादिति हेतुर्लभ्यते । अतः तदवतारणस्याव्यभिचारपदार्थावच्छिन्नहेतुविषयताघटितधर्मावच्छिन्नत्वरूपसाध्यप्रदर्शकतामाविष्करोति—'**व्याप्यत्वम्**' इति । एतेन विधेयाकाङ्क्षाया अपि निरासः । प्रकृतपक्षविशेषणतापन्नप्रकृतहेत्वंशे प्रकारतापन्नस्य, यत्समानाधिकरणा इत्यस्य, योगेन तत्पदार्थत्वासंभवात् , परिभाषयेत्युक्तम् , तत्स्फुटीकरोति—'**न तु**' इति ।

अत्र च यत्समानाधिकरणः कश्चन तादृशाभावः प्रतियोग्यसमानाधिकरण इत्यत्र व्यभिचारपदपरिभाषामुपगम्य तद्विरोधिन्युक्तव्याप्यत्वे योगोऽस्त्वित्याशङ्क्याह—'**न तु इति**' केचित् । तन्न; योगपरिभाषोभयापत्तेः ; तथा परिभाषाया एवासत्त्वाच्च ।

कथंचित् प्रसिद्धानुमाने लक्षणसत्त्वे प्रसिद्धव्यभिचारिणि लक्षणासत्त्वे च सत्येव लक्षणे पदप्रयोजनाकाङ्क्षेत्याशयेनाह—'**सद्धेतुस्थले**' इति । '**अयमात्मा**' इति । ननु यत्समानाधिकरणा इत्यस्यानुपादानेऽपि साध्यव्यापकतावच्छेदकप्रतियोगितायां साध्यतावच्छेदकानवच्छिन्नत्वदानादेव नात्मत्वसामान्याभावसंग्रहः; तथापि द्रव्यत्वाभावस्य यावदन्तर्गतत्वात् अव्याप्तिरिति चेत्; प्रतियोगितायाः साध्यनिष्ठत्वेन विशेषणीयत्वात् । यदि चैवं प्रमेयसाध्यतावच्छेदके अव्याप्तिरुच्यते; तदा यत्किंचित्त्वेन साध्यतावच्छेदकं विशेषणीयम् । मैवम् ; घटत्वात्मत्वैतदन्यतरत्वावच्छिन्नाभावमादायात्मत्वसाध्यकेऽव्याप्तेः । ननु साध्यव्यापकतावच्छेदकप्रतियोगितायां स्वव्यधिकरणधर्मावच्छिन्नत्वनिवेशात् न दोष इति चेन्न ; तथापि हेतुसामानाधिकरण्यापेक्षया गौरवात् । स्वविशिष्टत्वानिवेशात् लाघवमिति चेदत्र वक्ष्यामः—'**द्रव्यं विशिष्टसत्त्वात्**' इत्यादौ स्ववैशिष्टचे संबन्धभेदानिवेशेन यावदन्तर्गतद्रव्यत्वाभावस्य कालिकसंबन्धेन स्वविशिष्ट**प्रकृत**-

हेत्वधिकरणावच्छेदेन प्रतियोगिसामानाधिकरण्यान्नाव्याप्तिरतः अयमात्मेति कालावृत्तिहेत्वनुधावनम् । 'अष्टद्रव्यातिरिक्तद्रव्यत्ववान् आत्मत्वात्' इत्यादिसंग्रहाय साध्यतावच्छेदकविशिष्टेति । असंभवाशङ्कां निरस्यति—'स्व' इति । प्रतियोगिवैयधिकरण्याघटितव्यापकताकल्पेऽप्याह—'**सत्तावान्**' इति । द्रव्यत्वादिहेतौ उक्तरीत्याव्याप्तेरसत्त्वादाह—'**आत्मत्वात्**' इति । साध्यवति दैशिकविशेषणतया वृत्तित्वोक्तौ च आत्मत्वविशिष्टसत्ताभावादिर्बोध्यः ।।

### न्यायरत्नम्

**'घटत्वादिना वह्न्यभावादिरेव' इति । हेतुसामानाधिकरण्यघटकवृत्तौ संबन्धनिवेशनमभिप्रेत्येदम्; [1]जन्यानां कालत्वानङ्गीकरणेन वा, तेन वह्निसाध्यके समानाधिकरणधर्मावच्छिन्नवह्न्यभावस्य कालिकसंबन्धेन हेतुसामानाधिकरण्येऽपि न क्षतिः । 'अयमात्मा' इति । अथायमात्मा ज्ञानादित्यादावात्मत्वसामान्याभाववारणाय प्रतियोगितायां साध्यतावच्छेदकानवच्छिन्नत्वमेवोपादेयम् । न चैवमपि द्रव्यत्वाभावमादाय दोष इति वाच्यम्, साध्यनिष्ठत्वस्यापि निवेशात् ; न चात्मत्वनिष्ठतद्व्यक्तित्वावच्छिन्नाभावमादायाव्याप्तिरिति वाच्यम्; साध्यतावच्छेदकानवच्छिन्नत्वमित्यनेन साध्यवृत्तिधर्मानवच्छिन्नत्वस्य [2]विवक्षणात् । यत्पर्याप्त्यधिकरणधर्मविशिष्टाधिकरणं साध्यवत् तन्निष्ठावच्छेदकताकान्यत्वस्य तदर्थत्वात् न प्रमेयसाध्यके तादृशाभावाप्रसिद्धिः; घटत्वपटत्वोभाभ्यां प्रमेयसामान्याभावस्य तादृशस्य प्रसिद्धेः ; एवं च साध्यनिष्ठत्वं न देयमेव ; एतेन प्रतियोगितायां साध्यनिष्ठत्वनिवेशे 'विशिष्टसत्तावान् जातेः' इत्यादावति-**

[1] प्रतियोगिवैयधिकरण्याघटितव्यापकताकल्पे हेतुसामानाधिकरण्यघटकवृत्तौ संबन्धनिवेशे गौरवमिति भट्टाचार्यैः वक्ष्यमाणत्वादाह 'जन्यानाम्' इति—स्व.

[2] आत्मत्वनिष्ठतद्व्यक्तित्वावच्छिन्नाभावस्य साध्यवृत्तिधर्मावच्छिन्नप्रतियोगिताकत्वात् नाव्याप्तिरिति भावः—स्व.

व्याप्तिरिति निरस्तम् ; तादृशद्रव्यत्वाभावमादाय तद्वारणादिति चेन्न ; हेतुसामानाधिकरण्यविशेषणापेक्षया गौरवात् ।

यत्तु स्वव्यधिकरणधर्मावच्छिन्नत्वमेव प्रतियोगितायां देयम् ; तच्च अवच्छिन्नत्वसामानाधिकरण्योभयसंबन्धेन धर्मविशिष्टान्यत्वरूपमेव, स्वविशिष्टेति न देयमिति न गौरवावकाश इति ; तन्न ; समनियताभावैक्यमते घटत्वेन धूमाभावस्य घटत्वेन वह्न्यभावाभिन्नतया वह्निरूपप्रतियोगिसामानाधिकरण्यमादायातिव्याप्तेः । न च यत्सामानाधिकरण्यनिवेशेऽपि समनियताभावैक्यमतेऽतिव्याप्तेरेतल्लक्षणे वक्ष्यमाणतया तौल्यमिति वाच्यम् ; तथापि लक्षणद्वयानुरोधेन यत्सामानाधिकरण्योक्तेः लक्षणान्तरत्वाच्च न क्षतिः । एतेन यत्सामानाधिकरण्यमपहाय प्रतियोगितायां गगनावच्छिन्नत्वनिवेशोऽपि समाहितः ।

‘ न तत्राव्याप्तेर्वारणं तत्फलम् ’ इति । यद्यपि वह्निसाध्यकेऽपि चरमक्रियात्मकाभावस्य लक्षणघटकतया तस्य स्वविशिष्टहेत्वधिकरणाप्रसिद्धेः अव्याप्तेर्वारणं तत्फलं संभवति, तथापि महाकालानुयोगिकधूमसंयोगस्य धूमांशे वृत्तिनियामकताया अग्रे ग्रन्थकृद्भिः[1] प्रतिपादनात्[2] महाकाल एव तादृशाभावविशिष्टं हेत्वधिकरणं संभवतीति न तत्राव्याप्तिरिति ध्येयम् । ‘ पृथिव्याद्यष्टद्रव्ये ’ इति । तादृशाष्टद्रव्यातिरिक्तं द्रव्यमात्मैव परिभाषितस्तेन यत्किंचिदष्टद्रव्यातिरिक्तत्वस्य सकलद्रव्यसाधारण्येऽपि न क्षतिः । द्रव्यं विशिष्टसत्त्वादित्यादौ द्रव्यत्वसामान्याभावस्य काले वैशिष्ट्यसंभवात् स्ववैशिष्ट्यांशे संबन्धानिवेशात् एतावदनुधावनम् । यदित्यादिविशेषणस्य नेदमसाधारणप्रयोजनमिति शङ्कते—‘ यद्यपि ’ इति । नन्वेकार्थसमवायसंबन्धेन कपिसंयोगात्मकाभावस्य जातौ वैशिष्ट्यसंभवात् नाव्याप्तिः । न च परंपरासंबन्धानां संबन्धत्वनिराकरणान्नेदं युक्तमिति शङ्क्यम् ; असमवायिकारणद्वैविध्यानुरोधेन समवाय-एकार्थसमवायान्यतरसंबन्धेन सत्तावत्त्वं भावत्वं, तदभावोऽभावत्वमिति भावा-

[1] ग्रन्थकृता—ग. [2] येन संबन्धेन हेतुरित्यादिदीधितिव्याख्यानावसरे—स्व.

भावयोर्लक्षणानुरोधेन च तस्य विशिष्टबुद्धिनियामकत्वरूपसंबन्धताया आवश्यकत्वात् ; तदतिरिक्तैकज्ञानविषयत्वादिरूपपरंपराणामेव संबन्धताया निराकरणादत आह—' सत्तावान् ' इति ।

केचित्तु—कपिसंयोगात्मकाभावस्य प्रतियोगिवैयधिकरण्याघटित - व्यापकतानिवेशकल्पे लक्षणघटकत्वं न संभवतीत्यतः तत्कल्पेऽपि दोषदानायाह—' सत्तावान् ' इति । अथ प्रतियोगिवैयधिकरण्याघटितव्यापकत्वकल्पे साध्यवन्निष्ठत्वांशे स्वरूपसंबन्धनिवेशावश्यकतया कपिसंयोगात्मकाभावस्य साध्यवति स्वरूपसंबन्धेनासत्त्वात् व्यापकताघटकत्वासंभवेन लक्षणघटकत्वं संभवत्येव ; अन्यथा सत्ताभावीयप्रतियोगित्वावच्छिन्नाभावस्यापि कालिकसंबन्धेन साध्यवति सत्त्वात् तस्यापि लक्षणघटकत्वानुपपत्तिः । न च स्वप्रतियोगिमत्ताग्रहविरोधितानियामकसंबन्धेन साध्यवद्वृत्तित्वं निविष्टमित्यभिप्रायेणेदमिति वाच्यम् । एवं सति प्रतियोगिवैयधिकरण्याघटितव्यापकत्वकल्पे पर्वतत्वात्मकाभावमादाय दोषवारणाय यत्सामानाधिकरण्यघटकवृत्तौ स्वरूपसंबन्धनिवेशावश्यकत्वं प्रदर्श्य नानास्थाने संबन्धनिवेशप्रयुक्तगौरवोद्भावनस्यासांगत्यापत्तेरिति चेन्न; साध्यवत्ताग्रहविरोधितानियामकसंबन्धेन साध्यवद्वृत्तित्वनिवेशाभिप्रायेणास्वरसस्य गौरवोद्भावनस्य च संगतेरित्याहुः ।

[1][तदसत्; सत्ताभाववान् जातित्वादित्यादौ तादृशसंबन्धेन साध्यवद्वृत्तित्वाप्रसिद्धेः तथा विवक्षितुमशक्यत्वात्] साध्यसामानाधिकरण्यघटकवृत्तौ स्वरूपसंबन्धावच्छिन्नत्वनिवेशे सत्ताभावमादायाव्याप्तिविरहेऽपि आत्मवृत्तित्वविशिष्टसत्ताभावमादायाव्याप्तिर्बोध्या ।।

## गादाधरी

(७) हेतुसामानाधिकरण्यविशेषणवैयर्थ्यशङ्कापरिहारौ ।

यत्तु अयमात्मा ज्ञानादित्यादौ आत्मत्ववत्वादिना आत्मत्वादेरभावस्य लक्षणघटकत्वेऽपि नाव्याप्तिः, तस्यापि प्रति-

[1] [ ] एतत्चिह्नमध्यस्थपाठो नास्ति—ग.

**योग्यधिकरणीभूते आत्मादावेकज्ञानविषयत्वस्वाश्रयाश्रयत्वादिरूपपरंपरासंबन्धेन वर्तमानतया प्रतियोगिसमानाधिकरणत्वादिति सामानाधिकरण्यान्तविशेषणमनर्थकमिति**[1] **; तन्न; एकज्ञानविषयत्वादिना विशिष्टबुद्धौ प्रमाणाभावेन तेषां संसर्गत्वाभावात्। नचैवमपि** यदभावो व्यभिचारविरोधी**त्युपाधिलक्षणे** [2]**इहोपाधिर्नेहोपाधिरिति**[3] **प्रतीतिव्यवहारानुरोधेनाव्याप्यत्वस्य संबन्धताया ग्रन्थकृतैव स्वीकृतत्वात् तेन** [4]**संबन्धेनैवात्मवृत्तेरात्मत्वाभावस्य प्रतियोगिसामानाधिकरण्यमक्षतमेवेति वाच्यम्; अव्याप्यत्वादेः संबन्धतायां विवादेन यदभावपदस्य यदव्याप्यत्वाद्यभावपरतामभ्युपगम्यापि ग्रन्थकृता तादृशलक्षणव्याख्यानात् तत्संबन्धताया अप्रामाणिकताभिप्रायेणैवात्र** यत्समानाधिकरणा **इत्युपादानात् ।**

## कृष्णंभट्टीयम्

'एक इति' आत्मत्वं नास्तीति प्रतीतावेव प्रतियोगितावच्छेदकघटकतया आत्मभानात् । ज्ञानाद्यभावानुरोधेनाह—'**स्वाश्रय**' इति । [5]अत्मत्वाभावे स्वाश्रय आत्मत्वम् । '**अनर्थकम्**' इति । स्ववैशिष्ट्यस्यापि [6]संवन्धित्वरूपत्वादिति भावः । '**एक**' इति । यत्तु तेषां

[1] 'अफलम्' इति—अ। कृष्णंभट्टैस्तु 'अनर्थकम्' इति पाठमनुसृत्य व्याख्यातम् इति ज्ञेयम् ।—स्व.

[2] 'इह हेतावुपाधिः'—अ । अयं ऋजुः पाठः —स्व । 'हेतावुपाधिरित्यत्र साध्यव्यापकसाधनाव्यापकस्य संबन्धसामान्येनाभावो विषय इति वक्तुं न युक्तं, सद्‍हेतुस्थले तादृशोपाधेरसिद्धेः किंतु साध्यव्यापकस्य अव्याप्यतासंबन्धावच्छिन्नाभावः'—रा. । [3] 'नेह हेतावुपाधिः'—अ । अयं पाठो ऋजुः—स्व ।

[4] 'आत्मभिन्नम् आत्मनः' इत्यादौ आत्मत्वाभावस्योपाधितया आत्मरूपहेतौ तादृशप्रतीत्याद्यनुरोधेन तादृशोपाध्यभाववन्निरूपितहेतुतावच्छेदकीभूततादात्म्यसंबन्धावच्छिन्नसंबन्धित्वरूपव्यभिचारस्यापि संबन्धत्वमावश्यकमिति भावः—रा ।

[5] आत्मत्वाद्यभावे—अ. [6] स्वसंबन्धि°—अ.

संसर्गत्वेऽपि प्रतियोग्यधिकरणाधेयत्वनिवेशात् यत्समानाधिकरणा इत्यस्य सार्थक्यम्, तच्च हेत्वधिकरणाधेयत्वमिति; तन्न समञ्जसम्। प्रतियोग्यधिकरणसंबद्धत्वनिवेशेनैवोपपत्तौ तदाधेयत्वस्यैवानिवेशात् ।।

**न्यायरत्नम्**

'व्यभिचारविरोधी' **इति। व्यभिचाराभावव्याप्य इत्यर्थः। इह हेतावुपाधिर्नेह** [1]**हेतावुपाधिरिति व्यवहारद्वयप्रदर्शनेनाव्याप्यत्वसंबन्धस्य विशिष्टबुद्धिनियामकत्वमभावप्रतियोगितावच्छेदकत्वं च दर्शितम्।** 'अव्याप्यत्वस्य' **इति। अव्याप्यत्वं च स्वाभाववत्संबन्धत्वम्। तेनात्मत्वाभावाभाववति आत्मनोऽवृत्तित्वेऽपि न क्षतिः।**

दीधितिः

सर्वत्र वाच्यत्वाद्यभावस्य तथात्वाद्यावत्त्वोपादानम्।

**गादाधरी**

(८) **यावत्पदव्यावृत्तिप्रदर्शनम्**

**यावत्पदासत्त्वे** साध्यतावच्छेदके**त्यादिविशेषणस्य व्यावृत्तिर्न संगच्छते, यत्किंचिदभावमादायैव लक्षणसमन्वयसंभवात्; अतश्चरमोक्तस्यापि तत्पदस्य व्यावृत्तिं प्रथमतो दर्शयति––** सर्वत्रेति। तथात्वात्**––प्रतियोगिसमानाधिकरणत्वात्। तथा च यावत्पदादाने व्यभिचारिमात्रे एव अतिव्याप्तिरिति भावः।।**

**यद्यपि व्यभिचारिस्थल एव दोषस्य कथनीयतया सर्वत्र तादृशाभावस्य तथात्वकथनमसंगतम्, तथापि यावत्पदानुपादाने अतिव्याप्तिरेव, नाव्याप्तिः, इत्येतत्सूचनाय** सर्वत्रेत्यु**क्तम्।**

[1] अत्र पाठभेदाः गादाधर्यां दर्शिताः। जागदीश्यां नेह उपाधिरिति प्रतीकधारणम्। हेताविति अनुषज्यते इति वर्णितं जगदीशेन उपाधिवादे। दीधितावपि पाठभेदः वर्तते इति गम्यते––स्व.

**अथवा;** सर्वत्र **सर्वाधिकरणावच्छेदेन, तथा च विवक्षणीयस्य स्वविशिष्टयावद्धेत्वधिकरणान्तर्भावेण प्रतियोगिसामानाधिकरण्यस्य सत्त्वं सूचितम् ।।**

## कृष्णंभट्टीयम्

‘ **नाव्याप्तिः** ’ इति । पञ्चम्यन्तपदोल्लेख्यत्वावच्छेदेन लक्षणसत्त्वोक्त्या तत्सामानाधिकरण्येन तत्सत्त्वरूपानिष्टलाभमात्रम्; न तु तदसत्त्वात्मकानिष्टान्तरलाभ इति भावः । नन्वेवं [1][तत्सामानाधिकरण्येन लक्षणसत्त्वरूपानिष्टलाभेऽपि तस्य तत्सामानाधिकरण्येन तदसत्त्वाविरोधितया न तन्निराकरणसंभवः यावत्पदेन] सर्वव्यावृत्तिश्चाविवक्षिता एवं हेतुत्वावच्छेदेनातिव्याप्तेः लाभेऽपि सद्धेतुभागेऽसद्धेतुभागे वा अनतिप्रसङ्ग इत्यपि न स्फुटमिति वाक्यार्थानुपपत्तिमाशङ्क्य व्यभिचारिणीति पूरणेऽवच्छेदकावच्छेदेनान्वयात् सर्वत्रेत्यस्य वैयर्थ्यम् स्यादतः अवच्छेदकत्वार्थकसप्तम्यङ्गीकारेण तत्सार्थक्यमित्याह—‘ **अथवेति** ’ इति ।।

## दीधितिः

अत एव ‘ भूतत्वमूर्तत्वोभयवान् मूर्तत्वात् ’ इत्यादौ द्वित्वावच्छिन्नाभावस्य प्रतियोगिसामानाधिकरण्येऽपि भूतत्वमनोऽन्यत्वाद्यभावस्य अतथात्वात् नातिप्रसङ्गः ।।

## गादाधरी

(६) **अत एव भूतत्वमूर्तत्वेत्यादिदीधितिग्रन्थस्यावतारणम्**

**ननु यावत्पदानुपादाने साध्यतावच्छेदकावच्छिन्नव्यापकतावच्छेदकप्रतियोगिताकत्वं परित्यज्य साध्यतावच्छेदकव्याप्यप्रतियोगिताकत्वेनैवाभावो विशेषणीयः, तद्व्याप्यत्वं च स्वव्यापकतत्कत्वम्; अतो नानवस्था; वह्निमान् धूमादित्यादौ**

[1] [ ] एतच्चिह्नान्तर्गतपाठस्थाने ‘ यावत्पदेन व्यभिचारिमात्रव्यावृत्तिर्दुर्लभा सामानाधिकरण्येन तत्सत्त्वासत्त्वयोः अविरोधात् ’ इति पाठः—**अ.**

**तत्तद्वह्नयाद्यभावानां साध्यतावच्छेदकव्याप्यप्रतियोगिताकानां यथाविवक्षणीयसामानाधिकरण्यविरहेऽपि घटत्वादिना वह्नयाद्यभावमादायैव लक्षणसंगतिः, इत्थं च धूमवान् वह्नेरित्यादौ वाच्यत्वाद्यभावमादाय नातिव्याप्तिसंभवः, तस्य धूमत्वाद्यव्याप्यप्रतियोगिताकत्वेन लक्षणघटकताविरहात्; एवं सति हेतुसमानाधिकरणत्वविशेषणमनर्थकमिति चेत्, तदपि तर्हि त्यज्यतामित्याशङ्कापरिहाराय तथाविधाभावनिवेशनेऽपि यत्रातिव्याप्तिस्तत्र** यावत्पदस्य **व्यावृत्तिमाह**––अत एवेति । अत एव––**यावत्पदोपादानादेव।** द्वित्वावच्छिन्नाभावस्य––**भूतत्वमूर्तत्वोभयत्वावच्छिन्नाभावस्य ।** प्रतियोगिसामानाधिकरण्येऽपि–––**मनसि अभावविशिष्टहेत्वधिकरणे मूर्तत्वरूपप्रतियोगिसामानाधिकरण्येऽपि । तथाच यावत्पदानुपादाने साध्यतावच्छेदकव्याप्यप्रतियोगिताकतादृशोभयाभावस्यैव प्रतियोगिसमानाधिकरणतया अतिव्याप्तिः स्यादिति भावः ।**

**यावत्पदसत्त्वे यादृशाभावमादायातिव्याप्तिवारणं तादृशाभावं दर्शयति**––भूतत्वमनोऽन्यत्वाभावस्येति । **भूतत्वाभावस्य मनोऽन्यत्वाभावस्य चेत्यर्थः ।** अतथात्वात्––**प्रतियोग्यसमानाधिकरणत्वात् । यावत्पदे दत्ते साध्यतावच्छेदकव्याप्यप्रतियोगिताकत्वनिवेशने वह्निमान् धूमादित्यादौ तादृशयावदन्तर्गतमहानसीयवह्नयाद्यभावमादायाव्याप्तिः स्यादिति यथोक्तविशेषणस्यैवोपादेयतया तादृशाभावयोरपि लक्षणघटकत्वादिति भावः । भूतत्वस्य बहिरिन्द्रियग्राह्यविशेषगुणात्मकतया** [1]**प्रतियोगिस्वरूपाणां**

[1]इदं च चालिनीन्यायेन तादृशाभावप्रतियोगितावच्छेदकत्वे हेतुः––रा। सामान्याभावीयप्रतियोगिता प्रतियोगितदभावोभयस्वरूपा विशेषाभावीयप्रतियोगिता च केवलप्रतियोगिस्वरूपा इति प्राचीनमतं ज्ञेयम्––स्व ।

**तन्निष्ठप्रतियोगितानां चालिनीन्यायेन [1]उत्पत्तिकालावच्छेदेन वा साध्यवन्निष्ठाभावप्रतियोगितावच्छेदकतया भूतत्वाभावस्य न साध्यतावच्छेदकावच्छिन्नव्यापकतावच्छेदकप्रतियोगिताकत्वमित्याशयेनाखण्डव्याप्यवृत्तिमनोभेदाभावानुधावनम् । उक्तरीत्या अत एवेत्यादिग्रन्थावतारात् प्रथमतो वाच्यत्वाभावमादाय सर्वत्रैव व्यभिचारिण्यतिव्याप्तेर्दर्शितत्वात् साध्याभावमादाय व्यभिचारिविशेषे अतिव्याप्तिप्रदर्शनं संदर्भविरुद्धमित्याशङ्कानवकाशः।**

**केचित्तु––यावत्पदानुपादाने वाच्यत्वादेरुदासीनपदार्थस्याभावमादाय व्यभिचारिसामान्ये अतिव्याप्तिर्विश्राम्यतु, साध्याभावमादायापि क्वचिदतिव्याप्तिः स्यात्, सा च यावत्पदोपादानात् न भवतीत्यभिप्रायकतया न संदर्भविरुद्धमित्याहुः ।।**

## कृष्णंभट्टीयम्

'[2]**ननु**' इति। तद्व्याप्यत्वं च विशिष्य निवेश्यम्; न तु यदभावप्रतियोगितात्वेन; भूतत्वमूर्तत्वोभयाभावस्पर्शाभावयोः समनियतत्वेनैक्यपक्षे अतिव्याप्त्यसंगतेः। वह्निभिन्नत्वेन वह्न्यभाव-घटभिन्नत्वेन घटाभावयोरैक्येनासंभवाच्च। एवं प्रतियोगिसामानाधिकरण्यं साध्यतावच्छेदकसंबन्धेन ; न तु प्रतियोगितावच्छेदकसंबन्धेन ; समवायेन प्रमेयसाध्यकव्यभिचारिण्यतिव्याप्तेः ; तथाविधस्य घटत्वेन प्रमेयत्वाभावस्य स्वरूपसंबन्धेन प्रतियोगिसामानाधिकरण्यात्। ननु प्रतियोगितायां साध्यतावच्छेदकव्याप्यत्वं न साध्यभिन्नावृत्तित्वं प्रमेयसाध्यकाव्याप्तेः ; किं तु साध्यतावच्छेदकव्याप्यप्रतियोगिताकः कश्चनाभावः प्रतियोगिसमानाधिकरणः तत्त्वमित्येव; एवं च साध्यतावच्छेदकीभूतवह्नित्व-

[1] प्रतियोगिताया अतिरिक्तत्वे त्वाह 'उत्पत्ति' इति––रा।

[2] नन्विति प्रतीकं नास्ति––अ.

निष्ठधर्मं साध्यतावच्छेदकपदेनोपादायैव एतल्लक्षणप्रवेशेऽनवस्थापत्तिः ; अत्रापि साध्यतावच्छेदकव्याप्यत्वान्तरनिवेशादित्यत आह—' **स्वव्यापक** ' इति । नन्वेवं ' वह्निधूमोभयवान् धूमात् ' इत्यादौ तादृशोभयत्वादिरूप-साध्यतावच्छेदकस्य व्यासज्यवृत्तित्वेन प्रतियोगितायाः प्रत्येकपर्यवसित-त्वेन तद्वति तादृशोभयत्वाभावसंभवात् व्यापकत्वासंभवेनाव्याप्तेः कथ-मियमाशङ्का ? कथं च तादृशरीत्यैवोभयत्वावच्छिन्नाभावस्य लक्षणाघटक-त्वात् भूतत्वमूर्तत्वोभयसाध्यकव्यभिचारिणि वाच्यत्वाभावमादायाति-[1]व्याप्तिः? अथ संयोगाद्यव्याप्यवृत्तिसाध्यतावच्छेदकस्थले अभावप्रसिद्ध्यर्थं व्यापकताघटकाभावे प्रतियोगिवैयधिकरण्यं प्रवेश्यम् ; न चैवं[2] संयोगा-वच्छिन्नसाध्यकव्यभिचारिणि वाच्यत्वाभावमादायातिव्याप्तिः ; संयोगा-भावस्य प्रतियोगिसमानाधिकरणभिन्नत्वासंभवेन तादृशाभावप्रतियोगिता-वति वाच्यत्वेऽन्याभावस्यैवोक्तप्रतियोगिव्यधिकरणत्वादिति वाच्यं; प्रति-योग्यनधिकरणप्रतियोगित्ववन्निष्ठाभावघटितस्य तस्य विवक्षितत्वादिति चेन्न ; उभयत्वसाध्यतावच्छेदकस्थले उभयत्वे प्रतियोग्यनधिकरणप्रति-योगित्ववन्निष्ठाभावप्रतियोगितावच्छेदकत्वस्यैव सत्त्वेनोक्तदोषा[3]वारणात्; यदि प्रतियोग्यधिकरणं यद्यत् तत्तद्व्यक्तिभेदकूटवत्प्रतियोगित्ववदित्युच्यते; तदा एकमात्रवृत्तिसाध्यतावच्छेदककस्थले प्रतियोगितामात्रस्यैव साध्य-तावच्छेदकव्याप्यत्वसंभवेन वाच्यत्वाभावमादायातिव्याप्तेः; प्रतियोगि-त्वाधिकरणे साध्यतावच्छेदकाभावस्य [4]दुर्घटत्वात् तादृशसाध्यतावच्छेदक-रूपप्रतियोग्यधिकरणस्यैकत्वेन यद्यदर्थाप्रसिद्धेरिति चेन्न; साध्यतावच्छेदक-भेदेन व्याप्यत्वभेदादुभयत्वादिसाध्यतावच्छेदकस्थले केवलस्वरूपसंबन्धेन प्रतियोग्यनधिकरणत्वस्य निवेशनीयत्वात् । यद्वा प्रतियोग्यनधिकरणत्वं प्रतियोगिवृत्तिवैशिष्ट्यावच्छिन्नावच्छेदकताकभेदवत्त्वमतो न कोऽपि दोषः । प्रतियोगिनोऽव्याप्यवृत्तित्वे तद्वैशिष्ट्यावच्छिन्नाभावस्येव ईदृशभेदस्यापि

1 अतिव्याप्त्यभिधानम्?—अ.
2 ' न चैवमपि '—अ.
3 ' दोषवारणाभावात '—अ.
4 दुर्धरत्वात्—अ.

तथात्वे तु प्रतियोगिमदवृत्तिधर्मवत्त्वं, प्रतियोग्यवच्छिन्नप्रतियोगितावदन्यत्वं वा बोध्यम् । वस्तुतस्तु प्रतियोगितावद्वृत्तित्वं निरवच्छिन्नं निवेश्यमिति । '**मनसि**' इत्यादि । स्वविशिष्टत्वसद्भावमभिप्रेत्य । अन्यथा परमाणौ तदभावस्यातथात्वेन तदसंगतेः । दिक्कृतविशेषणतानुपगमात् नित्ये तदभावाद्वा । न च घटत्वेन भूतत्वमूर्तत्वोभयाभावमादाय तत्संगतिः । तथा सति घटत्वेन केवलमूर्तत्वाभावमादायैव तत्संगतिसंभवेन द्वित्वावच्छिन्नाभावेत्यस्य भूतत्वमूर्तत्वोभयत्वावच्छिन्नाभावेति तद्विवरणस्य चासंगतेः ।

यत्तु--गगनमनसोरुभयाभावस्य प्रतियोगिसामानाधिकरण्यप्रदर्शनं क्वचित्; तदयुक्तम्; 'गोमान् गोत्वात्' इत्यादौ अतिव्याप्तिवारणार्थमिदानीं हेत्वधिकरणावच्छेदेनेत्यस्यावश्यकत्वात् । न च तदतिव्याप्तेरत्रत्यादिपदग्राह्यता । तद्वारणस्य यावत्त्वोपादानाप्रयोजनत्वात् । मूर्तत्वे स्वशब्दनिवेदिते आदिपदग्राह्ये भूतत्वे च तत्प्रदर्शनमित्यपि पदव्युत्पत्तिमसृणान्तःकरणैरनुपादेयम् ।

वस्तुतस्तु स्ववैशिष्टयस्य निष्फलत्वेन हेयत्वेऽपि उक्तसाध्यके एव परमाण्ववृत्तिमूर्तत्वे मनोवृत्तित्वविशिष्टमूर्तत्वे जन्यमूर्तमनोन्यतरत्वे वोभयत्वावच्छिन्नाभावमादायातिव्याप्तिः [1]संभवत्येव [2][एतदर्थमेव वा आदिपदमिति] ।

'**तादृशोभयाभावस्यैव**' इति । यत्किंचिदभावस्य धर्तव्यत्वात् । '**यावत्पदे दत्ते**' इत्यादि । अत्रेदं चिन्त्यम्--साध्यतावच्छेदकव्याप्यप्रतियोगिताकाभावनिवेशन्याभिप्रेतत्वे यावत्पदे दत्ते भूतत्वमनोन्यत्वाद्यभावमादायातिव्याप्तिवारणे तु **दीधितिकृतां** मनोन्यत्वाभावलेखनासंगतिः; तस्य साध्यतावच्छेदकव्याप्यप्रतियोगिताकत्वाभावात् । न च

[1] संभवत्येवेति--अ. [2] [ ] एतदन्तर्गतपाठो नास्ति--अ.

साध्यतावच्छेदकव्याप्यप्रतियोगिताकयावदभावनिवेशे ‘ वह्निमान् धूमात्’ इत्यादौ मानसीयवह्न्याद्यभावमादायाव्याप्तिवारणाय यथोक्तविशेषणस्यावश्यकतया तादृशाभावयोः न लक्षणघटकत्वानुपपत्तिरिति वाच्यम् । तथा सति‘ तादृशाभावयोः लक्षणघटकत्वात् ’ इत्यनेन तादृशाभावद्वयस्य लक्षणघटकत्वसमर्थनासंगतेः । भूतत्वाभावस्य प्रागपि लक्षणघटकत्वात् । न च भूतत्वाभावस्य प्राक् लक्षणघटकत्वेऽपि मनोन्यत्वाभावस्यापि लक्षणघटकत्वार्थं तथाभिधानमिति वाच्यम् ; अत एवेत्यादिना यावत्पदव्यावृत्त्यभिधाने यावदन्तर्गतभूतत्वाभावमादायैवातिव्याप्तिनिराससंभवे ‘ वह्निमान् धूमात् ’ इत्यादौ महानसीयवह्न्यभावमादायाव्याप्तिवारणाय यथोक्तविशेषणे मनोन्यत्वाभावस्य लक्षणघटकत्वं संपाद्य तादृशाभावमादायातिव्याप्तिवारणप्रयासस्य निष्फलतया तद्ग्रन्थस्य एतदर्थतात्पर्यकत्वादिति ।

अत्राहुः——यथोक्तविशेषणविशेषितयावदभावघटितलक्षणे यावत्त्वानुपादाने वाच्यत्वाभावमादाय दत्ताया अतिव्याप्तेः वारणार्थं यावत्त्वनिवेशविद्वेषिणा यथोक्तविशेषणं परित्यज्य साध्यतावच्छेदकव्याप्यप्रतियोगिताकत्वमादृतम् । तत्र चोभयत्वावच्छिन्नसाध्यकेऽतिव्याप्तिरिति यावत्त्वनिवेशः। तथा च साध्यतावच्छेदकव्याप्यप्रतियोगिताकयावदभावान्तर्गतं भूतत्वाभावमादायैव नातिव्याप्तिः । एवं च मनोन्यत्वाभावलेखनं यथोक्तविशेषणप्रवेशस्य निर्बीजत्वेऽसंगतं स्यादित्यतो महानसीयवह्न्याद्यभावमादायाव्याप्तिः प्रदर्शिता । अथ यथोक्तविशेषणप्रवेशेऽपि भूतत्वाभावमादायोभयसाध्यकेऽतिव्याप्तिवारणसंभवात् मनोन्यत्वाभावलेखनासंगतिरित्याशङ्कापरिहाराय भूतत्वस्येत्यादिना तदभावस्य यथोक्तविशेषणशून्यत्वस्य संपादनीयत्वेन तत्संगतेरिति ।

एवं च तादृशाभावयोरपि लक्षणघटकत्वादित्यस्य भूतत्वमनोन्यत्वाभावयोः साध्यतावच्छेदकव्याप्यप्रतियोगिताकाभाव - यथोक्ताभावघटितलक्षणयोः क्रमेण लक्षणघटकत्वादित्यर्थः । उक्तरीत्या साध्यतावच्छेदक-

व्याप्यप्रतियोगिताकयत्किंचिदभावनिवेशं कृत्वा यावत्पदासत्त्वे **यथोक्त-विशेषणसत्त्वे** संदर्भविरोधं परिहरतां मतमाह--'**केचित्तु**' इति । साध्याभावं ; साध्यमात्रप्रतियोगिताकाभावम् ; तेन साध्यतदन्योभयाभावमादायातिव्याप्तेर्व्यभिचारिसामान्ये सत्त्वेऽपि न क्षतिः । लेखनसंक्षेपनिर्बन्धिनां **दीधितिकृतां** निर्बीजलेखनप्रसङ्गोऽत्रास्वरसः । व्याप्यव्यापकभावापन्नोभयसाध्यके 'वह्निधूमोभयवान् वह्नेः' इत्यादौ द्वित्वावच्छिन्नाभावमादायातिव्याप्तिसंभवेऽपि परस्परव्यभिचारिभावापन्नोभयसाध्यकोत्कीर्तनं तत्र **तदुभयत्रैवातिव्याप्तिसंभवः** व्याप्यव्यापकभावापन्नोभयसाध्यक एकत्रैव [1]तत्संभव इति विशेषव्युत्पादनार्थम् । विशिष्टसत्तादिसाध्यके विशिष्टातिरिक्ततामते नातिव्याप्तिरिति तन्नोक्तम् । विशिष्टातिरिक्ततावादिनामपि सर्वमप्युभयत्वं वैशिष्ट्यातिरिक्तमिति मतान्तरसत्त्वात् नातिव्याप्त्यसंगतिः । विरुद्धोभयरूपेण प्रमेयसामान्याभावमादायातिव्याप्तेर्यावत्पदम् । सामान्याभावीयान्यप्रतियोगितायाः प्रत्याश्रयभिन्नत्वेन वह्निधूमोभयाभावमादायातिव्याप्तेः तत्पदमिति केचित् ॥

## न्यायरत्नम्

**यावत्पदस्यासाधारणप्रयोजनं नास्तीत्यभिप्रायेण 'अत एव' इति ग्रन्थमवतारयति**--'ननु' इति । **एतेन 'साध्यातावच्छेदकावच्छिन्नेत्यादिविशेषणस्य व्यावृत्तेः पश्चाद्वक्ष्यमाणतयेत्यादि'** जगदीशानां **उपरि वक्ष्यमाणदूषणमेतन्मते निरवकाशम्** । 'स्वव्यापकताकत्वम्' **इति । अत्र स्वव्यापकत्वं स्वसमानाधिकरणप्रतियोग्यवृत्तिभेदप्रतियोगितानवच्छेदकत्वं भेदे प्रतियोग्यवृत्तित्वनिवेशात् [2]व्यासज्यवृत्तिधर्मावच्छिन्नसाध्यके साध्याभावीयप्रतियोगितायाः प्रत्येकवृत्तितया तत्रोभयत्वावच्छिन्नप्रतियोगिताकभेदस्य सत्त्वेऽपि न साध्यतावच्छेदकव्याप्यप्रतियोगिताया अप्रसिद्धिः ; [3][स्वसमा-**

[1] तत्संभवादिति--अ. [2] व्यासज्यवृत्तित्वं च एकत्वावच्छिन्नानुयोगिताकपर्याप्तिकान्यत्वम्--ख. [3] एतत्पाठो नास्ति--ग.

नाधिकरणप्रतियोग्यवृत्तिरित्यनेन स्वाधिकरणावच्छेदेन प्रतियोगिताश्रयवृत्तित्वाभाववत्त्वं प्रतियोगितानधिकरणस्वाधिकरणवृत्तित्वं वा विवक्षितमिति न परकीयकुचोद्यावकाशः]। अत एव भूतत्वमूर्तत्वोभयत्वावच्छिन्नप्रतियोगिताया अपि साध्यतावच्छेदकव्याप्यत्वात् तन्निरूपकाभावस्य लक्षणघटकत्वनिर्वाहः। यद्यप्येतत्कल्पे स्वविशिष्टत्वनिवेशे प्रयोजनाभावेन यावद्धेत्वधिकरणजलपरमाणौ केनापि संबन्धेन भूतत्वमूर्तत्वोभयाभावासत्त्वात् न तादृशाभावस्य विवक्षणीयप्रतियोगिसामानाधिकरण्यमिति नातिव्याप्तिस्तथापि नित्यानामपि मूर्तानां दिगुपाधित्वमित्यभिमानेनेदमिति ध्येयम्।

अथवा भूतत्वमूर्तत्वोभयघटकभूतत्वं वहिरिन्द्रियग्राह्यविशेषगुणरूपमेवेति न क्षतिः॥

## गादाधरी

(१०) परे तु मतानुसारेण तद्ग्रन्थस्यावतारणं, तन्मतखण्डनं च॥

परे तु--ननु साध्यतावच्छेदकव्यापकीभूतप्रतियोगिताकयावदभावनिवेशेनैवोपपत्तेः साध्यतावच्छेदकावच्छिन्नव्यापकतावच्छेदकप्रतियोगिताकयावदभावनिवेशनमफलम्, तादृशप्रतियोगिताकत्वविशेषणव्यावर्तनीयस्य तत्तद्वह्निचाद्यभावस्य वह्नित्वव्यापकप्रतियोगिताकत्वाभावेनोक्तविशेषणेनापि व्यावर्तनसंभवात्; अत आह--अत एवेति। यत एव साध्यतावच्छेदकावच्छिन्नव्यापकतावच्छेदकप्रतियोगिताकाभावे यावत्त्वमुपात्तम्, न तु साध्यतावच्छेदकव्यापकप्रतियोगिताकाभावे, तत एवेत्यर्थः। भूतत्वेति। साध्यतावच्छेदकव्यापकप्रतियोगिताकाभावनिवेशे भूतत्वमूर्तत्वोभयवान् मूर्तत्वादित्यादौ भूतत्वाभावमनोन्यत्वाभावप्रतियोगिताया उभयत्वाव्यापकत्वेन उभयत्वावच्छिन्नाभावादेरेव लक्षण-

घटकतया अतिव्याप्तिः स्यात्, यथोक्तविशेषणाक्रान्ताभावनिवेशे च भूतत्वमनोन्यत्वाद्यभावानामपि लक्षणघटकतया नातिव्याप्तिरिति भावः। न च साध्यतावच्छेदकव्यापकप्रतियोगिताकाभावनिवेशेऽपि हेतुसमानाधिकरणस्य मनोभिन्नभेदस्य प्रतियोगितावच्छेदकसंबन्धेन प्रतियोगिसामानाधिकरण्यविरहान्नातिव्याप्तिः, [1][साध्यतावच्छेदकव्यापकताया लक्षणे निवेशे] तादृशव्यापकताघटकसंबन्धेन प्रतियोगिसामानाधिकरण्यनिवेशासंभवात्, प्रतियोगितावच्छेदकसंबन्धेन तत्सामानाधिकरण्यस्य विवक्षणीयत्वादिति वाच्यम्; प्रतियोगितावच्छेदकसंबन्धेन तत्सामानाधिकरण्यनिवेशेऽपि वह्निमान् धूमादित्यादौ हेतुसमानाधिकरणस्य वह्नित्वव्यापकप्रतियोगिताकस्य पर्वतभिन्नभेदस्य प्रतियोगितावच्छेदकसंबन्धेन प्रतियोगिसामानाधिकरण्यं पर्वतान्तर्भावेण नास्तीत्यव्या[2]प्त्यापत्त्या तेन संबन्धेन प्रतियोगिसामानाधिकरण्यस्य निवेशासंभवात् साध्यतावच्छेदकसंबन्धेनैव प्रतियोगिसामानाधिकरण्यमगत्या वाच्यम्, तथा च मनोभिन्नभेदस्य[3] तेन संबन्धेन मूर्तत्वादिरूपप्रतियोगिसामानाधिकरण्यमक्षतमेवेत्यतिव्याप्तेः। साध्यतावच्छेदकसंबन्धेन प्रतियोगिसामानाधिकरण्यनिवेशे वक्ष्य-

[1] [ ] 'साध्यतावच्छेदकावच्छिन्नव्यापकताया लक्षणेऽनिवेशे' (अ) (क)।

[2] इदमुपलक्षणम्। संबन्धान्तरावच्छिन्नप्रतियोगिताकसाध्याभावमादाय सर्वत्र लक्षणासंभवोऽपि बोध्यः। अत्र समवायसंबन्धावच्छिन्नप्रतियोगिताकवह्न्यभावमादायाव्याप्तिसंभवे तादृशभेदपर्यन्तानुधावनं व्यर्थमिति मन्तव्यम्—रा।

[3] 'मनोभिन्नभेदस्यापि' अ।

[1]माणस्थलान्तरेऽप्यतिव्याप्तिः स्यादिति तु नास्माकं[2] दोषः इत्यभिप्राय इति व्याचक्रुः--

**तत्तु न समीचीनतया प्रतिभाति, साध्यतावच्छेदकेत्यादि-विशेषणव्यावृत्तेः पश्चाद्वक्ष्यमाणतया, तदुत्तरमेव साध्यतावच्छेद-कावच्छिन्नेत्यादिविशेषण[3]स्थले साध्यतावच्छेदकव्यापकप्रति-योगिताकत्वविशेषणं किं नोपात्तमित्याकाङ्क्षोदयात् आदावेव तादृशविशेषणपरित्यागबीजकथनस्यासंगतत्वादिति ।**

कृष्णंभट्टीयम्

'**भूतत्वाभाव**' इति । न च साध्यतावच्छेदकावच्छिन्नानुयोगिताक-भेदघटितम् उभयत्वव्यापकत्वमक्षुण्णमेवेति वाच्यम्; 'भूतत्वमूर्तत्वो-भयवान् नित्यस्पर्शात्' इत्यादौ, [4]भूतत्वाभावमूर्तत्वाभावयोरपि लक्षणघटक-तया तद्विशिष्टहेत्वधिकर[5]णाप्रसिद्धेस्तदनिवेशात् । '**अव्याप्त्यापत्त्या**' ।

[1] 'वक्ष्यमाणेति' दलान्तरेऽपीति दीधितिव्याख्यानावसरे गदाधरभट्टाचार्यैः वक्ष्यमाणघटत्वाभाववान् मेयत्वादित्यादावित्यर्थः--रा; गदाधरेण धूमत्वप्रकारक-प्रमाविशेष्यतावान् वह्नेरित्यादौ नास्माकं दोष इति । प्रतियोगितावच्छेदकसंबन्धेन प्रतियोगिसामानाधिकरण्यस्वीकारपक्षे तद्दोषस्याविशिष्टत्वादिति भावः । तद्वारण-प्रकारश्च भावरूपप्रतियोगिसामानाधिकरण्यविवक्षया; न चैवं घटत्वाभाववान् पटत्वादित्यादौ यावदन्तर्गतव्यधिकरणधर्मावच्छिन्नसाध्याभावस्यातथात्वादव्याप्तिरिति वाच्यम्; साध्यतावच्छेदकव्यापकप्रतियोगितायां भावनिष्ठत्वनिवेशात् । इत्थं च घटावृत्तित्वावच्छिन्नाभावमादाय लक्षणसमन्वयः । आकाशाभाववान् मेयत्वाद् इत्यादौ घटत्वपटत्वाभ्यां प्रमेयसामान्याभावमादाय लक्षणसमन्वयः; इयं च प्राचीनटिप्पणीति ज्ञेया--अ.

[2] 'नास्माकमेव दोषः' --मै; एतत्पाठमनुसृत्य कृष्णंभट्टीये प्रतीकधारणम्; न्यायरत्ने 'नास्माकं दोषः' इति पाठमनुसृत्य इति ज्ञेयम्--स्व.

[3] 'स्थाने'--अ.  [4] जन्यभूतत्वाभावजन्यमूर्तत्वाभावयोरपि--अ.

[5] हेत्वधिकरणे समवायेन प्रतियोगिनो ऽवृत्तेः अप्रसिद्धेः--अ.

**प्रमेयसाध्यके** लक्षणगमनात् । ' **घटत्वाभाववान् मेयत्वात्** ' इत्यादौ पूर्वं घटत्वाभावत्वघटावृत्तित्वावच्छिन्नभेदस्य प्रतियोगितावच्छेदकतादात्म्य-संबन्धेन हेत्वधिकरणावच्छेदेन प्रतियोग्यसामानाधिकरण्यात् न दोषः । इदानीं तु तस्य घटत्वादिरूपसाध्याभावस्य च दैशिकविशेषणतारूपसाध्य-तावच्छेदकसंबन्धेन पूर्वक्षणवृत्तित्वविशिष्टस्वाभावरूपप्रतियोगिसामानाधि-करण्यादतिव्याप्तिरित्याह—' **साध्यता** ' इति । ' **नास्माकमेव** ' । साध्य-तावच्छेदकव्याप्यप्रतियोगिताकयत्किंचिदभावनिवेशिनामप्येतदतिव्याप्तिस-त्त्वात् । यद्वा—यथाश्रुते **दीधितिकृतामेव** दोषः ; नास्माकम् ; स्वाभाव-त्वानवच्छिन्नप्रतियोगितानिवेशेन तदुद्धारसंभवादित्याशयः । यद्वा—**दीधितौ** वक्ष्यमाणेत्यर्थः । ' **रूपसामान्याभाववान् पृथिवीत्वात्** ' इत्यादौ रूपाद्या-त्मकसाध्याभावस्य स्वध्वंसादिरूपप्रतियोगिसामानाधिकरण्यात् ; तस्य सद्धेतुत्ववादिनामस्माकमित्यर्थः । परंतु रूपादीति ग्रन्थावतारिकायामप्ये-तदभिधानात् पौनरुक्त्यं प्रयत्ननिर्वाह्यम्; पूर्वत्र तु रूपसामान्याभाव-साध्यकोपेक्षाबीजं दीधितौ दर्शितम् ; अन्याभावसाध्यकोपेक्षाबीजमत्रेति न तदाशङ्केति बोध्यम् ।

' **पर्वतादावपि** ' इति । स्वविशिष्टहेत्वधिकरणेत्यादिघटितस्यापि लक्षणस्य दुरुपपादतालाभाय तदुक्तम्[1] । ' **व्यापकताया** ' इति । एतेन तस्या लक्षणघटकत्वे तद्घटकसंबन्धेन प्रतियोगिसामानाधिकरण्यस्य वाच्य-तया भावरूपत्वं व्यर्थमिति सूचितम् ।

## न्यायरत्नम्

' व्यापकताघटकसंबन्धेन प्रतियोगिसामानाधिकरण्य[2]निवेशनासंभ-वात् ' इति । **प्रतियोगितायां साध्यतावच्छेदकव्यापकत्वस्य स्वरूपसंबन्धेनैव सत्त्वात् तादृशप्रतियोगिताकस्य वह्न्याद्यभावस्य स्वरूपसंबन्धेन प्रतियोगि-**

1 ' स्वाभावमादायैवातिव्याप्तिपरिशेषार्थम् ' अधिकपाठः—अ.

2 ' निवेशासंभवात् ' इत्येव गादाधर्यां पाठो दृश्यते—स्व.

**सामानाधिकरण्याभावात् संयोगेन वह्न्यादिसाध्यके धूमादिहेतावव्याप्तेरिति भावः ।** ' पर्वतभिन्नभेदस्य ' **इति । अथ प्रतियोगितावच्छेदकसंबन्धेन प्रतियोगिसामानाधिकरण्यनिवेशेऽसंभवः कुतो नोक्तः ? न च प्रमेयसाध्यके पक्षभिन्नभेदस्य साध्यतावच्छेदकव्यापकप्रतियोगिताकत्वविरहेण घटत्वपटत्वोभाभ्यां प्रमेयसामान्याभावमादाय लक्षणसमन्वयः संभवतीति वाच्यम्; तत्रापि हेत्वधिकरणवृत्तितानवच्छेदकसंबन्धावच्छिन्नाभावस्य तेन संबन्धेन हेत्वधिकरणे प्रतियोगिसामानाधिकरण्यासंभवात् ।**

अत्र **केचित्––प्रतियोगितायां तादात्म्यसंबन्धावच्छिन्नत्वदाने प्रमेयसाध्यके लक्षणगमनात् नासंभवोऽभिहित इत्याहुः ।**

वस्तुतस्तु**––विषयितासंबन्धस्य वृत्त्यनियामकतया** [1]**अभावप्रतियोगितानवच्छेदकत्वे** [2]**प्रमेये साध्ये भूतलत्वादिहेतौ लक्षणसमन्वयः संभवति तत्र विषयित्वातिरिक्तसंबन्धानां हेत्वधिकरणवृत्तितावच्छेदकत्वात् ।**

' वक्ष्यमाणस्थलान्तर ' **इति । घटत्वाभाववान् मेयत्वादित्यादावित्यर्थः ।** ' अतिव्याप्तिः ' **इति । पूर्वक्षणवृत्तित्वविशिष्टस्वाभावरूपप्रतियोगिसामानाधिकरण्यमादायेत्यादिः ।** ' नास्माकं[3] दोष ' **इति । पूर्वमतेऽपि सत्त्वादिति भावः । यद्वा यादृशप्रतियोगिताकाभावे स्वावच्छेदकावच्छिन्नसामानाधिकरण्यव्यधिकरणधर्मावच्छिन्नाभावभिन्नत्वोभयाभावः तादृशप्रतियोगिताश्रयसामानाधिकरण्यस्यैव प्रतियोगिसामानाधिकरण्यमित्यनेन स्वमते विवक्षणीयत्वात् पूर्वक्षणवृत्तित्वविशिष्टस्वाभावत्वावच्छिन्नप्रतियोगिताया अतादृशत्वात् नास्माकं मतेऽतिव्याप्तिरित्यभिप्रायः ।**

## दीधितिः

साधनसमानाधिकरणगोत्वाद्यभावस्य तत्तत्साध्यव्यक्त्यभावस्य वा अतथात्वात् ' **साध्यतावच्छेदक०** ' इत्यादि ।।

[1] यत्संबन्धेन प्रतियोगिनः सत्त्वेन प्रत्यक्षमापादयितुं शक्यते तस्यैव प्रतियोगितावच्छेदकत्वमित्याशयः––**ख.** [2]प्रमेयसाध्यकभूतलत्वादिहेतुके––**ग.** [3]'नास्माकमेव दोषः' इत्यपि गादाधर्यां पाठः । नास्माकमेवेति कृष्णंभट्टीये प्रतीकधारणम्––**ख.**

## गादाधरी

(११) साध्यतावच्छेदकावच्छिन्नव्यापकतावच्छेदकप्रतियोगिताका इति विशेषणस्य प्रयोजनवर्णनम् ।।

गोत्वाद्यभावस्येति । **प्रतियोग्यसामानाधिकरण्यादित्यर्थकेनातथात्वादित्यनेनान्वयः; तथा च साध्यतावच्छेदकेत्याद्युपादाने**[1] **असंभव इति भावः । यद्यपि गोत्वाभावादेरपि पूर्वक्षणवृत्तित्वादिविशिष्टस्वाभावरूपप्रतियोगिसामानाधिकरण्यं पर्वतादावप्यस्ति, तथापि व्यापकताया लक्षणाघटकत्वे** [2]**साध्यतावच्छेदकसंबन्धेन** [3]**भावरूपप्रतियोगिसामानाधिकरण्यं धूमवान् वह्नेरित्यादौ धूमाभावादेः पूर्वक्षणवृत्तित्वादिविशिष्टस्वाभावरूपप्रतियोगिसामानाधिकरण्यमादायातिव्याप्तेर्वारणायावश्यं विवक्षणीयम्, तथा चायमसंभव इति भावः । साध्यप्रतियोगिकाभावनिवेशेऽपि गोत्वाद्यभावमादायासंभवस्य वारणसंभवात्** तत्तत्साध्यव्यक्तयभावस्येति । **अस्य च** 'नानाव्यक्तिसाध्यके' **इत्यादिः, तथा च साध्याभावनिवेशेऽपि वह्निमान् धूमादित्यादावव्याप्तिः स्यादिति भावः । साध्यतावच्छेदकावच्छिन्नव्यापकतावच्छेदकत्वं च, साध्यतावच्छेदकावच्छिन्नसाध्यवन्निष्ठाभावप्रतियोगितानवच्छेदकत्वम् । गुणकर्मान्यत्वविशिष्टसत्तावान् जाते-**

[1] अनुपादाने च––अ.

[2] न्यायरत्ने तु 'साध्यतावच्छेदकसंबन्धेन' इति पाठः प्रामादिकः इत्युक्तमिति ध्येयम्, कृष्णंभट्टीये तादृशपाठःक्वचित् इति––स्व.

[3] अत्र साध्यतावच्छेदकसंबन्धेनेत्यनेनैव 'धूमवान् वह्नेः' इत्यादौ अतिव्याप्तिवारणेऽपि 'धूमप्रकारकप्रमाविशेष्यतावान् वह्नेः' इत्यादौ अतिव्याप्तिवारणाय भावरूपेत्युक्तमिति ध्येयम्––रा.

**रित्यादौ [1][विशिष्टसत्ताव्यापकतावच्छेदिकाया अपि द्रव्यत्वाद्यभावीयप्रतियोगिताया न साध्यवन्निष्ठाभावप्रतियोगितानवच्छेदकत्वम्, सत्तावति गुणादौ तादृशप्रतियोगित्वावच्छिन्नाभावसत्त्वात् अतो विशिष्टसत्ताद्यभाव एव लक्षणघटकः [2]तस्य च गुणादौ] सत्तादिरूपप्रतियोगिसमानाधिकरणत्वादतिव्याप्तिः, अतः साध्यतावच्छेदकावच्छिन्नत्वोपादानम्। तथा च सति द्रव्यत्वाभावप्रतियोगिताया अपि विशिष्टसत्तात्वाद्यवच्छिन्नवन्निष्ठाभावप्रतियोगितानवच्छेदकतया तादृशाभावानां च गुणादावतथात्वान्नातिव्याप्तिः ; [3]यत्किंचिद्रूपावच्छिन्नसाध्यवत्तानिवेशे च सत्तावान् जातेरित्यादौ विशिष्टसत्ताव्यापकतावच्छेदकप्रतियोगिताकद्रव्यत्वाभावादिकमादायाव्याप्तिर्बोध्या ॥**

## कृष्णंभट्टीयम्

'**भावरूप°**' इति। न चैवमपि 'धूमवान् धूमकालीनवह्नेः' इत्यादौ धूमाभावस्य कालिकसंबन्धेन तथात्वं 'धूमवान् धूमवद्वह्नेः' इत्यादौ धूमाभावस्य धूमाभाववद्भिन्नभेदतया धूमाभाववद्भिन्नहेतुरूपभावसामानाधिकरण्यं च दुर्वारमिति वाच्यम् ; अयोगोलकान्यत्वाभावस्य तादृशप्रतियोग्यप्रसिद्धेः। यदि च तस्यापि अयोगोलकभिन्नभेदतया अयोगोलकभिन्नवह्न्यादिरूपभावसामानाधिकरण्यं दुर्वारं तदापि गगनाभावादेस्तादृशप्रतियोग्यधिकरणाप्रसिद्धिः। यदि च तस्यापि व्यधिकरण-

1 [ ] एतच्चिह्नमध्यस्थः नव्यः पाठः इत्युक्तम्—रा; तत्स्थाने 'सत्ताव्यापकतावच्छेदकप्रतियोगिताकविशिष्टसत्ताद्यभावस्य' इति पाठः—अ.

2 (अ) पुंस्तके नव्यपाठत्वेन उक्तावपि कृष्णंभट्टीये तस्येत्यस्यार्थवर्णनं दृश्यते —स्व.

3 यत्किंचित् पदं साध्यतावच्छेदकपरं तद्घटकपरं वा, प्रकृते गुणकर्मान्यत्ववैशिष्ट्यावच्छिन्नव्यापकतामादायातिव्याप्तेरभावादिति भावः—रा.

**धर्मावच्छिन्नाभावतया** घटादिरूपप्रतियोग्यधिकरणप्रसिद्धिर्मन्यते तदा **'धूमवान् वह्नेः'** इत्यादावनतिप्रसङ्गादेव व्यभिचारिसामान्येऽतिप्रसङ्गनियमभङ्गो बोध्यः । साध्यतावच्छेदकसंबन्धेनेति च क्वचित् दृश्यते; धूमाभावादेः कालिकसंबन्धेन धूमवति सत्त्वात्, गोत्वाभावादेस्तत्संबन्धेन गोत्ववति सत्त्वाच्च तदाव[1]श्यकम्; घटत्वाभावादिसाधकव्यभिचारिवारणाय भावरूपत्वं चेति भाति । एकव्यक्तिसाध्यके लक्षणगमनादाह—'**नाना**' इति । व्याप्तिनिरूपकत्वरूपव्यापकत्वोपादानेऽनवस्थेत्यतः '**साध्यता°**' इति । साध्यतावच्छेदकताघटकसंबन्धेन साध्यतावच्छेदकवत्त्वलाभाय साध्यपदम्। तेन वाच्यत्वाभावप्रतियोगिताया एव संबन्धसामान्येन साध्यतावच्छेदकविशिष्टव्यापकतावच्छेदकत्वेऽपि नातिव्याप्तिः । '**तस्य**'। सत्ताव्यापकतावच्छेदकप्रतियोगिताकविशिष्टसत्ताभावस्य । '**किंचिद्रूपम्**' । साध्यतावच्छेदकमन्यद्वा । 'वह्निमान् धूमात्' इत्यादौ महानसीयवह्नित्वादिकिंचिद्रूपमुपादाय तद्वह्न्यभावस्य न प्रतियोगिवैयधिकरण्याघटितसाध्यव्यापकतावच्छेदकप्रतियोगिताकत्वसंभवः । न चैवमपि महानसत्वाद्यभावमादायैवाव्याप्तिः । साध्यतावच्छेदकव्यापकत्वेन किंचिद्रूपनिवेशात् अतः सत्तावानिति । '**अव्याप्तिः**' इति । 'एतद्रूपवान् एतद्रसात्' इत्यादौ लक्षणगमनात् ।

## न्यायरत्नम्

'भावरूपप्रतियोगिसामानाधिकरण्यम्' **इति । साध्यतावच्छेदकसंबन्धेनेति क्वचित् पाठः । स च प्रामादिकः । व्यभिचारिणि सर्वेषामेवाभावानां पूर्वक्षणवृत्तित्वविशिष्टस्वाभावरूपप्रतियोगिसामानाधिकरण्यमादायातिव्याप्तिवारणाय भावरूपप्रतियोगिनिवेशसार्थक्येऽपि साध्यतावच्छेदकसंबन्धेनेत्यस्य [2]व्यर्थत्वात् । न च तदनिवेशे व्यभिचारिणि महाकालभिन्नः**

[1] न्यायरत्ने साध्यतावच्छेदकसंबन्धेनेति पाठः प्रामादिकः इति—स्व.

[2] कृष्णंभट्टीये 'साध्यतावच्छेदकसंबन्धनिवेश आवश्यक' इति—स्व.

कालत्वादित्यादौ सर्वेषामभावानां कालिकसंबन्धेन प्रतियोगिसमानाधिकरणत्वात् गगनादीनां कालवृत्तित्वस्वीकारात्, गगनाभावस्यापि तथात्वात्; गगनादीनां कालावृत्तित्वेऽपि, 'ईश्वरज्ञानभिन्नं गुणत्वात्' इत्यादौ सर्वेषामेवाभावानां विषयितासंबन्धेन प्रतियोगिसमानाधिकरणत्वात् तन्निवेश आवश्यक इति वाच्यम्; भावात्मकानां महाकालभेदेश्वरज्ञानभेदाभावानां भावरूपप्रतियोगिसामानाधिकरण्याभावात्। न च तादृशाभावानां महाकालेश्वरज्ञानभिन्नाभावानां च लाघवात् महाकालत्वेश्वरज्ञानत्वादिरूपत्वस्वीकारात् प्रसिद्ध्यत्येव तेषां भावः प्रतियोगीति वाच्यम्; तथापि सर्वत्र व्यभिचारिण्येतद्रूपध्वंसाभावस्य यावदन्तर्गतस्य भावरूपप्रतियोग्यप्रसिद्ध्यैवातिव्याप्तिवारणस्य सुकरत्वात्।

'यत्किंचिद्रूपावच्छिन्नसाध्यवत्तानिवेशे च[1]' इति। नन्वेवं वह्निमान् धूमादित्यादौ महानसीयवह्नित्वावच्छिन्नव्यापकतावच्छेदकप्रतियोगिताकमहानसीयवह्न्यभावमादायाव्याप्तिसंभवे सत्तासाध्यकानुधावनं निर्बीजमिति चेत्;

अत्र केचित्——यत्किंचिद्रूपे साध्यतावच्छेदकव्यापकत्वनिवेशे महानसीयवह्न्यभावस्योक्तस्थले न लक्षणघटकत्वमिति तत्पर्यन्तानुधावनमित्याहुः।

वस्तुतस्तु——साध्यतावच्छेदकावच्छिन्नत्वनिवेशस्य विशिष्टसत्तासाध्यकजातिहेतौ व्यावृत्तेः पूर्वमुक्तत्वात् सत्ताया जातेश्चोपस्थितत्वात् तत्राव्याप्तिरुक्तेति ध्येयम्।

## गादाधरी

(१२) साध्यवत्तायां साध्यतावच्छेदकसंबन्धनिवेशनम्॥

**साध्यवत्त्वं च साध्यतावच्छेदकसंबन्धेन बोध्यम्, अन्यथा धूमवान् वह्नेरित्यादौ धूमाभावायोगोलकान्यत्वाभावादिप्रति-**

1 'निवेशे च सत्तावान्' इति——ग.

योगितायाः कालिकविशेषणताविषयितादिसंबन्धेन धूमाधिकरणकालज्ञानादौ संयोगादिसंबन्धेन स्वावच्छिन्नाभावसत्त्वात् न केनापि संबन्धेन व्यापकतावच्छेदकत्वमिति केवलान्वयिवाच्यत्वादिनिष्ठप्रतियोगितैव स्वरूपादिसंबन्धघटितव्यापकतावच्छेदिका स्यादित्यतिव्याप्तिः। [1]न च संबन्धसामान्येन धूमादिमन्निष्ठो योऽभावः तदीयविषयतासंबन्धावच्छिन्नप्रतियोगितानवच्छेदिका या प्रमानिष्ठप्रतियोगिता तन्निरूपकप्रमाभावस्य च न विवक्षणीयसाध्यतावच्छेदकसंबन्धेन साध्यनिष्ठव्याप्यतानिरूपितस्वप्रतियोगित्वावच्छिन्नव्यापकताघटकयावत्संबन्धेन स्वविशिष्टयावद्धेत्वधिकरणे प्रतियोगिसामानाधिकरण्यं, साध्यतावच्छेदकसंयोगादिसंबन्धावच्छिन्नसाध्यनिष्ठव्याप्यतानिरूपितस्वप्रतियोगिनिष्ठव्यापकतायां संयोगादिसंबन्धावच्छिन्नधूमादिप्रकारतानिरूपितविशेष्यतासंबन्धस्यापि घटकतया तेन संबन्धेनायोगोलकादौ प्रतियोगिनोऽसत्त्वादिति वाच्यम्; यतो विषयताया विषयतात्वेनैव संबन्धता प्रमाणिकी, न तु तथाविधविशेष्य[2]तात्वेनेति ॥

परं त्वेतादृशदिशा समवायेन ज्ञानादिसाध्यकद्रव्यत्वादिहेतावेवातिव्याप्तिवारणं संभवति, तत्र ज्ञानाभावस्य संबन्ध-

[1] यद्यपि वक्ष्यमाणरीत्या धूमवन्निरूपितविशेषणतादिना वाच्यत्वाद्यभावस्यापि प्रतियोगिसामानाधिकरण्याभावात् नातिव्याप्तिरिति शङ्कापि संभवति, धूमवन्निरूपितविशेषणतात्वस्य क्वचिदपि अनुल्लेखात् न ताद्रूप्येण संबन्धताशङ्कापि इत्यतो नचेत्यादिना शङ्कते—रा.

[2] विशेषरूपेण संसर्गतास्वीकारे अतिव्याप्त्यभावात् अभावे यावत्त्वविशेषणं निरर्थकमिति न्यायरत्ने—स्व.

**सामान्येन साध्यनिष्ठव्याप्यतानिरूपितविषयतासंबन्धघटितव्यापकतावच्छेदकप्रतियोगिताकस्य, साध्यतावच्छेदकसंबन्धेन साध्यनिष्ठव्याप्यतानिरूपितस्वप्रतियोगिनिष्ठव्यापकताघटकयावत्संबन्धान्तर्गतसमवायेन घटादौ प्रतियोगिसामानाधिकरण्यविरहादिति । न च संबन्धसामान्येन धूमादिमन्निष्ठो योऽभावः तदीयसंबन्धसामान्यावच्छिन्नप्रतियोगितायां धूमाद्यभावीयसंबन्धसामान्यावच्छिन्नप्रतियोगित्वमप्यनवच्छेदकं, संयोगत्वाद्यवच्छिन्नसंयोगादिसंबन्धेन धूमादेः यत्किंचित्संबन्धेन धूमादिमति अभावसत्त्वेऽपि संबन्धत्वरूपव्यापकधर्मावच्छिन्नसंयोगादिसंबन्धावच्छिन्नप्रतियोगिताकतदभावासत्त्वात्; तथा च धूमाद्यभावस्यापि लक्षणघटकतया तस्य साध्यतावच्छेदकसंबन्धावच्छिन्नसाध्यनिष्ठव्याप्यतानिरूपितस्वप्रतियोगित्वावच्छिन्नव्यापकताघटकसंयोगत्वाद्यवच्छिन्नसंयोगादिसंबन्धेन प्रतियोगिसामानाधिकरण्यविरहान्नातिव्याप्तिरिति वाच्यम्, संबन्धत्वेन संबन्धानाम् अभावप्रतियोगितावच्छेदकसंबन्धत्वे मानाभावात् तेन रूपेण संबन्धानां व्यापकताघटकत्वासंभवात् ॥**

## कृष्णंभट्टीयम्

मास्तु साध्यतावच्छेदकसंवन्धेन साध्यवत्त्वं, संवन्धसामान्येनैव तन्निवेशादित्याशयेन शङ्कते—न च इति । प्रमानिष्ठा च प्रतियोगिता विषयतासंवन्धावच्छिन्ना व्यधिकरणधर्मावच्छिन्ना; समवायादिसंवन्धावच्छिन्ना तु समानाधिकरणधर्मावच्छिन्नापि । जन्यप्रमायाः प्रतियोगिवैयधिकरण्याघटितव्यापकत्वासंभवात्; न च वाच्यत्वाभावस्य धूमवन्निरूपितविशेषणतादिसंवन्धेनातथात्वेन अतिप्रसंगोद्धारसंभवात् कुतः तदुपेक्षेति वाच्यम्; विषयतातिरिक्तस्थले विशेषरूपेण संसर्गतायाः शङ्कितुरसंमत-

त्वात् । 'न तु' इति । विशेषरूपस्य क्वचिदपि अनुल्लेखात् । सामान्य-रूपस्यानुल्लेखेऽपि संसर्गाविषयकोच्छृङ्खलप्रकारविशेषविष[1]यकत्ववारणाय विशिष्टप्रतीतेः सामान्यरूपेण संसर्गावगाहितैवोपेयते; तावतैवोपपत्तौ विशेषरूपेण संसर्गतायां प्रमाणाभाव इत्यर्थः । न चैवं धर्मितावच्छेदकव्या-पकताविशिष्टसंयोगत्वादिना प्रकारतावच्छेदकधर्मावच्छिन्नप्रतियोगिताक-त्वविशिष्टसंयोगत्वादिना च संसर्गता व्याहन्येतेति वाच्यम्; प्रतियोग्य-नुयोगिघटितरूपेण तद्व्यक्तित्वादिना च संसर्गता नोपेयते विषयतायाश्च विषयतान्तरघटितरूपेणेत्याद्यनुभवानुसारादिति । साध्यतावच्छेदकसंबन्धे-नेत्यनुक्तौ व्यभिचारिमात्रे दोषोक्तावपि व्यापकताघटकयावत्संबन्धोपादा-नकल्पे साध्यतावच्छेदकसंबन्धनिवेशव्यावृत्त्याक्षेपस्थलं दर्शयति—'परं तु' इति । अतिव्याप्तीति । प्रतियोगिता यत्संबन्धेन व्यापकतावच्छेदिका तेनैव प्रतियोगिसामानाधिकरण्यमिति विषयतासंबन्धस्य व्यापकताघटकतया तेनैव तथात्वादतिव्याप्तिरित्यर्थः 'न च' इति । न चाभावप्रतियोगितायां संयोगसमवायाद्यवच्छिन्नत्वेऽप्यक्षतेः संबन्धसामान्यावच्छिन्नत्वोत्कीर्तनम-संगतमिति वाच्यम्; तस्य परित्याज्यत्वात् । साध्यतावच्छेदकसंबन्धेन साध्याधिकरणत्वानिवेशे प्रकारान्तरमवलम्ब्य 'ज्ञानवान् द्रव्यत्वाद्' इत्यादौ अतिव्याप्तिं पूरयति 'वस्तुतस्तु' इति । न च संबन्धत्वेन संबन्धानां प्रति-योगितावच्छेदकसंबन्धतानङ्गीकारेऽपि संबन्धसामान्येन साध्याधिकरण-त्वप्रवेशे 'धूमवान् वह्नेः' इत्यादौ नातिव्याप्तिप्रसक्तिः साध्याधिकरणतायां संबन्धसामान्यावच्छिन्नत्वासंभवादिति वाच्यम्; तादात्म्यसंबन्धेन साध्यता-स्थलानुरोधेन साध्यसंबन्धित्वस्यैव निवेश्यतया प्रकारविधया संबन्धत्वेन संबन्धानां निवेशे बाधकाभावेन तदतिव्याप्तिसंगतेः ।

### न्यायरत्नम्

**'न तु तथाविधविशेष्यतात्वेन' इति । विशेषरूपेण संसर्गतास्वीकारे व्यभिचारिणि साध्यवदनुयोगिकस्वरूपसंबन्धस्यापि व्यापकताघटकतया तेन**

[1] विशेष्यविषयकत्व—अ.

संबन्धेन वाच्यत्वाभावस्य व्यभिचारनिरूपकाधिकरणे प्रतियोगिसामानाधिकरण्याभावाद् अभावे यावत्त्वं व्यर्थम् स्यादिति भावः । ननु संबन्धसामान्येन धूमं प्रति धूमान्यद् यत्समवेतं तदन्यप्रमेयस्यापि स्वरूपसंबन्धेन व्यापकतया तदभावस्य संयोगसंबन्धावच्छिन्नधूमनिष्ठव्याप्यतानिरूपितस्वप्रतियोगित्वावच्छिन्नव्यापकताघटकसंबन्धसामान्यान्तर्गतसंयोगेनायोगोलकादौ प्रतियोगिसामानाधिकरण्याभावात् नातिव्याप्तिरिति चेन्न; स्वरूपसंबन्धावच्छिन्नप्रतियोगिताकतादृशप्रमेयाभावस्य सर्वत्र वाच्यत्वाभावादिरूपतादृशप्रमेयसत्त्वेनाप्रसिद्धतया संयोगादिसंबन्धावच्छिन्नाभावस्य च धूमत्वस्यैवावच्छेदकत्वसंभवेनाप्रसिद्धेः ।

## गादाधरी

(१३) संबन्धसामान्येन यत् किंचित्संबन्धेन वा साध्यवत्तानिवेशे, साध्यवन्निष्ठाभावाप्रतियोगिप्रतियोगिकत्वनिवेशे च दोषकथनम् ।।

वस्तुतस्तु प्रतियोगिसामानाधिकरण्यशरीरे व्यापकतायाः [1]स्वातन्त्र्येण निवेशस्य [2]प्रतिक्षेप्यत्वाद् ज्ञानवान् द्रव्यत्वादित्यादावतिव्याप्तिरस्त्येव[3] । वस्तुतस्तु संयोगसमवायादिसाधारणानुगतसंबन्धत्वस्य [4]कथंचित् सुवचत्वेऽपि तेन रूपेण संयोगादीनां संबन्धतया भानस्य [5]निर्युक्तिकतया, व्यापकताशरीरे लाघवानुरोधात् साध्यप्रकारेणाधिकरणनिवेशे साध्यसंबन्धोऽपि विशिष्य

1 'प्रतियोग्यधिकरणतानियामकसंबन्धघटकत्वेन'––रा.

2 'संबन्धभेदनिबन्धनो दोष' इत्यादि दीधितिव्याख्यानावसरे––रा.

3 एतेन जन्यमात्रस्य कालोपाधित्वानुपगमे अयोगोलकादौ धूमाद्यसत्वात् संबन्धसामान्येन धूमादिकं प्रति विशेषणताविशेषेणायोगोलकान्यत्वादिरेव व्यापकः तेन संबन्धेन प्रतियोगिमद्वृत्तित्वविरहात् 'धूमवान् वह्नेः' इत्यादौ नातिव्याप्तिसंभवः इत्यलं प्रथमव्यापकताशरीरे संबन्धविशेषनिवेशेनेति परास्तम् क्वाचित्कपाठः इति––अ.

4 'अखण्डोपाधित्वमुपेत्य' 'अन्यतमत्वादि'––रा.

5 संबन्धेन घटो नास्ति इति प्रत्ययाभावादिति भाव'––रा.

**संसर्गतया निवेश्यः, तथा च विशिष्य साध्यतावच्छेदकसंबन्ध-निवेशनमावश्यकमिति ध्येयम् । यत्किंचित्संबन्धेन साध्यवत्ताया व्यापकताघटकत्वे तु वह्निमान् धूमादित्यादौ विषयितासंबन्धेन साध्यं प्रति गुणत्वाद्यभावप्रतियोगितायाा अपि व्यापकतावच्छेदकतया तादृशाभावस्य लक्षणघटकत्वे तस्य च पर्वतादौ प्रतियोगि-सामानाधिकरण्यविरहादसंभवो बोध्य इति साध्यतावच्छेदक-संबन्ध एव संसर्गतया विशिष्य निवेश्यः। साध्यवन्निष्ठाभावाप्रति-योगिप्रतियोगिकत्वनिवेशे सर्वस्यैव साध्यवन्निष्ठद्वित्वाद्यवच्छिन्ना-भावप्रतियोगितया तादृशाभावाप्रतियोगिनोऽप्रसिद्धिरित्यतोऽव-च्छेदकगर्भता । तादृशाभावप्रतियोगितानवच्छेदकत्वं च तादृश-प्रतियोगितायां समानाधिकरणं सत् यदवच्छेदकं तदन्यत्वम्; अन्यथा व्यतिरेकिप्रतियोगितामात्रस्यैव व्यधिकरणधर्मतया साध्य-वन्निष्ठाभावप्रतियोगितावच्छेदकतया विरुद्धघटत्वपटत्वोभयाद्य-वच्छिन्नप्रतियोगिताकप्रमेयसामान्याभावस्यैव लक्षणघटकत्वेन व्यभिचारिण्यतिव्याप्तिप्रसङ्गात् ।।**

## कृष्णंभट्टीयम्

साध्यतावच्छेदकसंवन्धेन साध्यवत्त्वं न निवेश्यं; किं तु संबन्ध-सामान्येनैवेत्यत्रैव समाधानान्तरमाह——'वस्तुतस्तु' इति। अनुगतसंवन्धत्वं सांसर्गिकविषयताश्रयत्वम्। अन्यतमत्वमिति केचित्। साध्यसंबन्धानुयोगि-त्वेन न साध्याधिकरणं निविष्टं; किं तु साध्येनैव रूपेण; एवं च साध्य-स्याधिकरणेन साकं संबन्धत्वेन संवन्धानां संवन्धत्वं नैव संभवतीत्यर्थः । इदं च येन केनचित् संबन्धेन तद्वांश्च प्रकृतो हेतुरिति दीधितौ स्फुटम् । लाघवेति। तथा च साध्याधिकरणत्वेन रूपेण निवेशकल्पे तादात्म्य-

संबन्धेन साध्यतास्थलानुरोधेन साध्यसंबन्धित्वेन निवेशस्यावश्यकतया तत्र संबन्धत्वेन निवेशवशेनोक्तशङ्का स्यात् लाघवात् साध्येन रूपेणाधिकरणस्य निवेशे च संबन्धत्वेन संसर्गताया अप्रामाणिकत्वादधिकरणांशे संबन्धत्व[1]विशिष्टेन साध्यस्य विशेषणत्वासंभवात् तादृशशङ्कैव नोदेतीति भावः ।

यत्तु धूमावयवेऽपि संयोगेन धूमान्तरस्य वृत्तौ जन्यमात्रस्यैव कालत्वानुपगमे साध्याधिकरणत्व[2]स्यैव प्रवेशे च 'धूमवान् वह्नेः' इत्यादौ नातिव्याप्तिप्रसक्तिरित्यवतारणं तन्न; सकलधूमावयवे संयोगेन धूमसद्भावे मानाभावात् ।

'असंभव' इति । नित्यज्ञानभिन्नं जन्यज्ञानत्वादित्यादौ कालिकसंबन्धं विषयितासंबन्धं वा आदायाव्यप्त्यभावेऽपि किंचित्पदेन महाकालानुयोगिककालिकसंबन्धं द्रव्याभावं चादायाव्याप्तिरित्यसंभवाभिधानम् । 'साध्यवति' इति । (साध्यवदवृत्त्यभावप्रतियोगिकत्वेत्युक्तौ च) प्रसिद्धानुमाने जलाद्यभावसंग्रहः स्यात् वह्निजलाद्यन्यतराभावस्य साध्यवदवृत्तित्वात् । 'तादृश' इति । न चैवमपि द्रव्यत्वनिष्ठप्रतियोगित्वघटत्वनिष्ठप्रतियोगित्वाभ्यां द्रव्यत्वाभावस्य साध्यवन्निष्ठतया तत्प्रतियोगितासमानाधिकरणमेवावच्छेदकं द्रव्यत्वनिष्ठप्रतियोगित्वमित्यसंभव इति वाच्यम्; समानाधिकरणवृत्त्यवच्छेदकत्वपर्याप्त्यनधिकरणत्वस्य वाच्यत्वात् । 'विरुद्ध' इति । प्रमेयनिष्टप्रतियोगित्वस्य केवलान्वयितया तेन रूपेणाभावासंभवादनवच्छेदकत्वम् । [3]सामान्यरूपेण विशेषाभावोपगमे तु तेन रूपेण गगनाभावसत्त्वादसंभवो बोध्यः ।

[1] विशिष्टत्वेन—अ.

[2] अधिकरणस्यैव—अ.

[3] स्वसामानाधिकरण्यस्वाधिकरणवृत्त्यभावाप्रतियोगित्वोभयसंबन्धेन प्रतियोगिताविशिष्टधर्मावच्छिन्नप्रतियोगिताकाभावः सामान्यरूपेण विशेषाभावः—स्व.

## गादाधरी

(१४) साध्यतावच्छेदकावच्छिन्नव्यापकतावच्छेदकप्रतियोगिताकत्वस्थाने भेदघटितसाध्यतावच्छेदकावच्छिन्नव्यापकप्रतियोगिकत्वं निवेशयितुं न शक्यमिति निरूपणम् ॥

यत्तु साध्यतावच्छेदकावच्छिन्नसाध्यवन्निष्ठभेदप्रतियोगितानवच्छेदकप्रतियोगिकत्वरूपसाध्यतावच्छेदकावच्छिन्नव्यापकप्रतियोगिकत्वनिवेशेनैव सर्वसामञ्जस्ये निरुक्तव्यापकतावच्छेदकप्रतियोगिताकत्वनिवेशनमफलम्; वह्निमान् धूमादित्यादौ घटत्वादिना वह्न्यभावप्रतियोगिनां वह्न्यादीनां चालि[1]नीन्यायेन साध्यवन्निष्ठभेदप्रयोगितावच्छेदकत्वेऽपि घटत्वादिना द्रव्यत्वाद्यभावमादायैव लक्षणसमन्वयसंभवात्, व्यभिचारिणि व्यभिचारनिरूपकाधिकरणभेदाभावमादायैवातिव्याप्तिवारणसंभवाच्च । न च साध्यवन्निष्ठाभावप्रतियोगितानवच्छेदकप्रतियोगिताकत्वापेक्षया तादृशविशेषणस्य न लघुशरीरतेति वाच्यम्, व्यापकतावच्छेदकताघटकाभावप्रतियोगितावच्छेदकतायां स्वरूपसंबन्धावच्छिन्नत्वस्याधिकस्य[2] निवेशनीयतया एतन्मते तदनिवेशेन लाघवात्, तन्मते तदनिवेशे सर्वासामेव प्रतियोगितानां [3]साध्यवन्निष्ठो यो विषयितादिसंबन्धेन स्वावच्छिन्नस्याभावः तत्प्रतियोगितावच्छेदकतया व्यापकतावच्छेदकप्रतियोगिताया एव

[1] चालिनीभ्रामणे तत्स्थतण्डुलादीनां तच्छिद्रद्वारा सर्वेषां यथा पतनम् एवं क्वचित् स्थितवस्तूनां सर्वेषां लक्षणबहिर्भावः––स्व.

[2] ' अधिकस्य ' इति नास्ति––अ.

[3] साध्यवन्निष्ठो यः इति नास्ति––अ.

अप्रसिद्ध्यापत्तेः, भेदप्रतियोगितावच्छेदकतायां व्यापकताघटक-संबन्धावच्छिन्नत्वस्यैतन्मते निवेशवत् भवन्मतेऽप्यभावप्रतियोगितायां तन्निवेशस्यावश्यकतया तदंशे [1]साम्यादिति;

तदसत्—यतोऽनवच्छेदकप्रतियोगिकत्वम् अनवच्छेदक-निष्ठप्रतियोगितानिरूपकत्वं, प्रतियोगितायां तन्निष्ठत्वं च स्वरूप-संबन्धेन वाच्यम्, अन्यथा वह्निमान् धूमादित्यादावपि विषय-तासंबन्धेन साध्यव्यापके प्रमेयमित्याकारकविश्वविषयकज्ञाने विषयितासंबन्धेन जलत्वाद्यभावप्रतियोगिताया वृत्तेः तादृशाभाव-स्य लक्षणघटकत्वापातात्; विषयिताया वृत्त्यनियामकतया एतद्दोषानवकाश[2] इति चेत्, एवमपि 'एतद्वह्निमान् एतद्धूमात्' 'तद्रूपवान् तद्रसाद्' इत्यादौ जलत्वाद्यभावप्रतियोगितायाः कालि-कसंबन्धेन साध्यव्यापकसाध्यतत्समानाधिकरणकर्मादौ वर्तमान-तया लक्षणघटकत्वापातः, तथा च व्यापकनिरूपितवृत्तौ स्वरूपसं-बन्धावच्छिन्नत्वनिवेशस्यैतन्मतेऽप्यावश्यकतया न लाघवावकाशः, विपरीतमेव गौरवमाधेयत्वांशनिवेशाधिक्येनेति । न च व्यापक-निष्ठप्रतियोगिताकत्वेनाभावो न निवेशनीयः, येनोक्तगौरवं स्यात्; अपि तु अनुयोगितासंबन्धेन व्यापकविशेषित एव, तत्र च व्यापकतावच्छेदकप्रतियोगिताकत्वेन अभावनिवेशापेक्षया लाघवम् [3]अक्षतमेवेति वाच्यम्, प्रतियोगिविशेषणतापन्नधर्मावच्छिन्ननिरू-

[1] अन्योन्याभावस्याखण्डतया तदवच्छिन्ननिरूपितप्रतियोगितायाः संबन्धावच्छिन्नत्वेनानिवेशाद् अत्यन्ताभावत्वस्यापि अखण्डत्वे दोषः स्पष्ट एव इत्याशयः—रा.

[2] जलत्वाद्यभावप्रतियोगितायाः विषयितासंबन्धेन वृत्तित्वासंभवादित्याशयः —रा.

[3] प्रतियोगित्वाप्रवेशेन—रा.

**पितत्वानवच्छिन्नानुयोगिताया अभावांशे प्रतियोगिसंबन्धतया भाने पटादिमति घटत्वावच्छिन्नाभावविषयिण्या द्रव्यं नास्तीत्याकारकप्रतीतेरापत्तेः, तदवच्छिन्ननिरूपितानुयोगिताया एव संसर्गतया भानोपगमात्; व्यापकत्वावच्छिन्नविशेषिताभावस्य लक्षणे निवेशे व्यापकत्वावच्छिन्ननिरूपितानुयोगितायाः संबन्धविधया निवेशनीयतया सद्धेतौ हेतुसमानाधिकरणसाध्यव्यापकत्वावच्छिन्नसा[1]ध्याभावस्य संबन्धविशेषावच्छिन्नप्रतियोगिताकस्य कथंचित् प्रसिद्ध्या लक्षणसमन्वयेऽपि व्यभिचारिण्यतिव्याप्तिः,[2] व्यभिचारनिरूपकाधिकरणेऽपि कस्यचित् साध्यव्यापकस्य वृत्तेः, व्यधिकरणधर्मावच्छिन्नाभावस्य लक्षणघटकत्वानुपपत्तेश्च । एवमनवच्छेदकपदेनावच्छेदकतापर्याप्त्यनधिकरणत्वमवश्यं वाच्यम् । अन्यथा द्रव्यत्वाभावादेरपि वह्निमन्निष्ठपूर्वक्षणवृत्तित्वविशिष्टद्रव्यत्ववद्भेदप्रतियोगितावच्छेदकद्रव्यत्वप्रतियोगिकत्वात् लक्षणाघटकत्वापत्तेः, तथा च घटत्वावच्छिन्नघटाभावादेरपि लक्षणघटकत्वापत्तिः, वह्निमन्निष्ठभेदप्रतियोगितावच्छेदकताया घटत्वविशिष्टपर्याप्ततया शुद्धघटस्य[3] तत्पर्याप्त्यनधिकरणत्वात् ॥**

## कृष्णंभट्टीयम्

'तदंश' इति । भेदत्वमखण्डोपाधिरिति न तादात्म्यसंबन्धनिवेशप्रसंगः । जलत्वाभावप्रतियोगिताया द्रव्यत्वादौ केनापि संबन्धेनासत्त्वात् ज्ञानरूपव्यापकानुसरणम् । अत एवाग्रे एकव्यक्तिसाध्यकानुसरणम् । तत्र

[1] साध्यव्यापकाभावस्य——अ.

[2] इदमुपलक्षणं——यत्समानाधिकरणत्वस्य——स्वविशिष्टत्वस्य वैयर्थ्यं बोध्यम्-

[3] अत्र पाठभेदः कृष्णंभट्टीय——स्व.

साध्यस्यापि व्यापकत्वात् । यत्किंचिद्विषयकत्वे व्यापकताभङ्ग इत्यतः 'विश्व' इति । क्रियामात्रस्य कालत्वनयेऽप्याह 'तत्समानाधिकरणकर्मादौ' इति । 'लाघवम्' इति । साध्यव्यापकतावच्छेदकं यत् निरूपकतासंबन्धेन तद्वत्त्वनिवेशे प्रतियोगितात्वेनानिवेशेऽपि व्यापकतावच्छेदकघटकत्वेन बहुतरसंबन्धनिवेशे गौरवात् । संबन्धविशेषः तादात्म्यादिः । संबन्धभेदेन व्यापकताया भिन्नत्वात् समवायेन साध्यव्यापकस्य संयोगादिर्वा । स्वप्रतियोगिताघटकसंबन्धेन व्यापकत्वानिवेशात् 'कथंचित्' इति । 'कस्यचित्' इति । साध्यव्यापकत्वस्य भेदादावपि सत्वात् । साध्यव्यापको यो यस्तदभावनिवेशेऽप्याह—'व्यधि' इति । तथा च 'प्रतियोग्यवृत्तिश्च' इति ग्रन्थानवतारापत्तिः घटत्वेन साध्यव्यापकं नास्तीति प्रत्ययात् किंचिदवच्छिन्नप्रतियोगिताकत्वसंबन्धेन व्यापकविशेषिताभावनिवेशेऽप्याह—'एवम्' इति । यत्तुकारमते दूषणान्तरमाहेति केचित् । 'शुद्ध' इति । ननु, घटत्वोपलक्षितवद्भेदप्रतियोगितावच्छेदकतायाः शुद्धघटे पर्याप्तत्वात् कथं घटाभावस्य लक्षणघटकत्वम्? उपलक्षकान्तर्भावेण तस्या अपर्याप्तेर्वक्ष्यमाणत्वात् अत्र निरवच्छिन्नावच्छेदकताशून्यत्वमन्यथा द्रव्यत्वादेः पूर्वक्षणवृत्तित्वविशिष्टद्रव्यत्ववद्भेदप्रतियोगितावच्छेदकतयाव्यापकतापत्तेः । तथा च घटाभावस्य लक्षणघटकत्वापत्तिः घटनिष्ठसाध्यवद्भेदप्रतियोगितावच्छेदकतायाः सावच्छिन्नत्वादिति पाठान्तरम् । घटत्वविशिष्टवद्भेदप्रतियोगितावच्छेदकता निरवच्छिना सावच्छिन्ना चेति द्वैविध्यात् पर्याप्तिनिवेशोऽपि बोध्यः । प्रतियोगितायाः स्वरूपतो भानोपगमेन तथैवावच्छेदकत्वात् नास्माकं घटादिनिष्टप्रतियोगिताया व्यापकतावच्छेदकत्वापत्तिरित्याशयः । न च प्रतियोगिताया स्वरूपतो भाने मानाभाव एव अनवच्छेदकत्वविशिष्टस्वप्रतियोगितात्वविशिष्टकत्वनिवेशात् न घटाभावस्य लक्षणघटकत्वमिति वाच्यम्; अग्रिमाविशेषोक्तिविरोधात् । तस्याः स्वरूपतो भानेऽपि प्रतियोगितात्वविशिष्टे अनवच्छेदकत्वस्य दुर्वारत्वादिति । न च पर्याप्तिमनिवेश्यैवावच्छेदकतायां वैशिष्टयाद्यनवच्छिन्नत्वं निवेश्यम्; तावतैव घटाद्यभा-

वस्य वारणसंभवादिति वाच्यम् तथापि द्रव्यगुणोभयभेदवारणाय पर्याप्ते-रावश्यकत्वात् । यद्यद्व्यक्तित्वेन तादृशभेदप्रतियोगितावच्छेदकत्वं तत्तद्व्यक्तिभेदकूटवत्प्रतियोगिताकत्वस्याभावविशेषणत्वे तु गुरुत्वेन तत्तद्व्यक्तित्वादिना घटत्वादेर्भेदप्रतियोगितानवच्छेदकतया न तदभाव-वारणसंभव इति ॥

## न्यायरत्नम्

**'यत्तु' इत्यादि। विशिष्टसत्तासाध्यके व्यभिचारिणि गुणान्यत्वद्रव्य-त्वाभावप्रतियोगिनां साध्यवद्गुणादिनिष्ठभेदप्रतियोगितावच्छेदकतया न तेषां लक्षणघटकता संभवतीति सत्ताद्यभावमादायातिव्याप्तिरतः साध्यता-वच्छेदकावच्छिन्नेति। 'एतन्मते तदनिवेशेन लाघवात्' इति। ननु भेदत्वस्य तादात्म्यसंबन्धावच्छिन्नप्रतियोगिताकत्वरूपस्य निवेशात् न लाघवावकाशः। न च भेदत्वमखण्डोपाधिरिति मतेनेदमिति वाच्यम्; एवं सत्यपि वह्निमान् धूमादित्यादौ साध्यव्यापकत्वेनाभिमतद्रव्यत्वावाच्यत्वादेरपि साध्यवन्निष्ठो यो द्रव्यात्यान्ताभावादिस्तस्यापि स्वावच्छिन्नभिन्नभेदस्वरूपत्वाद् भेदत्वेन तत्प्रतियोगितावच्छेदकत्वेन साध्यव्यापकस्यैवाप्रसिद्धेः साध्यवन्निष्ठा-भावीया या तादात्म्यसंबन्धावच्छिन्नप्रतियोगिता तदनवच्छेदकत्वरूपस्यैव साध्यव्यापकत्वस्य निवेशनीयत्वात्।**

**अत्र केचित्—भेदत्वमनुयोगिताविशेषः; एवं च साध्यवद्वृत्तिता-वच्छेदकतादृशानुयोगितानिरूपकतानवच्छेदकत्वरूपव्यापकत्वस्यैव निवेश्य-त्वात् न साध्यव्यापकाप्रसिद्धिः। न चैवं लाघवानवकाशः; वह्न्याद्यभा-वीयप्रतियोगित्वावच्छिन्नाभावे विद्यमानो यो घटत्वाभावादिभेदः तस्य अधिकरणस्वरूपानतिरिक्ततया साध्यवन्निष्ठाभावप्रतियोगितानवच्छेदक-त्वस्य वह्न्याद्यभावप्रतियोगितायां दुर्घटत्वात् व्यापकताघटकसंबन्धा-वच्छिन्ना या साध्यवद्वृत्तितावच्छेदकाभावत्वनिरूपकता तदनवच्छेदकत्व-पर्यन्तनिवेशावश्यकत्वात्। अथैवमपि व्यधिकरणधर्मावच्छिन्नावच्छेदक-ताकभेदमादाय व्यापकत्वाप्रसिद्धिवारणाय स्वव्यधिकरणधर्मानवच्छिन्ना-**

वच्छेदकताया एव निवेशनीयतया न लाघवावकाशः इति चेन्न; तन्निवेशस्य सामानाधिकरण्येनानवच्छेदकत्वनिवेशेन समानत्वात् । व्यधिकरणधर्मावच्छिन्नावच्छेदकताकात्यन्ताभावाभ्युपगमे त्वेतन्मतेऽप्यवच्छेदकतायां स्वव्यधिकरणधर्मानवच्छिन्नत्वनिवेशावश्यकत्वाच्चेति वदन्ति ।

'घटत्वविशिष्टपर्याप्ततया' इति । घटत्वघटोभयत्वावच्छेदेन पर्याप्ततयेत्यर्थः । 'शुद्धघटस्य' इति । घटत्वावच्छेदेन तत्पर्याप्त्यनधिकरणत्वादित्यर्थः ।।

## गादाधरी

(१५) कपिसंयोगाभावादिसाध्यकस्थले कपिसंयोगाद्यात्मकाभावानां केषांचिन्मतेन लक्षणघटकत्वोपपादनम् ।।

अथ निरुक्तव्यापकतावच्छेदकताया निवेशे कपिसंयोगाभावादिसाध्यकस्थले कपिसंयोगाद्यात्मकाभावानां लक्षणघटकत्वानुपपत्तिः, कपिसंयोगाभावादिनिष्ठतत्प्रतियोगितानां साध्यवन्निष्ठकपिसंयोगाद्यात्मकाभावप्रतियोगित्वावच्छेदकत्वाद् इत्यग्रि[1]मग्रन्थविरोधः । न च व्यापकताघटकाभावे प्रतियोगिवैयधिकरण्यविशेषणसत्त्वात् साध्यवन्निष्ठकपिसंयोगाद्यात्मकाभावस्य न व्यापकतालक्षणघटकतेति वाच्यम्, प्रकृतव्यापकतायां तादृशविशेषणप्रवेशस्य निष्प्रयोजनकत्वात् ।

अत्र केचित्—व्यापकतालक्षणे अभावे प्रतियोगिवैयधिकरण्यनिवेशनमावश्यकम्, अन्यथा अभावे संबन्धसामान्येन

[1] तथा च व्यधिकरणधर्मवच्छिन्नाभावमादाय लक्षणसमन्वयसंभवात् किं स्वविशिष्टहेत्वधिकरणावच्छदनेनेति शेषः—रा.

साध्यवन्निष्ठत्वनिवेशे कालपरिमाणवान् द्रव्यत्वादित्यादौ व्यतिरेकितावच्छेदकप्रतियोगितामात्रस्यैव कालिकसंबन्धेन साध्यवद्वृत्तिः यः स्वावच्छिन्नाभावः तत्प्रतियोगितावच्छेदकतया वाच्यत्वादिनिष्ठप्रतियोगिताया एव व्यापकतावच्छेदकतया अतिव्याप्त्यापत्तेः । [1]दैशिकविशेषणतासंबन्धेन तन्निष्ठत्वनिवेशे भावस्य तेन संबन्धेन वृत्तेरप्रामाणिकतया वह्निमान् धूमादित्यादौ पर्वतत्वाद्यभावनिष्ठप्रतियोगिताया अपि व्यापकतावच्छेदकतापत्त्या पर्वतत्वाद्यात्मकाभावस्यापि लक्षणघटकत्वापातात्; हेतुसामानाधिकरण्यघटकाभावीयवृत्तावपि तादृशसंबन्धावच्छिन्नत्वनिवेशे नानास्थाने तादृशसंबन्धनिवेशेन प्रतियोगितानवच्छेदकत्वमित्यत्र च व्यधिकरणधर्मावच्छिन्नाभावीयप्रतियोगितावच्छेदकतावारणाय सामानाधिकरण्यप्रत्यासत्त्यवच्छिन्नत्वनिवेशेन च गौरवात् अभावे प्रतियोगिवैयधिकरण्यनिवेशनमेवोचितम् । व्यधिकरणधर्मावच्छिन्नाभावस्य प्रतियोगिसमानाधिकरणतयैव तमादाय दोषासंभवाद्, एतन्मते अवच्छेदकतायां सामानाधिकरण्यप्रत्यासत्त्यवच्छिन्नत्वस्यानिवेशाद् अभावीयवृत्तौ संबन्धभेदानिवेशाच्च लाघवम् । प्रतियोगिवैयधिकरण्यं च न प्रतियोगिसमानाधिकरणभिन्नत्वम्, तथा सति तद्वह्निसंयोगाद्यभावस्य प्रतियोगिसमानाधिकरणतया अभावान्तरमादाय तद्वह्निसंयोगादिनिष्ठप्रतियोगिताया अपि वह्नित्वाद्यवच्छिन्नव्यापकतावच्छेदकतापत्त्या तदभावमादायाव्याप्त्यापत्तेः; किं तु प्रतियोग्यनधि-

[1] इदमुपलक्षणम् सद्धेतुमात्रे एव तादृशटावदभावान्तर्गतस्य तत्तद्व्यक्तिसंयोगाद्यात्मकाभावस्य स्वविशिष्टहेत्वधिकरणावच्छेदेन व्यापकताघटकसंबन्धेन प्रतियोगिसामानाधिकरण्या भावादसंभवः--रा.

**करणवृत्तित्वम्, तथा च प्रतियोग्यनधिकरणीभूतसाध्यवन्निष्ठाभावेत्यभावान्तार्थनिष्कर्षः ।।**

कृष्णंभट्टीयम्

ह्रदत्वात्मकाभावस्य प्रतियोगिसामानाधिकरण्यात् पर्वतत्वात्मकाभावानुसरणम्। 'लक्षणघटकत्वापाताद्' इति। न चैवमपि न क्षतिः तस्य विशेषणतासंबन्धघटितसाध्यव्यापकतावच्छेदकप्रतियोगिताकतया तेन संबन्धेन किंचिद्विशिष्टस्वाभावरूपप्रतियोगिसमानाधिकरणत्वादिति वाच्यम्; 'घटत्वाभाववान् मेयत्वाद्' इत्यादौ घटत्वरूपसाध्याभावस्य तथात्वेनातिव्याप्तेः। स्वाभावत्वानवच्छिन्नप्रतियोगितानिवेशे तु [1]पर्वतत्वात्मकाभावो दुर्वारः। न च समवायेन घटान्यत्वप्रकारकत्वविशिष्टप्रमाभावस्तद्वारकः तस्य नित्यप्रमारूपप्रतियोगिसमानाधिकरणत्वात्। तादृशजन्ययत्किंचित्प्रमाभावश्च न प्रतियोगिवैयधिकरण्याघटितसाध्यव्यापकतावच्छेदकप्रतियोगिताक इति जगदीशेन प्रतियोगितायां व्याप्यवृत्तितानिरूपकत्वदानात्; तदतिव्याप्त्युद्धारे तु पर्वतत्वाद्यात्मकाभावमादायातिव्याप्तिर्दुर्वारैवेति।

ननु जगदीशमते पर्वतत्वाभावाभावपर्वतत्वाभावप्रकारकप्रमाभावयोरैक्येन पर्वतत्वरूपाभावस्य स्वप्रतियोगित्वावच्छिन्नव्यापकताघटकयावत्संबन्धान्तर्गतविषयतासंबन्धेन किंचिद्विशिष्टस्वाभावादिरूपप्रतियोगिसामानाधिकरण्यासंभवादव्याप्तिरित्यभिप्रायोऽस्तु; मैवम्; पर्वतत्वरूपाभावस्य पर्वतभिन्नभेदात्मकतया विषयतासंबन्धेन पर्वतभिन्नरूपप्रतियोगिसमानाधिकरणत्वसंभवात्।

यत्तु पर्वतत्वाभावतत्प्रमयोरैक्योपगमेन विषयतासंबन्धस्य व्यापकताघटकत्वनिर्वाह इति। तत्तुच्छम्; संयोगस्य समवेतत्वेन व्याप्यवृत्तेरपि

[1] पर्वतत्वात्मकाभावमादाय दोष एव—अ.

संयोगत्वेनाव्याप्यवृत्तित्ववत् पर्वतत्वाभावत्वेन व्याप्यवृत्तेरपि तत्प्रमात्वेनाव्याप्यवृत्तित्वात् नैयायिकमतेऽभावोच्छेदापत्त्या तदैक्यासंभवाच्च ।

ननु जगदीशेन व्यधिकरणसंवन्धेन वाच्यत्वाद्यभावमादाय लक्षणसमन्वयसंभवात् प्रतियोग्यवृत्तिश्चेति ग्रन्थावतारानुपपत्तिमामाशङ्क्य स्वप्रतियोगितावच्छेदकसंबन्धेन साध्यव्यापकत्वं प्रतियोगिसामानाधिकरण्यम् अभावपदलभ्यभावभिन्नत्वं च प्रवेश्य लक्षणस्य परिष्करणीयतया घटत्वाभावादिसाध्यके घटत्वाद्यात्मकाभाववारणेऽपि घटत्वादिना घटत्वाभावादेरभावस्य घटान्यत्वप्रकारकप्रमाविशेष्यत्वाभावस्य च किंचिद्विशिष्टस्वाभावरूपप्रतियोगिसामानाधिकरण्यादतिव्याप्तिवारणाय भावरूपप्रतियोगिसामानाधिकण्यं वाच्यम्; एवं च ह्रदत्वाद्यात्मकाभाववारणाय भावभिन्नत्वस्यावश्यकतया कथं पर्वतत्वाद्यात्मकाभावमादाय दोषाभिधानमिति चेन्न; यतः समनियताभावानामैक्ये अनैक्येऽपि लक्षणद्वयस्योक्तत्वात् । तदैक्यपक्षे प्रथमलक्षणे पर्वतत्वह्रदत्वाद्यात्मकाभावानां पर्वतत्वाभावत्वादिना प्रमेयाद्यभावरूपतया प्रतियोगिसामानाधिकरण्याद् घटत्वात्मकाभावमादायातिव्याप्तेरवारकत्वाच्च भावरूपत्वभावभिन्नत्वयोर्वैयर्थ्यमेव । द्वितीयलक्षणे तेषां घटभिन्नत्वेन घटह्रदत्वाभावाद्यन्यतराभावाद्यन्यतराभावरूपतया स्वप्रतियोगितावच्छेदकीभूतभाववृत्तिघटभिन्नत्वावच्छिन्नसमानाधिकरणत्वात् भाववृत्तित्वभावभिन्नत्वयोर्वैयर्थ्यमेव । तदनैक्यपक्षे च वक्ष्यमाणरीत्या स्वयं द्वितीयलक्षणमात्रे तदुभयनिवेशस्य वक्तव्यत्वेऽपि एतन्मते तदुभयलक्षणेऽपि न तयोर्निवेशः तथा सति गगनाभावत्वादिना घटाभावं घटत्वादिना गगनाद्यभावाभावं च यावदन्तर्गतमादायासंभवापत्तेः । न च समनियताभावभेदपक्ष एव प्रथमलक्षणम्; जलादित्यादिग्रन्थविरोधात् ।

वस्तुतस्तु——अग्रे स्वप्रतियोगितावच्छेदकसंबन्धेन साध्यव्यापकत्वादिनिवेशस्य निराकरणीयतया यावद्व्यापकताघटकसंबन्धेनैव प्रतियोगि-

सामानाधिकरण्यस्य एतन्मतशेषे वक्तव्यतया घटत्वाभावादिसाध्यके साध्य-प्रमाभावमादायानतिप्रसंगात भावरूपत्वभावभिन्नत्वयोर्वैयर्थ्यमेव ।

केचित्तु स्वप्रतियोगितावच्छेकविशिष्टप्रतियोगिमत्ताग्रहविरोधिता-नियामकसंवन्धेन हेतुसामानाधिकरण्यनिवेशेन ह्रदत्वाद्यात्मकाभाववारणाद् भावभिन्नत्वं व्यर्थवेमेत्याहुः ॥

'सामानाधिकरण्य' इति । न च द्रव्यत्वनिष्ठप्रतियोगित्वघटत्व-निष्ठप्रतियोगित्वाभ्यां द्रव्यत्वाद्यभावमादायासंभवः । पर्याप्ति[1] व्याप्यवृत्तित्ववादिभिः समानाधिकरणं सत् यदवच्छेदकं तदन्यत्वस्य वक्तुमशक्यत्वा-दिति वाच्यम् । प्रतियोगिविशेषणतापन्ननिष्ठविलक्षणावच्छेदकताया एव निवेश्यत्वात् । एतेन साध्यवद्वृत्तेः महानसीयवह्निवृत्तित्वविशिष्टप्रतियो-गित्वावच्छिन्नवह्न्यभावादेः पूर्वक्षणवृत्तित्वविशिष्टप्रतियोगित्वावच्छिन्नद्र-व्यत्वाभावादेश्चोपगमेऽव्याप्तिः, अत एव मन्मते पर्याप्तिस्वीकार आवश्यक इत्यपास्तम् । तादृशावच्छेदकतायां निरवच्छिन्नत्वघटितवैलक्षण्याभावा-देवादोषात् । एतदर्थमेव प्रत्यासत्तिपदमिति ।

अथवा प्रतियोगिताश्रयानुयोगिकावच्छेदकप्रतियोगिकसंबन्धः प्रत्या-सत्त्यन्तार्थः; तथा च तत्संवन्धावच्छिन्नत्वम् अवच्छेदकताविशेषणम् । वह्निप्रतियोगित्वेन घटाभावीयप्रतियोग्यनुयोगिकस्तादृशप्रतियोगिताप्रति-योगिको न स्वरूपसंवन्धोऽस्ति संवन्धे च निरवच्छिन्नैवावच्छेदकता तेन स्वरूपसंबन्धावच्छिन्नावच्छेदकत्वस्य वह्निप्रतियोगित्वे सत्त्वेऽपि प्रतियोगि-वृत्तित्वविशिष्टतत्संबन्धावच्छिन्नत्वोक्तौ विशेषरूपेण ससर्गतापत्तावपि न क्षतिः ।

ननु सामानाधिकरण्येन अनवच्छेदकत्वघटितव्यापकतावच्छेदकत्वस्य दैशिकविशेषणतासंबन्धावच्छिन्नहेतुसामानाधिकरण्यस्य च निवेशेन पर्वत-

[1] पर्याप्तेः व्याप्यवृत्तित्वमिति जगदीशमतम्——स्व.

त्वाद्यात्मकाभावादिकमादाय सकलदोषवारणेऽपि घटत्वेन पर्वतत्वाभावाभावमादाय 'वह्निमान् धूमाद्' इत्यादावव्याप्तिः दुर्वारैवेति चेन्न; समनियताभावैक्यमतेन व्यधिकरणधर्मावच्छिन्नाभावस्य प्रतियोगिसामानाधिकरण्यसंभवेनानुपपत्त्यभावाद् । 'तद्धटभिन्नं घटत्वाद्' इत्यादौ तद्व्यक्तित्वरूपसाध्याभावस्य तद्धटभिन्नत्वप्रकारकप्रमाविशेष्यत्वाभावस्य च स्वरूपसंबन्धेन वृत्तितयैव नातिव्याप्तिः । किंतु हेतुसमानाधिकरणाभावे भावभिन्नत्वं निवेशयतो जगदीशस्य मते एव तत्रातिव्याप्तिरिति साध्यवद्वृत्तिभावप्रतियोगिप्रतियोगिकान्यत्वरूपं भावभिन्नत्वं निवेशनीयमिति दिक् ।

वस्तुतस्तु——व्यधिकरणधर्मावच्छिन्नपर्वतत्वाभावनिष्ठप्रतियोगित्वावच्छिन्नाभावस्यातिरिक्ततया तत्प्रतियोगिताया व्यापकतानवच्छेदकत्वात् न दोषः । तेनोक्तरीत्या पर्वतत्वात्मकाभावमादाय समनियताभावभेदपक्ष एव दोषस्य संगमनीयत्वेऽपि 'तद्धटभिन्नं घटत्वाद्' इत्यादौ तद्धटभिन्नत्वप्रकारकप्रमाविशेष्यत्वाभावस्य तद्घद्भिन्नभेदात्मकस्य तद्घद्भिन्नात्मकप्रतियोगिसमानाधिकरणतया अतिव्याप्तावपि च न क्षतिरिति ।।

'अव्याप्त्यापत्तेः' इति । प्रतियोगितायां साध्यसमानाधिकरणवृत्तित्वनिवेशे तद्वह्न्यादिसाध्यके लक्षणगमनात् । कालपरिमाणद्वयं महाकालपरिमाणम् । न च प्रतियोगितावच्छेदकावच्छिन्नत्वस्याग्रे वक्तव्यतया महाकालान्यत्वविशिष्टघटाद्यभावमादाय तत्प्रसिद्धिरिति वाच्यम् । महाकाले तादृशघटाङ्गीकारपक्षे तदभिधानात् । विषयतासंबन्धस्य वृत्त्यनियामकत्वेऽपि साध्यप्रमाभावस्य लक्षणघटकत्वानुरोधेन प्रतियोग्यसंबन्धित्वस्य निवेशनीयतया तादात्म्येन गगनाद्यभावप्रतियोग्यसंबन्धित्वस्य काले प्रसिद्धेर्गगनस्य वृत्तिमत्त्वपक्षे इदम् ।

वस्तुतस्तु——स्वावच्छिन्नानधिकरणसाध्यवन्निष्ठाभावप्रतियोगितावच्छेदको यो यो धर्मस्तदन्यत्वरूपव्यापकतावच्छेदकत्वशरीरेऽव्यावर्तकघटत्वादिभेदानामनन्तानां निवेशे गौरवात् तादृशी या या प्रतियोगिता

तदन्यत्वमेव निवेश्यमिति तदप्रसिध्यभिधानसंगतिः । एवं च यादृशप्रति-योगितेत्यादिना प्रतियोगितयोरैक्यनिवेशनमात्रं बोध्यम् ।

## न्यायरत्नम्

**'लक्षणघटकत्वापाताद्' इति । अथ पर्वतत्वात्मकाभावस्य लक्षण-घटकत्वेऽपि न क्षतिः तस्य व्यापकताघटकस्वरूपसंबन्धेन पूर्वक्षणवृत्तित्व-विशिष्टस्वाभावरूपप्रतियोगिसमानाधिकरणत्वादिति चेत्;**

**अत्र केचित्——घटत्वाभाववान् मेयत्वादित्यादौ घटत्वात्मकाभावस्य तादृशप्रतियोगिसामानाधिकरण्यमादायातिव्याप्तेर्वारणाय प्रतियोगिसामा-नाधिकरण्यघटकप्रतियोगितायां व्याप्यवृत्तितानिरूपकत्वस्य यादृशप्रतियो-गिताकाभावे स्वावच्छेदकावच्छिन्नसामानाधिकरण्यव्यधिकरणधर्मावच्छि-न्नाभावभिन्नत्वोभयाभावः तादृशत्वरूपस्य स्वाभावत्वानवच्छिन्नत्वस्य वा निवेशनीयत्वात्; न च तत्र घटत्वाभावप्रकारकप्रमाभावमादायातिव्या-प्तिवारणं संभवति; जन्यप्रमायाः प्रतियोगिवैयधिकरण्याघटितव्यापकत्वा-संभवात्; प्रमासामान्याभावस्य च व्यधिकरणधर्मावच्छिन्नप्रतियोगिता-कस्यैव प्रसिद्धेः तस्य प्रतियोगिसामानाधिकरण्यावश्यकत्वात्; न च तत्र घटभिन्नस्य तादात्म्यसंबन्धेन साध्यव्यापकताया तद्भेदस्य व्यापकताघटक-तादात्म्यसंबन्धेन घटे प्रतियोगिसामानाधिकरण्यविरहेण नातिव्याप्तिरिति वाच्यम् । प्रतियोगितायाः प्रतियोगि[1]स्वरूपत्वे घटभिन्नभेदीयप्रतियोगिताया व्यापकतानवच्छेदकत्वादित्याहुः ।**

**अत्रेदं बोध्यम्——प्रतियोगितायाः प्रतियोगिस्वरूपत्वे गवाभावमा-दाय लक्षणद्वयसाधारणयावद्वृत्त्यधिकरणावच्छेदेन प्रतियोगिसामानाधिकर-**

[1] प्राचीनमते सामान्याभावीयप्रतियोगिता प्रतियोगितदभावोभयस्वरूपा, विशेषा भावीयप्रतियोगिता च केवलप्रतियोगिस्वरूपा——स्व.

ण्यनिवेशव्यावृत्तिदानासंगतिः, तस्य लक्षणघटकत्वासंभवात्; धूमाभावस्य लक्षणघटकत्वाभावेन जलादिवृत्तीत्यादिग्रन्थानुत्थितिश्चेति प्रतियोगितायाः प्रतियोगिस्वरूपत्वं नानुमतं [1]ग्रन्थकृतामिति घटभिन्नभेदस्यापि उक्तस्थले लक्षणघटकत्वं दुर्वारम् ।

वस्तुतस्तु--वक्ष्यमाण[2]रीत्या व्यापकतावच्छेदकप्रतियोगितायां भेदानवच्छिन्नत्वविशेषणावश्यकतया न घटभिन्नभेदस्य लक्षणघटकत्वमित्यवधेयम् ।

'हेतुसामानाधिकरण्यघटकाभावीयवृत्तावपि' इति । अथैवमपि घटत्वेन पर्वतत्वाभावाभावमादायाव्याप्तिर्दुर्वारैव । न च समनियताभावानामैक्यमते तस्य घटत्वेन वह्न्यधिकरणत्वाभिन्नतया वह्न्यधिकरणत्वरूपप्रतियोगिसामानाधिकरण्यं संभवत्येवेति वाच्यम्; तन्मते धूमवान् वह्नेरित्यादौ वक्ष्यमाणातिव्याप्तिवारणाय [3]यद्यत्प्रतियोगिताकाभावा इति निवेशस्यावश्यकत्वात् ।

अत्र केचित्--भावप्रतियोगिकत्वरूपस्य भावभिन्नत्वस्यैव तादृशविशेषणेन विवक्षितत्वाद् घटत्वादिना पर्वतत्वाभावाभावस्यातथात्वान्न दोषः । न चैवं सति पर्वतावृत्तित्वावच्छिन्नाभावस्य लाघवेन पर्वतत्वात्मकस्य साध्यवति दैशिकविशेषणतया वृत्तित्वविरहेण लक्षणघटकत्वापत्तिरिति

[1] ग्रन्थकर्तुरिति--ग.

[2] धूमवान् वह्नेरित्यादौ अतिव्याप्तिवारणाय भेदानवच्छिन्नप्रतियोगिताश्रयसामानाधिकरण्यं विवक्षणीयम्; तथा सति सद्धेतौ साध्यशून्यभिन्नस्यापि तादात्म्यसंबन्धेन साध्यव्यापकतया तद्भेदस्यापि लक्षणघटकतया अव्याप्तिप्रसक्तिः; तद्वारणाय व्यापकतावच्छेदकप्रतियोगितायां भेदानवच्छिन्नत्वमावश्यकमिति वक्ष्यमाणरीत्येत्यर्थः--स्व.

[3] धूमाभावस्य धूमत्वेन प्रमेयसामान्याभावाभिन्नतया घटत्वादिना धूमाभावस्य घटत्वादिना वह्न्यभावाभिन्नतया अतिव्याप्तेः; तद्वारणाय यद्यत्प्रतियोगिताकायावन्तोऽभावाः तत्तत्प्रतियोगिताश्रयसामानाधिकरण्यमिति विवक्षायाः आवश्यकत्वादिति--स्व

वाच्यम्; भावमात्रप्रतियोगिकत्वस्य तदर्थत्वात्; निरुक्ताभावस्य पर्वतावृत्तिपर्वतत्वाभावादिप्रतियोगिकत्वात्। न च तथापि पर्वतावृत्तिजातित्वावच्छिन्नाभावस्य लाघवेन पर्वतत्वात्मकस्य लक्षणघटकत्वं दुर्वारमिति वाच्यम्; भावभिन्नत्वमित्यनेन साध्यवद्वृत्तिः यो भावः तत्प्रतियोगिप्रतियोगिकान्यत्वस्य विवक्षणान्न कोऽपि दोष इत्याहुः।

परे तु—पर्वतत्वाभावत्वावच्छिन्नप्रतियोगितायाः सामान्याभावीयप्रतियोगितायाः [1]प्रतियोगितावच्छेदकधर्मस्वरूपत्वमिति [2]जगदीशोक्तरीत्या पर्वतत्वाभावत्वस्वरूपत्वात् तदवच्छिन्नाभाव एव पर्वतत्वस्वरूपः, घटत्वेन पर्वतत्वाभावाभावीयप्रतियोगिताया [3]अतिरिक्ततया तदवच्छिन्नाभावो न पर्वतत्वस्वरूप इति तस्य दैशिकविशेषणतया साध्यवद्वृत्तित्वात् न तादृशप्रतियोगिताया व्यापकतावच्छेदकत्वमिति तादृशाभावस्य लक्षणघटकत्वमेव नास्तीति पूर्वपक्ष एवायं नावतरतीति वदन्ति।

'[4]सामानाधिकरण्यप्रत्यासत्त्यवच्छिन्नत्वस्य' इति। प्रतियोगितासमानाधिकरणवृत्त्यवच्छेदकतात्वावच्छिन्नपर्याप्तिशून्यत्वस्येत्यर्थः; तेन वह्नि-

[1] सामान्याभावीयप्रतियोगितायाः प्रतियोगितावच्छेदकधर्मस्वरूपत्वघटाभावादिप्रतियोगितावच्छेदकीभूतघटत्वादेरवच्छेद्यत्वं च स्याद्; न चेष्टापत्तिः; अवच्छेदकावच्छेद्यभावस्य भेदनियतत्वादिति चेन्न; केवलस्य घटत्वादेरवच्छेदकत्वमभावनिरूपितत्वविशिष्टस्यावच्छेद्यत्वमित्यभ्युपगमात्। यद्यपि प्रतियोगितावैलक्षण्याधीनमेवाभाववैलक्षण्यमिति संयोगेन घटाभावात् समवायेन घटाभावस्य वैलक्षण्यं न भवति तथापि प्रतियोगितायाः प्रतियोगितावच्छेदकरूपत्वस्वीकारेऽपि न निखिलसंबन्धावच्छिन्नत्वमिति न दोषः—स्व.

[2] चक्रवर्तिलक्षणे—स्व.

[3] व्यधिकरणधर्मावच्छिन्नाभावस्थले च प्रतियोगिता न प्रतियोगितावच्छेदकस्वरूपा किं तु अतिरिक्ता अन्यथा प्रतियोगितावच्छेदकविशिष्टप्रतियोगिनैव सार्धमभावस्य विरोधात् तदवच्छिन्नवति तादृशाभावस्यासत्त्वप्रसङ्गात्—स्व.

[4] 'सामानाधिकरण्यप्रत्यासत्यवच्छिन्नत्वनिवेशेन' इत्येव गादाधर्यां पाठो वर्तते—स्व.

चादिनिष्ठप्रतियोगित्वतदवृत्तिप्रतियोगित्वाभ्यां वह्न्यभावमादाय न वह्न्यादिनिष्ठप्रतियोगितानां व्यापकतावच्छेदकत्वानुपपत्तिः वह्निनिष्ठ-प्रतियोगित्वेन वह्नितदन्योभयाभावीयप्रतियोगितावच्छेदकत्वं तु तादृशो-भयत्वान्तर्भाविनैव पर्याप्तम् ।

केचित्तु——समानाधिकरणधर्मावच्छिन्नाभावीयप्रतियोगिता प्रतियो-गितावच्छेदकरूपा; व्यधिकरणधर्मावच्छिन्नप्रतियोगिता चातिरिक्ता एवं चात्र सामानाधिकरण्यमभेदः; तथा च तादृशप्रतियोगित्वाभेदतदवच्छेद-कत्वोभयाभावः सामानाधिकरण्येनानवच्छेदकत्वमिति न कोऽपि दोष इति वदन्ति ।

'गौरवाद्' इति——ननु प्रतियोगितावच्छेदकावच्छिन्नानधिकरणत्व-घटकावच्छिन्नत्वाधिकरणत्वादौ तत्संबन्धावच्छिन्नत्वस्य यादृशयादृशप्रति-योगितावच्छेदकावच्छिन्नानधिकणत्वं साध्यवतः तादृशतादृशप्रतियोगिता-वच्छेदकत्वाभावकूटस्य तन्मते निवेशनीयतया नैतन्मते गौरवमिति चेन्न; तन्मते साध्यवन्निष्ठभेदप्रतियोगितावच्छेदकत्वाभावस्यानुगतस्यैव निवेशनी-यत्वात् । 'वह्निसंयोगादि' इति । यद्यप्यत्र तत्तत्संयोगाभावः सर्वत्रैव लक्षणघटक इत्यसंभव एव वक्तुमुचितः तथापि साध्यसमानाधिकरणनिष्ठ-त्वेन व्यापकतावच्छेदकप्रतियोगिताविशेषणत्वे 'एतद्रूपवानेतद्रसाद्' इत्यादौ लक्षणसमन्वयः, तादृशप्रतियोगिताकाभावस्य हेतुमति प्रतियोगिसामानाधि-करण्यनियमादित्यभिप्रायः ।

## गादाधरी

(१६) दैशिकविशेषणतासंबन्धस्य क्वापि व्यापकताघटकत्वं न स्याद् इत्याक्षेपः ।।

**अत्र च व्यापकताघटकत्वेन अभिमतो यः संबन्धः तेन प्रति-योग्यनधिकरणत्वं वाच्यम्; तेन कालपरिमाणादिसाध्यकस्थले संबन्धसामान्येन प्रतियोग्यधिकरणसाध्याधिकरणाप्रसिद्धावपि न**

क्षतिः । कालः [1]सर्ववान् कालपरिणादित्यादौ साध्यतावच्छेदककालिकसंबन्धेन प्रतियोग्यनधिकरणसाध्याधिकरणाप्रसिद्ध्या तादृशसंबन्धस्य व्यापकताघटकत्वासंभवेऽपि न क्षतिः; तत्र समवायादिसंबन्धघटितव्यापकतावच्छेदकप्रतियोगिताकं घटत्वादिना द्रव्यत्वाद्यभावमादायैव लक्षणसमन्वयसंभवात् । अथैवं दैशिकविशेषणतासंबन्धस्य क्वापि व्यापकताघटकत्वं न स्यात्, सर्वस्यैवाभावस्य पूर्वक्षणादिवृत्तित्वविशिष्टस्वाभावात्मकप्रतियोगिनः तेन संबन्धेन साध्यवति वृत्तेः, तेन संबन्धेन स्वप्रतियोग्यनधिकरणीभूतसाध्यवन्निष्ठाभावाप्रसिद्धेः । न च तादृशसंबन्धस्य व्यापकत्वाघटकत्वेऽपि क्षतिविरहः, सामान्यादि[2]मात्रवृत्तिसाध्यकस्थलेऽपि विषयतासंबन्धघटितव्यापकतावच्छेदकप्रतियोगिताकसाध्यवत्त्वादिप्रकारकप्रमाभा[3]वमादायैवोपपत्तिसंभवाद् इति वाच्यम्; तादृशसंबन्धस्यातथात्वे तेन संबन्धेन कपिसंयोगाभावादिसाध्यकप्रमेयत्वादिहेतुकस्थले तन्निष्ठकपिसंयोगाद्यात्मकाभावीयप्रतियोगिताया व्यापकतावच्छेदकतानुपपत्त्या अग्रिमग्रन्थासङ्गतितादवस्थ्यमिति चेन्न ॥

कृष्णंभट्टीयम्

संबन्धसामान्येन प्रतियोग्यनधिकरणत्वं निरस्य साध्यतावच्छेदकसंबन्धेन तन्निरस्यति 'काल' इति । गगनादेरपि सर्वत्वादिना वृत्तिमत्त्वमेव ।

[1] अत्र कालिकसंबन्धेन घटादेः साध्यत्वे तेन संबन्धेन साध्यवतः किंचिद् भूतलादेः तेन संबन्धेन तदसमानकालीनयत्किंचिद्व्यक्त्यनधिकरणतया तद्व्यक्त्यभावस्य व्यापकताघटकत्वसंभवात् सर्वसाध्यकानुधावनम्––रा.

[2] वाच्यत्वादिसाध्यकजातित्वज्ञेयत्वादिहेतावपि इत्यर्थः । अत्र मात्रपदं व्यर्थमिति मन्तव्यम्––रा.; कृष्णंभट्टीये न्यायरत्ने च वैयर्थ्यपरिहारः––स्व.

[3] तादृशाभावो व्याधिकरणधर्मावच्छिन्नप्रतियोगिताकः––रा.

'क्वापि' इति। वह्निमान् धूमाद् इत्यादौ साध्यसमानाधिकरणघटादिरूपाभावस्य दैशिकविशेषणतासंबन्धेन किंचिद्विशिष्टस्वाभावरूपप्रतियोगिसमानाधिकरणतया जलत्वाभावनिष्टप्रतियोगितायास्तेन संबन्धेन व्यापकतावच्छेदकत्वं न स्यादित्यर्थः। नन्वेवं 'सत्ताभाववान् जात्यभावात्' 'जातिः घटत्वात्' इत्यादौ संयोगादिसंबन्धानां व्यापकताघटकत्वासंभवाद् अन्ततो दैशिकविशेषणतासंबन्धस्यैव तथात्वं वाच्यं, तच्च दुर्घटम्; जातित्वादिरूपाभावस्य किंचिद्विशिष्टस्वाभावरूपप्रतियोगिसमानाधिकरणत्वात्। न च संयोगादिसंबन्धेन वाच्यत्वाद्यधिकरणाप्रसिध्या वाच्यत्वनिष्ठप्रतियोगितैव साध्यव्यापकतावच्छेदिकेति वाच्यत्वाभावमादायैव लक्षणसंगतिरिति वाच्यम्; तेन संबन्धेन वृत्तिमन्निष्टत्वस्याग्रे वक्तव्यतया तादृशप्रतियोगितावारणादित्यत आह—'सामान्यादि' इति। यद्यपि वाच्यत्वादिसाध्यके भावाभावाविलक्षणैव दैशिकविशेषणतेत्यव्याप्तिसत्त्वात् मात्रपदमनर्थकम् तथापि सामान्यादिमात्रवृत्तिसाध्यके संयोगादिसंबन्धानां साध्यासमानाधिकरणतया व्यापकत्वघटकतासंभावनापि नास्तीत्यावेदयितुं तत्पदम्। यद्वा यदि च भावानां स्वरूपसंबन्धाद् अभावानां दैशिकविशेषणता अन्यैव; अन्यथा[1] वाच्यत्वादिसाध्यकेऽव्याप्तेः साध्यवति सर्वस्यैवाभावस्य किंचिद्विशिष्टस्वाभावरूपप्रतियोगिनः स्वरूपसंबन्धेन वृत्तेः; तथा च वाच्यत्वाभावमादायैवोपपत्तिरित्युच्यते; तदा सत्ताभावादिसाध्यके व्यभिचारिणि साध्यसमनियताखण्डाभावाप्रसिद्धेर्वाच्यत्वाद्यभावमादायातिव्याप्तिः। 'जन्यं जन्यात्मान्यतरत्वात्' इत्यादौ जन्यत्वस्य अखण्डोपाधित्वनये तदभावमादायैव नातिव्याप्तिः भावाभावविशेषणताभेदेन स्वाभावरूपप्रतियोगिसामानाधिकरण्यासंभवादिति मात्रपदोपादानमिति द्रष्टव्यम्। तादात्म्यं च न व्यापकताघटकमिति प्रमाभावानुसरणम्॥

[1] उक्तरीत्येति अधिकपाठः—अ.

## न्यायरत्नम्

साध्यतावच्छेदकसंबन्धेन प्रतियोग्यधिकरणत्वनिवेशे त्वाह 'कालस्सर्ववान्' इति । 'सामान्यादिमात्रवृत्ति' इति । भावानां स्वरूपसंबन्धः अभावानां दैशिकविशेषणतासंबन्धश्च विलक्षणः; एवं च वाच्यत्वसाध्यके घटत्वादिना वाच्यत्वाभावमादाय लक्षणसमन्वय इति मात्रपदम्, तथा च जात्यभावसाध्यके व्यभिचारिणि दैशिकविशेषणतायाः व्यापकताघटकत्वाभावे घटत्वादिना वाच्यत्वाभावमादायातिव्याप्तिसत्त्वेऽपि साध्यवत्वप्रकारकप्रमाभावमादायातिव्याप्तिवारणं संभवतीति प्रघट्टकार्थः ॥

## गादाधरी

(१७) तत्समाधानम् ॥

लाघवानुरोधेन येन येन संबन्धेन यादृशप्रतियोगितावच्छेदकविशिष्टानधिकरणं साध्यवत् तादृशप्रतियोगितानवच्छेदकत्वमेव तादृशसंबन्धघटितव्यापकतावच्छेदकत्वमिति वक्तव्यम्; इत्थं च कपिसंयोगाभावादिसाध्यकस्थले तन्निष्ठप्रतियोगितावच्छिन्नप्रतियोगिता नोक्तयादृशपदेनोपादातुं शक्यते, तादृशप्रतियोगितावच्छेदकविशिष्टानधिकरणत्वस्य साध्यवत्यसंभवात्; किंतु घटत्वाद्यभावनिष्ठप्रतियोगितैव, दैशिकविशेषणतया तदवच्छेदकावच्छिन्नानधिकरणत्वस्य साध्यवति घटादौ सत्त्वात् तदनवच्छेदकत्वं च कपिसंयोगाभावादिनिष्ठप्रतियोगिताया इति कपिसंयोगादेः दैशिकविशेषणताघटितव्यापकतावच्छेदकप्रतियोगिताकत्वनिर्वाहः समनियताभावैक्यमते घटाद्यभावानामपि घटत्वादिना प्रमेयसामान्याभावाभिन्नतया प्रमेयमात्रप्रतियोगिकत्वेन प्रतियोग्यनधिकरणीभूत-

**साध्यवतोऽ[1]प्रसिद्धिः, अतः प्रतियोगितावदनधिकरणत्वं विहाय प्रतियोगितावच्छेदकविशिष्टानधिकरणत्वनिवेशः। न च घटाद्यभावानां प्रमेयमात्रप्रतियोगिकत्वेऽपि तदीयघटादिमात्रवृत्तिप्रतियोगितावदनधिकरणत्वमादाय व्यापकतालक्षणसामञ्जस्यमिति वाच्यम्; तादृशाभावानामभेदे घटो नास्तीत्यादिप्रतीतीनामपि घटत्वादिविशेषितघटादिवृत्तित्वेन यावत्प्रमेयनिष्ठप्रतियोगितावगाहित्वसंभवाद् घटादिमात्रवृत्तिप्रतियोगिताया अप्रमाणिकत्वात्। समनियताभावानामभेदानभ्युपगन्तृमतेऽपि साध्याभावादिप्रतियोगितया साध्यवदवृत्तिपदार्थाभावस्य प्रतियोगितामादाय तादृशप्रतियोगितानां व्यापकतानवच्छेदकत्वापत्तिवारणाय प्रतियोगितावच्छेदकविशिष्टानधिकरणत्वनिवेशनमावश्यकम्।**

कृष्णंभट्टीयम्

'समनियताभावैक्यमते' इति। नन्वेतन्मते प्रतियोगिवैयधिकरण्ये प्रतियोगितावच्छेदकावच्छिन्नत्वनिवेशे[2] व्यावृत्त्यसंगतिरेव तन्मते गोत्वाभावादीनामपि गोत्वत्वेन प्रमेयाभावाभिन्नतया प्रतियोगिसामानाधिकरण्यसंभवेन साध्यव्यापकतावच्छेदकप्रतियोगिताकत्वस्यैव वैयर्थ्यात्। अनैक्याभिप्रायेण तद्दलं प्रवेश्य तदैक्याभिप्रायेण तद्घटकव्यावृत्तेरयुक्तत्वात्। मैवं; धूमवान् वह्नेरित्यादौ धूमाभावस्य धूमत्वेन प्रमेयसामान्याभावाभिन्नतया घटत्वादिना धूमाभावस्य घटत्वादिना वह्न्यभावाभिन्नतयाऽतिव्याप्तेः यत्समानाधिकरणा यद्यत्प्रतियोगिताका यावन्तोऽभावाः तत्तत्प्रतियोगिता-

[1] यदि च घटत्वेन प्रमेयाभावस्य घटमात्रवृत्तिप्रतियोगिकत्वमुक्तरीत्या स्वीक्रियत इति नाप्रसिद्धिरिति तदा समनियताभावानामनैक्यपक्षे वक्ष्यमाणदोषोऽत्र बोध्यः--रा, अनधिकरणसाध्यवतः इति प्रतीकं न्यायरत्ने.

[2] निवेशव्यावृत्त्यसंगतिरेव--अ.

श्रयेत्यादिरीत्या परिष्कृत्य व्यधिकरणधर्मावच्छिन्नगोत्वादिप्रतियोगिताव्युदासाय ऐक्यपक्षेऽपि तद्दलोपादानात्; तत्पक्षे चाग्रे वीप्साया अपि विवक्षणात्। 'समनियताभावैक्यमते' इति प्रतियोगितैकीकरणार्थम्; तेन प्रतियोगिताभेदाभावेन तन्मताप्रसरेऽपि न क्षतिः।

'निवेश' इति। इदं तु चिन्त्यं प्रतियोगितावच्छेदकविशिष्टानधिकरणत्वोक्तावपि घटाभावप्रतियोगितायाः केवलान्वयितया[1] घटाभावस्य लक्षणघटकत्वप्रसंगेनासंभवः तस्यापि यत्किञ्चित्प्रमेयरूपप्रतियोगिसामानाधिकरण्यमेवेति चेत्; उक्त[2]युक्त्यातिव्याप्तेर्दुर्वारत्वात् न च अवृत्तिमात्रवृत्तीति ग्रन्थावतारणरीत्या तादृशप्रतियोगितानां घटादिमात्रवृत्तित्वं वदाम इति वाच्यम्; एवं सति घटादिमात्रवृत्तिप्रतियोगिताया अप्रामाणिकत्वादित्युत्तरग्रन्थासंगतेः प्रतियोगिताश्रयनधिकरणत्वनिवेशेनैवोपपत्तौ प्रतियोगितावच्छेदकविशिष्टानुधावनस्याजागलस्तनायमानत्वाच्चेति। अत्र घटभिन्नत्वेन घटो नास्तीति प्रतीतिविषयप्रतियोगितावदनधिकरणत्वं साध्यवतः प्रसिद्धमेवेति प्रतियोगितावच्छेदकविशिष्टोपादानवैयर्थ्यम्। न च जगदीशेन वह्नित्वेन घटाभावस्य या वह्नित्वेन घटनिष्ठा प्रतियोगिता सैव वह्नित्वेन वह्निधूमोभयाभावस्यापि वह्नित्वावच्छिन्नवह्निधूमादिनिष्ठा लाघवाद् इति चक्रवर्त्तिलक्षणे कण्ठत एव व्यधिकरणधर्मावच्छिन्नप्रतियोगितैकीकरणाद् घटभिन्नत्वावच्छिन्नप्रतियोगिताया वह्निधूमादिसाधारण्या[3]सिद्धेः गदाधरेण समानाधिकरणधर्मावच्छिन्नाभावीयप्रतियोगितायाः प्रमेयमात्रवृत्तित्वोपगमादप्रसिद्धिसंगतिरिति वाच्यम्; प्रतियोगिव्यक्तीनां भेदेऽपि एकधर्मावच्छिन्नप्रतियोगिताया लाघवेनैक्यमिति नियमनिराकरणार्थेवह्नित्वेन घटाभावादेः वह्नित्वेन प्रमेयसामान्याभावरूपत्वं जगदी-

1 घटाभावप्रतियोगित्वेन अभावस्य व्यापकत्वाघटकत्वेन इत्यधिकपाठः--अ.

2 तुल्ययुक्त्या--अ.

3 साधारण्यसिद्धेः--अ.

शेन दर्शितम्; एतन्मते वह्निर्नास्तीति प्रत्ययविषयीभूताभावप्रतियोगितायाः वह्निमात्रनिष्ठत्वं विनागतेः। न चैतन्मते वह्निसामान्याभावप्रतियोगितापि प्रमेयमात्रनिष्ठैव; परंतु प्रतियोगिविशेषणभेदादेव प्रतीतिविशेषः वह्निर्नास्तीत्यादौ वह्नित्वस्यैव प्रतियोगिविशेषणत्वात्; वह्नित्वेन घटो नास्तीत्यादौ तु घटत्वादेरिति वाच्यम्; समानाधिकरणधर्मावच्छिन्नाभावयोरविलक्षणत्वापत्तेः। यदि च जगदीशग्रन्थे वह्निपदं संपातायातम्; एवं च वह्नित्वावच्छिन्नवह्निभिन्नवन्ननिष्ठप्रतियोगिताको व्यधिकरणधर्मावच्छिन्नाभाव इत्युच्यते; तदा वह्निभिन्नवान् घटादित्यादौ वह्निभिन्नत्वेन वह्न्यभावमादाय सामानाधिकरण्येनेत्युपादानसार्थक्यसंभवाद् जगदीशग्रन्थो संगतः स्यात्; तथा चैतन्मते कथमप्रसिद्धिसंगतिः। व्याप्यवृत्तित्वघटितचक्रवर्तिलक्षणत्यागावसरे च वह्नित्वेन वह्निधूमोभयाभावं वह्नित्वेन पर्वतावृत्त्यभावं च प्रदर्शयतो जगदीशस्य तयोर्वह्नित्वेन प्रमेयसामान्याभावानात्मकत्वमभिप्रेतम्; अन्यथा हेतुसामानाधिकरण्यानुपपत्तेः; तदनुसारिणा च गदाधरेण समानाधिकरणधर्मावच्छिन्नप्रतियोगिताया एव विशेषनिष्ठत्वं निराकृतम्। एवं चैतन्मतेऽपि अप्रसिद्धिरसंगतैवेति। तस्मादेकधर्मावच्छिन्नप्रतयोगिता एकेति नियमम् विहाय समनियताभावानां भेदमते वक्तव्यः साध्याभावादिप्रतियोगित्वेन घटाभावादिकमादाय दोषो अत्रापीति तद्वारकं विशिष्टान्तं बोध्यम्।

## गादाधरी

(१८) **उक्तदोषानवकाशत्वसमर्थनम्।**

**अथ द्रव्यत्वाद्यभावीयद्रव्यत्वादिनिष्ठप्रतियोगितानामपि संयोगादिव्यधिकरणसंबन्धघटितव्यापकतावच्छेदकतापत्तिः, संयोगादिना तादृशप्रतियोगितात्मकप्रतियोगितावच्छेदकविशिष्टाधिकरणाप्रसिद्ध्या यादृशप्रतियोगितेत्यत्र तादृशप्रतियोगितावच्छि-**

**न्नायाः प्रतियोगितताया उपादातुमशक्यतया प्रतियोगित्वान्तरमुपादाय तत्रानवच्छेदकत्वान्तसत्त्वात्; तथा च यावद्व्यापकताघटकसंबन्धान्तर्गतसंयोगादिना द्रव्यत्वाद्यभावस्य प्रतियोगिसामानाधिकरण्यासम्भवादसम्भवः। न च संयो[1]गादिना द्रव्यत्वाद्यभावस्य स्वसमनियतघटत्वाद्यवच्छिन्नप्रतियोगिताकवह्न्याद्यभावाभिन्नतया संयोगादिना वह्न्यादिरूपप्रतियोगिसामानाधिकरण्यसत्वान्नासम्भवः इति वाच्यम्; एवमपि सत्तावान् जातोरित्यादौ हेत्वधिकरणावच्छेदेन तादृशाभावानां संयोगेन प्रतियोगिसामानाधिकरण्यासम्भवेनाव्याप्तेर्दुर्वारत्वात्; मैवम्——व्यापकताघटकत्वेन अभिमतो यः सम्बन्धः तेन सम्बन्धेन वृत्तिमन्निष्ठत्वेन प्रतियोगिताया विशेषणीयत्वाद् द्रव्यत्वादेः संयोगादिना अवृत्तितया उक्तदोषानवकाशः इत्याहुः।**

कृष्णंभट्टीयम्

व्यधिकरणीभूतैकधर्मावच्छिन्नसजातीयप्रतियोगितैकेति पक्षे साध्याभावप्रतियोगित्वेन जलेन्धनाद्यभावप्रतियोगितयोरैक्यात् व्यापकतावच्छेदकत्वोपपत्त्या विशिष्टान्तवैयर्थ्यमिति तद्भेदपक्षे सार्थकयति। 'साध्यवदवृत्ती' इति। विशिष्टपदं प्रतियोगितावच्छेदकावच्छिन्नप्रतियोगितावच्छेदकताकत्वलाभाय; तेन न वह्न्यभावप्रतियोगिमहानसीयवह्निमद्भेदमादायाव्याप्तिः वह्न्यभावप्रतियोगित्वेन घटवद्भेदसत्वे तु भेदप्रतियोगितावच्छेदकत्वं प्रतियोगितावच्छेदकवद्वृत्तित्वेन विशेषणीयम् न तु प्रतियोगिवृत्तित्वेन; सामानाधिकरण्यनिवेशेन लाघवाभिधानविरोधात्। 'यावद्'

[1] प्रतियोगितावच्छेकसंबन्धेन प्रतियोगिसामानाधिकरण्योक्तावपि दोषलाभार्थमिदम्——कृ.

इति । स्वप्रतियोगितावच्छेदकसंबन्धेन प्रतियोगिसामानाधिकरण्यनिवेशपक्षस्याग्रे निराकर्तव्यतया 'नित्यज्ञानं नित्यसविषयकत्वाद्' इत्यादावतिव्याप्तिवारणायेदम् । 'न च संयोगादिना' इति । यद्यपि समवायेन द्रव्यत्वाभावमादायापि उक्तलक्षणदोषः संभवति; तथापि प्रतियोगितावच्छेदकसंबन्धेन प्रतियोगिसामानाधिकरण्योक्तावपि दोषलाभार्थमिदम् । प्रतियोगितावच्छेदकसंबन्धेन व्यापकतापक्षे वा ।

आहुरित्यस्वरससूचनाय । स च साध्यव्यापकत्वे प्रतियोगिवैयधिकरण्यं न निवेश्यम्; न चैवमुक्तरीत्या स्वरूपसंबन्धेन साध्यवद्वृत्तित्वस्यावश्यं निवेशनीयतया पर्वतत्वात्मकाभावसंग्रहापत्तिरिति वाच्यम् । प्रतियोगितावच्छेदकभेदेनाभावभेदोपगमात् पर्वतत्वभावनिष्ठप्रतियोगित्वावच्छिन्नाभावस्य पर्वतत्वानात्मकस्य स्वरूपसंबन्धेनैव साद्ध्यवृत्तित्वात् । न चैवं पर्वतत्वाभावत्वावच्छिन्नाभावस्य पर्वतत्वात्मनः स्वरूपसंबन्धेन [1]साध्यवद्वृत्तित्वाद् द्वितीयलक्षणघटकत्वापत्तिरिति वाच्यम्; तत्र ह्रदत्वरूपाभाववारणार्थे लक्षणघटकाभावे भावभिन्नत्वस्य निवेशनीयत्वात् । एवं सति पर्वतत्वाभावत्वेन घटाद्यभावस्यावारणात् तत्राव्याप्तिः दुर्वारैवेति चेन्न; वक्ष्यमाणप्रकारस्यानुसर्त्तव्यत्वात् ।

वस्तुतस्तु द्वितीयलक्षणे साध्यवद्वृत्तित्वे स्वरूपसंबन्धावच्छिन्नत्वं न निविष्टमित्यग्रे व्यक्तम् । एवं च पर्वतत्वाभावत्वं साध्यव्यापकतावच्छेदकमेव न भवतीति ।

## न्यायरत्नम्

**'[2]प्रतियोग्यनधिकरणसाध्यवतोऽप्रसिद्धिः' इति । अथ घटादिभिन्नत्वेन घटाद्यभावीयप्रतियोगिताया घटादिमात्रवृत्तिताया अन्यत्रोक्त-**

[1] साध्यवदवृत्तित्वात्––अ.

[2] 'प्रतियोप्यनधिकरणीभूतसाध्यवतोऽप्रसिद्धिः' इति गादाधर्यां पाठो विद्यते ––स्व.

त्वात् यादृशपदेन तादृशप्रतियोगितामादाय तदाश्रयानधिकरणत्वं साध्यवतोऽस्त्यैवेति कथमप्रसिद्ध्यभिधानम्? घटभिन्नत्वेन घटगगनान्यतराभावीयप्रतियोगितायास्तादृशप्रतियोगित्वाभिन्नत्वे बाधकाभावात्, तादृशप्रतियोगिताया घटामात्रवृत्तित्वासंभवस्तु न शङ्क्यः तथापि अप्रसिद्धेरभावात्।

अत्र केचित्—अप्रसिद्धिरित्यस्य यादृशप्रतियोगिताश्रयानधिकरणं साध्यवत् तादृशसमानाधिकरणधर्मावच्छिन्नप्रतियोगिताया अप्रसिद्धिः; तथा चासंभवः; घटभिन्नत्वेन घटाभावस्यापि लक्षणघटकत्वात् तस्य यावद्धेत्वधिकरणेषु प्रतियोगिसामानाधिकरण्याभावात्। न च समनियताभावैक्यमते तस्य घटत्वादिना वह्न्यभावाभिन्नतया वह्निरूपप्रतियोगिसामानाधिकरण्यसंभवः इति वाच्यम्; समनियताभावैक्यमतेऽतिव्याप्तिवारणाय यद्यत्प्रतियोगिताका इत्यादिविवक्षणावश्यकत्वाद् इत्याहुः।

अपरे तु—यादृशयादृशप्रतियोगिताश्रयानधिकरणं साध्यवत् तादृशतादृशप्रतियोगितावच्छेदकत्वाभावकूटनिवेशे घटत्वाद्यवच्छिन्नप्रतियोगितावच्छेदकत्वाभावनिवेशे गौरवात् प्रतियोगित्वनिष्ठा या समानाधिकरणतया अवच्छेदकता तन्निरूपकप्रतियोगित्वावच्छिन्नप्रतियोगितैव यादृशप्रतियोगितेत्यनेनोपादेया; तथा च तादृशप्रतियोगिताया अप्रसिद्धिः घटभिन्नत्वावच्छिन्नप्रतियोगिताया अप्युपादानासंभवादिति वदन्ति।

ननु समनियताभावैक्यमते प्रतियोगितावच्छेदकविशिष्टत्वस्य व्यावृत्तिरसंगतैव; तन्मते गोत्वाभावादीनां गोत्वत्वेन प्रमेयसामान्याभावाभिन्नतया सर्वत्र प्रमेयरूपप्रतियोगिसामानाधिकरण्यसंभवात् साध्यतावच्छेदकेत्यादिविशेषणस्यैव वैयर्थ्यात्। न च तदनैक्यमताभिप्रायेणैव तद्विशेषणमिति वाच्यम्; तदनैक्यमताभिप्रायेण प्रविष्टसाध्यतावच्छेदकेत्यादिदलप्रविष्टप्रतियोगितावच्छेदकविशिष्टत्वव्यावृत्तेस्तदैक्यमताभिप्रायेण कथनस्यायुक्तत्वादिति चेन्न; समनियताभावैक्यमतेऽपि साध्यतावच्छेदकेत्यादिविशेषणव्यावृत्तेः संभवात्; तथा हि तन्मते तुल्ययुक्त्यातिव्याप्ति-

वारणाय यद्यत्प्रतियोगिताका यावन्तोऽभावाः स्वावच्छेदकसंबन्धेन प्रतियोगिसमानाधिकरणा इति विवक्षाया आवश्यकत्वात्। 'सत्तावान् जातेः' इत्यादौ संयोगादिना घटाभावस्य तादृशयावदन्तर्गतस्य यावद्धेत्वधिकरणान्तःपातिगुणादौ संयोगेन प्रतियोगिसामानाधिकरण्याभावात् साध्यतावच्छेदकेत्यादिविशेषणस्यावश्यकत्वादिति [1]दिक्।

## गादाधरी

(१६) प्रतियोगितायाः व्यापकताघटकत्वेनाभिमतेन संबन्धेन वृत्तिमन्निष्ठत्वनिवेशः।

वस्तुतस्तु––लघुरूपसमनियतगुरुधर्मस्य अनवच्छेदकत्वे घटाद्यभावप्रतियोगिताया अपि वह्न्यादिव्यापकतावच्छेदकत्वापत्तिः, तादृशप्रतियोगिताविशिष्टघटाद्यभावीयप्रतियोगितायां लाघवेन घटत्वादेरेवावच्छेदकतया घटाद्यभावीयप्रतियोगितानां तदनवच्छेदकत्वात्। न च प्रतियोगितायास्तदभावीयप्रतियोगितात्वेन अवच्छेदकतायां गौरवेऽपि स्वरूपतोऽवच्छेदकत्वे अविशेषः, प्रतियोगितायाः स्वरूपतो भानाभावेन तेन रूपेणावच्छेदकताया अपि असम्भवादिति पारिभाषिकमवच्छेदकत्वं व्यापकतावच्छेदकताशरीरे निवेशनीयम्, तथा च साध्यवन्निष्ठाभावप्रतियोगितावच्छेदको यो धर्मस्तदवच्छिन्नाभाववदसम्बद्धस्वविशिष्टसामान्यकत्वं फलतः साध्यवद्यत्किञ्चिद्व्यक्त्यसम्बद्धस्वविशिष्टसामान्यकं यद्यत्स्वं तत्तदन्यत्वमेव व्यापकतावच्छेदकत्वं, तथा च कपिसंयोगाद्यात्मकाभावस्यापि साध्यतावच्छेदकावच्छिन्नव्यापकतावच्छेदकप्रतियोगिताकत्वम[2]नायसेनैव निर्वहति, यतः कपिसंयोगाद्यभाव-

[1] अवेहि––ग. [2] प्रतियोगिवैयधिकरणाद्यनिवेशेनैव––क.

**निष्ठप्रतियोगिताविशिष्टस्य सर्वत्रैव साध्यवति वृत्तेः तस्या स्वपदेन उपादातुमशक्यत्वात् तादृशं स्वं धर्मान्तरमेव, तदन्यत्वं च तादृशप्रतियोगितायामक्षतमिति । असम्बद्धत्वशरीरे च व्यापकताघटकत्वेन अभिमतो यः सम्बन्धः स एव निवेशनीयः, द्रव्यत्वादिनिष्ठप्रतियोगित्वं च संयोगादिसम्बन्धेन साध्यवदसम्बद्धस्वविशिष्टसामान्यकमेव, अतो न संयोगघटितव्यापकत्वावच्छेदकत्वं तस्येति नोक्तदोषावकाश इति दिक् ।**

## कृष्णंभट्टीयम्

ननु व्यापकताघटकाभावे प्रतियोगिवैयधिकरण्यमनिवेश्य सामानाधिकरण्येन अनवच्छेदकत्वनिवेशेऽपि संवन्धसामान्येन साध्यवन्निष्टत्वनिवेशस्योक्तदोषग्रस्ततया स्वरूपसंवन्धेन व्यापकताघटकीभूतस्वप्रतियोगिताश्रयवत्ताग्रहविरोधितानियामकसंवन्धेन वा तन्निवेशात् कपिसंयोगात्मकाभावसंग्रहोऽस्त्विति [1]चेन्न । [2]तथापि घटाद्यभावस्य लक्षणघटकत्वापत्त्यैतद्व्याप [3]कताया अनिवेशात् ।

'फलत' इति । न च सामान्यपदानुपादाने घटादेः साध्यव्यापकतावारणाद् यत्किञ्चित्त्वं व्यर्थमिति वाच्यम् । सत्तावान् जातेरित्यादौ द्रव्यत्वादेः साध्यव्यापकतावारणार्थत्वात् । यद्यपि घटत्वावच्छिन्नवह्न्यादिनिष्ठप्रतियोगित्वावच्छिन्नमहानसीयादिवह्नेस्तादृशासंवद्धत्वेऽपि न क्षतिः साध्यव्यापकतावच्छेदकप्रतियोगिताकं घटत्वादिना एकव्यक्तिकद्रव्यत्वाद्यभावमादाय लक्षणसंगतेरिति सामान्यपदं व्यर्थम्; तथापि गवाद्यभाव-

1 अतः—इति पाठः । चेन्न इति नास्ति—अ.

2 तथापि नास्ति—अ.

3 व्यापकतानिवेशं निराकरोति वस्तुतस्तु इति अनिवेशादिति नास्ति—अ.

स्येति लेखनसंगमनाय निवेशनीयभेदकूटसंकोचाय च तदुपादानम्; अन्यथा गोनिष्ठप्रतियोगित्वावच्छिन्नतत्तद्गवादेस्तादृशासंबद्धत्वेनानुपपत्तेः।

वस्तुतस्तु सामान्यपदोपादाने न निर्भरः। तथा सति वह्न्यादेः साध्यवति स्वरूपादिसंबन्धेनासंबद्धत्वात् तमुपेक्ष्याग्रे द्रव्यत्वाद्यनुधावन-वैफल्यात्। तद्गोसाध्यकस्थलानुरोधेन तद्गवाभावपरतया तत्संगमनेऽपि मनोन्यत्वाभावप्रदर्शनानुरोधेन असंबद्धत्वशरीरे चेत्यादिलेखनेऽपि साध्यता-वच्छेदकसंबन्धेन असंबद्धत्वोक्तौ कपिसंयोगात्मकाभावे लक्षणघटकतानि-र्वाहात्। तत्पक्षे द्रव्यत्वाद्यभावस्य लक्षणाघटकतया अनायत्या वह्न्यभा-वादेर्लक्षणघटकत्वार्थे सामान्यपदोपादानम्। द्रव्यत्वादिनिष्ठप्रतियोगित्वं चेति पङ्क्तौ स्वरूपादिसंबन्धेनेत्यनुक्त्वा संयोगादिसंबन्धेनेत्युक्तेः साध्य तावच्छेदकसंबन्धघटितव्यापकत्वनिवेशपक्षस्यापि लाभात्। एतत्पक्षे भूत-त्वाभावस्यैव लक्षणघटकता; पक्षांतरे तु मनोन्यत्वाभावस्यापीति विशे-षः। परंतु घटवान् महाकालत्वादित्यादौ महाकालमात्रवृत्तिविशेषणतासं-बन्धेन सर्वत्वविशिष्टस्य कालिकसंबन्धेन वा साध्यत्वे गगनादेर्वृत्तिमत्त्वप-क्षे समवायेन द्रव्यत्वादेर्व्यापकतार्थे साध्यतावच्छेदकसंबन्धघटितव्यापकत्वं नोक्तमिति तु ज्यायः।

'अनायासेनैव'। प्रतियोगिवैयधिकरण्याद्यनिवेशेनैव। दिगर्थस्तु—स्वविशिष्टाधिकरणतानिवेशे प्रयोजनाभावेन 'नित्यज्ञानं नित्यसविषयक-त्वाद्' इत्यादौ नित्यज्ञानान्यत्वविशिष्टघटादेः न विषयितासंबन्धेन साध्य-वदसंबद्धत्वसंभवः; विशिष्टानतिरिक्तत्वाद् इति समवायस्यैव व्यापकता-घटकत्वाद् येन येनेति वक्ष्यमाणवीप्सा अनावश्यकी। न चेदं 'मनोऽणु-त्वाद्' इत्यादौ मनस्त्वाभावप्रतियोगिनः दिक्कृतविशेषणतासंबन्धेन साध्य-व्यापकत्वात् तस्योक्तसंबन्धेन प्रतियोगिसामानाधिकरण्याद् अतिव्याप्ति-रतो वीप्सेति वाच्यम्; तादृशविशेषणतायां मानाभावात्। साध्यप्रकार-कप्रमाभावस्यातिव्याप्तिवारकत्वाच्च। मनोभिन्नत्वविशिष्टघटाभावप्रति-

योगिनस्तादृशविशेषणतासंबन्धेन साध्यवद्वृत्तित्वात् । स्वरूपसंबन्धेन गगनादेरवृत्तित्वमते असंबद्धत्वनिर्वाहकसंबन्धेन वृत्तिमत्त्वेन स्वविशिष्टस्य विशेषणीयत्वात् । एतेन 'स्पन्द एतत्स्पन्दो वा महाकालत्वाद्' इत्यादौ महाकालान्यत्वाभावस्य कालिकसंबन्धेन निरुक्तव्यापकतावच्छेदकप्रतियोगिताकतया अतिव्याप्तिवारणाय वीप्सेति प्रत्युक्तम् । एतत्स्पन्दकालीनसाध्यप्रमाभावस्य लक्षणघटकत्वात् । तद्ध्वंसादिकालीनसाध्यप्रमायाश्च कालिकविशेषणतासंबन्धेन यत्किञ्चित्साध्यवदवृत्तित्वात् । अत्र 'द्रव्यं पृथिवीत्वाद्' इत्यादौ घटत्वेन द्रव्यत्वाभावादेः प्रतियोगिनो द्रव्यत्वस्य कालिकसंबन्धेनापि व्यापकता संभवति नित्यद्रव्ये जन्यद्रव्ये कालिकसंबन्धाप्रसिद्धेः । जन्यद्रव्ये तत्संबन्धेन तस्य सत्वादित्यपि न शङ्क्यम्; वीप्साविरहेण समवायमादायैव लक्षणसमन्वयात् । यदि च तद्व्यक्तित्वेन घटादिभेदवत्ताज्ञानं सामान्यलक्षणाजन्यतद्घटाद्यविषयकं पक्षः इतरभेदः साध्यः नित्यसविषयकत्वं हेतुः तत्र साध्यवति विषयितासंबन्धेन असंबद्धतद्घटादिकमादाय साध्यव्यभिचारनिरूपकाधिकरणान्यत्वादीनां व्यापकतया तदभावस्य स्वविशिष्टहेत्वधिकरणावच्छेदेन तथात्वादित्यतिव्याप्तिरिति वीप्साया आवश्यकतयोक्तस्थले कालिकसंबन्धमादायाव्याप्तिर्दुर्वारैवेत्युच्यते; तदा वीप्सामुपगम्य यत्संबन्धसामान्ये साध्यवद्यत्किञ्चिद्व्यक्त्यनुयोगिकत्वयद्विशिष्टप्रतियोगिकत्वोभयाभावस्तदन्यत्वं तद्वाच्यमिति दिक् । एवं व्यापकतावच्छेदकताघटकत्वेनाभिमतो यः संबन्धस्तेन संबन्धेन स्वविशिष्टत्वं प्रतियोगिसामानाधिकरण्यघटकप्रतियोगिताश्रयत्वं च निवेश्यम्; अन्यथा कालिकसंबन्धेन स्वविशिष्टस्य साध्यस्य व्यापकताघटकसंबन्धेन संबद्धतया साध्यसंबद्धस्वविशष्टसामान्यकाप्रसिद्धेः । कालिकसंबन्धेन धूमनिष्ठप्रतियोगिताविशिष्टवह्न्यादिकम् अयोगोलकभेदनिष्टप्रतियोगिताविशिष्टध्वंसादिकमादायातिव्याप्तेश्च । [[1]साध्यवद्यत्किञ्चिद्व्यक्त्यसंबद्धत्वमिति यत्किञ्चित्त्वं, तत्कूटनिवेशार्थं यत्किञ्चित्पर्व-

[1] 'पक्षनिष्ठतद्व्यक्तित्वसाध्यप्रकारकप्रमादिग्रहार्थम्'—अ.

तासंबद्धत्वस्य पर्वतीयवह्न्याद्यभावप्रतियोगित्ववति असत्वेन तदभावमादायाव्याप्तेः; [2]एवं च साध्यवद्वृत्तिरुभयावृत्तिर्यो धर्मः तद्वत्संबद्धत्वसामान्याभावपर्यन्तनिवेशो व्यर्थः अननुगमतादवस्थ्यात्; साध्यवद्वृत्त्युभयावृत्तिधर्मत्वेनानुगतरूपेण तु न निवेशसंभवः; साध्यवदसंबद्धत्वकल्पोक्तदोषात् ।

## न्यायरत्नम्

**'फलतः साध्यवद्' इति । वह्निसाध्यके महानसीयवह्न्यभावीयप्रतियोगित्वावच्छिन्नस्य साध्यवत्संबन्धत्वसामान्याभावविरहेण तादृशाभावीयप्रतियोगिताया व्यापकतावच्छेदकत्वापत्तिवारणाय यत्किञ्चिदिति । नन्वत्र सामान्यपदं व्यर्थम् । न च तदनुपादाने वह्निसाध्यके वह्निसामान्याभावीयप्रतियोगित्वावच्छिन्नयत्किञ्चिन्महानसीयवह्नेः साध्यवद्यत्किञ्चित्पर्वतासंबद्धत्वेन वह्निसामान्याभावीयप्रतियोगिताया व्यापकतावच्छेदकत्वानुपपत्तेस्तदावश्यकमिति वाच्यम्; तादृशप्रतियोगिताया व्यापकतानवच्छेदकत्वेऽपि द्रव्यत्वाभावमादायैव लक्षणसमन्वयसंभवात् ।**

**अत्र केचित् । सामान्यपदानुपादाने वह्न्यभावद्रव्याद्यभावीयानेकप्रतियोगिताभेदकूटनिवेशापत्तेः गौरवात् कूटसंकोचार्थे सामान्यपदोपादानम्; न च तथा सति तादृशानेकाभावानां लक्षणघटकतापत्तेस्तेषां प्रत्येकं प्रतियोगिसामानाधिकरण्यनिवेशे गौरवमिति वाच्यम्; अनुयोगिन्येकमात्रवृत्तित्वस्यापि निवेशादित्याहुः ।**

**तदसत्; तथा सति गवाभावस्येति ग्रन्थासंगतेः; जलादिवृत्तित्वविशिष्टेत्यादिग्रन्थासंगतेश्च दुर्वारत्वात्; तादृशग्रन्थानुरोधेनैव सामान्यपदोपादानमित्यस्यैव वक्तुं शक्यत्वाच्च ।**

[1] घटकत्वेन —अ.

[2] विवक्षणीयस्वविशिष्टहेत्वधिकरणावच्छेदेन प्रतियोगिसामानाधिकरण्यविरहेऽपि—अ.

दीधितिः

येन संबन्धेन हेतुः तेनैव संबन्धेन तदधिकरणत्वं बोध्यम् । तेन आत्मत्वे साध्ये समवायेन हेतोः ज्ञानस्य विषयतयाधिकरणे घटादौ वर्तमानस्य साध्याभावस्यातथात्वेऽपि न क्षतिः ।

## गादाधरी

(२०) येन संबन्धेनेत्यादिदीधितिविवरणम् ।

**येन सम्बन्धेन हेतुरिति । व्याप्यता[1]वच्छेदकत्वेनाभिमतो यः सम्बन्धः इत्यर्थः । बोध्यमित्यस्य हेतुसामानाधिकरण्यघटकमित्यादिः, तेन––तादृशसम्बन्धविवक्षणेन । आत्मत्वे साध्य इति । अयमात्मा ज्ञानादित्यादावित्यर्थः । साध्याभावस्य––साध्यतावच्छेदकावच्छिन्नसाध्याभावस्य । अतथात्वेऽपि––स्वविशिष्टस्य हेतुतावच्छेदकसम्बन्धेन हेत्वधिकरणस्य अप्रसिद्ध्या [2]विवक्षणीयप्रतियोगिसामानाधिकरण्यविरहेऽपि । न क्षतिः––नाव्याप्तिः । वह्निमान् धूमादित्यादौ धूमावयवादिवृत्तेर्वह्नित्वाद्यवच्छिन्नाद्यभावस्य स्वविशिष्टं यद्धेतुतावच्छेदकसम्बन्धेन हेत्वधिकरणं तदवच्छेदेन प्रतियोगिसामानाधिकरण्यं संभवत्येव, तथाविधहेत्वधिकरणपर्वतादेः जन्यमात्रस्य कालोपाधितया कालिकसम्बन्धेन तादृशाभावविशिष्टत्वात् तदन्तर्भावेन तेन सम्बन्धेन तादृशप्रतियोगिसामानाधिकरण्यस्यापि सत्त्वाच्च, अभाववैशिष्ट्यादौ**

[1] एतच्चिह्नान्तर्गतपाठस्थाने यद्यत्स्वमिति कूटनिवेशार्थम्; अन्यथा––अ.

[2] एवं च' नास्ति––अ.

सम्बन्धविशेषानिवेशादित्यभिप्रायेण नित्यमात्रवृत्तिहेतुकस्थलानुधावनम् ।

अथ वह्निव्यापकस्य चरमक्रियाभावस्य योऽभावः चरमक्रियात्मकः तस्य कालिकसम्बन्धेन हेत्वधिकरणे महाकाले वर्तमानस्य न विवक्षणीयप्रतियोगिसामानाधिकरण्यसम्भवः तद्विशिष्टस्य हेतुतावच्छेदकसंयोगेन धूमाधिकरणस्याप्रसिद्धेः, धूमाधिकरणपर्वतादेः तदसमानकालीनतया तत्र कालिकसम्बन्धेनापि तद्वैशिष्टयासम्भवादिति आत्मत्वसाध्यकपर्यन्तानुधावनमफलम् । न च वृत्त्यनियमकसंयोगेन धूमसम्बन्धिपरमाणावेव चरमक्रियावैशिष्टयस्य प्रसिद्धया तत्र चरमक्रियाभावरूपप्रतियोगिनोऽपि सत्त्वात् संभवत्येव विवक्षणीयप्रतियोगिसामानाधिकरण्यम्, तादात्म्यसम्बन्धावच्छिन्नहेतुकस्थलानुरोधेन हेत्वधिकरणावच्छेदेनेत्यत्र हेतुसम्बन्धित्वमात्रस्यैव विवक्षितत्वादिति वाच्यम्, यादृशपरमाणौ कदापि धूमसंयोगो नासीत् तदीयचरमक्रियात्मकाभाववैशिष्टयस्य हेतुसम्बन्धिन्यसत्त्वेन तमादायैवाव्याप्तिसम्भवादिति चेन्न; महाकालस्यैव वृत्त्यनियामकसंयोगसम्बन्धेन हेतुसम्बन्धितया तत्र कालिकसम्बन्धेन चरमक्रियात्मकाभाववैशिष्टयस्य दैशिकविशेषणतया तदभावस्यापि सत्त्वेन विवक्षणीयप्रतियोगिसामानाधिकरण्यसम्भवात्, वृत्त्यनियामकसंयोगस्यापि संयोगत्वेन हेतुतावच्छेदकसम्बन्धत्वात् । न च तथापि वृत्तिनियामकसंयोगेन धूमहेतुकस्थले अव्याप्तिरस्त्येवेति वाच्यम्; तेन रूपेण सम्बन्धतायां मानाभावात्, कालस्यावृत्तितया कालधूमसंयोगस्य कालनिष्ठधूमाधेयत्वानियामकत्वेऽपि धूमस्य तेन सम्बन्धेन कालवृत्तित्वमस्त्ये-

**वेत्यस्यापि सुवचत्वाच्च; वह्निमान् धूमादित्यादौ साध्याभाव-मादाय नाव्याप्तिसंभवः, किन्तु चरमक्रियाद्यात्मकमभावमादायै-वेत्यव्याप्तेः स्फुटतरप्रतिपत्त्यर्थम् आत्मत्वादिसाध्यकस्थलानुधाव-नस्य सार्थकत्वाच्चेति ।**

कृष्णंभट्टीयम्

हेतौ तृतीयार्थान्वयबाधादुक्तं 'व्याप्यते' इति । इदानीमुत्तरदल-प्रविष्टहेतुमत्ताया अनिवेशादाह 'हेत्विति'। 'यादृशपरमाणाविति'। यदि च तादृशचरमक्रियाकालीनः सकलपरमाणुधूम[1]द्व्यणुकसंयोगसंभवो मन्यते; अत एव चरमध्वंसात्मकाभावो न दोषवारकः; तदा धूमासंयोगि-घटादिपरमाणुनिष्ठक्रियाविशेषात्मकोऽभावो बोध्यः। 'हेतुसंवन्धितया' इति । प्रभामण्डलादौ व्यभिचारवारकहेतुता[2]वच्छेदकरूपावच्छिन्नहेतुसं-वन्धितयेत्यर्थः। एतेन महाकालान्यत्वाभावोऽपि निराकृतः; महाकालस्य वह्निसंवन्धितया तदन्यत्वस्य वह्न्यव्यापकत्वात्; तेन रूपेणासंवद्धित्वे-ऽप्याह 'कालस्ये' इति । 'सुवचत्वाद्' इति । धूमादेर्वृत्तिनियामकसंबन्ध-प्रसिध्या तेन तस्य कालवृत्तित्वे वाधकाभावात् । वृत्त्यनियाकत्वतदभावयो-रेकत्र प्रसंगभयेन कालधूमसंयोगस्य वृत्त्यनियामकत्वेऽप्याह––'वह्निमान्' इति । स्फुटतरेत्युपादानात् प्रयोजनगवेषणेऽनायासः सूचितः । विषयता-संवन्धघटितसाध्यव्यापकतावच्छेदकप्रतियोगिताकस्यात्मत्वप्रकारकयत्कि-ञ्चित्प्रमाभावस्य प्रतियोग्यसमानकालीनखण्डकालेऽतथात्वादुक्तं 'महा' इति । पूर्वक्षणावच्छेदेन कार्यसमानाधिकरणाभावाप्रतियोगित्वरूपकारण-त्वसंभवादाह––कारणत्वादीति । आदिना परमार्थसत्त्वपरिग्रहः । अवृत्ति-त्वप्रवादानुरोधेनाह––'नित्येति । परमार्थसत्त्वं च प्रमेयत्वं; न तु कालि कसंबन्धावच्छिन्नाधारताकत्वं; कादिमति चाप्रसिद्धमेव; अष्टद्रव्यान्यत्वं

[1] द्व्यणुक––अ.

[2] हेतुतावच्छेदकसंबन्धरूपावच्छिन्नेति––अ.

खवत्वादिना साधनीयं तेन गगनवत्ताज्ञानस्य भ्रमत्वेऽपि न क्षतिः; उक्तरीत्या कालान्यत्वप्रकारकयत्किञ्चित्प्रमाभावमादायानतिप्रसंगाद् उक्तं महेति। ज्ञानभेदप्रकारकयत्किञ्चित्प्रमाभावस्य प्रतियोग्यसमानकालीनतदविषयकज्ञानेऽतथात्वादुक्तमीश्वरे इति। 'वृत्तिमतामेव' इति। महाकालभेदादीनामित्यर्थः। अवृत्तीनां व्यापकत्वासंभवं वक्तुमेवकारः। न तु यावतां वृत्तिमतां व्यापकत्वं वक्तुम्।

## न्यायरत्नम्

**वस्तुतस्तु—'वाच्यं ज्ञेयत्वाद्' इत्यादौ सत्ताभावीयप्रतियोगिताया अपि समवायेन व्यापकतावच्छेदकत्वापत्तिः तत्र तादृशप्रतियोगितायाः स्वपदेनोपादाने तदवच्छिन्नस्य साध्यवद्द्रव्यगुणकर्मरूपव्यक्तिसंबद्धत्वनियमात् समवायेन सामान्यादिसंबद्धत्वाप्रसिद्धेश्च घटाद्यभावीयप्रतियोगिताया एव स्वपदेनोपादेयत्वात् तदन्यत्वस्य तादृशप्रतियोगितायामक्षतत्वात्, सत्ताभावस्यापि लक्षणघटकतया तस्य च व्यापकताघटकसमवायेन यावद्धेत्वधिकरणसामान्याद्यन्तर्भावेन प्रतियोगिसामानाधिकरण्याभावादव्याप्तेर्वारणाय व्यापकताघटकसंबन्धावच्छिन्नस्वावच्छिन्नाधिकरणतासामान्ये साध्यवद्यत्किञ्चिद्व्यक्त्यसंबद्धत्वमेव निवेशनीयं, तत्र च सामान्यपदानुपादानेऽधिकरणताया अधिकरणस्वरूपत्वमते वह्न्यादिसाध्यके व्यापकतावच्छेदकप्रतियोगिताया अप्रसिद्ध्यापत्तेः द्रव्यत्वाभावीयप्रतियोयोगित्वावच्छिन्नाधिकरणताया महानसादिरूपायाः साध्यवद्यत्किचिञ्चत्पर्वतासंबद्धत्वादतः सामान्यपदोपादानम्। अथैवमपि द्रव्यत्वाभावीयप्रतियोगितायाः [1]संयोगादिरूपव्यधिकरणसंबन्धघटितव्यापकतावच्छेदकत्वापत्तिः; संयोगसंबन्धावच्छिन्नतदवच्छिन्नाधिकरणत्वाप्रसिद्ध्या तस्या स्वपदेनोपादानासंभवात्; तथा सति तादृशप्रतियोगिताकाभावस्य यावद्धेत्वधिकरणगुणादौ तादृशसंयोगेन प्रतियोगिसामानाधिकरण्याभावात् 'सत्तावान्**

[1] संयोगेन व्यापकतावच्छेदकत्वापत्तिः—अ.

**जातेः' इत्यादावव्याप्तिर्दुर्वारैवेति वाच्यम्। यादृशसंबन्धावच्छिन्नाधिकरणतासामान्ये यादृशप्रतियोगित्वावच्छिन्ननिरूपकताकत्वसाध्यवद्यत्किञ्चिद्व्यक्तिवृत्तित्वोभयाभावस्तदन्यत्वमेव तेन संबन्धेन व्यापकतावच्छेदकत्वमित्यस्य विवक्षणादिति दिक्।**

## दीधितिः

एवं दलान्तरेऽपि संबन्धभेदनिबन्धनो दोषः संबन्धैक्यविवक्षया निरसनीयः।

## गादाधरी

(२१) एवं दलान्तरेऽपीतिदीधितिग्रन्थावतारः।

**ननु ज्ञानवानात्ममहाकालान्यतरत्वादित्यादौ हेतुसमानाधिकरणानां साध्यतावच्छेदकावच्छिन्नव्यापकतावच्छेदकप्रतियोगिताकयावदभावानामेव स्वविशिष्टहेत्वधिकरणमहाकाले कालिकसम्बन्धेन प्रतियोगिसामानाधिकरण्यसत्त्वादतिव्याप्तिः; न च तादात्म्येन ज्ञानव्यापकस्यात्मनोऽभाव एव न काले प्रतियोगिसमानाधिकरणः, आत्मनोऽवृत्तितया काले कालिकसम्बन्धेनावृत्तेरिति वाच्यम्, आत्मनः कालावृत्तित्वे कालवृत्तित्वघटितकारणत्वाद्यनुपपत्त्या तदुपगमस्यावश्यकत्वात्। [1]नित्यद्रव्याणां कालावृत्तित्वेऽपि 'महाकालभिन्नो द्रव्यत्वात्' 'ईश्वरज्ञानभिन्नं गुणत्वात्' इत्यादावतिव्याप्तिः, वृत्तिमतामेव[2] ज्ञानभेदव्यापकतया तदभावानां**

[1] पूर्वक्षणावच्छिन्नाभावाप्रतियोगित्वस्य कारणताघटकत्वे त्वाह---नित्येति --रा.

[2] अवृत्तीनां व्यापकत्वासंभवं वक्तुमेवकारः न तु यावतां वृत्तिमतां व्यापकत्वं वक्तुम्--कृ.

यावतामेव महाकालेश्वरज्ञानादौ कालिकविशेषणताविषयिता-सम्बन्धघटकप्रतियोगिसामानाधिकरण्यसत्त्वादित्यत आह--एवं दलान्तरेऽपीति ।

दलान्तरे--प्रतियोगिसामानाधिकरण्यघटकप्रतियोगिमत्ता-दले । सम्बन्धभेदनिबन्धनो दोषः--कालिकादिसम्बन्धमादायाति-व्याप्तिरूपः । सम्बन्धैक्यविवक्षया--व्यापकताघटकसम्बन्धप्रति-योगिमत्ताघटकसम्बन्धयोरैक्यविवक्षया । तथा च 'ज्ञानवाना-त्ममहाकालान्यतरत्वात्' 'महाकालभिन्नो द्रव्यत्वात्' इत्यादौ साध्यतावच्छेदकसम्बन्धावच्छिन्नसाध्यनिष्ठव्याप्यतानिरूपितव्या-पकताघटकसमवायदैशिकविशेषणतादिसम्बन्धेन ज्ञानाभावमहा-कालभेदाभावादिप्रतियोगिनां कालादाववृत्तेर्नातिव्याप्तिरिति भावः ।

अत्र च येन सम्बन्धेन स्वप्रतियोगित्वावच्छिन्नस्य साध्यता-वच्छेदकावच्छिन्नव्यापकता, तेन तेन सम्बन्धेन प्रतियोगिसामाना-धिकरण्यमभावस्य विवक्षणीयम्, अन्यथा 'इदं नित्यज्ञानम् नित्यत्वे सति सविषयकत्वाद्' इत्यादौ हेतुसमानाधिकरणनित्य-ज्ञानत्वाद्यभावस्य प्रतियोगिनः साध्यं प्रति विषयितासम्बन्धेनापि व्यापकतया तेन सम्बन्धेन हेत्वधिकरणेश्वरेच्छाकृत्योः प्रतियोगि-सामानाधिकरण्येनातिव्याप्तिः, येन येनेत्युक्तौ च तथाविधसमवा-यादिसम्बन्धेन अतथात्वान्नातिव्याप्तिः । अत्र च साध्यतावच्छेद-कावच्छिन्नव्याप्यतानिरूपितस्वप्रतियोगित्वावच्छिन्नव्यापकताघट-कसम्बन्धत्वेन तादृशसम्बन्धस्य प्रतियोगिसामानाधिकरण्यशरीरे न

**स्वातन्त्र्येण निवेशः, तथा सति अभावे साध्यतावच्छेदकावच्छिन्नव्यापकतावच्छेदकप्रतियोगिताकत्वविशेषणवैयर्थ्यात्; न हि तादृशविशेषणानुपादाने गोत्वाद्यभावमादाय असम्भवः सम्भवति, गोत्वाद्यभावानामपि हेत्वधिकरणे पूर्वक्षणवृत्तित्वविशिष्टस्वाभावरूपप्रतियोगिनिष्ठव्यापकताघटकदैशिकविशेषणतासम्बन्धेन प्रतियोगिसामानाधिकरण्यसत्वात्, धूमवान् वह्नेरित्यादौ धूमाद्यभावस्य अयोगोलके पूर्वक्षणादिवृत्तित्वविशिष्टस्वाभावात्मकप्रतियोगिसामानाधिकरण्येऽपि यावद्व्यापकताघटकसम्बन्धान्तर्गतसंयोगादिना प्रतियोगिसामानाधिकरण्यविरहात्, घटत्वाभाववान् मेयत्वादित्यादौ घटत्वाद्यात्मकाभावस्य तादृशप्रतियोगिसामानाधिकरण्येऽपि विशेष्यतासम्बन्धघटितसाध्यव्यापकतावच्छेदकप्रतियोगिताकस्य घटावृत्तेर्घटत्वाभावादिप्रमायास्तादृशसम्बन्धेन अभावस्य यावद्व्यापकताघटकसम्बन्धान्तर्गततादृश[1]सम्बन्धेन घटे प्रतियोगिसामानाधिकरण्यविरहादतिव्याप्त्यनवकाशात्; अपि तु साध्यतावच्छेदकावच्छिन्नव्याप्यतानिरूपितयद्यत्सम्बन्धघटितव्यापकतावच्छेदकप्रतियोगिताका ये ये अभावाः तेन तेन सम्बन्धेन प्रतियोगिसमानाधिकरणा इत्येवं क्रमेणैव निवेशात् व्यापकतायाः एकदैव लक्षणे प्रवेश इति ।**

## कृष्णंभट्टीयम्

धूमवान् वह्नेरित्यादौ अयःपिण्डान्यत्वाभावस्य स्वाभावरूपप्रतियोगिसामानाधिकरण्येऽपि पर्वतादेः कालोपाधित्वानुपगमे कालिकसंबन्धस्य व्यापकत्वाघटकतया प्रतियोगिवैयधिकरण्यघटितसाध्यव्यापकतावच्छेदक-

1 विशेष्यतासंबन्धेनेत्यर्थः—स्व.

प्रतियोगिताकधूमाभावस्य तादृशसंयोगेन धूमवत्त्वप्रकारकप्रमाविषयत्वात्यन्ताभावस्य वा तथात्वात् नातिव्याप्तिः। यदि च तत्रापि स्वभावसामानाधिकरण्यमादाय वीप्साप्रयोजनमुच्यते; तदा या या प्रतियोगितेति कल्पे स्वाभावत्वानवच्छिन्नप्रतियोग्युपादाने वा नातिव्याप्तिरित्यत आह—'इदं नित्यज्ञानम्' इति। 'विषयितासंबन्धेन' इति। यद्यपि येन संबन्धेन साध्यव्यापकतावच्छेदकत्वं तेन संबन्धेन प्रतियोगिताश्रयो वाच्यः; अन्यथा कालिकसंबन्धेन धूमाद्यभावप्रतियोगितायाः वह्नौ सत्वादतिव्याप्तेः। तथा च साध्यवति नित्यज्ञानान्यत्वविशिष्टघटाभावसत्वेऽपि तादृशघटत्वस्य समवायेनैव प्रतियोगितावच्छेदकत्वात् तेन संबन्धेन प्रतियोगिताश्रया-[1]प्रसिद्धिः। तादृशप्रतियोगित्वावच्छिन्नाभावस्य तु साध्यवदवृत्तित्वमवेति; तथापि नित्यज्ञानान्यत्वविशिष्टवाच्यत्वाद्यभावो बोध्यः।

## न्यायरत्नम्

**'आत्ममहाकालान्यतरत्वाद्' इति। विषयितासंबन्धघटितसाध्यव्यापकतावच्छेदकप्रतियोगिताकस्यात्मत्वप्रकारकयत्किञ्चित्प्रमाभावस्य प्रतियोग्यसमानकालीनखण्डकाले प्रतियोगिसामानाधिकरण्याभावात् नातिव्याप्तिरिति हेतुकोटौ महेत्युक्तम्। 'कारणत्वाद्' इति। आदिपदेन परमार्थसत्वपरिग्रहः तस्य कालसंबन्धरूपत्वात्। अवृत्तित्वप्रवादानुरोधेनाह—'नित्य' इति। अत्रापि कालान्यत्वप्रकारकयत्किञ्चित्प्रमाभावस्य ज्ञानभेदप्रकारकयत्किञ्चित्प्रमाभावस्य च प्रतियोग्यसमानकालीने खण्डकाले प्रतियोग्यविषयके ज्ञाने च प्रतियोगिसामानाधिकरण्याभावान्नातिव्याप्तिरतो महेतीश्वरेति चोपात्तमिति ध्येयम्।**

**'इदं नित्यज्ञानं नित्यत्वे सति सविषयकत्वाद्' इति। अथ नित्यज्ञानत्वाभावीयप्रतिगिताया विषयितासंबन्धघटितव्यापकतावच्छेदकत्वं न**

1 श्रयप्रसिद्धिः—अ.

संभवति साध्यवति नित्यज्ञाने सर्वस्यैव विषयितासंबन्धेन सत्वात् तेन संबन्धेन स्वप्रतियोग्यनधिकरणसाध्यवतोऽप्रसिद्धत्वात् । विषयितासंबन्धेन साध्यवन्नित्यज्ञानासंबद्धस्वविशिष्टसामान्यकप्रतियोगिताया अप्रसिद्धत्वाच्च । एतेन ज्ञानेच्छयोः समानविषयकत्वनियमाद् गङ्गापदजन्यबोधविषयत्वविशिष्टतीरत्वावच्छिन्नाधिकरणता ज्ञाने न स्वीकर्तुं शक्यते; तथा सति तीरे गङ्गापदशक्तिरेव स्यात्, एवं नित्यज्ञानान्यत्वविशिष्टघटत्वावच्छिन्नाधिकरणतापि इति स्वीकारेऽपि न निस्तारः साध्यवद्यत्किञ्चिदित्यादिपरिष्कारस्य आवश्यकत्वात्; तत्र च घटत्वाद्यनन्तभेदनिवेशे गौरवेण लाघवेन प्रतियोगिताया एव स्वपदेनोपादेयतया तादृशतीराभावीयप्रतियोगिताया नित्यज्ञानान्यत्वविशिष्टघटाभावीयप्रतियोगितायाश्च विशेष्यीभूततीरघटमात्रनिष्ठतया तदवच्छिन्नस्य नित्यज्ञानासंबद्धत्वविरहात् ।

अत्र केचित्––प्रतियोगिवैयधिकरण्याघटितव्यापकत्वाभिप्रायकमिदम्; तथा च साध्यवन्निष्ठो यो व्यधिकरणधर्मेण विषयितया प्रतियोगित्वावच्छिन्नाभावस्तत्प्रतियोगितायां सामानाधिकरण्येनानवच्छेदकत्वरूपं विषयितया साध्यव्यापकातावच्छेदकत्वं नित्यज्ञानत्वाभावीयप्रतियोगितायामक्षतम् । न च तादृशप्रतियोगितायां सामानाधिकरण्येन अवच्छेदकत्वाप्रसिद्धिः शङ्क्या; सामानाधिकरण्यावच्छेदकत्वोभयाभावस्य[1] निविष्टत्वात् । [[2]प्रतियोगितासमानाधिकरणवृत्तित्वावच्छिन्नावच्छेदकत्वनिष्ठप्रतियोगिताकाभावस्य वा सामानाधिकरण्येनानवच्छेदकत्वमित्यनेन विवक्षणात् ।] प्रतियोगिवैयधिकरण्यघटितव्यापकत्वकल्पे तु नित्यज्ञानान्यत्वस्वनिष्ठतद्व्यक्तित्वोभयविषयकं जन्यज्ञानं पक्षः तन्निष्ठतद्व्यक्तित्वं साध्यं तद्व्यक्तिनित्यज्ञानान्यतरत्वं हेतुस्तत्र तद्व्यक्तित्वनित्यज्ञानान्यत्वा-

[1] सामानाधिकरण्यावच्छेदकत्वोभयाभावस्यैव निविष्टत्वात्––ग.

[2] [ ] एतत्पाठो नास्ति––ग.

भावप्रतियोगिनोर्विषयितासंबन्धेन व्यापकतया तेन संबन्धेन तादृशाभावयोः प्रतियोगिसमानाधिकरणत्वादतिव्याप्तिवारणाय येन येनेति वीप्सा आवश्यकीत्याहुः।

वस्तुतस्तु—नित्यज्ञानमित्यत्र नित्यत्वविशिष्टं ज्ञानत्वमेव साध्यत्वेन विवक्षितम्, वैशिष्ट्यं च स्वरूपस्वाभावविशिष्टघटाविषयकसर्वविषयकज्ञानत्ववत्त्वान्यतरसमवायोभयसंबन्धघटितसामानाधिकरण्यसंबन्धेन; तथा च साध्यवद्घटाविषयकसर्वविषयकज्ञाननिष्ठो यो घटाभावीयप्रतियोगित्वावच्छिन्नस्य विषयितासंबन्धावच्छिन्नप्रतियोगिताकोऽभावस्तत्प्रतियोगितानवच्छेदकत्वस्य नित्यज्ञानत्वाभावीयप्रतियोगिताधामक्षतत्वात् न काचिदपि क्षतिः इति सुधियो विभावयन्तु।

## गादाधरी

(२२) संबन्धैक्यविवक्षयेति दीधितौ मतभेदोपन्यासः।

यत्तु—साध्यतावच्छेदकसम्बन्धेन प्रतियोगिसामानाधिकरण्यनिवेशात् न ज्ञानवानात्ममहाकालान्यतरत्वादित्यादौ अतिव्याप्तिः इत्थंच व्यापकतापि साध्यतावच्छेदकसम्बन्धघटिता ग्राह्या, अत एव बह्निमान् धूमादित्यादौ घटत्वादिना घटवृत्तित्व[2] विशिष्टद्रव्यत्ववत्वादिना वा द्रव्यत्वादेरभावस्य समवायादिसम्बन्धघटितसाध्यव्यापकतावच्छेदकप्रतियोगिताकस्य साध्यतावच्छेदकसंयोगादिसम्बन्धेन प्रतियोगिसामानाधिकरण्यविरहेऽपि न क्षतिरिति;

[2] हेतुसामानाधिकरण्यसंपत्तये—स्व.

तन्न, तथा सति कालिकविशेषणतया महाकालान्यत्वविशिष्टघटादौ साध्ये कालत्वादिहेतावतिव्याप्त्यापत्तेः, तत्र महाकालान्यत्वविशिष्टघटाभावमहाकालान्यत्वाभावादीनां कालिकसम्बन्धेन महाकाले घटादिरूपप्रतियोगिसामानाधिकरण्यसत्त्वात् । यदि च महाकालान्यत्वविशिष्टोऽपि घटो महाकाले वर्तते, अन्यथा सिद्धान्तलक्षणे महाकालो घटवान् कालपरिमाणादित्यादौ महाकालान्यत्वविशिष्टघटाभावस्यैव प्रतियोगिव्यधिकरणस्य प्रसिद्धतया उभयाभावघटितप्रतियोगिवैयधिकरण्यनिर्वचनायासस्य निष्प्रयोजनकतापत्तेरिति दर्शितविशिष्टसाध्यकस्थले कालत्वादिः सद्धेतुरेवेति मन्यते, तदापि घटत्वाभाववान् मेयत्वादित्यादौ घटत्वाद्यात्मकाभावस्य साध्यतावच्छेदकदैशिकविशेषणतासम्बन्धेन किञ्चिद्विशिष्टस्वाभावात्मकप्रतियोगिसामानाधिकरण्यसत्त्वादतिव्याप्तिरेतन्मते दुर्वारैव; न च तेन सम्बन्धेन भावरूपप्रतियोगिसामानाधिकरण्यस्य विवक्षणीयतया नायं दोष इति वाच्यम्, तथा सति अभावसाध्यकसद्धेतौ निरुक्तयावदभावरूपसाध्याभावस्य भावरूपप्रतियोगिसामानाधिकरण्यासंभवादव्याप्तेः, [1]अभावपदस्य भावभिन्नाभावपरत्वे कपिसंयोगाभावसाध्यकस्थले कपिसंयोगात्मकाभावमादायाग्रे स्वविशिष्टपदव्यावृत्तिकथनस्य असाङ्गत्यापत्तेः; एवं साध्यतावच्छेदकसम्बन्धेन व्यापकत्वादिनिवेशे 'सर्वत्रे' त्यादिना धूमवान् वह्नेरित्यादौ वाच्यत्वाद्यभावमादायातिव्याप्तिप्रदर्शनस्य असाङ्गत्यापत्तेश्चेति ।

[1] एतत्पूर्वम् 'भावरूपप्रतियोग्यप्रसिध्या'—अ.

कृष्णंभट्टीयम्

यत्तु नित्यज्ञाने नित्यज्ञानान्यत्वविशिष्टघटादिसत्वमते साध्यसमानाधिकरणाभावप्रतियोगितासामान्ये यत्सामानाधिकरण्ययदवच्छिन्नत्वयत्संबन्धावच्छिन्नत्वैतत्रितयाभावस्तत्त्वमेव साध्यव्यापकतावच्छेदकत्वमिति, तन्न; विनापीदृशविवक्षां नित्यज्ञानत्वादिसाध्यकसद्धेतौ वाच्यत्वाद्यभावमादाय लक्षणगमनसंभवेनैतद्विवक्षाया निर्बीजत्वात् ।

केचित्तु—नित्यज्ञानान्यत्वस्वनिष्ठतद्व्यक्तित्वोभयविषयकं जन्यज्ञानं पक्षः तद्व्यक्तित्वं साध्यं तद्व्यक्तिनित्यज्ञानान्यतरत्वं हेतुस्तत्र अतिव्याप्तिः; विषयितासंबन्धघटितसाध्यव्यापकतावच्छेदकप्रतियोगिताकयोस्तद्व्यक्तित्वाभावनित्यज्ञानान्यत्वाभावयोर्विषयितासंबन्धेन प्रतियोगिसमानाधिकरणत्वादिति येन येनेति वीप्सा आवश्यकी । तद्व्यक्तित्वस्य; तन्निष्ठासाधारणधर्मरूपत्वे तद्व्यक्तेस्तादात्म्यैनैव साध्यव्यापकत्वात् तद्भेदमादायातिव्याप्त्यसंगत्यापत्तिरतः स्वनिष्ठत्वोपादानम् । नित्यज्ञाननिष्ठप्रतियोगिताकभेदत्वेन पक्षे प्रवेशः; तेन घटनित्यज्ञानान्यतरभेदादेः साध्यव्यापकत्वेऽपि न तदापत्तिः । अतादृशज्ञानस्य च न विषयितासंबन्धेन प्रतियोगिवैयधिकरण्याघटितसाध्यव्यापकता, तादृशज्ञानविषयत्वं वा अव्याप्यवृत्ति; अन्यथा स्वरूपसंबन्धेन स्वाभावरूपप्रतियोगिसमानाधिकरणमेवेति दिगित्याहुः ।

इदं तु चिन्त्यं; साध्यवन्निष्ठाभावप्रतियोगितासमानाधिकरणं सत् यदवच्छेदकं प्रतियोगित्वं तदन्यत्वमेव साध्यव्यापकतावच्छेदकत्वम्; तथा चोक्तस्थले नित्यज्ञानान्यत्वविशिष्टघटाभावस्य साध्यवति सत्वेऽपि तत्प्रतियोगिताविशिष्टाभावासत्वेनातिव्याप्तेरेवासत्वात्[1] वीप्सा व्यर्थैवेति ।

[1] ईश्वरज्ञानस्वत्वविशिष्टाद्यधिकरणत्वं विषयितासंबन्धेन साध्यवत्संबद्धमेवेत्यभिप्रायः—अ.

तत्क्रिया पक्षः तद्व्यक्तित्वं साध्यं तत्क्रियातत्समानकालीनक्रियान्तरान्यतरत्वं हेतुः तत्र येषां संबन्धान्तरेण व्यापकत्वं तेषां कालिकसंबन्धेन व्यापकत्वस्य तदभावे प्रतियोगिसामानाधिकरण्यस्य च सत्वात् येन येनेति वीप्सा; पक्षसाध्यादिप्रमायाश्च नियमतो व्यभिचारनिरूपकाधिकरणविषयकत्वे तदसत्वस्थले वा इदमित्यपि केचित् ।

इदं तु बोध्यम्; प्रतियोगिसामानाधिकरण्ये प्रतियोगिपदार्थ एव लक्षणघटकः; स च स्वरूपसंबन्धेन प्रतियोगितावान् । एवं च धूमाभावादेः कालिकसंबन्धेन प्रतियोगिताश्रयवह्नेरयोगोलकान्यत्वाभावस्य स्वप्रतियोगिताश्रयध्वंसादेः सामानाधिकरण्येऽपि नातिव्याप्तिः । एवं च स्वरूपसंबन्धेन साध्यव्यापकतावच्छेदकत्वं प्रवेश्यम्; तेन जलत्वाभावप्रतियोगितायाः कालिकसंबन्धेन वह्निव्यापकतावच्छेदकत्वेऽपि न दोषः; एवं च व्यापकतावच्छेदकताघटकसंबन्धेन प्रतियोगिताश्रयविवक्षानादेयेति ।

स्वाभावेति । प्रतियोगिवैयधिकरण्यघटितव्यापकतानिवेश इदम् । अन्यथा पुनर्गौरवम्; अत एवानुपदं वक्ष्यति एकधैवेति । न च समवायादिसंबन्धावच्छिन्नयादृशप्रतियोगिताश्रयानधिकरणं साध्यवत् तादृशप्रतियोगितानवच्छेदकं स्वाभावनिष्ठप्रतियोगित्वमिति समवायादिना प्रतियोग्यसामानाधिकरण्यात् कथं नासंभव इति वाच्यम्; तेन संबन्धेन वृत्तिमन्निष्ठत्वाभावेनादोषात् ।

अत्र च वीप्साघटितव्यापकत्वस्योद्देश्यदले निवेश एव गौरवम्; प्रतियोगिवैयधिकरण्या[1]घटितव्यापकत्वस्य विधेयदलनिवेशे लाघवादित्यालोच्य द्वेधा तन्निवेशत्यागे दीधितितात्पर्यमाह—'एकधैव' इति । समनियताभावैक्यमते तस्य घटत्वादिना वह्न्याद्यभावरूपत्वेनादोषादाह—'घटे' इति । कालत्वं महाकालत्वम्; अन्यथा प्रलयेऽतथात्वेनाति-

[1] रण्यघटित—अ.

व्याप्त्यसंगतेः। 'महाकालान्यत्वाभाव' इति। संयोगेन साध्यतायामुत्पत्तिकालावच्छेदेन वह्न्याद्यभावस्य साध्यवद्वृत्तित्वात् साध्यतावच्छेदकसंयोगसंबन्धेन साध्यव्या[1]पकतावच्छेदकत्वसंपत्तये प्रतियोगिवैयधिकरण्यं प्रवेश्यम्; न चैवं सर्ववान् महाकालत्वादित्यादावव्याप्तिरिति वाच्यम्; प्रतियोगितावच्छेदकसंबन्धेन प्रतियोगितावच्छेदकावच्छिन्नतत्समानाधिकरणप्रतियोगितावच्छेदकताकभेदघटितं प्रतियोगिवैयधिकरण्यं प्रवेश्य तादृशप्रतियोगितायां साध्यतावच्छेदकसंवन्धावच्छिन्नत्वयादृशप्रतियोगित्वावच्छिन्नत्वैतदुभयाभावनिवेशात्; तथा च साध्यवति महाकालावच्छेदेन कालिकसंवन्धावच्छिन्नमहाकालान्यत्वाभावसत्वेऽपि न क्षतिः। भावरूप इति। अस्य कालिकसंवन्धेन हेतुमद्वृत्तित्वं बोध्यम्; भावभिन्नत्व[2]निवेशे घटत्वादिना घटत्वाभावाभावमादाय भावत्वसत्वेऽव्याप्तिः; तदसत्वेऽतिव्याप्तिः। एवं भावप्रतियोगिकत्वानिवेशाद् घटत्वाभावप्रमाविषयत्वाभावमादाय न दोष इत्यपि भावत्वानुपादानेऽतिव्याप्तं; तदुपादाने च गौरवम्; मनोन्यत्वाभावलेखनासंगतिश्च; साध्यवद्वृत्तिभावप्रतियोगिप्रतियोगिकान्यत्वनिवेशेऽपि तथा; घटत्वाद्यात्मकाभावा[3]वारणात्। सर्वकल्पे तद्रूपान्यत्वविशिष्टसमवेतवान् जातेरित्यादौ अतिव्याप्तिः। 'एवम्' इति। सर्वत्रेत्यस्य सर्वाधिकरणावच्छेदेनेत्यर्थे स्वरूपसंबन्धेन साध्यतायां सर्वत्रेत्यर्थे च घटवृत्तित्वविशिष्टसाध्यक एवातिव्याप्तिः; न तु व्यभिचारिणि अवच्छेदकावच्छेदेन। न च तत्तथैवेति वाच्यम्; धूमवान् वह्नेरित्यादौ गुणत्वादिना द्रव्याभावमादायातिव्याप्तेः सत्वात् तदकथनेन न्यूनता प्रसाङ्क्षीदिति सकलव्यभिचारिण्येकाभावनिवन्ध इति तत्रापि तद्ग्रन्थविरोधसूचनाय धूमवानित्युक्तम्; तद्रूपान्यत्वविशिष्टसत्तादेः साध्यत्वे जात्यादिहेतावतिव्याप्तिर्न द्वितीयलक्षणे ग्रन्थविरोधस्तु तत्साधारण इत्ययमेवोक्तः।

[1] साध्यव्यापकत्वसंपत्तये--अ.

[2] भिन्नत्वानिवेशे.--अ.

[3] अभाववारणात्--अ.

## न्यायरत्नम्

समनियताभावैक्यमते घटत्वादिना द्रव्यत्वाभावस्य घटत्वादिना वह्न्यभावाभिन्नतया साध्यतावच्छेदकसंयोगसंबन्धेन वह्निरूपप्रतियोगिसामानाधिकरण्यसंभवमाशङ्क्याह--घटवृत्तित्वविशिष्टद्रव्यत्वत्वादिना इति। हेतुसामानाधिकरण्यसंपत्तये घटवृत्तित्वविशिष्टेति।

'उभयाभावघटित' इति। स्वप्रतियोगितावच्छेदकविशिष्टप्रतियोगिकत्वहेत्वाधिकरणयत्किञ्चिद्वृत्त्यनुयोगिकत्वसामान्योभयाभाववत्साध्यतावच्छेदकसंबन्धसामान्यकत्वरूपेत्यर्थः। 'अव्याप्तेः' इति। [1]नन्वेवमभावपदस्य पूर्वोक्तभावभिन्नार्थकत्वात् न घटत्वाभावसाध्यकेऽव्याप्तिरिति चेन्न; तथा सति कपिसंयोगात्मकाभावमादाय स्वविशिष्टत्वविशेषणव्यावृत्त्यसंगतेः। ननु सत्तावान् जातेरित्यादौ तद्वृत्त्यावृत्तिः संभवतीत्यत आह--'एवम्' इति।

## गादाधरी

(२३) व्यधिकरणधर्मावच्छिन्नाभावस्य संबन्धावच्छिन्नप्रतियोगिताकत्वसमर्थनम्।

यत्तु--विशेषणताविशेषेण व्यापकता, तेनैव सम्बन्धेन प्रतियोगिसामानाधिकरण्यं, सर्वत्र साध्यवत्त्वप्रकारकप्रमाविषयत्वाद्यभावमादायैव लक्षणसङ्गमनमतिव्याप्तिवारणं चेति; [2]तदपि उक्तातिव्याप्तेः [3]आत्मत्वादिसाध्यकस्थले साध्याभावमादाय हेतुतावच्छेदकसम्बन्धव्यावृत्तिप्रदर्शनविरोधाच्चानुपादेयमेव।

[1] नन्वभावपदस्य--ग.

[2] अनादेयमेवेत्यनेनान्वयः--स्व.

[3] आत्मत्वसाध्यकेति प्रतीकं न्यायरत्ने--स्व.

केचित्तु—प्रतियोगितावच्छेदकसम्बन्धेन प्रतियोगिसामानाधिकरण्यनिवेशान्न प्रागुक्तातिव्याप्तिः, इत्थं च व्यापकतापि तेनैव सम्बन्धेन वाच्या, अतो वह्निमान् धूमादित्यादौ संयोगादिघटितसाध्यव्यापकतावच्छेदकप्रतियोगिताकस्य समवायादिसम्बन्धावच्छिन्नप्रतियोगिताकवह्न्याद्यभावस्य हेत्वधिकरणे समवायादिना प्रतियोगिसामानाधिकरण्यविरहेऽपि न क्षतिः; तादृशाभावानां साध्यतावच्छेदकसम्बन्धघटितसाध्यनिष्ठव्याप्यतानिरूपितस्वप्रतियोगितावच्छेदकसम्बन्धघटितव्यापकतावच्छेदकस्वप्रतियोगिताकत्वाभावेन निरुक्तयावदभावान्तःपातित्वात्। न चैवं व्यधिकरणधर्मावच्छिन्नाभावस्य सम्बन्धावच्छिन्नप्रतियोगिताकत्वे मानाभावेन तादृशाभावस्य लक्षणघटकत्वानुपपत्तिरितिवाच्यम्, संयोगेन घटत्वेन पटो नास्तीत्यनुभवबलात् तादृशाभावप्रतियोगितायामपि सम्बन्धस्यावच्छेदकत्वात्, अनुभवानादरे[1] समानाधिकरणधर्मावच्छिन्नाभावप्रतियोगितायामपि सम्बन्धस्य अवच्छेदकत्वासिद्धेः। अथ बाधबुद्धिप्रतिबन्धकतायाः सम्बन्धविशेषनियन्त्रितत्वानुरोधेन[2] समानाधिकरणधर्मावच्छिन्नप्रतियोगिताकाभावस्य सम्बन्धावच्छिन्नप्रतियोगिताकत्वमावश्यकम्, अन्यथा एकैकविधघटाद्यभावज्ञानस्य संयोगसमवायादिरूपनिखिलसंसर्गावगाहिज्ञानप्रतिबन्धकत्वप्रसंगात्। न च संयोगादिसम्बन्धावच्छिन्नघटादिप्रकारकबुद्धिं प्रति वस्तुगत्या संयोगादिसम्बन्धेन घटादिमत्ताविरोधी योऽभावः तज्ज्ञानत्वेन प्रतिबन्धकत्वान्नोक्तातिप्रसङ्ग

[1] 'अनुभवानादरे च'—अ.

[2] अनुरोधादिति प्रतीकं न्यायरत्ने—स्व.

**इति वाच्यम्, वास्तवतादृशाभावज्ञानत्वादिना प्रतिबन्धकत्वे घटाभावत्वादिना पदार्थान्तरावगाहिज्ञानस्य घटादिमत्ताज्ञानाविरोधित्वप्रसङ्गात्; तस्मात्तत्तत्संसर्गकविशिष्टबुद्धौ तत्तत्संसर्गावच्छिन्नप्रतियोगिताकाभावत्वावगाहिज्ञानत्वेनैव प्रतिबन्धकताया वक्तव्यतया समानाधिकरणधर्मावच्छिन्नप्रतियोगितायां सम्बन्धस्यावच्छेदकतासिद्धिरिति चेत् तर्हि घटत्वादिविशिष्टपटाद्यवगाहि[1]ज्ञानघटत्वावच्छिन्नपटाद्यभावज्ञानयोरपि प्रतिबद्ध्यप्रतिबन्धकभावसत्वात्, तादृशप्रतिबद्ध्यप्रतिबन्धकभावस्य सम्बन्धविशेषनियन्त्रितत्वानुरोधेन व्यधिकरणधर्मावच्छिन्नप्रतियोगिताया अपि सम्बन्धावच्छिन्नत्वावश्यकत्वात्। व्यधिकरणधर्मावच्छिन्नाभावज्ञानस्य अप्रतिबन्धकत्वे बाधग्रन्थे [2]लाघवोपनीतकाञ्चनमयत्वादिना वह्न्या[3]द्यनुमितिविरोधितया काञ्चनमयत्वावच्छिन्नप्रतियोगिताकवह्न्याद्यभावस्य हेत्वाभासत्वोक्तेरसाङ्गत्यापत्तेरित्यलमप्रस्तुतविचारेणेति वदन्ति।**

## कृष्णंभट्टीयम्

उक्तेति। घटत्वाभाववान् प्रमेयत्वादित्यादौ घटत्वाभावप्रमाविषयत्वाभावस्य विशेषणतासंबन्धेन स्वाभावरूपप्रतियोगिसामानाधिकरण्यात्; विषयित्वीयत्वं च विशेषरूपमित्यतिव्याप्तिरित्यर्थः; अत्र सकलव्यभिचारिण्यतिव्याप्तिर्बोध्या। आत्मत्ववत्ताप्रकारकप्रमाविषयत्वाभावमादाय तद्व्यावृत्तिसत्वादाह साध्याभावमादायेति।

1 भ्रम—अ.

2 लाघवपदं संपातायातमिति—कृ.

3 वह्न्यनुमितीति न्यायरत्नम्.

व्यधिकरणधर्मावच्छिन्नाभावं विनापि व्यधिकरणसंबन्धावच्छिन्न-वाच्यत्वाद्यभावमादाय लक्षणसमन्वयसंभवात् प्रतियोग्यवृत्तिश्चेति ग्रन्थाव-तारानुपपत्तिरतः प्रतियोगितावच्छेदकेति । न प्रागुक्ते इति । नित्यज्ञानत्वा-दिसाध्यकनित्यसविषयकत्वादौ । तत्र समवायाद्यवच्छिन्नसाध्याद्यभावादेरेव लक्षणघटकत्वात् । इत्थं चेति । व्यापकता च प्रतियोगिवैयधिकरण्याघटि-ता; अन्यथा प्रतियोगितावच्छेदकसंबन्धेन व्यापकत्वोपादानेऽपि समवाया-वच्छिन्नवह्न्याद्यभावस्य साध्यतावच्छेदकसंबन्धेन साध्यनिष्ठव्याप्यता-निरूपितव्यापकताघटकीभूतस्वप्रतियोगितावच्छेदकीभूतदैशिकविशेषणता - संबन्धेन तदवच्छेदककिञ्चिद्विशिष्टस्वाभावप्रतियोगिताकत्वेन तादृशा-भावाव्यावृत्तेरसंगतिः । न चैवं समवायावच्छिन्नवह्न्यभावप्रतियोगित्वस्य संयोगघटितसाध्यव्यापकतावच्छेदकत्वान्नापत्तिरिति वाच्यम्; समवायेन साध्यव्यापकतावच्छेदकसंयोगावच्छिन्नप्रतियोगिताकद्रव्यत्वाद्यभावस्य तदर्थत्वात् । न चैवमपि तादृशाभावस्य स्वाभावरूपप्रतियोगिसामानाधि-करण्यसत्वेनाव्याप्त्युद्धारसत्वात् प्रतियोगितावच्छेदकसंबन्धेन व्यापकत्वं व्यर्थमिति वाच्यम्; धूमाभावादेः स्वाभावरूपप्रतियोगिसामानाधिकरण्य-वारणाय यावत्प्रतियोगितावच्छेदकसंबन्धस्य वाच्यत्वात् । अग्रे च यत्कि-ञ्चित्तादृशसंबन्धनिवेशपक्षं दूषयित्वैवायं पक्षो दूष्य इति न तद्विरोधः । स्वाभावत्वानवच्छिन्नप्रतियोगित्वोपादानपरो वायं ग्रन्थः । संबन्धेति । संबन्धविशेषावच्छिन्नप्रतियोगिताकाभावत्वावगाहित्वयघटितधर्मावच्छिन्न-त्वेत्यर्थः । वस्तुगत्येति विरोधस्य प्रतिबन्धकज्ञानाविषयत्वलाभाय; तदवच्छिन्नज्ञानस्य प्रतिबन्धकत्वेऽपि बाधबुद्धिविधया अप्रतिबन्धकत्वात् । प्रसंगादिति । वस्तुगत्या संयोगादिसंबन्धेन घटादिमत्ताविरोधितावच्छे-दकरूपावच्छिन्नविषयताकत्वेन न प्रतिबन्धकतासंभवः; घटाभावत्वा-देरतथात्वादिति भावः । तादृशेति । अन्यथा व्यधिकरणधर्मावच्छि-न्नाभावत्वावगाहिज्ञानस्य निखिलसंबन्धावगाहिस्वप्रतियोगितावच्छेदकवि-शिष्टप्रतियोगिमत्ताबुद्धिप्रतिबन्धकत्वप्रसंगः; विषयविरोधविरहेण तस्य

तथात्वस्येष्टत्वे त्वाह संबन्धेति । संबन्धाविशेषितप्रतियोगिताकाभावत्वेन ज्ञानप्रतिबन्धकत्वस्यादृष्टचरत्वादिति भावः । लाघवोपनीतेति क्वाचित्कलाघवपदं संपातायातम्; बाधग्रन्थे तथा अनभिधानात् ।

## न्यायरत्नम्

**'उक्तातिव्याप्तेः' इति । 'घटत्वाभाववान् मेयत्वाद्' इत्यादौ इत्यर्थः । अभावे भावभिन्नत्वस्य प्रतियोगिनि भावत्वस्य च निवेशे त्वाह—'[1]आत्मत्वसाध्यक' इति ।**

**'बाधबुद्धिप्रतिबन्धकताया' इति । तद्वत्ताज्ञाननिष्ठतत्संबन्धावच्छिन्नतद्धर्मावच्छिन्नप्रकारताशाल्यनाहार्यज्ञानत्वावच्छिन्नप्रतिबद्धचतानि - रूपिततदभाववत्ताज्ञाननिष्ठप्रतिबन्धकताया इत्यर्थः । संबन्धविशेषनियन्त्रितत्वानुरोधाद्[2]' इति । [3]तद्धर्मावच्छिन्नप्रतियोगित्वांशे तत्संबन्धावच्छिन्नत्वावगाहित्वघटिततद्धर्मावच्छिन्नत्वानुरोधादित्यर्थः । 'अन्यथा'। तेन संबन्धेन तद्वत्ताज्ञानं प्रति केवलतदभावावगाहिनिश्चयस्य प्रतिबन्धकत्वे । अविरोधित्वप्रसंगाद् इति । अत्र वस्तुगत्या घटसंयोगविरोधी योऽभावः तद्वृत्त्यनुयोगितासंबन्धावच्छिन्नप्रतियोगिप्रकारतानिरूपिताभावत्वावच्छिन्नप्रकारताकज्ञानत्वेन प्रतिबन्धकत्वात् न दोषः इति नाशङ्कनीयम्; तादृशानुयोगितात्वेनान्यानुयोगितावगाहिज्ञानस्याप्रतिबन्धकत्वप्रसङ्गात् । उपनीतकाञ्चनमयत्वादिना वह्न्यनुमितीति । काञ्चनरूपमयत्वज्ञानसन्निकर्षसहकारेण वह्नित्वावच्छिन्नव्याप्यवत्तापरामर्शजन्यकाञ्चनमयत्वप्रकारेण वह्न्यनुमितीत्यर्थः ।**

1 'आत्मत्वादिसाध्यकस्थले' इति गादाधर्यां दृश्यते—स्व.

2 'संबन्धविशेषनियन्त्रितत्वानुरोधेन' इति गादाधर्यां दृश्यते—स्व.

3 तद्धर्मविषयतावच्छिन्न-अवच्छिन्नत्वविषयतावच्छिन्न-प्रतियोगित्वविषयतात्वेन प्रतियोगित्वविषयता निवेशनीया; तेन, गुरुधर्मावच्छिन्नप्रतियोगित्वाप्रसिद्धावपि कम्बुग्रीवादिमान् नास्तीत्याकारकबाधबुद्धिप्रतिबन्धकतायां नानुपपत्तिः—स्व.

दीधितिः

रूपादिसामान्याभावे साध्ये पृथिवीत्वादिकं सद्धेतुरेव; प्रलये परमाणौ उत्पत्तिकाले चावयविनि तत्सत्वात् । न च प्रतियोगिवद् ध्वंसप्रागभावयोः अत्यन्ताभावविरोधित्वम्, मानाभावात् । अत एव 'अन्तरा श्यामे रक्तं रूपं नास्ति' इति प्रत्ययः । न चैष रक्तिमध्वंसाद्यवगाही, पूर्वापररक्तिमध्वंस प्रागभाववति मध्ये रक्तेऽपि तथा प्रत्ययप्रसङ्गात् ।

## गादाधरी

(२४) रूपादीतिग्रन्थावतारः ।

**तदपि न साधीयः; निखिलाभावस्य किंचिद्विशिष्टस्वाभावनिष्ठप्रतियोगितावच्छेदकीभूतदैशिकविशेषणतासम्बन्धेन तादृशप्रतियोगिसामानाधिकरण्यसत्वेन व्यभिचारिणि अतिव्याप्तेः । यावत्प्रतियोगितावच्छेदकसम्बन्धेन प्रतियोगिसामानाधिकरण्यनिवेशे च निखिलव्यधिकरणधर्मावच्छिन्नाभावानामैक्यमते निखिलसम्बन्धानामेवैकैकतादृशाभावप्रतियोगितावच्छेदकतया क्वचिदपि हेत्वधिकरणे संयोगविषयित्वादिरूपसकलसम्बन्धेन प्रतियोगिनोऽवृत्तेरसम्भवापत्तेः, प्रकारान्तरानुसरणे च गौरवादिति ।**

**अथ यावत्त्वमनुपादाय साध्यतावच्छेदकव्याप्यप्रतियोगिताकस्य ([1]तदुपादाय साध्यतावच्छेदकव्यापकप्रतियोगिताकस्य वा[2]भावस्य निवेशे) उभयत्वावच्छिन्नसाध्यके व्यभिचारिण्यति-**

[1] एतच्चिह्नान्तर्गतपाठः प्रामादिकः—र.

[2] 'साध्याभावस्य'—अ.

व्याप्तिरुक्ता, न तु रूपसामान्याभाववादिसाध्यके, प्राचीनमते विरुद्धे पृथिवीत्वादिहेताविवत्यत्र किं बीजम्; तथा सति तत्रापि रूपसामान्याभावाभावस्य रूपा[1]द्यात्मकाभावस्य स्वध्वंसप्रागभा-वा[2]दिरूपप्रतियोगिसामानाधिकरण्यसत्वेन अतिव्याप्तिसम्भवादि-त्याशङ्कापरिहाराय तस्य [3]स्वमते लक्ष्यत्वमेवोपपादयति––रूपा-दीति । यथोक्तलक्षणेऽतिव्याप्तिशङ्कया तु नैतद्ग्रन्थावतारः, तत्र पृथिव्यन्यत्वाद्यभावस्यापि यावदन्तर्गततया तस्य पृथिव्यां पृथिवीभेदरूपप्रतियोगिसामानाधिकरण्यासम्भवेनातिव्याप्त्यनव-काशात् ।

यत्तु––उत्पत्तिकालावच्छेदेन रूपसामान्याभावस्य पृथि-व्यामपि सत्त्वेन न पृथिव्यन्यत्वाभावस्य रूपसामान्याभावव्यापक-तावच्छेदकप्रतियोगिताकतेत्यभिसन्धिपूर्विकां प्राचीनप्रवादमात्रे-णासद्धेतुत्वाभिमानिनां त[4]टस्थानां यथोक्तलक्षणे अतिव्याप्ति-शङ्कां निराकरोति––रूपादीति । सद्धेतुरेवेति । यादृशरीत्या पृथिव्यन्यत्वाभावस्य लक्षणाघ[5]टकत्वोपपत्तिः तादृशरीत्या [6]साध्य-वति हेतुसत्ताया अप्यावश्यकतया सद्धेतुरेवेत्यर्थ इति व्याख्यातम्; तदनुपादेयमेव, तादृशाशङ्कितुः पृथिव्यां रूपसामान्याभावसत्वे अविप्रतिपत्तावेवातिव्याप्तिशङ्कासम्भवेनाग्रे पृथिव्यां रूपसामा-न्याभावव्यवस्थापनौपयिकाकाङ्क्षानुत्पत्त्या तदसाङ्गत्यापत्तेः ।

1 रूपात्मकाभावस्येति प्रतीकम्––र. 2 अभावरूपेति प्रतीकम्––र.

3 'स्वमताभिप्रायेण लक्ष्यत्वमाह रूपादीति'––अ.

4 वादिप्रतिवादिभावानापन्नानामित्यर्थः––स्व.

5 न लक्षणघटकत्वोपपत्तिः––अ. 6 'हेतुमति साध्यवत्तायाः'––अ.

**प्रलये--महाप्रलये । परमाणूनां नित्यतया तत्रोत्पत्तिकालावच्छेदेन रूपसामान्याभावासम्भव इति भावः । यद्यपि पाकाद्रूपनाशोत्पत्तिकाले पूर्वरूपात्मकप्रतिबन्धकसत्त्वेन रूपान्तरानुत्पादेन इदानीमपि परमाणौ रूपसामान्याभावसम्भवः तथापि अविनश्यदवस्थस्य रूपस्य [1]रूपप्रतिबन्धकत्वे पूर्वरूपनाशोत्पत्तिक्षण एव पाकजरूपोत्पत्तिसम्भव इत्यभिप्रायेण प्रलयपर्यन्तानुधावनम् । उत्पत्तिकाल इति । अवयविद्रव्यस्य जन्यतया प्रलये असत्त्वात् तदवच्छेदेन तत्रा[2]भावासम्भव इति भावः । तत्सत्वात्--रूपादिसामान्याभावसत्वात् ।**

कृष्णंभट्टीयम्

निखिलेति । न च भावरूपप्रतियोगिसामानाधिकरण्यनिवेशान्नातिव्याप्तिः । जगदीशेन साध्यवद्वृत्तित्वे स्वरूपसंबन्धावच्छिन्नत्वनिवेशेऽपि पर्वतत्वाद्यात्मकाभाववारणाय दैशिकतया हेतुसामानाधिकरण्यं भावभिन्नत्वं वोच्यतामिति वाच्यम् । अभावसाध्यके घटत्वादिना साध्याभावस्य भावरूपप्रतियोग्यप्रसिद्धेः । भावप्रतियोगिकत्वोक्तौ च तत्रैव व्यभि[3]चारिण्यतिव्याप्तिः । साध्यप्रमाभावस्य प्रतियोगिवैयधिकरण्याघटितसाध्यव्यापकाप्रतियोगित्वात् । न च तद्घटितव्यापकत्वं प्रवेश्यम्; तथापि कपिसंयोगाद्यात्मकाभावस्येति लेखनासंगतेः । यावद् इति । नन्वेवं जलादीत्यादिग्रन्थानुत्थितिः; धूमाभावे तादृशगोत्वाभावाभावस्य धूमाभावरूपत्वेऽपि यावदन्तर्गतसंयोगेन प्रतियोग्यसामानाधिकरण्यात् । न च धूमवत्त्वप्रकारकप्रमाविशेष्यतावान् वह्नेरित्यादौ साध्याभावे तादृशगोत्वाभावाभावस्य

[1] प्रतिबन्धकत्वेन--अ.

[2] तदभाव--अ.

[3] भावत्वानुपादाने--अ.

साध्याभावरूपत्वेनातिव्याप्तिरेव । धूमवदनुयोगिकत्वविशिष्टस्वरूपसं-
बन्धत्वादिना संसर्गतानुपगमादिति वाच्यम्; तत्रापि यावदन्तर्गतधूमाभावे तादृशगोत्वाभावाभावस्य तद्रूपतया तदुद्धारसंभवादिति चेन्न । एतन्मतेऽपि तादृशगोत्वाभावसंयोग्यन्यतराभावस्य धूमाभावस्वरूपत्वेन तद्ग्रन्थस्योत्थानात् । ऐक्यमते इति । यद्यपि तद्भेदमतेऽपि समवायावच्छिन्नवह्न्याद्यभावस्य साध्यव्यापकतावच्छेदकीभूतपूर्वक्षणवृत्तित्वविशिष्टस्वाभावनिष्ठप्रतियोगिताकतया प्रतियोगितावच्छेदकयावदन्तर्गतसमवायेन प्रतियोग्यसामानाधिकरण्यादसंभवः; तथापि प्रतियोगिवैयधिकरण्याघटितव्यापकताया एव प्रतियोगितावच्छेदकसंबन्धघटितत्वस्य सार्थकीकृतत्वात् तदनुरोधेनैक्यानुधावनम् । अनैक्यमते चावतारकत्वानुपपत्तिः व्यधिकरणसंबन्धावच्छिन्नवाच्यत्वाद्यभाववारणेऽपि किञ्चिद्विशिष्टवाच्यत्वाद्यभावा[1]वारणात् । न चैतल्लक्षणे सिद्धान्तेऽपि असौ दोषो वर्तत एव; परंतु नित्यज्ञानं नित्यसविषयकत्वादित्यादावतिव्याप्तिवारणाय संबन्धत्रयं वीप्सामपेक्ष्य लाघवादिति वाच्यम्; तथापि समनियताभावैक्यपक्षानुरोधेन वीप्साया एवौचित्यात् ।

यत्तु जगदीशेन 'स्पन्दो महाकालत्वात्' 'महाकालान्यः कालत्वाद्' इत्यादौ कालिकविशेषणतासंबन्धावच्छिन्नस्पन्दत्वाभावस्य तथाविधमहाकालान्यत्वाभावस्य प्रतियोगिताघटकविशेषणतासंबन्धेन तथात्वाद् अतिव्याप्तिरित्यभिहितम्, तदभिप्रायश्चायं दैशिकविशेषणतासाधारणविशेषणतात्वेन कालिकविशेषणताया अपि संबन्धतया ताद्रूप्येण कालिकविशेषणतासंबन्धावच्छिन्नतदभावस्य साध्यवत्यसत्वेन प्रतियोगितायां साध्यव्यापकतावच्छेदकत्वमक्षतमित्यतः संबन्धत्रयैक्यमुक्तम्; तथा च समवायावच्छिन्नस्पन्दत्वाद्यभावमादाय नातिव्याप्तिरिति ।

तदपेशलम्; सामान्यतो विशेषणतात्वं निराकृत्य कालिकविशेषणतात्वादिनैव संबन्धताया व्यवस्थापनात् स्पन्दत्वमहाकालान्यत्वादेः

[1] भाववारणात्—अ.

कालिकविशेषणतासंबन्धेन साध्यव्यापकताया एवासंभवात् स्पन्दत्वाद्यनधिकरणधर्म्यवच्छेदेन कालिकसंबन्धावच्छिन्नस्पन्दत्वाद्यभावसत्वात् इति ।

'प्रकारान्तरम्'। यावत्प्रतियोगितावच्छेदकसंबन्धस्य हेत्वधिकरणवृत्तितावच्छेदकत्वं विशेषणम् । न च हेत्वधिकरणवृत्तितावच्छेदकाः स्वप्रतियोगितावच्छेदका ये ये संबन्धास्तथात्वोक्तौ सत्तावान् जातेरित्यादौ संयोगेन समवायेन च व्यधिकरणधर्मावच्छिन्नघटसत्ताद्यभावस्यैक्येन तथाविधसत्ताभावस्य यावदन्तर्गतसंयोगेन हेत्वधिकरणावच्छेदेनातथात्वादव्याप्तिः; हेत्वधिकरणसामान्यवृत्तितावच्छेदकत्वोक्तौ धूमवान् मेयत्वादित्यादौ संयोगाद्यवच्छिन्नधूमाद्यभावप्रतियोगितावच्छेदकसंयोगासंग्रहः । एतेन स्वविशिष्टहेत्वधिकरणत्वोक्तावपि न निस्तार इति वाच्यम् । साध्यव्यापकतावच्छेदकत्वेन स्वप्रतियोगितायाः उक्तत्वात् । घटत्वेन वह्न्यादिनिष्ठतादृशप्रतियोगितावच्छेदकविषयितासंबन्धवारणाय हेत्वधिकरणवृत्तितावच्छेदकत्वमावश्यकम् । सत्ताभावस्य समवायघटितसाध्यव्यापतावच्छेदकप्रतियोगिताकस्य प्रतियोगितावच्छेदकसंयोगवारणाय वृत्तित्वप्रतियोगित्वयोः सामानाधिकरण्यं वाच्यम् । परे तु यावत्वं व्यापकत्वम् । तथा च हेत्वधिकरणवृत्तितावच्छेदकस्वप्रतियोगितावच्छेदकसंबन्धत्वव्यापकविलक्षणावच्छेदकताकस्वप्रतियोग्यधिकरणताघटितप्रतियोगिसामानाधिकरण्यं फलितम् । अथ संयोगसमवायादिनिष्ठानां प्रतियोग्यधिकरणतावच्छेदकतानां नानात्वेन कस्यामपि तस्यां न तद्व्यापकत्वम् स्वप्रतियोग्यधिकरणतावच्छेदकतात्वेन व्यापकत्वोक्तौ किञ्चिद्विशिष्टस्वाभावाधिकरणतावच्छेदकदैशिकविशेषणतामादायातिव्याप्त्युन्मज्जनप्रसंगः एतेन यत्किञ्चित्तादृशसंबन्धत्वव्यापकत्वमपि परास्तम्; मैवम्; यद्यत्संबन्धावच्छेदकतावृत्त्यन्यतमत्वेन तादृशसंबन्धत्वसमनियतत्वं तत्तत्संबन्धावच्छिन्नप्रतियोगितासामानाधिकरण्यस्य वाच्यत्वादित्याहुः ।

स्वप्रतियोगितावच्छेदकीभूतेन येन संबन्धेन साध्यव्यापकतावच्छेदकप्रतियोगिताकत्वं तेन संबन्धेन तथात्वमिति वा प्रकारान्तरं बोध्यम् ।

साध्यतावच्छेदक[1]व्यापकेति । नन्वत्र घटत्वेन रूपसामान्याभावाभावमादायैव नातिव्याप्तिः । न च तस्यापि पूर्वक्षणवृत्तित्वविशिष्टस्वाभावरूपप्रतियोगिसामानाधिकरण्यमेवेति वाच्यम्; स्वाभावत्वानवच्छिन्नप्रतियोगिसामानाधिकरण्यस्य वाच्यत्वात् । अन्यथा यथोक्तविशेषणाक्रान्ताभावनिवेशेऽपि पृथिव्यन्यत्वाभावादेः स्वभावरूपप्रतियोगिसामानाधिकरण्यसंभवेन प्राचां तदतिव्याप्त्यनुद्धारप्रसंगात् । ग्रन्थकारेणापि रूपाद्यात्मकाभावस्य स्वध्वंसादिरूपप्रतियोगिसामानाधिकरण्यस्यैव स्वाभावसामानाधिकरण्यस्यानभिधानाच्चेति चेन्न; समनियताभावैक्यमते तस्य घटत्वादिना वायुत्वाद्यभावाभावतया वायुत्वाभावादिरूपप्रतियोगिसमानाधिकरणत्वात् । न चैवमपि पृथिव्यवृत्तित्वावच्छिन्नाभाव एव तत्रातिव्याप्तिवारकः; तस्य साध्यमतावच्छेदकव्याप्याप्रतियोगिताकत्वेऽपि साध्यतावच्छेदकव्यापकप्रतियोगिताकत्वादिति वाच्यम्; तस्य पृथिव्यन्यत्वविशिष्टाभा[2]वतया गगनाभावरूपप्रतियोगिसामानाधिकरण्यात्; यद्यपि धूमवान् वह्नेरित्यादावेवेदृशरीत्यातिव्याप्तिः तथापि समनियताभावैक्ये सा लक्षणदोषः; अत्र तु सद्धेतुत्वेन समा[3]धानमिति विशेषमादृत्यैतन्मात्राभिधानम् । न च यथोक्तलक्षणे पृथिव्यन्यत्वाभावमादायातिव्याप्त्युद्धारलेखनासंगतिः; तस्य पृथिवीभेदविशिष्टाभावतया तत्संभवादिति वाच्यम्; प्राचां मते यथोक्तलक्षणे समनियताभावभेदमत एवानतिप्रसंग इष्टः; तदभेदमते प्रसिद्धव्यभिचारितो विशेषस्य दुर्वचत्वात् साध्यतावच्छेदकव्यापकप्रतियोगिताकाभावनिवेशे चोक्तक्रमेणोपेक्षाबीजसंभवादिति ।

अत्रेदं चिन्त्यम्; एवं सति अत एवेति ग्रन्थानन्तरमेवास्याभिधातुमुचिततया इदानीमेतदभिधाने संदर्भाशुद्धिः ।

1 साध्यतावच्छेदकव्यापकेत्यादिगदाधरीपाठः प्रामादिकः इति न्यायरत्ने--स्व.

2 अभावाभावतया--अ.

3 न तु ऐक्ये अत्रेष्टापत्तिः अनैक्ये तु नातिव्याप्तिरिति समाधानम्--अ.

वस्तुतस्तु प्राचां मते रूपसामान्याभावसाध्यकपृथिवीत्वादौ वक्ष्यमाणरीत्यातिव्याप्त्यभावेऽपि वादकथात्मके शास्त्रे वस्तुगतिमनुरुध्यैव व्युत्पादनीयतया तदभिधानम् ।

वस्तुतस्तु उक्तरीत्या अत एवेत्यादिग्रन्थे अवतारिते यावत्त्वनिवेशे यथोक्तविशेषणावश्यकतया तद्व्यावृत्तिप्रदर्शकपङ्क्तिरावश्यकी; तथाविधस्यापि अयमात्मा ज्ञानादित्यादावव्याप्तिग्रस्तत्ववारणाय येनेत्याद्यभिहितम्; तदुपरि च मनोन्यत्वाभावस्य परंपरासंवन्धेन प्रतियोगिसामानाधिकरण्यसंभवात् न तदतिव्याप्त्युद्धारसंभव इत्याशङ्कायामेवं दलान्तरेऽपीति लेखनमिति प्रकृतं समाप्य रूपादीत्यादिनोपेक्षाबीजप्रदर्शनात् कथं संदर्भाशुद्धिः? गोत्वाभावस्येत्यादिग्रन्थो यथोक्ताभावविशेषणप्रभृति व्यावृत्तिप्रदर्शनार्थ इत्यभिप्रायेण भट्टाचार्यैः तथा व्याख्यानेऽपि वर्णकान्तरमादाय संदर्भाशुद्धिपरिहारेऽपि तदभिप्रायोपगमान्न विरोध इति ।

'पृथिव्यन्यत्वाभावस्यापि' इति । एतस्य स्वाभावरूपप्रतियोगिसामानाधिकरण्येऽपि वक्ष्यमाणरीत्या पृथिव्यन्यत्वप्रमाद्यभावो बोध्यः । खण्डप्रलये परमाणौ पूर्वसर्गसिद्धमेव रूपं स्वीकार्यम् अन्यथा रूपोत्पत्त्यर्थं पुनः पाकस्वीकारापत्तेरित्यतो महेति ।

## न्यायरत्नम्

**'प्रकारान्तरानुसरणे' इति । हेत्वधिकरणवृत्तितावच्छेदकस्वप्रतियोगितावच्छेदका ये ये संबन्धाः प्रत्येकं तेन संबन्धेन प्रतियोगिसामानाधिकरण्ये सति तेन संबन्धेन प्रतियोगिसामानाधिकरण्यमिति[1] निवेशानुसरणे इत्यर्थः । 'अथ यावत्त्वमनुपादाय साध्यतावच्छेदकव्याप्यप्रतियोगिताकस्येत्येव पाठः तदुत्तरं तदुपादाय वा साध्यतावच्छेदकव्यापकप्रतियोगिताका-**

[1] वह्न्याद्यनुमितीति गादाधर्यां पाठः——स्व.

भावनिवेश' इति पाठः प्रामादिक[1] एव; तथाहि——साध्यतावच्छेदकव्यापकप्रतियोगिताकयावदभावनिवेशकल्पे घटत्वादिना रूपसामान्याभावाभावस्यापि लक्षणघटकतया तस्य प्रतियोगिसामानाधिकरण्याभावात् नातिव्याप्तिः। न च तस्यापि पूर्वक्षणवृत्तित्वविशिष्टस्वाभावरूपप्रतियोगिसामानाधिकरण्यसंभवाद् भवत्येवातिव्याप्तिरिरिति वाच्यम्; घटत्वाभाववान् मेयत्वादित्यादावतिव्याप्तिवारणाय प्रतियोगिसामानाधिकरण्यघटकप्रतियोगिताया निरुक्तव्याप्यवृत्तितानिरूपकत्वस्य निवेशनीयत्वात्। ग्रन्थकृद्भिः[2] ध्वंसप्रागभावरूपप्रतियोगिसामानाधिकरण्यस्यैवोक्तत्वाच्च; न च समनियताभावैक्यमते घटत्वादिना रूपाभावाभावस्य घटत्वादिना वायुत्वाभावाभावाभिन्नतया वायुत्वाभावरूपप्रतियोगिसामानाधिकरण्यमस्त्येवेति वाच्यम्; तत्कल्पे यद्यदित्यादिविवक्षाया बहुशः आवेदितत्वात्; अन्यथा व्यभिचारिसामान्य एवातिव्याप्तेरिरिति। नन्वेवमपि रूपसामान्याभावे साध्य इति ग्रन्थोऽतएवेतिग्रन्थोत्तरमेव लेखनीय इति संदर्भाशुद्धिर्दुर्वारैवेति चेत्;

अत्र केचित्——उक्तरीत्या अत एवेति ग्रन्थेऽवतारिते यावत्त्वविशेषणस्य साध्यतावच्छेदकेत्यादिविशेषणनिर्वाह्यतया तद्व्यावृत्तिप्रदर्शकग्रन्थ आवश्यकः; एवमपि अयमात्मा ज्ञानादित्यादावव्याप्तिवारणाय येनेत्यादिग्रन्थः। ततश्च मनोन्यत्वाभावस्य परंपरासंबन्धेन प्रतियोगिसामानाधिकरण्यसंभवात् नोक्तातिव्याप्त्युद्धार इति शङ्कायामेवं दलान्तरेऽपीति लिखित्वा प्रकृतं समाप्य रूपादीत्यादिनोपेक्षाबीजदर्शनमिति न संदर्भाशुद्धिरिति वदन्ति।

'[3]रूपात्मकाभावस्य स्वध्वंसप्रागभावरूपप्रतियोगी' इति। भावस्य प्रागभावध्वंसयोरतिरिक्तत्वेऽपि ध्वंसस्य प्रागभावः प्रतियोगिस्वरूप एव,

[1] कृष्णंभट्टीये तादृशपाठः अङ्गीकृतः——स्वं..

[2] ग्रन्थकृता——ग.

[3] रूपाद्यात्मकाभावस्येति गदाधरीपाठः——स्व.

एवं प्रागभावस्य ध्वंसोऽपि प्रतियोगिरूप एव, लाघवात्; तथा च रूपध्वंसप्रागभावस्य रूपप्रागभावध्वंसस्य च रूपस्वरूपत्वात् प्रागभावध्वंसयोश्च सप्रतियोगिकत्वनियमाद् रूपप्रतियोगित्वं तद्ध्वंसप्रागभावयोरव्याहतमित्यभिप्रायः।

यत्तु—रूपवद्भिन्नभेदस्य रूपस्वरूपत्वस्वीकारात् तादृशभेदप्रतियोगिरूपवद्भिन्नान्तःपातिरूपध्वंसप्रागभावयोः रूपप्रतियोगित्वमित्यभिप्रायवर्णनम्;

तदसत्; धूमवान् वह्नेरित्यादौ सर्वस्यैवातिव्याप्तिवारकधूमाभावादेः विषयितया स्वावच्छिन्नभिन्नभेदस्वरूपत्वात् तत्प्रतियोगिविषयितया स्वावच्छिन्नभिन्नवह्न्यादिरूपप्रतियोगिसामानाधिकरण्यमादायातिव्याप्तिवारणाय प्रतियोगितायां भेदानवच्छिन्नत्वविशेषणमावश्यकम्। न चैवं सद्धेतौ साध्यशून्यभिन्न[1]स्यापि तादात्म्यसंबन्धेन साध्यव्यापकतया तद्भेदस्यापि लक्षणघटकतया तस्य व्यापकताघटकतादात्म्यसंबन्धेन भेदानवच्छिन्नप्रतियोगिताश्रयसामानाधिकरण्यविरहादव्याप्तिरिति वाच्यम्; व्यापकतावच्छेदकप्रतियोगितायामपि भेदानवच्छिन्नत्वस्य विवक्षितत्वात्; एवं च रूपवद्भिन्नभेदीयरूपध्वंसप्रागभावनिष्ठप्रतियोगिताया अतादृशत्वाद् ध्वंसादिरूपप्रतियोगिसामानाधिकरण्यमादायातिव्याप्त्यप्रसक्तेः।

'महाप्रलये' इति। खण्डप्रलये परमाणुषु रूपसामान्याभावो न संभवति; तथा सति भाविसर्गे रूपानुत्पादप्रसंगः असमवायिकारणाभावात् तदर्थं परमाणुषु पाककल्पने वरं पूर्वसिद्धरूपस्वीकारेणेत्यतः प्रलय इत्यस्य महाप्रलय इत्यर्थकरणम्। 'मानाभावाद्' इति। रूपध्वंसादिः न तदत्यन्ताभावविरोधी तत्त्वे साधकाभावादिति प्रयोगो बोध्यः। ननु घटो रूपसामान्याभाववान् नित्यरूपवदन्यत्वादित्यनुमानमेव घटे रूपात्यन्ताभावे

[1] भेद—ग.

प्रमाणमित्यत आह—'अनुमानं च' इति । 'अप्रयोजकम्', व्यभिचारशङ्कानिवर्तको यो दर्शितसाध्यहेत्वोः कार्यकारणभावाद्यनुपपत्त्यापादकः तर्कः तच्छून्यमित्यर्थः । प्रमात्मकेति । तथा च रूपसामान्याभावो यदि रूपप्रागभावध्वंसावच्छिन्नावृत्तिः स्यात् तदा तद्ध्वंसप्रागभाववत् श्यामघटधर्मिकप्रमाविषयो न स्यादिति तर्केण रक्तरूपध्वंसप्रागभावयो रक्तरूपसामान्याभावाविरोधित्वानुमानेऽप्रयोजकत्वशङ्कानिरासः । 'यत्र घटादौ पाकाद्' इति ।

अत्रेदं बोध्यम्—अन्तरा श्यामे पूर्वरक्तापररक्ते चतूरूपीघटेऽपि मध्यरक्ततादशायां रक्तं रूपं नास्तीत्यापत्तिसंभवे पञ्चरूपीघटपर्यन्तानुधावनं निर्बीजम्; न च तत्र पूर्वरक्तापरप्रथमरक्तध्वंसप्रागभावयोः सामान्यधर्मावच्छिन्नप्रतियोगिताकत्वस्य व्यासज्यवृत्तित्वस्वीकाराद् रक्तं रूपं नास्तीति प्रतीतिविषयतादृशव्यासज्यवृत्तिधर्मावच्छिन्नाधिकरणतायाश्च तत्रासत्वात् नापत्तिसंभव इति वाच्यम् । पञ्चरूपस्थलेऽपि प्राथमिकरक्तध्वंसमध्यरक्तप्रागभावयोः मध्यरक्तध्वंसचरमरक्तप्रागभावयोः सामान्यधर्मावच्छिन्नप्रतियोगिताकत्वस्य व्यासज्यवृत्तित्वोपगमेन तत्राप्यापत्तेरसंभवादिति ।

## गादाधरी

(२५) सामान्यधर्मावच्छिन्नप्रतियोगिताकाभावस्य अत्यन्ताभावात्मकतया दोषमाशङ्क्य निरसनम् ।

ननु सामान्यधर्मावच्छिन्नप्रतियोगिताकाभावस्य अत्यन्ताभावात्मकतया रूपप्रागभाववत्युत्पत्तिकालावच्छिन्नावयविनि रूपध्वंसवति प्रलयावच्छिन्नपरमाणौ कथं रूपसामान्याभावसम्भवः? ध्वंसप्रागभावयोः अत्यन्ताभावविरोधित्वादित्याशङ्[1]क्य

[1] आशङ्कां निरस्यति—अ.

निरस्यति——न चेति । प्रतियोगिवदिति । यथा प्रतियोगिनः एक[1]कालावच्छिन्नैकदेशावृत्तित्वरूपस्वात्यन्ताभावविरोधिता तथा स्वध्वंसप्रागभावयोरपि स्वात्यन्ताभावविरोधितेति नेत्यर्थः । मानाभावादिति । ननु रूपध्वंसप्रागभावावच्छिन्नाधिकरणे तदत्यन्ताभावस्य वृत्तौ प्रमाणाभावः, घटाद्युत्पत्तिक्षणे तद्द्वितीयक्षणे च तत्प्रत्यक्षासम्भवेन तद्वृत्तित्वेन रूपात्यन्ताभावप्रत्यक्षस्य सुतरामसम्भवात्; द्वितीयादिक्षणावच्छेदेन रूपस्यैव तत्रोत्पत्त्या तदभावीयविशेषणताया असत्त्वेन तृतीयक्षणादावपि तादृशप्रत्यक्षासम्भवात् अनुभवे विप्रतिपन्नस्य प्रत्यक्षप्रमाणमुद्भाव्य निरसितुमशक्यत्वाच्च । अनुमानं चाप्रयोजकमिति ध्वंसप्रागभावयोरत्यन्ताभावविरोधित्वम् अर्थादायातमित्यत आह——अत एवेति । ध्वंसप्रागभावयोरत्यन्ताभाववि[2]रोधित्वाभावादेव । अन्तरा श्यामे ——पूर्वापरदशायां रक्ते मध्यदशायां श्याम इत्यर्थः । रक्तं रूपं नास्तीति प्रत्यय इति । ध्वंसप्रागभावयोरत्यन्ताभावविरोधित्वे तत्र पूर्वरक्तध्वंसभाविरक्तप्रागभावयोः सत्वेन अत्यन्ताभावावगाहिन्याः प्रमात्मकतादृशप्रतीतेः अनुपपत्तिरिति भावः । एषः—— रक्तं रूपं नास्तीति प्रत्ययः । ध्वंसादीत्यादिना प्रागभावपरिग्रहः । पूर्वापरेति । यत्र घटादौ पाकादेकरक्तरूपनाशानन्तरं रूपान्तरमुत्पन्नं तन्नाशानन्तरं च रक्तान्तरं ततः तन्नाशान्तरोत्पन्नरूपान्तरनाशानन्तरं रक्तान्तरम् उत्पद्यते तत्र मध्यरक्तदशायां रक्तं रूपं

[1] कालपदं क्षणपरम् । तेन दिवसात्मकस्थूलकालावच्छिन्नशाखादेः संयोगतदभावावच्छेदकत्वेऽपि न क्षतिः । देशपदम् अवच्छेदकदेशान्तरानवच्छिन्नदेशपरम्; अतो विभिन्नभागावच्छिन्नस्थूलावयवस्य प्रतियोगितदभावोभयावच्छेदकत्वेऽपि न क्षतिः—स्व.

[2] अविरोधित्वादेव——अ.

**नास्तीति प्रतीत्यापत्तेरित्यर्थः, तत्रापि रक्तरूपध्वंसप्रागभावयोः सत्वादिति भावः। एतेन भवन्मते रक्तत्वावच्छिन्नप्रतियोगिताकात्यन्ताभाववत् तादृशध्वंसप्रागभावावेव तादृशप्रतीतिविषयौ; अन्तरा [1]रक्तसमानकालीनौ पूर्वापररक्तध्वंसप्रागभावौ च न तथाविधौ इति नातिप्रसङ्ग इति निरस्तम्[2]। तादृशध्वंसप्रागभावयोरेव रूपान्तरदशायां तादृशप्रतीतिनियामकतया तयोरपि तथात्वस्वीकारस्य आवश्यकत्वात्; तत्र मध्यरक्तध्वंसप्रागभावयोः तथात्वस्वीकारे तु पूर्वापररक्तदशायां तादृशप्रत्ययापत्तेः।**

कृष्णंभट्टीयम्

'यद्यपि' इति। विनश्यदवस्थयापि रूपस्य प्रतिबन्धकत्वादिति भावः। ननु नव्यमते रूपादेः न रूपसामान्याभावाविरोधित्वं; नापि तदसामानाधिकरण्यरूपं तद्विरोधित्वमित्यन्वयव्यतिरेकदृष्टान्तानुपपत्तिरत आह यथेति। 'मानाभावाद्' इति। रूपध्वंसादिः न रूपसामान्याभावविरोधी तत्त्वे साधकाभावात्; अन्यथानुपपत्यभावादिति यावत् इति प्रयोगो बोध्यः। 'अनुभवे' इति। अनुभवे विप्रतिपत्तिः; घटे रूपं नास्तीति प्रत्यक्षानुदयेन प्रत्यक्षप्रमाणस्यैवासत्वात्। तत्र प्रमाणत्वसंशयाद्वा[3]। नन्वस्तु घटो रूपसामान्याभाववान् नित्यरूपवदन्यत्वादित्यानुमानमित्यत आह 'अनुमानं च' इति। प्रमात्मकेति। तथा च रक्तरूपसामान्याभावो यदि घटावृत्तिः स्यात् तदा अन्तराश्यामधर्मिकप्रमाविषयो न स्यादिति तर्केण रक्तरूपसामन्याभावाविरोधित्वानुमानेऽप्रयोजकत्वशङ्का निरसनीयेत्यर्थः। प्रोक्तानुमानेऽप्रयोजकत्वशङ्कानिरासं च रूपसामान्याभावो यदि

1 रक्तरूप—अ.

2 परास्तम्—अ.

3 "संशयाद्वा घटे"—अ.

रूपवदवृत्तिः स्यात् तदा रूपाहेतुः स्यादिति तर्केण स्वयं वक्ष्यति । तद्वृत्ते-रित्यन्तं प्रमात्वलाभाय । ननु तदधिकरणकाभावप्रत्यक्षं प्रति इन्द्रियसंयुक्त-तदधिकरणविशेषणतायाः एव सन्निकर्षत्वोपगमात् न दोष इत्यत आह विशेष्येति । 'अहेतुत्वाद्' इति । विशेष्यभेदेनानन्तकार्यकारणभावकल्पने गौरवात्; प्रयोजनान्तराभावाच्चेति भावः । अत एव सामान्याभावग्रन्थे अधिकरणद्वयान्तर्भावेन घटो नास्तीति प्रत्ययविषययावद्विशेषाभावसत्वात् तत्प्रत्यक्षापत्त्या अतिरिक्तसामान्याभावो दीधितिकृता व्यवस्थापयिष्यते । अनुमितिग्रन्थे ग्रन्थकारेण स्फुटीकृतमेतत् । 'इष्टत्वाद्' इति । तस्य तवापि दुर्वारत्वात्; एवमग्रेऽपि । तत्कालावगाहिप्रत्ययः किं तत्काला-वच्छिन्नत्वं तादृशप्रतियोगिताकत्वे, किं वा अभावे, अवगाहते; आद्ये तादृशेति; द्वितीये तु इष्टापत्तिमाह 'तद्धर्म' इति । प्रतिबन्देरनुत्तरतया सामान्यधर्मावच्छिन्नप्रतियोगिताकत्वस्याप्यवृत्तित्वेऽपि न दैशिकाव्याप्य-वृत्तित्वमित्युक्त्या अतिरिक्तसामान्याभावासिद्धिप्रसंगाभावाभेदप्रसंगयोश्च सिद्धान्तितवर्त्मना वा वारणेन दूषणान्तरमाह एवं रक्तेति । यत्र संयुक्तयोः रक्तघटयोरन्यतरस्मिन् रक्तनाशस्तत्संयोगनाशश्च तत्र संयोगनाशस्य तथात्वस्वीकारे घटान्तरेऽपि तत्प्रतीत्यापत्तिरिति समनियतध्वंसेति; तेषा-मकतया तत्र तत्स्वीकारे न बाधकमित्यत आह तत्समानेति । एकत्वा-दरिति । भावोपादानमत्यान्तानिष्ठत्वव्यञ्जकम् । 'निर्व्यक्तिक एव' इति । पृथिव्यां रूपं नास्तीत्यप्रत्ययात् । [[1]रूपान्तरोत्पत्तीति । रूपे तत्र तदुत्पत्त्यनन्तरोत्पत्तीत्यर्थः] । 'पाकज' इति । भाविपाकज तु नापाद्यम्; पाकरूपकारणाभावात्; किन्तु प्रागभावत्वेन सामान्यकारणतामुपगम्य रूपसामान्यम् ।

वस्तुतः पूर्वोत्पन्न एव रूपे उत्पत्त्यन्तरमापाद्यम्; न तु तद्भिन्नं किञ्चिद् रूपं वा तदसमवेतस्यैवालीकस्य तत्रापादनासंभवात्; नापि तत्प्रागभावस्य तत्त्वेन हेतुतया तद्वारणसंभवः; तस्यैवालीकत्वादिति ।

[1] [ ] एतदन्तर्गतपाठो नास्ति (मै) पुस्तके—स्व.

[1]यत्कालेति । यत्कालः; उत्पत्तिकालः; पाकाद्रूपनाशकालश्च; तथा च कालान्तरे रूपं नास्तीति न प्रतीतिः । नापि रूपान्तरोत्पत्त्यापत्तिः रूपानधिकरणकालावच्छेदेन एकत्वादौ तत्संभवं स्मारयति दत्तेति । प्रलयेति ।

इदं तु बोध्यम्; पार्थिवपरमाणुरूपस्य पाकजन्यत्वरूपसिद्धान्तानुरोधेनाद्यपाकक्षणे परमाणोर्नीरूपत्वाद् दीधितिकारैस्तादृशावच्छेदकं कुतो न प्रदर्शितम् । यदि विनश्यतो रूपस्याप्रतिबन्धकतया संसारप्रवाहस्यानादितामभिप्रेत्य तन्नोक्तमित्युच्यते; तदा क्व महाप्रलयः; यदि च परमाणुरूपस्याजन्यतां मनुते तदा अनादेर्भावस्य नाशासंभवान्नित्यत्वापत्तिः । किं च विनश्यतोऽपि रूपस्य प्रतिबन्धकतामते पाकाद्रूपनाशोत्पत्तिक्षणे उक्तयुक्त्या परमाणौ रूपसामान्याभावसत्वात् कथं भट्टाचार्यैः सद्धेतुत्वं निरस्यते इति ।

## गादाधरी

(२६) अत्यन्ताभावस्य ध्वंसात्यन्ताभावसमनियतता इति मते दोषः।

**अथ रक्तत्वावच्छिन्नप्रतियोगिताकत्वेन ध्वंसादिरेव तादृशप्रतीतिविषयः, इत्थं च रक्तरूपदशायां लौकिकप्रत्यक्षात्मकः तादृशप्रत्ययः आपाद्यते अनुमित्यात्मको वा, आद्ये रक्तरूपलौकिकप्रत्यक्षसामग्र्या रक्तत्वावच्छिन्नप्रतियोगिताकत्वेन तदभावप्रत्यक्षं प्रति प्रतिबन्धकत्वान्नापत्तिः, अन्यथा भवन्मतेऽपि रूपान्तरकालावच्छेदेन तद्वृत्तिरक्तत्वावच्छिन्नात्यन्ताभावस्यैव तदानीं धर्म्यन्तरघटितसन्निकर्षात् तद्वृत्तितया प्रत्यक्षापत्तेः, विशेष्यघटितसन्निकर्षत्वेन सन्निकर्षस्याहेतुत्वात् । रक्तरूपग्रह-**

[1] यत् तत् इति (मै) पुस्तके । अनन्तरं यत्कालः इति नास्ति--स्व.

प्रतिबन्धकदोषादिसत्वे च तादृशप्रत्यक्षस्येष्टत्वात् । नान्त्यः; तद्रूपावच्छिन्नव्याप्यवत्ताज्ञानादिसत्वे आनुमानिकतथाविधप्रत्यय-स्येष्टत्वात् । न च तादृशप्रत्ययस्य प्रमात्वापत्तिः, भवन्मतेऽपि तथाविधात्यन्ताभावस्य तत्र सत्वात् तादृशप्रत्ययस्य प्रमात्वेनेष्टा-पत्तेः, यदा च तत्र रक्तरूपं तत्कालावगाहिनः इदानीमत्र रक्तरूपं नास्तीति प्रत्ययस्य प्रमात्वं पुनः अशक्यापादनम्, तादृशप्रत्ययेन रक्तत्वावच्छिन्नप्रतियोगिताकत्वे तत्कालावच्छिन्नत्वावगाहनाद्, यदा च न तत्र रक्तरूपं तत्कालावच्छेदेनैव च ध्वंसप्रागभावयोः रक्तत्वावच्छिन्नप्रतियोगिताकत्वस्वीकारेण तादृशविषयबाधात् । तद्धर्मोपलक्षिताभावांशे तत्कालावच्छिन्नत्वावगाहिप्रत्ययस्य प्रमा-त्वं पुनः इष्टमेव । न च तद्धर्मिनिष्ठध्वंसादौ तत्कालावच्छेदेन रक्तत्वावच्छिन्नप्रतियोगिताकत्वं कल्प्यते, किं वा तत्कालावच्छेदेन तत्र धर्मिण्येव रक्तत्वावच्छिन्नप्रतियोगिताकात्यन्ताभावः कल्प्यते इत्यत्र विनिगमनाविरहाद् ध्वंसाद्यधिकरणे अत्यन्ताभावसिद्धेः[1] निष्प्रत्यूहतैवेति वाच्यम्, ध्वंसप्रागभावाधिकरणे अत्यन्ताभावा-कल्पने ध्वंसादेः अतिरिक्तात्यन्ताभावाकल्पनेन लाघवात् रक्त-रूपात्यन्ताभावस्यैतन्मते रक्तरूपध्वंसात्यन्ताभावसमनियततया तस्यैव ध्वंसात्यन्ताभावत्वात्;

मैवम्; तत्तद्धर्मावच्छिन्नप्रतियोगिताकत्वस्य अव्याप्यवृ-त्तित्वोपगमे विशेषाभावानामेव अधिकरणविशेषावच्छेदेन सामा-न्यधर्मावच्छिन्नप्रतियोगिताकत्वसम्भवाद् अतिरिक्तसामान्या-

[1] सिद्धिः निष्प्रत्यूहैवेति—अ.

**भावासिद्धिप्रसङ्गः, एवमेकस्यैवाभावस्य अधिकरणविशेषकाल-विशेषवृत्तित्वावच्छेदेन घटत्वपटत्वादिरूपनिखिलधर्मावच्छिन्न-प्रतियोगिताकत्वसम्भवेन अभावभेदविलोपप्रसङ्गः, एवं रक्तान-धिकरणकालावच्छेदेन रक्तध्वंसादेः रक्तत्वावच्छिन्नप्रतियोगिता-कत्वोपगमे तत्स[1]मानाधिकरणतत्समनियतध्वंसान्तरस्य तत्समा-नाधिकरणैकत्वादेरेव वा तादृशकालावच्छेदेन तत्कल्पनमादाय विनिगमनाविरहप्रसङ्गश्चेति ध्वंसप्रागभावाधिकरणे अत्यन्ता-भावकल्पनमेव न्याय्यम् ।**

कृष्णंभट्टीयम्

दीधितिकारोक्तं सद्धेतुत्वं निरस्य प्राचीनाभिमतं विरुद्धत्वं साधयति 'एवम्' इति। दीधितौ रूपाभावपदस्य स्पर्शाभावपरत्वमित्यपि निरस्यति 'एवम्' इति। एतन्मते च रूपोत्पत्तिकालोत्पत्तिकध्वंसविशेषस्य कारण-गुणप्रक्रमजन्यरूपादिकं प्रति विशिष्य प्रतिवन्धकत्वान्न दोषः।

यत्रेति प्रतियोगिसामानाधिकरण्ये स्वनिष्ठत्वलाभाय; अन्यथा स्व-विशिष्टत्ववैयर्थ्यादित्यनुपदं स्फुटीभविष्यति। सामानाधिकरण्यस्य व्याप्य-वृत्तितया न स्वरूपसंवन्धरूपहत्वधिकरणावच्छिन्नत्वमित्यत आह––तत्सा-[2]मान्येति। तथा च स्वनिष्ठस्वप्रतियोगिसामानाधिकरण्यनिरूपकताकत्वेन हेत्वधिकरणताव्यापकत्वमित्यर्थः। 'पर्वतादेः' इति। स्पन्दप्रलययोरेव कालोपाधित्वं नान्यस्येत्यर्थः। एवं च प्रलयस्य कालिकसंवन्धेन गोत्वाधि-करणतया हतुमति प्रलय इत्यस्य नासंगतिः। [[3]स्पन्दस्य कालोपाधित्वे

[1] समानाधिकरणेति व्यर्थमिति आशङ्क्य परीहारः वर्णितः––र.

[2] गादाधर्यां तत्सामान्येत्यादिपाठः दृश्यते; अपि तु न्यायरत्ने हेत्वधिकरणसा-मान्येति प्रतीकधारणम्––स्व.

[3] [ ] एतदन्तर्गतपाठो नास्ति (अ) पुस्तके––स्व.

इदम् इदानीमिति प्रत्यय एव प्रमाणम्; एवं च तद्वति काले इत्यस्यापि संगतिः]। धूमाभावस्योत्पत्तिकालावच्छेदेन पर्वतेऽयोगोलकभेदाभावस्याभाववृत्तौ संबन्धविशेषानिवेशेनायोगोलकभेदवति काले कालिकसंबन्धेन अयोगोलकावच्छेदेन प्रतियोगिसामानाधिकरण्यादाह––धूमवत्त्वेति। वृत्त्यनियामकसंयोगेन साध्यत्वं नास्तीत्याशयेनेदम् ।

एतेन साध्यतावच्छेदकसंबन्धेन धूमसंबन्धिनि महाकाले धूमाधिकरणत्वप्रकारप्रमाविषयत्वस्यासत्वेनाव्यापकतया तदभावस्य न लक्षणघटकता; धूमसंबन्धित्वप्रकारकप्रमाविषयत्वाभावस्य च महाकाले प्रतियोगिसामानाधिकरण्यमेवेति निरस्तम् ।

परंतु महाकाले वृत्तिनियामकसंयोगेन धूमवत्त्वस्य स्वयमङ्गीकारात् तत्पक्षे असंगतमेवैतत् । न च धूमवत्त्वप्रकारकत्वविशिष्टप्रमाविषयत्वाभावस्येश्वरीयप्रमाविषयत्वरूपप्रतियोगिसामानाधिकरण्यं दुर्वारमिति वाच्यम्; धूमवन्मात्रमुख्यविशेष्यकप्रमाया एवोपादानात्; तस्याः अव्याप्यवृत्तित्वेऽपि तद्विषयत्वस्य व्याप्यवृत्तित्वात्; अन्यथा धूमाधिकरणत्वाभावो बोध्यः; यदि च संयोगेन धूमाधिकरणत्वमव्याप्यवृत्तीति मतम्; तदा धूमसामानाधिकरण्यावच्छिन्नस्वरूपादिसंबन्धावच्छिन्नाधिकरणत्वाभावः; आदिपदमप्येतदर्थमेव ।

**न्यायरत्नम्**

**प्राचीनैर्विशेषाभावादन्यस्य सामान्याभावस्यास्वीकारादिष्टापत्तिरतो दूषणान्तरमाह––'एवम्' इति । विनिगमनाविरहेण सर्वस्यैवाभावस्याधिकरणविशेषकालविशेषावच्छेदेन घटत्वपटत्वादिधर्मावच्छिन्नप्रतियोगिताकत्वस्वीकारापत्त्या नाभावभेदविलोप इत्यतो दूषणान्तरमाह–– एवम् इति । तत्समानाधिकरणतत्समनियतेति । अत्र समानाधिकरणेत्यनेन देशतो व्याप्यत्वं विवक्षितम्, समनियतेत्यनेन कालतः समनैयत्यं विवक्षितम् तेन समनियतस्य सामानाधिकरण्यनियमात् समानाधिकरणेति**

**व्यर्थमिति शङ्कानवकाशः। यत्र संयुक्तयो रक्तघटयोः एकस्मिन् घटे रक्तरूपनाशः अन्यस्मिन् रक्तघटे संयोगनाशश्चैकदोत्पन्नः कालतो रक्तध्वंससमनियततादृशसंयोगध्वंसे रक्तत्वावच्छिन्नप्रतियोगिताकत्वस्वीकारापत्त्या तादृशसंयोगध्वंसावगाहिरक्तघटे रक्तं रूपं नास्तीति प्रतीतेः प्रमात्ववारणाय देशतो व्याप्यत्वनिवेशः। एकाधिकरणे भिन्नकालोत्पन्नस्य श्यामरूपनाशस्यापि देशतो रक्तरूपध्वंसव्याप्यत्वात् श्यामनाशस्यापि रक्तकाले रक्तत्वावच्छिन्नप्रतियोगिताकत्वस्वीकारापत्त्या श्यामरूपध्वंसावगाहिन्याः रक्तकाले रक्तं रूपं नास्तीति प्रतीतेः प्रमात्वापत्तिवारणाय कालतः समनैयत्यनिवेशः।**

## दीधितिः

तत्सामानाधिकरण्यं च स्वविशिष्टहेत्वधिकरणावच्छेदेन बोध्यम्; तेन गोत्वजन्यद्रव्यत्वप्रलयावृत्तित्वादिना गवादेरभावस्य गवाद्यनधिकरणधर्म्यवच्छेदेन तद्वति काले महाकाले वा वृत्तावपि, 'यदा गोत्वं तदा गौः' 'यदा कालत्वं तदा जन्यद्रव्यं प्रलयावृत्ति वा' इत्यादौ नातिप्रसङ्गः। हेतुमति प्रलये तत्सामानाधिकरण्याभावात्। 'स्वविशिष्ट––' इति विशेषणात् कपिसंयोगाभाववान् मेयत्वाद्' इत्यादौ संयोगाद्यात्मकसाध्याभावस्य सकलहेत्वधिकरणावृत्तित्वेऽपि नाव्याप्तिः।

## गादाधरी

(२७) **महाकाले प्रलयावच्छेदेन वर्तमानतया प्रतियोगिसामानाधिकरण्यमस्तीति प्रतिपादनम्।**

**अथ एतादृशयुक्त्या रक्तध्वंसादिमति तदत्यन्ताभावसिद्धावपि रूपध्वंसादिमत्यां पृथिव्यां रूपत्वावच्छिन्नाभावः**

निर्युक्तिक एवेति चेन्न, रूपोत्पत्तेर्द्वितीयक्षणे[1] पुनः तदधिकरणे सामान्यसामग्रीबलाद् रूपान्तरोत्पत्तिवारणाय रूपं प्रति रूपत्वावच्छिन्नाभावस्य हेतुत्वं कल्पनीयम्, एवं च उत्पत्तिकाले पाकाद् रूपनाशोत्पत्तिक्षणे च रूपत्वावच्छिन्नाभावास्वीकारे तदुत्तरं रूपानुत्पादप्रसङ्गः, रूपोत्पादानन्तरं रूपसामान्यस्य पुनरुत्पादश्च प्रागभावहेतुतया दुर्वारः; रूपवत्यपि पाकजभाविरूपप्रागभावसत्वात् । न चैवमपि पृथिव्यां रूपात्यन्ताभावो निर्युक्तिकः, यत्कालावच्छेदेन तत्र रूपात्यन्ताभावो भवता स्वीक्रियते तत्कालावच्छेदेन रूपप्रागभावे रूपत्वावच्छिन्नप्रतियोगिताकत्वस्वीकारेणैव उपपत्तेरिति वाच्यम्; दत्तोत्तरत्वात् ।

इदं त्ववधेयम्; उक्तयुक्त्या उत्पत्तिकालावच्छेदेन घटादौ रूपत्वावच्छिन्नाभावसिद्धावपि प्रलयकालावच्छेदेन परमाणौ तत्सत्वे मानाभावः, एवं रूपं प्रति रूपत्वावच्छिन्नाभावहेतुत्वमेव न कल्प्यते, स्पर्शोत्पत्त्यनुरोधेन अवश्यकल्पनीयस्पर्शसामान्याभावस्य तद्धेतुतयैव रूपवति रूपान्तरापत्तेः शक्यवारणत्वात् । वायौ स्पर्शोत्पत्त्यनन्तरं स्पर्शोत्पत्तिवारणाय स्पर्शं प्रति रूपाभावहेतुतायाः वक्तुमशक्यत्वात्, स्पर्शाभावहेतुताया आवश्यकत्वात् । न च रूपं प्रति स्पर्शाभावहेतुत्वे यत्र पाकाद् रूपसत्वे स्पर्शनाशः तत्र स्पर्शान्तरोत्पत्तिकाले रूपान्तरोत्पादप्रसङ्ग इति वाच्यम्, एकजातीयस्यैव अग्निसंयोगस्य रूपरसगन्धस्पर्शनाशकतया स्पर्शनाशकाले रूपनाशस्य आवश्यकत्वादिति । एवं ध्वंसप्रागभावाधिकरणे सामयिकात्यन्ताभावानभ्युपगन्तृमते

[1] उत्पत्तिद्वितीयक्षणे—अ.

तादृशात्यन्ताभावो न तदधिकरणे[1] कल्प्यते, अनन्ताधिकरणेषु तादृशाभावकल्पनामपेक्ष्य लाघवाद् एकैकेषु [2]तद्धर्मावच्छिन्नवद्भेदेषु [3]तद्धर्मावच्छिन्नप्रतियोगिताकत्वकल्पनेनैवोपपत्तेरिति ध्येयम् ।

तत्सामानाधिकरण्यम्—प्रतियोगिसामानाधिकरण्यम् । स्वविशिष्टेति । स्वम्——यत्राभावे प्रतियोगिसामानाधिकरण्यं ग्राह्यम् स एव ।

हेत्वधिकरणावच्छेदेनेति । हेतुतावच्छेदकसम्बन्धेन यद्धेतुतावच्छेदकावच्छिन्नाधिकरणं [4]तत्सामान्यान्तर्भावेनेत्यर्थः । तेन वह्न्याद्यभावस्य धूमावयवाद्यवच्छेदेन द्रव्यं विशिष्टसत्त्वादित्यादौ द्रव्यत्वाद्यभावस्य गुणाद्यवच्छेदेन प्रतियोगिसामानाधिकरण्यविरहेऽपि न क्षतिः । पर्वतादेः कालोपाधित्वानभ्युपगमे धूमवत्त्वप्रकारकप्रमाविषयत्वा[5]द्यभावस्य क्वचिदपि प्रतियोगिसामानाधिकरण्यस्योपपादयितुमशक्यतया धूमवान् वह्नेरित्यादौ अतिव्या[6]प्त्यप्रसक्तेः दर्शितविवक्षायाः स्थलान्तरे प्रयोजनमाह——तेन गोत्वेति । तद्वति——गवादिमति । कालिकसम्बन्धेन गोत्वादिना गवादौ साध्ये प्रलयान्तर्भावेन व्यभिचारिणि गोत्वादिहेतौ लक्षणघटकानां गोत्वाद्यवच्छिन्नाभावानां गवादिमति एतत्काले

[1] तदधिकरणेषु——अ.; तत्तद्रूपप्रागभावविशेषध्वंसविशेषाधिकरणेषु——रा.

[2] तत्तद्रूपप्रागभावादिमद्भेदेषु——रा.

[3] तत्तद्रूपत्वावच्छिन्नप्रतियोगिताकसामयिकात्यन्ताभाववत्त्वम्——रा.

[4] हेत्वधिकरणसामान्येति प्रतीकम्——र; तत्सामान्येति——कृ.

[5] विषयत्वाभावस्येति प्रतीकम्——आदिपदघटितपाठानुसारेणार्थवर्णनं च——र.

[6] विशेषरूपेण संसर्गत्वोपगमात् कालादौ धूमवत्त्वप्रकारकप्रमाविषयत्वरूपप्रतियोगिसामानाधिकरण्यविरहादिति भावः——रा.

**गवाद्यनधिकरणदेशावच्छेदेन महाकाले च प्रलयावच्छेदेन वर्तमानतया प्रतियोगिसामानाधिकरण्यमक्षतमेव । एवं दैशिकविशेषणताविशेषेण गवादिव्यापकप्रलयान्यत्वादेरभावोऽपि तेन सम्बन्धेन प्रलयान्यत्वादिमति महाकाले कालिकसम्बन्धेन वर्तमानतया प्रतियोगिसमानाधिकरण एव, प्रतियोगिसामानाधिकरण्यघटकीभूताभाववृत्तौ सम्बन्धविशेषानिवेशाद् इति अतिव्याप्तिः स्यात् निरुक्तविवक्षणे च स्वविशिष्टयावद्धेत्वधिकरणान्तर्गतप्रलयान्तर्भावेन तादृशाभावानां न प्रतियोगिसामानाधिकरण्यं, प्रलये तत्प्रतियोगिनोऽवृत्तेरिति समुदायार्थः । गवादिव्यापकस्य चरमध्वंसादेरभावस्ययोऽभावश्चरमध्वंसादिः तस्य गवादिमति खण्डकाले न प्रतियोगिसामानाधिकरण्यम्, तत्र तस्यावृत्तेरित्यतो महाकाले वेत्यु[1]क्तम् । महाकाले च कालिकसम्बन्धेन वृत्तेः तथात्वमक्षतमेव ।**

कृष्णंभट्टीयम्

लक्षणघटकेति । गवाद्यभावस्य प्रतियोगिवैयधिकरण्यघटितसाध्यव्यापकतावच्छेदकप्रतियोगिताकत्वं भट्टाचार्योक्तसाध्यव्यापकतावच्छेदकप्रतियोगिताकत्वं च बोध्यम् । प्रतियोगिवैयधिकरण्याघटितसाध्यव्यापकतावच्छेदकप्रतियोगिताकत्वं तु चरमध्वंसाभावाभावादेरेवेति । प्रलयावच्छेदेनेति । प्रलयो गवाद्यनधिकरणत्वेनावान्तरकालविधयाप्यवच्छेदकः दैशिकविशेषणतासंबन्धेन वृत्तावेवेदमवच्छेदकमुपदर्श्यते ।

एतेन कालिकसंबन्धेन वृत्तिमादाय दोषयोजनासंभवाद् गवाद्यनधिकरणधर्म्यवच्छेदेनेति व्यर्थमिति प्रत्युक्तम् । दैशिकविशेषणतासंबन्धा-

[1] महाकाले चेत्युक्तमिति प्रतीकम्—र.

वच्छिन्नप्रतियोगिसामानाधिकरण्यकल्पस्याग्रे निराकर्तव्यत्वेऽपि आपातत-स्तदुपगमेऽप्येतदभावानां न वारणमित्यावेदनार्थत्वात् ।

अथ चक्रवर्त्तिलक्षणे कालिकसंबन्धेन वृत्तावच्छेदकत्वमुपदर्श्यते; उपदर्शितं च वह्न्यभावस्य कालिकसंबन्धावच्छिन्नाभावस्य वह्निमदवयवा-वच्छेदेन वृत्तित्वम्; तच्च प्रतियोगिनः कालिकसंबन्धेन वृत्तावच्छेदकं विना नोपपद्यत इति चेन्न; तावता कालिकसंबन्धावच्छिन्नगवाद्यभावस्य कालिकसंबन्धेन वृत्तावच्छेदकं न सिध्यति; तस्य यः कालिकसंबन्धा-वच्छिन्नाभावः तस्य प्रतियोग्यनधिकरणदेशकालाप्रसिध्या व्याप्यवृत्तित्वाद् विरोधित्वानियामककालिकसंबन्धेन वृत्तेरव्याप्यवृत्तित्वाघटकत्वाच्च । किंच दैशिकविशेषणतासंबन्धावच्छिन्नप्रलयान्यत्वाभावस्य या कालिकसंबन्धेन वृत्तिरुपदर्श्यते सापि प्रलयभेदानधिकरणावच्छिन्नैव; अन्यथा कालिक-संबन्धावच्छिन्नतादृशप्रलयान्यत्वाद्यभावाभावस्याव्याप्यवृत्तित्वानुपपत्तेरिति कालिकसंबन्धेन वृत्तित्वेऽपीदमावश्यकमेवेति । दैशिकविशेषणतासंबन्धा-वच्छिन्नप्रलयान्यत्वाभावमादाय नातिव्याप्तिनिरास इत्याह—'एवम्' इति । अत एव अथेत्याद्यग्रिमाशङ्कायामुक्ताभावस्यैवोत्कीर्तनम्; न तु गवाद्यभावस्येति । दैशिकेति । कालिकसंबन्धावच्छिन्नप्रलयान्यत्वाभावस्य प्रलयात्मकप्रतियोग्यनधिकरणदेशावच्छेदेन दैशिकविशेषणतयैव तथात्वात् तद्व्युदासार्थम्; प्रलयावृत्त्यभावस्य तु द्रव्यत्वघटाभावादिरूपं यत् प्रतियो-ग्यनधिकरणं तदवच्छेदेन प्रतियोगिसामानाधिकरण्यं बोध्यम् । गवादीति । ध्वंसप्रागभावयोरत्यन्ताभावविरोधितामते चरमध्वंसप्रागभाववति परमाणौ न तदभावः ।

अथैवमपि चरमध्वंसप्रागभावध्वंसस्य चरमध्वंसतया तत्र प्रागभा-वात्मकप्रतियोगिसामानाधिकरण्यं दुर्वारम्; तादृशप्रागभावध्वंसस्य चरम-ध्वंसरूपत्वानुपगमात् । लक्षणघटकप्रतियोगितामुपादायैव वा प्रतियोगिसा-मानाधिकरण्यस्योपपाद्यत्वात् । तदविरोधितामते तु चरमध्वंसवद्भेदाभावः

तस्यापि चरमध्वंसात्मकत्वेन स्वात्यन्ताभावरूपप्रतियोगिसामानाधिकरण्ये तु तत्प्रकारकप्रमाविषयत्वाभावो बोध्यः; तस्य भावप्रतियोगिकत्वेनातिरिक्तत्वात्। एवं चरमध्वंसप्रागभावो न गवादेर्व्यापकत्वेन दर्शितः। तदभावस्य परमाणौ प्रतियोगिसामानाधिकरण्येन महाकालानुधावनस्य तत्राफलत्वात्।

'महाकाल' इति। अथैवं एतत्कालावच्छेदेन गवादिव्यापकीभूतस्वाभावरूपप्रतियोगिमति एतत्कालीनघटध्वंसरूपखण्डकाल एव स्वकालावच्छेदेन कालिकसंबन्धेन चरमध्वंसादेर्वृत्तेः प्रतियोगिसामानाधिकरण्यसंभवात् महाकालानुधावनं व्यर्थमिति चेन्न; क्रियैव काल इति मते ध्वंसादेरकालत्वात्।

नन्वेवं यदा गोत्वं तदा गौरित्यत्र सद्धेतुत्वं स्यात्। प्रलयस्याकालत्वात्। न च चरमक्रियायामेव व्यभिचारः यदा गोत्वं तदा—प्रलयावृत्तीत्यादावेव सद्धेतुताया आपादनीयत्वात्। न च जन्यमात्रस्य कालत्वानुपगमेऽपि प्रलयस्य कालत्वमावश्यकम्; अन्यथा [1]क्षणत्वघटितोत्पत्तिलक्षणस्याव्याप्त्यापत्तेरिति वाच्यम्; स्ववृत्तियावद्ध्वंसविशिष्टसमयत्वरूपक्षणत्वस्य महाकाल एव संभवेन तद्घटितोक्तलक्षणनिर्वाहादिति चेन्न; स्वस्वपूर्ववर्त्तियावत्पदार्थविशिष्टसमयत्वरूपक्षणत्वपक्षे महाकालस्य क्षणत्वासंभवेन प्रलयस्य कालत्वावश्यकतया तदसद्धेत्वनिर्वाहात्।

### न्यायरत्नम्

**'हेत्व[2]धिकरणसामान्यान्तर्भावेनेत्यर्थ' इति। स्वविशिष्टहेतुमद्वृत्तयो यावन्तो धर्माः स्वप्रतियोग्यधिकरणतत्तत्प्रत्येकाश्रयवृत्तित्वमित्यर्थः।**

[1] 'अध्वस्तक्षणयोगस्य क्षणयोगा जनिर्मता' इति उत्पत्तिलक्षणप्रतिपादकाचार्यकारिका—स्व.

'तदधिकरणक्षणावृत्तित्वव्याप्यस्ववृत्तिध्वंसप्रतियोगिताकसमयवृत्तित्वम्' उत्पत्तिलक्षणार्थः इति मणिकारः—स्व.

[2] तत्सामान्यान्तर्भावेनेति गदाधरीपाठः। कृष्णंभट्टीयेऽपि तत्सामान्येति प्रतीकधारणम्—स्व.

एतेनैकमात्रवृत्तिहेतुके हेत्वधिकरणसामान्याप्रसिद्धिः स्वविशिष्टहेत्वधिकरणताव्यापकस्वप्रतियोग्यधिकरणताकत्वनिवेशे कपिसंयोगात्मकाभावस्य प्रतियोग्यधिकरणताया हेत्वधिकरणताव्यापकत्वेनाव्याप्तिविरहात् स्वविशिष्टत्वविशेषणवैयर्थ्यापत्तिरित्यादिदूषणानवकाशः ।

'धूमवत्त्वप्रकारकप्रमाविषयत्वा[1]भावस्य' इति । महाकालस्य संयोगेन न धूमवत्त्वमित्यभिप्रायेणेदम्, अन्यथा तादृशप्रमाविषयत्वस्य महाकाले सत्वात् तत्रैव तादृशप्रमाविषयत्वाभावस्य प्रतियोगिसामानाधिकरण्यं संभवतीति बोध्यम् । नन्वत्र धूमाभावमादायातिव्याप्तिवारणसंभवात् तावत्पर्यन्तानुधावनं निर्बीजमिति चेत्;

अत्र केचित्——संयोगेन द्रव्यास्याव्याप्यवृत्तितामते[2] धूमाभावस्यापि प्रतियोगिसामानाधिकरण्यं पर्वतादावस्तीति न तमादायातिव्याप्तिवारणमिति तावत्पर्यन्तानुधावनम्; न च विशेष्यताया अपि ज्ञानसमानकालीनत्वमतेऽव्याप्यवृत्तित्वात् तादृशाभावस्यापि प्रतियोगिसामानाधिकरण्यमक्षतम्, तस्या अतथात्वमतावलम्बेन च द्रव्यस्य व्याप्यवृत्तित्वमतावलम्बनसंभवात् प्रसिद्धधूमाभावत्यागो निर्बीज एवेति वाच्यम्; धूमनिष्ठप्रकारतानिरूपितप्रमीयविशेष्यतायाः सर्वमत एव व्याप्यवृत्तित्वं, [4]तादृशविशेष्यतात्वस्य ईश्वरीयप्रमाविशेष्यतासाधारण्यात्; धूमस्य व्याप्यवृत्तित्वं तु न तथेति विशेषात् । नन्वेमपि तस्यापि व्यापकताघटकस्वरूपसंबन्धेन पूर्वक्षणवृत्तित्व-

[1] विषयत्वाद्यभावस्य इति गादाधर्यां दृश्यते; अत्रैवानुपदम् आदिपदस्यार्थवर्णनमपि दृश्यते——स्व.

[2] इह पर्वते नितम्बे हुताशनो न शिखर इति प्रतीतेः संयोगेन द्रव्यस्याव्याप्यवृत्तेः । वृत्तेः अव्याप्यवृत्तित्वे वृत्तिमतो व्याप्यवृत्तित्वस्यात्यन्तमसंभावितत्वाद् इति दीधितिकारेण अन्यत्र प्रतिपादितत्वात्——स्व.

[3] अवलम्बनेन——ग.

[4] व्याप्यवृत्तित्वे हेतुं वर्णयति तादृशविशेष्यतात्वस्येत्यादिना——स्व.

विशिष्टस्वाभावरूपप्रतियोगिसामानाधिकरण्यं दुर्वारमेति चेन्न; भावरूपप्रतियोगिसामानाधिकरण्यनिवेशे नातिव्याप्तिरित्यभिप्रायादित्याहुः[1] ।

[2]वस्तुतस्तु--महाकालक्रियायोगोलकान्यतमासमवेतत्वावच्छिन्नाभावमादायातिव्याप्तिवारणं बोध्यम्; तादृशाभावस्यापि आदिपदग्राह्यत्वात् ।

'[3]महाकाले चेत्युक्तम्' इति । अथ चरमध्वंसात्मकस्यापि अभावस्य एतत्कालीनघटध्वंसादौ प्रलयकालावच्छेदेन सत्वाद् एतत्कालावच्छेदेन प्रतियोगिनश्च सत्वात् संभवत्येव खण्डकाले प्रतियोगिसामानाधिकरण्यम्; न च क्रियामात्रस्यैव[4] कालोपाधित्वमित्यभिप्रायेणेदमिति वाच्यम्; तथा सति प्रलयस्यापि कालत्वानुपपत्त्या प्रलयावृत्तिमान् कालत्वादित्यस्य सद्धेतुत्वप्रसंगेन तत्रातिव्याप्तिदानस्यासांगत्यापत्तेरिति चेन्न; प्रलयत्वं हि जन्यद्रव्यानधिकरणत्वे सति द्रव्याधिकरणत्वं, प्रलयस्याकालत्वे च तादृशप्रलयत्वमेव न स्यादिति क्रियातिरिक्तस्य प्रलयात्मकध्वंसस्यैव कालत्वं स्वीक्रियते न तदतिरिक्तध्वंसस्येत्यभिप्रायात् न कोऽपि दोषः ।

## गादाधरी

(२८) गोसाध्यकस्थलेऽतिव्याप्तिवारणं न संभवतीति स्फुटीकरणम् ।

**गोसाध्यकस्थले साध्यव्यापकतावच्छेदकजन्यद्रव्यत्वप्रलयावृत्तित्वाद्यवच्छिन्नाभावमादायातिव्याप्तिवारणं न सम्भवतीति स्फुटीकरणाय तत्तद्रूपावच्छिन्नसाध्यकस्थलेऽपि अतिव्याप्तिमाह--यदा कालत्वमित्यादिना । अथ एतादृशविवक्षापेक्षया लाघवात्**

[1] इत्याहुः इति पाठो नास्ति--ग.

[2] वृत्तिनियामकसंयोगेन काले धूमवत्त्वस्य भट्टाचार्येणाङ्गीकृतत्वादाह--वस्तुतस्त्विति--स्व.

[3] महाकाले वा इति गदाधरीपाठः--स्व.

[4] ध्वंसादीनां व्यावृत्त्यर्थम् एवकारः--स्व.

प्रतियोगिसामानाधिकरण्यघटकाभावीयवृत्तौ दैशिकविशेषणताविशेषसम्बन्धावच्छिन्नत्वमेव निवेश्यताम्, तथा सति दैशिकविशेषणताविशेषसम्बन्धेन प्रलयान्यत्वादेरभावस्य प्रतियोगिसामानाधिकरण्यविरहेणातिव्याप्त्युद्धारस्य शक्यत्वात् । न चैवं वह्निमान् धूमादित्यादौ कालिकविशेषणताविशेषसम्बन्धेन हेत्वधिकरणवृत्तेः द्रव्यत्वत्वादिना द्रव्यत्वादेरभावस्य दैशिकविशेषणतया द्रव्यवृत्तित्वाभावादव्याप्तिरिति वाच्यम्, हेतुसामानाधिकरण्यशरीरेऽपि अभावीयवृत्तौ दैशिकविशेषणताविशेषसम्बन्धावच्छिन्नत्वस्य निवेशनीयत्वात् तावतापि लाघवानपायात् । न च दैशिकविशेषणताविशेषेण प्रतियोगिसामानाधिकरण्यविवक्षणेऽपि उक्तस्थलेष्वतिव्याप्तिः तदवस्थैव, प्रलयान्यत्वाभावस्य प्रलयमात्रवृत्तेरभावमात्राधिकरणकतया प्रलयात्मकाधिकरणस्वरूपत्वात् तस्य च प्रलयान्यत्वरूपप्रतियोग्यधिकरणपरमाण्वादौ दैशिकविशेषणतया वृत्तेरिति वाच्यम्, एवमपि प्रलयान्य[1]कालत्वप्रकारकप्रमाविशेष्यत्वादेरभावस्य प्रलयातिरिक्तगगनादावपि वर्तमानस्य प्रलयानात्मकतया प्रतियोगिसामानाधिकरण्यस्य दुरुपपादतया अतिव्याप्त्यनवकाशात् ।

मैवम्, दैशिकविशषणतया प्रतियोगिसामानाधिकरण्यनिवेशेऽपि दैशिकविशेषणतासम्बन्धेन प्रलयावृत्तिसाध्यके कालत्वादिहेतौ अतिव्याप्तिर्दुर्वारैव, तत्र प्रलयमात्रस्य व्यभिचारनिरूपकाधिकरणतया साध्यतावच्छेदकसम्बन्धेन साध्यं प्रति व्यापकतावच्छे-

[1] प्रलयान्यकालत्वादेरभावस्य——अ.; एतादृशपाठः कृष्णंभट्टीये दर्शितः——कालत्वविशिष्टप्रलयान्यत्वादेरभावस्येत्यर्थः——कृ.

**दिका यदभावीयप्रतियोगिता, व्यापकताघटकसम्बन्धावच्छिन्न-प्रतियोगिताकस्य तस्य प्रलयमात्रवृत्तितया प्रलयात्मकत्वात् निरुक्तरीत्यैव प्रतियोगिसमानाधिकरणत्वात् इत[1]रसम्बन्धा-वच्छिन्नाभावस्य प्रलयानात्मकत्वेऽपि प्रलयान्यवृत्तितया सुतरामेव प्रतियोगिसमानाधिकरणत्वमिति निरुक्तविवक्षणमावश्यकम्, एत-दभिप्रेत्यैव प्रलयावृत्तिसाध्यकानुधावनं ग्रन्थकृत इति ।**

कृष्णंभट्टियम्

अथ दैशिकविशेषणतासंवन्धावच्छिन्नप्रलयान्यत्वाभावस्य प्रतियोगि-मति इदानीन्तनध्वंसे प्रतियोग्यनधिकरणप्रलयकालावच्छेदेन कालिक-संवन्धेन वृत्तित्वं दुर्घटम्; तस्याकालत्वात्; किन्तु दैशिकविशेषणता-संवन्धेनैव तद्वच्चरमध्वंसाभावरूपप्रतियोगिमति इदानीन्तनध्वंसे चरमध्वं-सोत्पत्तिक्षणाद्यवच्छेदेन दैशिकविशेषणतासंवन्धेन तदभावस्य वृत्तित्वोप-गमसंभवेन महाकालानुसरणं व्यर्थमिति चेन्न; दैशिकविशेषणतया अव्याप्य-वृत्तित्वस्य दुर्घटत्वात् ।

प्रलयान्येति । प्रलयान्यत्वविशेष्टत्वं च न विशेष्यत्वस्य विशेषणम्; तथा सति प्रलये एव प्रतियोगिसामानाधिकरण्यं स्यात्; किन्तु कालत्वस्य । विशेष्यभेदेन विशेष्यत्वभेदे तु विशेष्यत्वस्येति बोध्यम् । प्रलयान्यत्वका-लत्वोभयपर्याप्तिप्रकारतेति तु ज्यायः । वक्ष्यमाणरीत्या च प्रलयाविषयक-प्रमैवोपादेया; तेन न ईश्वरीयप्रमामादाय दोषः; तस्याः अव्याप्यवृत्ति-त्वेऽपि तद्विषयत्वं व्याप्यवृत्त्येव; अन्यथा प्रलयान्यकालत्वाधिकरणत्वा-भावो बोध्यः विशिष्टाधिकरणताया अतिरिक्तत्वात् ।

[1] इतरसंबन्धः——व्यधिकरणः——स्व.

एतेन प्रलयान्यकालत्वप्रकारतानिरूपितप्रमीयविशेष्यत्वाभावपरं प्रलयान्यकालमात्रवृत्तिप्रलयान्यकालत्वप्रकारता निरूपितविशेष्यत्वाभावपरं वा इत्यायासः प्रत्युक्तः ।

प्रलयान्यकालत्वादेरभावस्येति पाठे तु कालत्वविशिष्टप्रलयान्यत्वादेरभावस्येत्यर्थः । यथाश्रुते तदभावस्य विशेष्यभूतकालत्वरूपप्रतियोगिसामानाधिकरण्यादतिव्याप्तितादवस्थ्यात् । कालत्वादेः कालिकसंबन्धेन गवादिव्यापकत्वात् समनियताभावभेदपक्षे चेदम्; अन्यथा तस्य प्रलयान्यकालत्वाभावरूपतया उक्तदोषस्य दुर्वारतेति । अत एव कालिकसंबन्धेन प्रलयावृत्तिसाध्यके दोषाभावाद् दैशिकविशेषणतासंबन्धानुधावनम् । प्रलयवृत्तित्वं च दैशिकविशेषणतासंबन्धेन; तेन प्रलयान्यत्वस्य साध्यतानिर्वाहः । कालिकसंबन्धेन तन्निवेशे प्रागभावानामेव साध्यत्वं स्यात् । प्रागभाववान् कालत्वाद् इत्यादौ च नातिव्याप्तिः उदाहरणाभासे यत्रेत्युपादानाद् दैशिकविशेषणतारूपसाध्यतावच्छेदकसंबन्धलाभः ।

साध्यतावच्छेदकसंबन्धेनेति[1] । कालत्वादिविशिष्टप्रलयान्यत्वादेः दैशिकविशेषणतासंबन्धेन साध्यं प्रति अव्यापकत्वात् तदभावस्य प्रलयानात्मकस्य न लक्षणघटकतेति भावः । इतरसंबन्धः व्यधिकरणः । एतदिति ।

एतेन पूर्वोक्तप्रयोजनस्यैकत्र जन्यद्रव्यसाध्यकस्थले संभवात् प्रलयावृत्तिसाध्यकानुधावनं व्यर्थमिति परास्तम् ।

## गादाधरी

(२६) **स्ववैशिष्टचविशेषणप्रयोजनवर्णनदीधितिविवरणम् ।**

**वस्तुतस्तु प्रलयादिमात्रवृत्तेरभावस्य प्रलयाद्यनात्मकत्वेऽपि दर्शितस्थलेषु उक्तविवक्षामन्तरेणातिव्याप्तिवारणमशक्यम्,**

[1] कालिकसंबन्धस्य व्यापकत्वाघटकत्वसूचकम् अधिकपाठः—अ.

प्रलयान्यत्वादेरभावस्यापि स्वप्रतियोगिनिष्ठव्यापकताघटकस्वरूपसम्बन्धेन प्रलयात्मकनानाध्वंसान्तर्गतयत्किञ्चिद्ध्वंसवृत्तित्वविशिष्टस्वाभावरूपप्रतियोगिनोऽधिकरणे ध्वंसान्तरे स्वस्य प्रतियोगिसमानाधिकरणत्वात् यत्किञ्चिद्ध्वंसान्यत्वाभावस्य यत्किञ्चिद्ध्वंसमात्रवृत्तेः तद्ध्वंसवृत्तित्वविशिष्टस्वाभावाधिकरणे ध्वंसान्तरे असत्वेऽपि कालिकसम्बन्धावच्छिन्नप्रतियोगिताकस्वाभावस्य स्वानधिकरणध्वंसावच्छेदेन स्वाधिकरणेऽपि सत्त्वेन तत्रैव तत्प्रतियोगिसमानाधिकरणत्वात् प्रलयान्यविषयकत्वोपलक्षितप्रमाया विषयतासम्बन्धेन केवलान्वयितया तादृशसम्बन्धावच्छिन्नतादृशप्रमाभावाप्रसिद्धेः; प्रलयान्यविषयकत्वविशिष्टप्रमाभावस्य प्रलये प्रसिद्धावपि प्रलये तदन्यविषयकनित्यप्रमारूपप्रतियोगिसमानाधिकरणत्वात् प्रलयाविषय[1]कप्रमाभावस्य च जन्यप्रमामात्रप्रतियोगिकतया कालिकाव्याप्यवृत्तित्वेन प्रतियोगिमत्यपि तच्छून्यकालावच्छेदेन वृत्तेः तादृशाभावमादायातिव्याप्तिवारणासम्भवात्; [2]उक्तविवक्षणे तु प्रलये[3] प्रलयाविषयक प्रमाभावस्य विषयतया प्रतियोगिसमानाधिकरणत्वविरहाद् अतिव्याप्तिवारण[4]-

[1] अन्यप्रमाभावस्य––अ.

[2] एतत्पूर्वं 'प्रतियोगितायाः स्वरूपसम्बन्धात्मिकायाः प्रतियोगिभेदेन भिन्नतया प्रलयान्यभेदप्रतियोगितायाः न तादात्म्येन साध्यव्यापकतायामवच्छेदकत्वमिति तादृशभेदस्याधिकरणे प्रलयान्यत्वरूपप्रतियोगिनस्तेन संबन्धेनासत्वेऽपि नातिव्याप्त्युद्धारः' अधिकपाठः––अ.

[3] प्रलयाविषयकप्रलयान्यत्वप्रकारकयावत्प्रलयान्यविशेष्यकप्रमाभावस्य विशेष्यतया प्रतियोगिसामानाधिकरण्यविरहाद् अतिव्याप्तिवारणसंभवः––अ.

[4] इदं तु बोध्यमित्यादिना दूषितम्––क.

सम्भवः, एवमुक्तरीत्या घटत्वाभाववान् मेयत्वादित्यादावपि व्यावृत्तिर्बोध्या ।

हेतुमति प्रलय इति । हेतुमत्सामान्यान्तर्गतप्रलयान्तर्भावेनेत्यर्थः । तत्सामानाधिकरण्याभावात्––गवादिरूपप्रतियोगिसामानाधिकरण्याभावात् । अत्र गवादेरभावस्येत्यनुषज्यते । हेतुमति स्ववैशिष्ट्यनिवेशनफलमाह––स्वविशिष्टेतीति । साम्प्रदायिकैः द्रव्ये संयोगसामान्याभावानभ्युपगमात् सद्धेतुत्वार्थे कपिसंयोगाभावपर्यन्तानुधावनम् । सकलहेत्वधिकरणावृत्तित्वेऽपीति । नित्यगुणादौ केनापि सम्बन्धेन कपिसंयोगासत्वादिति भावः । एतेन हेत्वधिकरणसामान्यान्तर्भावेन प्रतियोगिसामानाधिकरण्यं नास्तीति सूचितम् । नाव्याप्तिरिति । नित्य[1]गुणादेः स्वविशिष्टत्वाभावात् तदन्तर्भावेन अतथात्वेऽपि स्वविशिष्टहेत्वधिकरणान्तर्भावेन तथात्वस्य अक्षतत्वात्[2] । अत्र व्यापकताघटकाभावे उक्तयुक्त्या प्रतियोगिवैयधिकरण्यस्य निवेशनीयतया साध्यवद्यत्किंचिद्व्यक्त्यसम्बद्धस्वविशिष्टसामान्यकभिन्नत्वरूपव्यापकतावच्छेदकत्वस्य निवेशनीयतया वा कपिसंयोगाभावादिनिष्ठप्रतियोगिताया अपि व्यापकतावच्छेदकतानिर्वाह इत्यभिप्रेत्य कपिसंयोगाद्यात्मकाभावमादाय अव्याप्तिराशङ्किता, अन्यथा पुनः सत्तावान् जातेरित्यादौ काले कालिकसम्बन्धेन हेतुसमानाधिकरणानां सत्तात्वाद्यवच्छिन्नाभावानां हेत्वधिकरणसामान्यान्तर्गतगगनाद्यन्तर्भावेन

[1] अपार्थिवपरमाणुगतरूपरसस्पर्शसांसिद्धिकद्रवत्वस्नेहगुरुत्वस्थितिस्थापकनित्यद्रव्यगतैकत्वपृथक्त्वपरिमाणेश्वरबुद्धीच्छाप्रयत्नाः नित्यगुणाः––स्व.

[2] अक्षतत्वादिति भावः––अ.

**प्रतियोगिसामानाधिकरण्यविरहात् प्रसक्ताव्याप्तेर्वारणाय स्ववि-शिष्टेतिविशेषणमावश्यकमिति; आदिपदग्राह्यमपि तादृशस्थलमेवेत्यपि बोध्यम् ।**

कृष्णंभट्टियम्

ननु प्रलयान्यत्वाभावस्य प्रलयेऽपि सत्वेन दैशिकविशेषणतासंवन्धेन वृत्तिरावश्यकी; अन्यथा निरुक्तहेतुसामानाधिकरण्यभङ्गापत्तेः तद्वरं तस्यातिरिक्तत्वम् । एवं च परमाणौ प्रलयान्यत्वं नास्तीति प्रत्ययस्यापि तत्त्वेन वृत्त्यगोचरत्वेऽपि वारणमतिव्याप्त्युद्धारश्च । एवं प्रलयान्यत्वप्रकारकप्रमाविषयत्वाभावादेः प्रलयात्मकत्वं विना न दोषयोजना भवतीत्यत आह––वस्तुतस्त्विवति । प्रलयान्यत्वादेरित्यादिना तत्प्रकारकप्रमाविशेषविशेष्यत्वपरिग्रहः । नानेति । प्रलयत्वं निखिलचरमध्वंससाधारणमित्यभिप्रायः । तदा पूर्वक्षणादेरसत्वाद् यत्किञ्चिदध्वंसेति । स्वं––प्रलयान्यत्वाभावः । स्वं––तद्ध्वंसत्वात्मकोऽभावः । विशिष्टप्रमेति । प्रलयान्यत्वप्रकारतानिरूपितविशेष्यताया एव तत्प्रकारकत्वविशिष्टप्रमावत्त्वनियामकत्वाद् उक्तेति ।

इदं तु बोध्यम्––प्रलयाविषयकप्रमाविषयत्वाभावस्योक्तविवक्षां विनाप्यतिव्याप्तिवारकत्वम् । विषयताया अव्याप्यवृत्तित्वे तु धूमवान् वह्नेरित्यादावुपेक्षाबीजकथनं निर्बीजमिति ।

कपीति । संयोगप्रतियोगिकाभावत्वेन साध्यत्वे तदवच्छिन्नप्रतियोगित्वाप्रसिद्धिः । अन्यथैव संयोगस्य प्रतियोगित्वोपपत्तेः । अन्यथा पुनः इति । ननु दैशिकविशेषणतासंवन्धेन हेतुसामानाधिकरण्यनिवेशात् नायं दोष इति चेन्न; व्यापकताघटकाभावीयवृत्तौ स्वरूपसंवन्धनिवेश एव पर्वतत्वादिरूपाभाववारणार्थं दर्शितसंवन्धेन तन्निवेशः प्रसज्यते; स एव न । प्रतियोगिमत्ताग्रहविरोधितानियामकसंवन्धेन तादृशवृत्तिनिवेशात् पर्वतत्व-

रूपाभावस्यापि व्यापकताघटकत्वेन लक्षणाघटकत्वात् । पर्वतत्वाभाववृत्ति-प्रतियोगित्वावच्छिन्नाभावस्यातिरिक्तत्वाच्च । नन्वेवमपि सत्ताभाववार-णायैव दैशिकविशेषणतासंबन्धेन हेतुसामानाधिकरण्यनिवेशोऽस्त्विति चेन्न; तथापि गगनादिवृत्तित्वविशिष्टसत्ताभावादिकमादायाव्याप्तेः ।

## न्यायरत्नम्

**'अन्यथा पुनः सत्तवान्' इति । यद्यपि प्रतियोगिवैयधिकरण्या-घटितव्यापकत्वकल्पे हेतुसामानाधिकरण्यांशे स्वरूपसंबन्धावच्छिन्नत्वस्य निवेशावश्यकत्वं पूर्वमुक्तं तदिदानीं कथं स्वविशिष्टत्वानिवेशे तेन संबन्धेन हेतुसामानाधिकरण्यनिवेशं विस्मृत्य सत्ताभावमादायाव्याप्तिप्रदर्शनं संग-च्छत इति शङ्का अवतरति; तथापि गगनादिवृत्तित्वविशिष्टसत्ताभावमा-दायैव स्वविशिष्टेत्यस्य व्यावृत्तिः विवक्षितेति बोध्यम् ।**

**यत्तु विशिष्टाभावमादाय सर्वत्रैतल्लक्षणसमन्वयात् प्रतियोग्यवृत्ति-श्चेति ग्रन्थावतारकत्वानुपपत्तेः विशिष्टाभावस्य संबन्धाभावरूपत्वमवश्यं वक्तव्यमिति तादृशाभावस्य लक्षणघटकता न संभवतीति केनचिदुक्तं, तन्न; प्रतियोग्यवृत्तिश्चेति ग्रन्थावतारकत्वानुपपत्तेरेव एतल्लक्षणं परित्यज्य द्वितीयलक्षणानुसरणे बीजत्वस्य वक्ष्यमाणत्वात् ।**

**अत्रेदं बोध्यम्—द्वितीयलक्षणे व्यापकतायाः प्रतियोगिवैयधि-करण्याघटिताया एव निवेशेन तत्र हेतुसामानाधिकरण्यांशे स्वरूपसंबन्ध-निवेशावश्यकतया सत्तासाध्यके सत्ताभावस्य स्वरूपसंबन्धेन हेतुसामानाधि-करण्यविरहेण विशिष्टसत्ताभावस्य तल्लक्षणाघटकत्वेनाव्याप्तिविरहात् स्वविशिष्टेति व्यर्थमिति, शेषं पूर्वदिशा अवसेयमिति दीधितिरसंगता । न च तल्लक्षणे भावभिन्नत्वमेव निविष्टं, न हेतुसामानाधिकरण्यांशे स्वरूपसंबन्धनिवेश इति वाच्यम्; कपिसंयोगात्मकाभावस्य दैशिकविशेषण-तया हेतुसामानाधिरण्यविरहेण भावभिन्नत्वविरहेण चेति द्वितीयलक्षणे**

ग्रन्थकृदुक्तविशेषणद्वयनिवेशे प्रयोजनाभावेन भावभिन्नत्वविरहेणेत्यस्य स्वरूपसंबन्धेन हेत्वसामानाधिकरण्ये हेत्वर्थकताया आवश्यकत्वेन स्वरूपसंबन्धस्यैव हेतुसामानाधिकरण्ये निवेशनीयत्वात् । न च भावभिन्नत्वविरहे स्वरूपसंबन्धेन हेत्वसामानाधिकरण्यं हेतुः संभवति तादृशद्रव्यत्वाभावादेः भावभिन्नत्वविरहाभावात् । न च समुच्चयार्थकतत्रत्यचकारासंगतिरिति वाच्यम्; प्रतियोगिवैयधिकरण्याघटितव्यापकतावच्छेदकरूपावच्छिन्नप्रतियोगिताकत्वविरहेणेत्यनेनैव समुच्चयस्य विवक्षितत्वात् । न च प्रतियोगिवैयधिकरण्याघटितव्यापकतायां साध्यवन्निष्ठत्वांशे स्वरूपसंबन्धावच्छिन्नत्वनिवेशावश्यकतया कपिसंयोगात्मकाभावस्य स्वरूपसंबन्धेन साध्यवन्निष्ठत्वविरहेण लक्षणघटकत्वं संभवत्येवेति वाच्यम्; स्वप्रतियोगिमत्ताग्रहविरोधितानियामकसंबन्धेनैव साध्यवद्वृत्तित्वस्य विवक्षणीयत्वादिति ।

## गादाधरी

(३०) स्वयं लघुलक्षणकथनम् ।

**अत्र तु साध्यतावच्छेदकावच्छिन्नव्यापकतावच्छेदकप्रतियोगिताका यावन्तोऽभावाः प्रत्येकं यद्धेतुतावच्छेदकविशिष्टाधिकरणसामान्यान्तर्भावेन यत्र कुत्रचित्[1] तत्तत्प्रतियोगिसामानाधि[2]करण्यकाः, साध्यतावच्छेदकावच्छिन्नव्यापकतावच्छेदकप्रतियोगिताका यावन्तोऽभावाः यद्रूपविशिष्टाधिकरणत्वव्यापकतावच्छेदकप्रतियोगिताकाः तद्रूपवत्त्वमित्यादिकं तादृशाभावे हेतुसामानाधिकरण्यविशेषणाघटितं हेत्वधिकरणे स्वविशिष्टत्वविशे-**

[1] कुत्रचित् पदार्थे—अ; यत्र कुत्रचित् इति नास्ति(मै) यत्र कुत्रचिदिति शेषः इति—क्र.

[2] सामानाधिकरण्यम्—अ.

**षणाघटितं च व्यधिकरणधर्मावच्छिन्नाभावघ[1]टितं लघुलक्षणं सम्भवतीति बोध्यम् ।**

कृष्णंभट्टीयम्

अत्र च स्वविशिष्टहेत्वधिकरणावच्छेदेन प्रतियोगिसमानाधिकरणा इत्युक्तौ तृतीयान्तार्थस्यैकदेशान्वयप्रसंग इति पृथगभिधानम् । द्वितीये च स्वविशिष्टहेत्वधिकरणावच्छेदेनेत्यस्यानु[1]वृत्तये भावप्रत्ययोक्तिः । उद्देश्य-विधेयवद्वाचकयोः समानविभक्तित्वम् उद्देश्यवाचकानां षष्ठ्यन्तत्वे विधेयवाचकस्य प्रथमान्तत्वमपेक्षितमिति व्युत्पत्तिभेदसूचनमपि लक्षणद्वये द्रष्टव्यम् ।

इदं चात्रावधेयम्—स्ववृत्तित्व-स्वविशिष्टहेत्वधिकरणावच्छिन्नत्वस्व-प्रतियोगिनिरूपितत्वैतत्त्रितयसंवन्धेनाभावविशिष्टं यत् सामानाधिकरण्यं तद्विशिष्टं यत् साध्यतावच्छेदकविशिष्टसामानाधिकरण्यं निरूपकतासंवन्धेन तद्वत्वं हेतौ व्याप्तिः; तद्विशिष्टत्वं तद्वदन्यावृत्तित्वसंवन्धेन, तेन व्यभि-चारिणि वाच्यत्वाद्यभावमादाय नातिव्याप्तिः । साध्यतावच्छेदकवैशिष्ट्यं च सामानाधिकरण्यसंवन्धेन; तच्च स्वावच्छिन्नव्यापकतावच्छेदकप्रति-योगिताकत्वादिसंवन्धेन; तद्वति स्वरूपसंवन्धेन वृत्तित्वं; तेन न विशिष्ट-परामर्शानुपपत्तिः । एवं हेत्वधिकरणावच्छिन्नसामानाधिकरण्यनिरूपक-प्रतियोगिकत्वविशिष्टत्वं यत् साध्यतावच्छेदकविशिष्टसामानाधिकरण्यं निरूपकतासंवन्धेन तद्वत्त्वम्; साध्यतावच्छेदकविशिष्टव्यापकतावच्छेदक-प्रतियोगिताकत्ववदन्यूनवृत्त्यनुयोगितानिरूपकप्रतियोगिताश्रयसामानाधि-करण्यनिरूपकताव्याप्याधिकरणतानिरूपकतावच्छेदकं यद्धेतुतावच्छेदकं तद्वत्वं वा व्याप्तिरिति दिक् ।

[1] घटितं च—अ.

[1] दवीयस्थानान्तरस्थस्यानुसन्धानमनुवृत्तिः—स्व.

केचित्तु--यावत्त्वम् व्यापकत्वम्; तथा च स्वावच्छिन्नसामानाधिकरण्यविशिष्टप्रकृतसाध्यव्यापकतावच्छेदकप्रतियोगिताकाभावत्वसमानाधिकरणाभावप्रतियोगितानवच्छेदकीभूतोक्तसंबन्धेनाभावविशिष्टसामानाधिकरण्यत्वकधर्मवत्त्वमिति निष्कर्षो बोध्यः। धूमवान् वह्नेरित्यादौ च न तादृशः कोऽप्यभावः संभवति; धूमाभावे यद्विशिष्टसामानाधिकरण्यं भवेदिति न कोऽपि दोषः। परं तु एतदपेक्षया लाघवात् स्वावच्छिन्नसामानाधिकरण्यविशिष्टतादृशप्रतियोगिताकाभावव्यापकतावच्छेदकस्वस्वप्रतियोगिसामानाधिकरण्यकधर्मवत्त्वमेवोचितम्; तथा सत्यपि गोमान् गोत्वादित्यादौ तादृशगवाद्यभावाधिकरणे प्रलये गोसामानाधिकरण्यविशिष्टाभावासत्त्वेनातिव्याप्त्यनवकाशात्। न चैव घटत्वेन वाच्यत्वाद्यभावसाधारणाभावविशिष्टसामानाधिकरण्ये तादृशाभावव्यापकतावच्छेदकत्वसंभवात् सा दुर्वारेति वाच्यम्; स्वव्यापकतावच्छेदकस्वप्रतियोगिसामानाधिकरण्यकसकलतादृशाभावकत्वस्योक्तत्वात्। स्वं--तादृशाभावः। एवमपि स्वविशिष्टेत्यादिवैयर्थ्यस्य दुर्वारत्वात्। कपिसंयोगाभावादिसाध्यके कपिसंयोगरूपसाध्याभावाधिकरणेऽप्रसिध्या कपिसंयोगाभावसामानाधिकरण्यविशिष्टाभावासत्त्वेन सत्तावान् जातेरित्यादौ सत्ताभाववति सत्तासामानाधिकरण्यावच्छिन्नाभावासत्त्वेन चादोषात्। येन संवन्धेन हेतुमद्वृत्तित्वं तेन संवन्धेन तादृशसामानाधिकरण्यविशिष्टसाध्याभाववत्त्वनिवेशादित्याहुः।

तादृशाभावा ये ये प्रत्येकं तत्तद्व्यापकतावच्छेदकतत्तदभावप्रतियोगिसामानाधिकरण्यकत्वकूटवद्धर्मवत्त्वमर्थः। व्यापकताघटकसंवन्धादिभेदात् तवापि कूटनिवेशं विना अगतेरित्यन्ये।

स्वविशिष्टसामानाधिकरण्यविशिष्टव्यापकतावच्छेदकीभूतसाध्यव्यापकतावच्छेदकप्रतियोगिताकाभावप्रतियोगिसामानाधिकरण्यसामान्यकत्वमपि संभवति।

'प्रत्येकम्' इति । यावदभावघटकैकैकाभावस्येत्यर्थः । यत्र [1]कुत्रचिदिति शेषः । हेतुनिष्ठतत्तत्प्रतियोगिसामानाधिकरण्यमेव कुतो नोक्तमिति तु बोध्यम् । यद्धर्मावच्छिन्नाधिकरणत्वव्यापकतत्तत्प्रतियोगिसामानाधिकरण्यनिरूपकताकधर्मवत्वमर्थः । कपिसंयोगाभावादिसाध्यके च संयोगवृत्तिप्रतियोगिसामानाधिकरण्यनिरूपकतायास्तादृशाव्यापकत्वेऽपि गगनाभावादिसाधारणतन्निरूपकतायास्तथात्वान्नाव्याप्तिरिति स्वविशिष्टत्वं व्यर्थम् । यद्यपि हेत्वधिकरणताव्यापकत्वादन्यैव स्वविशिष्टहेतुमत्ताव्यापकता तथापि अभावनिष्टत्वान्तस्य निष्प्रयोजनतया त्यागात् स्वविशिष्टत्वत्यागेऽपि न क्षतिरित्याशयेन तद्वैयर्थ्यमुक्तम् । एवमग्रेऽपि ।

लाघवादाह——यद्रूपेति । विशिष्टरूपेणाधिकरणप्रवेशे द्रव्यं विशिष्टसत्वादित्यादौ अव्याप्तिवारणाय विशिष्टाधिकरणताघटितव्यापकताप्रवेशार्थमधिकरणतापदम् । आदिना यावत्यस्तादृशप्रतियोगिताः यद्रूपविशिष्टाधिकरणताव्यापकतावच्छेदिका इत्यस्य परिग्रहः । अत्र च समनियताभावैक्यमतेऽपि नातिव्याप्तिरिति बोध्यम् । व्यधिकरणसंवन्धावच्छिवाच्यत्वाद्यभावश्च दीधितिकृदुक्तनिष्कर्षे इव नेदानीं स्मर्यते; लक्षणघटकपदव्यावृत्त्युत्तरमेव तत्संस्कारोद्बोधात् । गगनाभावाभावश्च नास्त्येव इति भावः ।

ननु दीधितिकृता यावन्तः साध्यव्यापकतावच्छेदकीभूतगगनावच्छिन्नप्रतियोगिताकाभावा हेत्वधिकरणावच्छेदेन प्रतियोगिसमानाधिकरणा इत्येव कुतो न कृतम् ? मैवम्; तथा सति अवृत्तिश्च धर्मो न प्रतियोगितावच्छेदक इत्येव वाच्यं स्यात्; समवायित्वेन वाच्यत्वाभावादेर्लक्षणाघटकस्य निराकरणानौचित्यादिति ।

एतेन समनियताभावैक्यमते गगनेन धूमाभावस्य गगनेन वह्न्यभावस्यैक्यादतिव्याप्तिरिति परास्तम् ।

[1] अत्र पाठभेदाः गदाधरीये दर्शिताः——स्व.

यावत्यः तादृशप्रतियोगिताः हेत्वधिकरणावच्छिन्नस्वाश्रयसामानाधिकरण्यका इत्यस्य विवक्षितत्वात् ।

दीधितिः

जलादिवृत्तित्वविशिष्टगोत्वाद्यभावस्याभावो जलात्वद्यभाव एव; न तु धूमाद्यभावः, जलादावपि तदभावप्रत्ययप्रसङ्गात् ।

**गादाधरी**

(३१) जलादीतिग्रन्थावतारः ।

**ननु धूमवान् वह्नेरित्यादावतिव्याप्तिः, धूमाभावादेरपि अयोगोलकादौ गोत्वाभावरूपप्रतियोगिसमानाधिकरणत्वात्; [1]गोत्वाद्यभावस्य तत्प्रतियोगित्वं च धूमाभावे जलवृत्तित्वविशिष्टगोत्वाभावो नास्तीति प्रतीतिनियामकाभावस्य अभावाधिकरणकाभावप्रतियोगिकाभावतया अधिकरणीभूतधूमाभावस्वरूपत्वाद् [2]जलवृत्तित्वविशिष्टगोत्वाभावस्य शुद्धविशेष्यानतिरिक्तत्वादित्याशङ्क्य जलवृत्तित्वविशिष्टगोत्वाभावाभावस्य धूमाभावातिरिक्तक्लृप्ताभावस्वरूपतां प्रदर्शयन् तत्स्वरूपतां प्रतिक्षिपति—जलेत्यादिना । न च धूमाभावस्य स्वप्रतियोगिनिष्ठव्यापकताघटकयावत्संबन्धान्तर्गतसंयोगसंबन्धेन प्रतियोगिसामानाधिकरण्यविरहात् कथम् अतिव्याप्तिशङ्केति वाच्यम्, जलवृत्तित्वविशिष्टगोत्वाभावद्रव्यान्यतराभावस्यापि उक्तयुक्त्या धूमाभावस्वरूपता-**

[1] गोत्वाभावस्य—अ.

[2] जलवृत्तित्वविशिष्टस्यापि गोत्वाभावस्य—अ.

संभवात् संयोगसंबन्धेन द्रव्यात्मकप्रतियोगिनैव सामानाधिकरण्यसत्वात् । न चैवं जलवृत्तिद्रव्यमेव तत्प्रतियोगि, तस्यैव प्रतियोगितावच्छेदकजलवृत्तित्ववैशिष्टयाक्रान्तत्वात् तस्य च धूमाभावविशिष्टसकलवह्निमति वृत्तौ मानाभावात् नातिव्याप्तिप्र[1]सक्तिः; यदि च जलवृत्तित्ववैशिष्टयमन्यतरत्वघटकीभूतभेदप्रतियोगिनि गोत्वाभावत्वावच्छिन्न एव विशेषणम्, न तु अन्यतरत्वावच्छिन्ने विशेषणतया प्रतियोगितावच्छेदकमिति जलावृत्तिद्रव्यस्यापि तत्प्रतियोगित्वमित्युच्यते, तदा तादृशाभावस्य विशिष्टाभावानात्मकतया अन्यतरत्वरूपप्रतियोगितावच्छेदकविशिष्टगोत्वाभावाधिकरणधूमाभावाद्यधिकरणकत्वानुपपत्तिरिति वाच्यम् जलवृत्तिद्रव्यं धूमाभावविशिष्टयादृशहेत्वधिकरणे नियमतो वर्तते, तादृशव्यभिचारिहेतुकस्थल[2] एव धूमाभावात्मकनिरुक्तविशिष्टाभावप्रतियोगिद्रव्यसामानाधिकरण्यमादायातिव्याप्तिमाशङ्कय [3]जलादिवृत्तित्वेत्यादिग्रन्थस्यावतरणीयत्वात्[4] । न चैवं तादृशान्यतराभावस्यैव धूमाभावस्वरूपताप्रतिक्षेप उचित इति विशिष्टगोत्वाद्यभावस्याभाव इति ग्रन्थासंगतिर्दुर्वारैवेति वाच्यम्, [5]तादृशग्रन्थस्यापि गोत्वाभावप्रतियोगिकाभावत्वेन रूपेण जलवृत्तित्वविशिष्टतादृशा-

1 प्रसज्यते—अ.

2 प्रसिद्धहेतुकस्थलेऽतिव्याप्तिः अस्ति इति—क.

3 जलवृत्तीत्यादिग्रन्थस्य—अ.

4 जलवृत्तित्वं संयोगविशेषणतान्यतरसंबन्धेन, तद्विशिष्टान्यतरत्वावच्छिन्नद्रव्ये प्रतियोगितानिर्वाहाय संयोगान्तर्भावस्यावश्यकत्वात् । विशिष्टगोत्वाभावस्याभाव इति ग्रन्थस्यापि विशिष्टगोत्वाभावप्रतियोगिकाभावत्वेन रूपेण जलवृत्तित्वविशिष्टत्वावच्छिन्नप्रतियोगिताकाभावपरता बोध्या । अधिकपाठः—अ.

5 एतादृश—अ, क.

न्यतरत्वावच्छिन्नप्रतियोगिताकाभावपरत्वात् । न चैवमपि अयोगोलकभेदा[1]भावस्यायोगोलकत्वादिरूपभावात्मकस्य स्वनिष्ठजलवृत्तित्वविशिष्टगोत्वाभावाभावस्वरूपताविरहात् तस्य प्रतियोगिसामानाधिकरण्यं न घटत इति अतिव्याप्त्यप्रसक्तिः, साध्यतावच्छेदकसंबन्धेन व्यापकताया लक्षणघटकत्वं प्रागेव दूषितम्; अतो नायोगोलकभेदा[2]भावस्य लक्षणघटकत्वासंभव इति वाच्यम्, अयोगोलकभेदाभावादेरपि पूर्वक्षणवृत्तित्वविशिष्टस्वाभावरूपप्रतियोगिसामानाधिकरण्यसंभवात्[3] । न चैवं धूमाभावस्य गोत्वाभावाद्यप्रतियोगिकत्वेऽपि पूर्वक्षणवृत्तित्वविशिष्टस्वाभावरूपप्रतियोगिसामानाधिकरण्यसत्वादतिव्याप्तितादवस्थ्यमिति वाच्यम्, तादृशप्रतियोगिनः स्वप्रतियोगिनिष्ठव्यापकताघटकयावत्संबन्धान्तर्गतसंयोगादिना सामानाधिकरण्यविरहाद् घटत्वाभाववान् मेयत्वादित्यादावपि घटत्वाभावादिप्रकारक[4]प्रमाभावस्य यावद्व्यापकताघटकसंबन्धान्तर्गतविशेष्यतासंबन्धेन प्रतियोगिसामाना-

[1] भेदाद्यभावस्य—अ, क.

[2] भेदाद्यभावस्य—अ ; अन्यत्वाद्यभावस्य—क.

[3] अयोगोलकभिन्नभेदरूपायोगोलकत्वनिरूपितायोगोलकभिन्ननिष्ठप्रतियोगितायाः तादात्म्यसंबन्धेन साध्यव्यापकतायामवच्छेदकत्वं प्रतियोगितायाः प्रतियोगिस्वरूपतामते न संभवतीति अयोगोलकभिन्नात्मकतत्प्रतियोगिनः तादात्म्येन अयोगोलकेऽसत्वेऽपि नातिव्याप्त्युद्धारः । एवं च धूमसामान्यसाध्यकस्थले धूमसामान्याभावीयप्रतियोगिताया धूमसामान्यव्यापकतावच्छेदकत्वासंभवेऽपि तत्तद्धूमव्यक्तिसाध्यकस्थले तादृशाभावस्य लक्षणघटकतया तदभिप्रायेण तस्य गोत्वाभावप्रतियोगिकत्वनिराकरणं तत्तद्धूमव्यक्तेरपि अनेकाधिकरणवृत्तितया नायोगोलकभिन्नस्य कस्यापि तादात्म्येन तत्र साध्यव्यापकत्वमिति । अधिकपाठः—अ; कृष्णंभट्टीयपर्यालोचनायामेतादृशपाठः गादाधर्यां नास्तीति गम्यते—ख.

[4] जन्यप्रमायाः अभावस्य—अ., जन्यप्रमाभावस्य—क.

**धिकरण्यविरहेणातिव्याप्त्यनवकाशात् । न चैवं जलवृत्तित्वविशिष्टगोत्वाभावद्रव्यान्यतराभावस्य [1]धूमभावस्वरूपतया संयोगेन प्रतियोगिसामानाधिकरण्यसंभवेऽपि [2]धूमादिप्रकारकप्रमाभावस्य यावद्व्यापकताघटकसंबन्धान्तर्गतविशेष्यतासंबन्धेन प्रतियोगिसामानाधिकरण्याभावाद् धूमवान् वह्नेरित्यादौ अतिव्याप्त्यप्रसक्त्या तादृशाभावस्य धूमाभावस्वरूपताप्रतिक्षेपो न युक्त इति वाच्यम्; तादृशाभावस्य तत्स्वरूपत्वे तुल्ययुक्त्या [3]धूमादिप्रकारकप्रमाभावनिष्ठस्य[4] जलादिवृत्तित्वविशिष्टगोत्वाभावद्रव्यत्वप्रकारकप्रमान्यतराभावस्य तत्स्वरूपतया द्रव्यत्वप्रकारकप्रमाया अपि तत्प्रतियोगित्वेन तयैव समं विशेष्यतासंबन्धेन तादृशाभावस्य सामानाधिकरण्यसत्वादतिव्याप्तिप्रसक्तेरिति ।**

## कृष्णंभट्टीयम्

व्यधिकरणधर्मावच्छिन्नधूमाद्यभावाधिकरणकस्य गगनाभाववह्न्युभयाभावादेः तद्रूपताप्रतिक्षेपस्त्वकिञ्चित्करः; तथापि समनियताभावैक्यमते तस्य व्यधिकरणधर्मावच्छिन्नवह्न्याद्यभावैक्याद् इति तन्मते समानाधिकरणधर्मावच्छिन्नाभाव एवातिव्याप्तिवारक इत्याशयेनाह––'धूमाभावादेरपीति'। (जलेति। अयं चाभावः न संयोगाद्यवच्छिन्नप्रतियोगिताकः; तथा सति धूमाभावाधिकरणकत्वसंभवेन प्रतियोगितावच्छेदककोटौ जलवृत्तित्वोपादानवैयर्थ्यात्; किन्तु स्वरूपसंवन्धावच्छिन्नप्रतियोगिताक इति

1 धूमाद्यभावस्वरूपतया––अ.

2 धूमवत्त्वादिप्रकारकप्रमाभावस्य––अ.

3 धूमवत्त्वादिप्रकारकप्रमाभावनिष्ठस्य––अ.

4 विषयताविशेषणताविशेषान्यतरसंवन्धेन अधिकः––अ .

ध्येयम्)[1] । अन्यतरत्वरूपेति । जलवृत्तित्वविशिष्टगोत्वाभावभिन्नं यद् द्रव्यभिन्नं तदन्यत्वस्य शद्धगोत्वाभावे सत्त्वात् । अत्र चायोगोलकादौ तादृशगोत्वाभावसत्त्वेन तादृशान्यतराभाववत्त्वप्रत्ययानुपपत्तिरपि द्रष्टव्या । जलायोगोलकवृत्तिद्रव्यं दीर्घदण्डादि; दीर्घवह्निविशेषादिस्तद्धूमसमानाधिकरणो महानसतदयोगोलकान्यतरत्वादिश्च हेतुः ।

इदं तु चिन्त्यम्––अयोगोलकवृत्तित्वविशिष्टगोत्वाभावद्रव्यान्यतराभावमादाय दर्शितरीत्या प्रसिद्धस्थले (अतिव्याप्तिसंभवाद् जलादित्यक्षरानुरोधेन अप्रसिद्धस्थलानुधावनं, न तु प्रसिद्धस्थले) । अतिव्याप्तिः नास्तीत्याशयेनेदम् ।

यत्तु––समानाधिकरणधर्मावच्छिन्नधूमाभावस्य विशिष्टाभावात्मकत्वे व्यधिकरणधर्मावच्छिन्नधूमाभावस्यापि तथात्वं पश्चात्तु प्रतिक्षेप इत्याशयेनातिव्याप्तिरिति;

तत्तुच्छम् । केवलान्वय्यभावस्य व्यतिरेकिविशिष्टाभावरूपत्वासंभवेनैवोपपत्तेः समानाधिकरणधर्मावच्छिन्नधूमाभावविशिष्टाभावयोर्भेदव्यवस्थापनवैयर्थ्यात् ।

'[3]परत्वाद्' इति । अत्रेदं चिन्त्यम्––एवं सति जलवृत्तित्वविशिष्टत्वावच्छिन्नाभावमादायैवातिव्याप्तिर्वाच्या; तावतापि जलवृत्तिद्रव्यस्य धूमाभावप्रतियोगितासंभवात्; न तु जलवृत्तित्वविशिष्टान्यतरत्वावच्छिन्नाभावम्; संयोगविशेषणतान्यतरसंबन्धेन जलवृत्तित्वस्य भवतोऽपि आवश्यकत्वादिति ।

[1] [ ] एतदन्तर्गतपाठः अत्र नास्ति । किन्तु उत्तरत्र परत्वादिति प्रतीकधारणात् पूर्वं वर्तते––अ.

[2] [ ] एतदन्तर्गतपाठः नास्ति––अ.

[3] जलेति प्रतीकधारणम्, अयं चाभावः इत्यादिना तादृशग्रन्थाभिप्रायवर्णनं च इतः पूर्वमेव दृश्यते––अ, पुस्तके; मैसूर्पुस्तके प्रागेव वर्णितम्––स्व.

वस्तुतस्तु--संयोगेन जलवृत्तित्वविशेषणतासंवन्धेन जलवृत्तित्वान्यतरविशिष्टत्वावच्छिन्नाभावोऽयम्, अन्यतरत्वं तु न प्रतियोगितावच्छेदकम् तदुपादानेऽपि द्रव्यस्य तत्प्रतियोगित्वार्थं संयोगान्तर्भावस्यावश्यकत्वात् । न च प्रतियोगिसामानाधिकरण्यस्य प्रतियोगिसंवन्धिवृत्तित्वरूपताया आवश्यकतया संयोगसंवन्धेन जलसंवन्धित्वविशेषणतासंवन्धेन जलवृत्तित्वान्यतरदेव प्रवेश्य विशिष्टाभाव उच्यताम्; तावतापि तादृशगगनादिरूपद्रव्यस्य जलायोगोलकयोः सत्त्वादतिव्याप्तिसंभवे तस्य[1] धूमाभावविशिष्टसकलवह्निमति वृत्तौ मानाभावादिति पूर्वग्रन्थासंगतिरिति वाच्यम्; वृत्त्यनियामकसंयोगस्य व्यापकत्वाघटकत्वेन गगनादेः प्रतियोगित्वोपादानवैफल्यात् ।

अत्र वदन्ति--जले आदिपदग्राह्यस्पन्दे वा कालिकसंवन्धेनायोगोलकवृत्तिवह्न्यादेः सत्त्वेन कालिकसंवन्धावच्छिन्नजलादिवृत्तित्वविशिष्टाभावमादायातिव्याप्तिसंभवाद् एतादृशायासो निष्फल इति ।

अत्र तादृशगोत्वाभावाभावस्य धूमाभावरूपतामते तादृशगोत्वाभावाभावत्वेन जलादौ वृत्तित्वानङ्गीकारेण तत्प्रत्ययापत्त्युद्धारसंभवेऽपि लाघवेन समनियताभावैक्यमते जलत्वाभावरूपतासिद्धान्तानुरोधेनैव तथाविधवृत्तिर्नोपगम्यते इति तत्परित्यागः ।

'संभवाद्' इति । न च तादात्म्येन अयोगोलकभिन्नमपि धूमव्यापकम् तदभावश्चायोगोलकत्वमिति व्यापकताघटकतादात्म्यसंवन्धेन अयोगोलकभिन्नरूपप्रतियोग्यसामानाधिकरण्यात् नातिव्याप्तिप्रसक्तिरिति वाच्यम्; प्रतियोगितायाः प्रतियोगिरूपतामतेऽयोगोलकभिन्ननिष्ठप्रतियोगिताया व्यापकतावच्छेदकत्वासंभवात् । न चैवं धूमसामान्यसाध्यके तन्निष्ठप्रतियोगिताया अपि न व्यापकतावच्छेदकत्वमिति वाच्यम्; तद्धूमसाध्यके एव गोत्वाभावे लक्षणघटकतत्तद्धमाभावप्रतियोगित्वनिराकरणात् । न च

[1] तस्य च--अ.

तत्रैवायोगोलकभिन्नस्य तद्धूमव्यापकतासंभवात् नातिव्याप्तिप्रसक्तिरिति वाच्यम्; यद्धूमव्यक्तिः अनेकाधिकरणवृत्तिः तत्साध्यकस्योक्तत्वात्। 'स्वाभावेति'। स्वाभावत्वानवच्छिन्नप्रतियोगिसामानाधिकरण्योक्तौ तु [1]अधिकविशेषणप्रवेशापत्तिः। नन्वेवं घटत्वाभाववान् [2]प्रमेयत्वादित्यादौ घटत्वादिरूपसाध्याभावस्य किञ्चिद्विशिष्टस्वाभावरूपप्रतियोगिसामानाधिकरण्याद् अतिव्याप्तिरित्यत आह—'घटत्वाभाववान्' इति।

## न्यायरत्नम्

**'जलवृत्तिद्रव्यम्' इति। इदं च जलादीति दीधितिग्रन्थानुरोधेन। वह्निमद्वृत्तित्वविशिष्टगोत्वाभावद्रव्यान्यतराभावस्य धूमाभावाधिकरणकस्य धूमाभावस्वरूपस्य वह्निमद्वृत्तिद्रव्यरूपप्रतियोगिसामानाधिकरण्यमादाय प्रसिद्धहेतुकव्यभिचारिण्यातिव्याप्तिसंभवात्।**

**इदं तु बोध्यम्—एवंरीत्या गदाधरग्रन्थसंगमनेऽपि दीधित्यसंगतिर्दुर्वारैवेति।**

**अत्र केचित्—कालिकसंबन्धेन जलवृत्तित्वविशिष्टस्य यः कालिकसंबन्धेनाभावः तस्य धूमाभावाधिकरणकस्य धूमाभावस्वरूपतासंभवात् कालिकसंबन्धेन जलवृत्तिद्रव्यरूपप्रतियोगिसामानाधिकरण्यमादाय 'धूमवान् वह्नेः' इत्यत्रैवातिव्याप्त्यभिप्रायकता दीधितिग्रन्थस्य संभवति; न च तादृशाभावस्य नित्यमात्रवृत्तेः न जलत्वाभावरूपता संभवतीति वाच्यम्, समवायसंबन्धावच्छिन्नप्रतियोगिताकजलत्वाभावसमनैयत्येऽपि कालिकसंबन्धावच्छिन्नप्रतियोगिताकजलत्वाभावसमनैयत्येन तद्रूपतासंभवादित्याहुः।**

**तन्न, जन्यस्य कालोपाधितानभ्युपगन्तृमतसाधारण्येनैव जलादीति ग्रन्थस्य व्यभिचारिविशेषपरत्वस्य गदाधरैरुक्तत्वात्। अथैवमपि अयोगोल-**

1 "अधिकरणविशेषप्रवेशापत्तिः"—अ.

2 "मेयत्वादित्यादौ"—अ.

कभिन्नस्यापि तादात्म्यसंबन्धेन धूमं प्रति व्यापकतया अयोगोलकभिन्न-भेदस्य लक्षणघटकतया व्यापकताघटकतादात्म्यसंबन्धेनायोगोलकादौ तद्भि-न्नरूपप्रतियोगिसामानाधिकरण्याभावात् नातिव्याप्तिः; न च तादृशभे-दाधिकरणजलवृत्तित्वविशिष्टगोत्वाभावतादात्म्यसंबन्धेनायोगोलकवृत्तिद्र-व्यान्यतराभावस्य तादृशभेदस्वरूपतया तादात्म्येनायोगोलकवृत्तिद्रव्य-स्यापि तत्प्रतियोगित्वात् तत्सामानाधिकरण्यमादायातिव्याप्तिरस्त्येवेति वाच्यम्; तथा सति जलादीति ग्रन्थस्य व्यभिचारिविशेषपरत्वेन संगमन-स्यायुक्तत्वात् धूमाभावाधिकरणकजलवृत्तित्वविशिष्टगोत्वाभाववह्निम-द्वृत्तिद्रव्यान्यतराभावस्यापि धूमाभावरूपतासंभवेन 'धूमवान् वह्नेः' इत्यादौ एवातिव्याप्तिसंभवादिति चेन्न; पूर्वोक्तयुक्त्या प्रतियोगिसामा-नाधिकरण्यघटकप्रतियोगितायां भेदानवच्छिन्नत्वविशेषणावश्यकतया एत-द्रूपवान् एतद्रसाद् इत्यादौ पटभिन्नभेदस्य [1]व्यापकताघटकतादात्म्यसंबन्धेन भेदानवच्छिन्नप्रतियोगिताश्रयसामानाधिकरण्याभावादव्याप्तिवारणाय व्यापकतावच्छेदकप्रतियोगितायामपि तादृशविशेषणस्यावश्यकतया अयोगो-लकभिन्नभेदस्य लक्षणघटकत्वाभावात् ।

इति प्रथमस्वलक्षणम्

---

[1] यावदन्तर्गतस्य अधिकपाठः—ग.

# द्वितीयस्त्रलक्षणम्

## गादाधरी

(३२) द्वितीयलक्षणावतारः ।

**नन्वेवमपि धूमवान् वह्नेरित्यादावतिव्याप्तिर्दुर्वारैव, उक्ताभावस्य जलत्वाद्यभावस्वरूपत्वे तु तुल्ययुक्त्या धूमवद्वृत्तित्वविशिष्टतादृशाभावस्य धूमाभावस्वरूपत्वेन द्रव्यसामान्यस्य तत्प्रतियोगित्वान[1]पायात् । एवं धूमाद्यभावस्य धूमत्वादिना प्रमेयसामान्याभावसमनियतत्वेन तत्तदभिन्नत्वोपगमात् प्रमेयमात्रस्यैव तत्प्रतियोगित्वात् । यदि च धूमत्वादिना प्रमेयं नास्तीत्यादिप्रतीतौ धूममात्रस्यैव प्रतियोगित्वग्रहः; न प्रमेयान्तरस्य, अथवा प्रतियोगिसामानाधिकरण्यशरीरे [2]न्यूनवृत्तिसमानाधिकरणधर्मानवच्छिन्नप्रतियोगिता निवेशनीया, [3]एवं च तादृशप्रतियोगिताको हेतुसमानाधिकरणाभावो [4]ग्राह्यः, यावत्प्रमेयनिष्ठप्रतियोगिता च तथाविधधूमत्वावच्छिन्नैव, तादृशधर्मानवच्छिन्ना च धूमादिमात्रवृत्ति-**

[1] इदं विचारासहम्——रा.

[2] स्वसमानाधिकरणत्वे सति स्वसमानाधिकरणभेदप्रतियोगितावच्छेदकमित्यर्थः ——रा.

[3] घटत्वेन प्रमेयसामान्याभावमादायाव्याप्तिवारणायाह——एवं चेति——रा.

[4] अन्यथा वह्निमान् धूमादित्यादौ यावदन्तर्गतस्य घटत्वादिना प्रमेयसामान्याभावस्य स्वन्यूनवृत्तिधर्मानवच्छिन्नघटादिमात्रवृत्तिप्रतियोगितैवेति तदाश्रयसामानाधिकरण्यं न हेत्वधिकरणावच्छेदेनेति असंभवापत्तेरिति भावः——रा.

**धूमाभावीयप्रतियोगितैव, तदाश्रयसामानाधिकरण्यं च नायोगोलकाद्यन्तर्भावेनेति मन्यते, [1]तदापि धूमाभावस्य वह्निधूमोभयत्वावच्छिन्नाभावसमनियततया तदभिन्नत्वेन वह्नेरपि तदभाव[2]प्रतियोगितया, अयोगोलकान्यत्वाभावस्य अयोगोलकान्यवृत्तित्वविशिष्टाकाशाभावाभावसमनियततया तदभिन्नत्वेन आकाशाभावस्यापि तत्प्रतियोगितया, धूमवत्त्वप्रकारकप्रमाभावस्य धूमवद्विशेष्यकत्वविशिष्टद्रव्यत्वादिप्रकारकप्रमाभावसमनियततया द्रव्यत्वादिप्रकारकप्रमाया अपि तत्प्रतियोगित्वेन, धूमभेदस्य धूमत्वसदुभयत्वावच्छिन्नाभावसमनियतत्वेन सन्मात्रस्यैव तत्प्रतियोगितया, हेतुसमानाधिकरणतादृशाभावानां स्वविशिष्टयावद्धेत्वधिकरणान्तर्भावेन दर्शितप्रतियोगिभिः सामानाधिकरण्यमक्षतमेवेत्यतिव्याप्तिः ।**

## कृष्णंभट्टीयम्

अत्र च जलं गोभिन्नद्रव्यत्वादित्यादौ अतिव्याप्तिः; प्रतीत्यतिप्रसङ्गाभावेनोक्तरीत्या जलवृत्तित्वविशिष्टगोत्वाभावद्रव्यत्वान्यतराभावादेः जलत्वाभावरूपतया द्रव्यत्वरूपप्रतियोगिसामानाधिकरण्यसत्त्वात् । न च व्यधिकरणधर्मावच्छिन्नजलत्वाभावमादायैव नातिव्याप्तिः; जले तादृशाभावप्रतीतिप्रसङ्गेन विशिष्टाभावस्य केवलान्वयितदभावात्मकत्वासंभवादिति वाच्यम्; इत्थमपि तस्य व्यधिकरणधर्मावच्छिन्नद्रव्यत्वाद्यभावसमनैयत्येनातिव्याप्तेर्दुर्वारत्वादिति शङ्कानिराकरणाय प्रसिद्धव्यभि-

[1] तथापीति प्रतीकम्——कृ.

[2] यदि च धूमत्वादेरपि उभयाभावप्रतियोगितावच्छेदकतया न तत्प्रतियोगिताया अपि स्वन्यूनवृत्तिधर्मानवच्छिन्नत्वं तदा धूमवद्वृत्तित्वविशिष्टद्रव्यसामान्याभावस्य धूमाभावसमनियततया अतिव्याप्तेरावश्यकत्वं बोध्यम्——रा.

चारिण्येव तथाविधाभावमादायातिव्याप्तिं शङ्कते—'नन्वित्यादिना'। साध्यान्यधर्मवद्वृत्तित्वविशिष्टाभावादेः साध्याभावरूपताप्रतिक्षेपेऽपि साध्यवद्वृत्तित्वविशिष्टाभावस्य साध्याभावरूपतया अतिव्याप्तिः सकलव्यभिचारिण्युक्तलक्षणावतारबीजमेवेति भावः । अत्र दीधितिकृतां समनियताभावैक्यमभिप्रेत्य न समाधानम्; किन्तु विशिष्टाभावस्य विशेषणाभावरूपतामेव तत्प्रतियोगितायाश्च विशेष्ये बाधात् नातिव्याप्तिरिति चेद् ब्रूयात् तदाप्याह—'एवम्' इति । ननु वह्निमान् धूमादित्यादौ घटत्वादिना प्रमेयसामान्याभावस्य यावदन्तर्गतस्य लक्षणघटकतया यावद्धेत्वधिकरणान्तर्भावेन तत्समनियताभावीयतादृशघटमात्रवृतिप्रतियोगिताश्रयसामानाधिकरण्याभावादसंभव इत्यत आह—'एवं च' इति । धूमवान् वह्नेरित्यादौ घटत्वादिना धूमाभावस्य घटत्वेन वह्न्याद्यभावाभिन्नत्वेन तथात्वात् [1]तत्समानाधिकरणधर्मावच्छिन्नाभाव एव दोषवारको बोध्यः[2] । तस्यापि च तथात्वेन दोषवारणं नास्तीत्याशयेन आह—'तथापि' इति । यदि च प्रत्येकमुभयत्वावच्छिन्नभेदसत्त्वात् तादृशोभयत्वादेरपि स्वसमानाधिकरणभेदप्रतियोगितावच्छेदकत्वरूपन्यूनवृत्तित्वमस्तीति मन्यते; तदा व्यधिकरणधर्मावच्छिन्नभेदमादाय दोषवारणाय तादृशभेदे स्वप्रतियोग्यवृत्तित्वरूपविशेषणस्यावश्यकतयोभयत्वस्यान्यनवृत्तित्वं बोध्यम् । यद्यपि धूमत्वादेरप्युभयाभावप्रतियोगितावच्छेदकतया तत्प्रतियोगिताया न्यूनवृत्तिधर्मावच्छिन्नत्वम्; तथापि धूमवद्वृत्तित्वविशिष्टद्रव्यसामान्याभावस्य धूमाभावसमनियततया अतिव्याप्तिः; न च कथं तस्य प्रतियोगिसामानाधिकरण्यं धूमवद्वृत्ति यादृशद्रव्यं नियमतो हेतुमति वर्तते तादृशद्रव्यस्य प्रतियोगित्वात् ।

अथवा संयोगकालिकविशेषणतैतदन्यतरसंबन्धेन धूमवद्वृत्तित्वं तादृशसंबन्धावच्छिन्नवृत्तित्वसंबन्धेन धूमवद्विशिष्टत्वं वा निवेश्यम् ।

[1] तत् पदं नास्ति—अ. [2] वाच्यः—अ.

[1]विशेषणाभावाद् विशिष्टाभाव इति। [उभयाभावपदस्य तादृशद्रव्याभावपरतया] गगनमपि तत्प्रतियोगीति तत्संवन्धिवृत्तित्वमादायैवातिव्याप्तिसङ्गतिरिति तु केचित्।

'अयोगोलकान्ये' इति। लाघवेनाकाशाभावत्वस्य प्रतियोगितावच्छेदककोटचप्रवेशेऽपि आकाशाभावस्य प्रतियोगित्वमक्षतम्। 'धूमेति'। धूमवत्तदितरविशेष्यकद्रव्यत्वप्रकारकप्रमाभावस्य तादृशाभावसमनैयत्यार्थं विशिष्टेति। 'धूमभेदस्य' इति। न चाभावप्रतियोगितायां [2]संवन्धविशेषावच्छिन्नत्वनिवेशाद् धूमभेदव्युदासः। अत एव वाच्यत्वभेदादेः व्युदासात् लक्षणस्य प्रतियोग्यवृत्तिश्चेति ग्रन्थावतारकत्वनिर्वाहोऽपीत्युत्तरदूषणमप्यसङ्गतमेवेति वाच्यम्; एतावता धूमभेदव्युदासमात्रम्; न त्वतिव्याप्तिनिरासोऽपीति प्रतियोगितायां संवन्धविशेषावच्छिन्नत्वनिवेशो व्यर्थ एव; ततश्च उत्तरदूषणसङ्गतिरपीत्यभिप्रायात्। धूमत्वेति। अस्य समवायेतरसंवन्धावच्छिन्नाभावत्वे समनैयत्यभङ्गो बोध्यः।

## न्यायरत्नम्

**'एवं सत्यत्र हेतुसमानाधिकरणमु[3]भयत्वावच्छिन्नाभावम्' इति। वाच्यत्वगगनोभयत्वाद्यवच्छिन्नाभावमित्यर्थः। तादृशोभयत्वावच्छिन्नाभावीयप्रतियोगिताया अव्यासज्यवृत्तितया साध्यवति तादृशप्रतियोगित्वावच्छिन्नाभावासत्वात् लक्षणघटकत्वमव्याहतम्।**

**अथ द्वितीयचक्रवर्तिलक्षणे यथा व्यधिकरणधर्मावच्छिन्नाभावस्याप्रामाणिकत्वे सामानाधिकरण्येनानवच्छेदकत्वमित्यत्र सामानाधिकरण्येनेति**

1 विशेषणादिनिरूपकत्वाभावाद् विशिष्टाभाव इति--अ.

[ ] एतदन्तर्गतपाठस्थाने तादृशद्रव्याभावस्य इति--अ.

2 व्यापकताघटक--अ.

3 'उभयत्वावच्छिन्नप्रतियोगिताकं साध्याभावम्' इत्येव पाठो गादाधर्यां दृश्यते--स्व.

व्यर्थं स्यादिति तदावश्यकत्वं तथा अत्रापि व्यधिकरणधर्मावच्छिन्नाभावस्याप्रमाणिकत्वे साध्यवन्निष्ठाभावीयप्रतियोगितायां सामानाधिकरण्येनानवच्छेदकत्वरूपसाध्यव्यापकतावच्छेदकत्वघटकसामानाधिकरण्येनेत्यस्य वैयर्थ्यं स्यादिति तदावश्यकत्वम्; यदि च प्रतियोगिवैयधिकरण्याघटितव्यापकतावच्छेदकत्वस्य गौरवग्रस्तत्वात् तद्घटितव्यापकतावच्छेदकत्वमेव ग्रन्थकृदभिमतमिति मन्यते, तदापि तादृशव्यापकतावच्छेदकत्वस्य यादृशप्रतियोगितावच्छेदकविशिष्टानधिकरणं साध्यवत् तादृशप्रतियोगितानवच्छेदकत्वरूपस्य शरीरे यादृशप्रतियोगितावच्छेदकविशिष्टत्ववैयर्थ्यस्य दुर्वारत्वादिति चेन्न; साध्यवन्निष्ठभेदप्रतियोगितावच्छेदकतानवच्छेदकत्वरूपस्यैव प्रतियोगिवैयधिकरण्यघटितव्यापकतावच्छेदकत्वरूपतायाः प्राक् दर्शितत्वात् तत्र च प्रतियोगितावच्छेदकविशिष्टत्वादेरनिवेशात् ।

ननु तादृशावच्छेदकतानवच्छेदकत्वं तादृशावच्छेदकत्वत्वावच्छिन्नतादृशावच्छेदकत्वनिष्ठप्रतियोगिताकत्वम्; तत्र च तादृशावच्छेदकतात्वेन घटाभावस्य घटाभावीयप्रतियोगितासाधारण्येन घटाभावस्यापि लक्षणघटकत्वादसंभववारणायोपादेयप्रतियोगितायामवच्छेदकत्वनिष्ठत्वं व्यर्थं स्यादिति व्यधिकरणधर्मावच्छिन्नाभावस्यावश्यकत्वमस्त्येवेति; मैवम्; प्रतियोगितासंबन्धेन तादृशावच्छेदकत्वत्वविशिष्टविशिष्टाभावस्यैव निवेशात् समानाधिकरणधर्मावच्छिन्नाभावस्यैव तथात्वात् तस्य घटाभावीयप्रतियोगितासामानाधिकरण्यविरहात् । एवं [1]सति स्वविशिष्टसामान्ये साध्यवद्व्यक्तिकिञ्चिद्व्यक्त्यसंबद्धत्वघटितपरिष्कारेऽपि स्वविशिष्टत्वावच्छेदेनैव प्रतियोगितया साध्यवद्व्यक्तिकिञ्चिद्व्यक्तिसंबद्धत्वत्वविशिष्टविशिष्टाभाव एव निवेशनीय इति न कोऽपि पूर्वपक्षावकाश इत्यलम् ।

## गादाधरी

(३३) लक्षणघटकपदप्रयोजनम् ।

[1] सति नास्ति—स्व.

अथ साध्यतावच्छेदकावच्छिन्नव्यापकतावच्छेदिका या या प्रतियोगिता तत्तन्निरूपकाभावानां स्वविशिष्टयावद्धेत्वधिकरणा[1]न्तर्भावेन तत्तत्प्रतियोगिताश्रयसामानाधिकरण्यं विवक्षणीयमिति नातिव्याप्तिरिति चेत्——तर्हि तादृशी या या प्रतियोगिता तदाश्रयसामानाधिकरण्यं यत्र क्वचिद् यावद्यदधिकरणान्तर्भावेन तत्त्वमित्येतावतैव सामञ्जस्येऽभावे यावत्त्वस्य तत्तत्प्रतियोगितानिरूपकत्वस्य हेतुसामानाधिकरण्यस्य विशेषणस्य हेत्वधिकरणे च स्वविशिष्टत्वविशेषणस्य वैयर्थ्यप्रसंगः; [2]एवं सर्वत्र हेतुसमानाधिकरणमुभयत्वावच्छिन्नप्रतियोगिताकं साध्याभावमादाय लक्षणसमन्वयसंभवाद् व्यधिकरणधर्मावच्छिन्नाभावस्याप्रामाणिकत्वेऽपि क्षतिविरहेण एतादृशव्याप्तिलक्षणशङ्कायां प्रतियोग्यवृत्तिश्चेत्यादिना तादृशाभावखण्डनस्यासाङ्गत्यापत्तिः; अतो लक्षणान्तरमाह——यत्समानाधिकरणानामिति। अत्रापि यत्तत्पदयोः पूर्ववद् यत्तद्धर्मावच्छिन्नपरता बोध्या। वह्निमान् धूमादित्यादौ साध्यतावच्छेदकावच्छिन्नव्यापकतावच्छेदकधर्मावच्छिन्नप्रतियोगिताकाभावा वह्नित्वादिना घटाद्यभावा एव, तेषां च स्वविशिष्टयावद्धेत्वधिकरणान्तर्भावेन वह्नित्वादिरूपप्रतियोगितावच्छेदकावच्छिन्नसमानाधिकरणतया लक्षणसमन्वयः। अत्रापि प्रतियोगिसामानाधिकरण्यनिवेशे उक्तक्रमेण धूमवान् वह्नेरित्यादावतिव्याप्तिः, अतः प्रतियोगितावच्छेदकावच्छिन्नसामानाधिकरण्यनिवेशः; तथा च धूमाद्यभावानां वह्निधूमोभयत्वावच्छिन्न-

1 अवच्छेदेन——अ.

2 एवं सर्वत्र हेतुसमानाधिकरणमुभयत्वावच्छिन्नाभावमिति प्रतीकधारणम्——र.

प्रतियोगिताश्रयवह्न्यादिसामानाधिकरण्यसत्त्वेऽपि प्रतियोगितावच्छेदकीभूततादृशोभयत्वावच्छिन्नसामानाधिकरण्याभावान्नातिव्याप्तिः। [[1]एवं तादृशाभावाधिकरणकधूमवद्वृत्तित्वविशिष्टगोत्वाभावद्रव्यान्यतराभावस्य धूमाभावस्वरूपत्वेऽपि तादृशाभावप्रतियोगितावच्छेदकधूमवद्वृत्तित्वविशिष्टत्वावच्छिन्नेन समं तादृशाभावस्य स्वविशिष्टहेत्वधिकरणान्तर्भावेन प्रतियोगिसामानाधिकरण्यविरहान्नातिव्याप्तिः], द्रव्यत्वेन धूमो नास्तीत्यादिप्रतीतौ च द्रव्यत्वादेः प्रतियोगितावच्छेदकत्वं न भासते, अपि तु धूमत्वादेरेव, द्रव्यत्वादेस्तु तृतीयोल्लिखितवैशिष्ट्यमात्रं धूमादौ भासते इत्युपेयते, अतः तादृशप्रतीतिविषयाभावस्य धूमाभावादिसमनियततया तत्प्रतियोगितावच्छेदकं द्रव्यत्वादिकमपि धूमाभावप्रतियोगितावच्छेदकमिति प्रतियोगितावच्छेदकावच्छिन्नसामानाधिकरण्यविवक्षणेऽपि अतिव्याप्तेर्दुर्वारता इत्याशङ्काया नाव[2]काशः।

एतेन धूमकालावच्छिन्न[3]धूमवद्वृत्तित्वविशिष्टस्य वह्नित्वरूपेण योऽभावः तस्य धूमाभावसमनियततया वह्नित्वमपि धूमाभावप्रतियोगितावच्छेदकमित्यपास्तम्; वह्नित्वेन तादृशधूमवद्वृत्तित्वविशिष्टं नास्तीति प्रतीतौ तादृशधूमवद्वृत्तित्ववैशिष्ट्यस्यैव प्रतियोगितावच्छेदकत्वावगाहनोपगमात्; अन्यथा धूमवद्वृत्तित्व-

[1] क्वाचित्कोऽयं पाठः इति—अ.

[2] अनवकाशः—अ.

[3] इदं च धूमशून्यवह्निकाले धूमाभावसत्वात् समनैयत्यरक्षायै—रा.; धूमकालीनेति प्रतीकम्—कृ.

विशिष्टवह्निमति धूमशून्ये वह्नित्वरूपप्र[1]तियोगितावच्छेदकवि-शिष्टवह्निरूपप्रतियोगिसत्वेन तादृशप्रतीत्यनुदयप्रसंगात्, अस्तु वा तत्र तादृशवैशिष्टयसहितस्यैव वह्नित्वस्य तथात्वम्; तावतापि न क्षतिः, प्रतियोगितावच्छेदकपदस्य प्रतियोगितावच्छेदकतापर्याप्त्यधिकरणार्थकत्वात् ।

अथैवमपि घटभिन्नत्वेन धूमघटान्यतरन्नास्तीत्यत्र घटधूमान्यतरत्वमात्रस्य न प्रतियोगितावच्छेदकत्वभानम्, धूमशून्ये घटवति तादृशप्रतीत्यनुपपत्तेः; नापि घटभिन्नत्वसहितस्य तस्य, गौरवात्; किन्तु घटभिन्नत्वमात्रस्यैव, एवं च तादृशाभावस्य धूमाभावसमनियततया धूमाभावस्यापि घटभिन्नत्वं प्रतियोगितावच्छेदकम्; एवं भेदत्वेन अयोगोलकभेदघटात्यन्ताभावान्यतराभावस्य अयोगोलकभेदत्वावच्छिन्नाभावसमनियततया [2]भेदत्वमपि अयोगोलकभेदाभावप्रतियोगितावच्छेदकम्, एवं द्रव्यत्वभिन्नत्वेन द्रव्यत्वधूमत्वान्यतराभावस्य धूमभेदसमनियततया द्रव्यत्वभिन्नत्वमपि[3] धूमभेदप्रतियोगितावच्छेदकम्, तादृशधर्मावच्छिन्नानां च अयोगोलकादावपि सत्वादतिव्याप्तिस्तदवस्थैवेति चेत् तर्हि प्रतियोगितावच्छेदकेत्यनेन प्रतियोगिताया न्यूनवृत्तिभिन्नं सद् यदवच्छेदकं तदेव विवक्षणीयम्, न्यूनवृत्तित्वं च स्वसमानाधिकरणभेदप्रतियोगितावच्छेदकत्वे सति स्वसमानाधिकरणत्वम्, तद्भिन्नत्वं च व्यधिकरणधर्मसाधारणम्; घटधूमान्यतरादिनिष्ठप्रतियोगिताया न्यूनवृत्त्येव

[1] तादृशप्रतियोगिता—अ.

[2] अयोगोलकेऽपि तादृशप्रतीतेः सत्वाद् अन्यतरत्वं न तत्प्रतियोगितावच्छेदकम्" —रा.

[3] घटादौ तादृशप्रतीतिसत्वात् नान्यतरत्वं तथा—रा.

**घटभिन्नत्वादिकम्, [1]न च वह्नित्वेन प्रमेयं नास्तीत्यत्र प्रमेयसामान्यवृत्तित्वेन वह्नित्वावच्छिन्नप्रतियोगिता[2] या प्रतीयते, वह्निर्नास्तीत्यत्रापि वह्निवृत्तितया सैव प्रतीयत इत्युपेयते, एकधर्मावच्छिन्नविभिन्नप्रतियोगिताकल्पने गौरवात् तथा च कालिकसंबन्धेन हेतुसमानाधिकरणवह्नित्वावच्छिन्नवह्न्याद्यभावप्रतियोगिताया न्यूनवृत्तिभिन्नावच्छेदकाप्रसिद्ध्या [3]अव्याप्तिरिति[4] वाच्यम्, [5]वह्नित्वेन प्रमेयं नास्तीति प्रतीतौ प्रमेयत्वविशेषितस्य[6] वह्नेरेव प्रतियोगिता भासते नान्यस्येत्यभ्युपगमात् तादृशाभावप्रतियोगितायां प्रमेयसामान्यवृत्तित्वस्यैवासिद्धेः[7] ।**

1 न चेत्यस्य वाच्यमित्यनेन अन्वयः—स्व.

2 वह्नित्वावच्छिन्नवह्न्यभावीयप्रतियोगिता—अ.

3 यदि हेतुसमानाधिकरणोऽपि तादृशधर्मावच्छिन्नप्रतियोगिताक एव ग्राह्यः, व्यधिकरणधर्मावच्छिन्नाभावमादाय सद्धेतौ लक्षणसमन्वयः, तदा धूमवान् वह्नेरित्यादौ धूमत्वाद्यवच्छिन्नधूमाद्यभावानामुक्तलक्षणाघटकतया व्यधिकरणधर्मावच्छिन्नाभावस्य वह्नित्वेन घटाभावसमनियततया तत्प्रतियोगितावच्छेदकवह्नित्वावच्छिन्नसामानाधिकरण्यादतिव्याप्तिर्बोध्या—रा.

4 अनन्तरम्—एवं घटभिन्नत्वेन महानसीयवह्निघटान्यतराभावादेः धूमादिहेतुसमानाधिकरणस्य महानसीयवह्नित्वावच्छिन्नतदभावसमनियतत्वेन तदभिन्नत्वस्य महानसीयवह्नित्वावच्छिन्नमहानसीयवह्निमात्रवृत्तिप्रतियोगितायाः न्यूनवृत्तिभिन्नमवच्छेदकं महानसीयवह्नित्वादिकं तदवच्छिन्नेन तादृशाभावस्य हेतुमति पर्वतादौ सामानाधिकरण्यासत्वाद् अव्याप्तिः । यदि च विशिष्टसाध्यव्यापकतावच्छेदकस्वन्यूनवृत्तिभिन्नरूपावच्छिन्ना यदीयप्रतियोगिता तादृशभाव एव निवेश्यते; तथा सति उक्ताभावानां लक्षणाघटकतया व्यधिकरणधर्मावच्छिन्नाभावमादायैव सद्धेतौ लक्षणसमन्वय इत्युच्यते तदा धूमवान् वह्नेरित्यादौ अपि धूमत्वावच्छिन्नधूमाभावस्य उक्तरीत्या लक्षणाघटकतया व्यधिकरणधर्मावच्छिन्नाभावमादायातिव्याप्तिः । इति साङ्कपृष्ठे दशमपङ्क्तौ अधिकपाठः—अ.

5 धूमत्ववह्नित्वादिना—रा.

6 धूमवह्न्यादेः—रा.

7 अप्रसिद्धेः—अ.

अथवा प्रतियोगितावच्छेदकपदं प्रतियोगिताया अनतिरिक्तवृत्ति सद् यदवच्छेदकं तत्परम्, अनतिरिक्तवृत्तित्वं च स्वव्यापकतत्कान्यत्वतत्सामानाधिकरण्योभयाभाववत्त्वम् तथात्वं च व्यधिकरणधर्मसाधारणमपि, घटधूमान्यतरादिनिष्ठप्रतियोगितायाश्च अतिरिक्तवृत्त्येव घटभिन्नत्वादिकम्, तादृशप्रतियोगिताया यावद्घटभिन्नादिसाधारण्याप्रसक्तेः । वह्नित्वाद्यवच्छिन्नप्रतियोगितायाः प्रमेयसामान्यवृत्तित्वेऽपि तदनतिरिक्तवृत्त्यवच्छेदकं वह्नित्वादिकमेव, स्वव्यापकतत्कान्यत्वस्यावृत्तौ प्रसिद्धत्वादिति नानुपपत्तिगन्धोऽपीति । [[1]प्रतियोगितायाः स्वन्यूनवृत्तिभि[2]न्नाया यदवच्छेदकं तदवच्छिन्नसामानाधिकरण्यं[3] विवक्षितम् । न्यूनवृत्तित्वं च सामानाधिकरण्यघटितमिति व्यधिकरणधर्मपरिग्रहः] । तत्प्रतियोगितासमानाधिकरणं सत् तत्प्रतियोगितानिरूपकाभाववद्वृत्तितावच्छेदकं यत् तदन्यप्रतियोगितावच्छेदकं वा निवेश्यम्[4] । एतल्लक्षणे साध्यतावच्छेदकावच्छिन्नव्यापकतावच्छेदकप्रतियोगिताकाभावनिवेशे वह्निमान् धूमादित्यादौ वह्नित्वादिना घटाभावसमनियतत्वेन घटत्वादिना वह्न्याद्यभावस्य हेत्वधिकरणा-

[1] [ ] क्वचित्कः पाठः इति--अ; स्वन्यूनेति प्रतीकम्--क. न्यायरत्ने स्वन्यूनवृत्तिभिन्नायाः प्रतियोगिताया इति प्रतीकधारणम्--तस्मात् सार्वत्रिकत्वम्--स्व.

[2] स्वन्यूनवृत्तिभिन्नम् (इति)--अ, क.

[3] अनन्तरम् वाकारः--क.

[4] अनन्तरं घटभिन्नत्वादिना महानसीयवह्निघटान्यतराभावमादाय उक्ताव्याप्तिवारणाय उक्तप्रतियोगितावच्छेदकविशेषणं व्यापकतावच्छेदकरूपेऽपि निवेश्यम् अतो न तादृशाभावानां लक्षणघटकतेति अधिकपाठः--अ.

वच्छेदेन [1]वह्न्यादिरूपप्रतियोगिसामानाधिकरण्यसम्भवेऽपि वह्नि-घटोभयत्वावच्छिन्नाभावस्यापि तथाविधतया तस्य[2] प्रतियोगिता-वच्छेदकावच्छिन्नसामानाधिकरण्याभा[3]वेनासंभव इत्यतो व्यापक-तावच्छेदकरूपावच्छिन्नप्रतियोगिताकत्वमुक्तम्; अत एव व्यधि-करणधर्मावच्छिन्नाभावानभ्युपगमे हेतुसमानाधिकरणस्य साध्य-तावच्छेदकावच्छिन्नव्यापकतावच्छेदकरूपावच्छिन्ना[4]भावस्या-प्रसिद्ध्या असंभवः, अयमात्मा ज्ञानादित्यादौ केवलान्वयिसा-ध्यके चाव्याप्तिर्वा भवतीत्यभिप्रायकतया प्रतियोग्यवृत्तिश्चेत्या-दिग्रन्थसंगतिः। न चायमात्मा ज्ञानादित्यादौ पूर्वक्षणवृत्तित्व-विशिष्टात्मत्वत्वादेरात्मत्वादिव्यापकतावच्छेदकतया तदवच्छि-न्नाभावस्य उत्तरक्षणावच्छेदेन हेतुसमानाधिकरणतया इदं वाच्यं ज्ञेयत्वादित्यादावपि [5]एतत्क्षणान्यवृत्तित्वविशिष्टवाच्यत्वत्वादेः विषयतासंबन्धेन जन्यज्ञानत्वविश्वविषयकजन्यज्ञाननिष्ठतद्व्य-क्तित्वादेः साध्यव्यापकतावच्छेदकतया तदवच्छिन्नाभावस्य एतत्क्षणावच्छेदेन प्रलयावच्छेदेन च हेतुसमानाधिकरणतया व्यधिकरणधर्मावच्छिन्नाभावानभ्युपगमेऽपि न तादृशाभावा-प्रसिद्धिरिति वाच्यम्, प्रतियोगिवैयधिकरण्याघटितव्यापकताया [6]एव निवेशनीयतया निरुक्तधर्मावच्छिन्नाभावानामपि साध्यवति

1 वह्न्यादिरूपप्रतियोगितावच्छेदकावच्छिन्नसामानाधिकरण्यसंभवेऽपि---अ.

2 तस्य च---अ.

3 असंभवेन---अ.

4 प्रतियोगिताकाभावस्य---अ.

5 एतत्क्षणान्यक्षणवृत्तित्वविशिष्टवाच्यत्वत्वादेः---अ; एतादृशपाठः कृष्णंभट्टी-येऽपि दर्शितः---स्व.

6 एव शब्दो नास्ति---अ.

सत्वेन तादृशधर्माणां व्यापकतावच्छेदकत्वासंभवात् । न च साध्यतावच्छेदकावच्छिन्नप्रतियोगिताकाभाव एव किम् न निवेश्यते? प्रमेयसाध्यकस्थले संयोगसमवायादिरूपव्यधिकरणसंबन्धावच्छिन्नप्रमेयत्वादिनिष्ठप्रतियोगितावच्छेदकताकाभावमादाय लक्षणसमन्वयसंभवादिति वाच्यम्, तथा सति लघुरूपसमनियतगुरुधर्मस्याभावप्रतियोगिता[1]नवच्छेदकत्वेन तद्रूपावच्छिन्नसाध्यके तथाविधाभावाप्रसिद्धया अव्याप्त्यापत्तेः ॥

अत्र[2] च ज्ञानवान् आत्ममहाकालान्यतरत्वादित्यादावतिव्याप्तिवारणाय साध्यतावच्छेदकसंबन्धेन [3]व्यापकत्वं तेनैव संबन्धेन [4]प्रतियोगिसामानाधिकरण्यं विवक्षणीयम्, महाकालान्यत्वविशिष्टघटादिसाध्यकस्थले कालत्वादेः व्यभिचारित्वेऽपि तत्र हेतुसमानाधिकरणस्य महाकालान्यत्वविशिष्टघटाद्यभावस्य प्रतियोगितावच्छेदकविशिष्टसामानाधिकरण्याभावेनातिव्याप्त[5]यसंभवात् । तादात्म्यसंबन्धेन प्रमेयसाध्यकस्थले तादृशसंबन्धेन साध्यं प्रति तादृशसंबन्धेन व्यापकतायाम् अवच्छेदकीभूतो यः प्रमेयत्वादिरूपकेवलान्वयिधर्मः तदवच्छिन्नस्य संयोगसमवायिविषयितादिसंबन्धावच्छिन्नाभावमादायैव लक्षणसमन्वयसंभवाद् अभावप्रतियोगितायां साध्यतावच्छेदकसंबन्धावच्छिन्नत्वस्य प्रयो-

1 अनवच्छेदकत्वे—अ.

2 अत्र च भवानन्दमतमुपन्यस्य दूषयति—रा.

3 वह्निमान् धूमादित्यादौ द्रव्यत्वाभावमादायाव्याप्तिसवारणाय व्यापकतायां साध्यतावच्छेदकसंबन्धावच्छिन्नत्वनिवेश इत्याद्यूह्यम् ।—रा.

4 प्रतियोगितावच्छेदकावच्छिन्नसामानाधिकरण्यम्—अ.

5 अभावात्—अ.

जनविरहेणानिवेशात्; [1]तन्निवेशेऽपि व्यधिकरणसमवायित्वावच्छिन्नप्रतियोगितावच्छेदकताकं प्रमेयत्वादिमद्भेदमादाय लक्षणसमन्वयसंभवात्। 'समवायितया वाच्यत्ववद्भेदोऽपि द्रष्टव्य' इति मिश्रोक्त्या तादृशभेदस्यापि सौन्दलसम्मतत्वादिति केचित्; तदसत्, घटत्वाभाववान् मेयत्वादित्यादौ पूर्वोक्तदिशा अतिव्याप्तेः। [2]स्वप्रतियोगितावच्छेदकावच्छिन्नव्यापकताघटकयावत्संबन्धेन प्रतियोगितावच्छेदकावच्छिन्नसामानाधिकरण्यनिवेशनमपि न सत्; तथा सति इदं वाच्यं ज्ञेयत्वादित्यादौ विषयतासंयोगादिसंबन्धावच्छिन्नप्रतियोगिताकाभावमादाय व्यधिकरणधर्मावच्छिन्नाभावानभ्युपगमेऽपि लक्षणसामञ्जस्यात् प्रतियोग्यवृत्तिश्चेत्यादिग्रन्थासंगतेः। एतेन—विषयतासंबन्धेन व्यापकता तेन संबन्धेन [3]प्रतियोगिसामानाधिकरण्यं विवक्षणीयम्, साध्यवत्त्वप्रकारकप्रमात्वाद्यवच्छिन्नाभावमादाय सर्वत्र लक्षणसंगमनमतिव्याप्तिनिरासश्चेति निरस्तम्; ज्ञेयत्ववत्वादिना वाच्यत्वादीनामभाव[4] इत्येतादृशग्रन्थासंगतेश्च ज्ञेयत्वस्य ज्ञानविषयतात्मकस्य विषयतासंबन्धेनाव्यापकत्वात्। किन्तु स्वप्रतियोगितावच्छेदकसंबन्धेन व्यापकत्वम्, तेनैव[5] प्रतियोगितावच्छेदकावच्छिन्न[6]भावसामानाधिकरण्यं विवक्षणीयम्, व्यभिचारिणि साध्याद्यभावस्य

[1] सर्वत्र व्यधिकरणसंबन्धावच्छिन्नप्रतियोगिताकाभावेनैव लक्षणसमन्वये प्रतियोग्यवृत्तिश्चेत्यादि ग्रन्थावतारासंगतिरितिरित्यत आह—तन्निवेशेऽपीति। —रा.

[2] भवानन्दस्य कल्पान्तरमपि दूषयितुमुपन्यस्यति—रा.

[3] प्रतियोगितावच्छेदकावच्छिन्नसामानाधिकरण्यम्—अ.

[4] सुलभः इत्यधिकः—अ.

[5] तेनैव संबन्धेन—रा.

[6] भावपदं चतुर्थकल्पे व्यर्थम्—कृ.

विशेषणताविशेषेण किञ्चिद्विशिष्टस्वाभावनिष्ठतादृशाभावत्व-रूपप्रतियोगितावच्छेदकावच्छिन्नसामानाधिकरण्येऽपि तदवच्छिन्न-भावसामानाधिकरण्याभावात् नातिव्याप्तिः; किञ्चिद्विशिष्टस्य स्वस्य योऽभावः सामानाधिकरण्यसंबन्धेन तद्विशिष्टस्याभावश्च विशिष्टस्वसमनियतोऽपि स्वस्मादतिरिक्त एव, अभावमात्रप्रति-योगिताकाभावस्यैव [1]तदभावप्रतियोगिस्वरूपतायाः सिद्धान्तसिद्ध-त्वात्; अतो धूमाद्यभावस्य सामानाधिकरण्यसंबन्धेन ह्रदादि-वृत्तित्वविशिष्टधमाद्यभावाभावविशिष्टत्वा[2]वच्छिन्नभावसामा-नाधिकरण्येऽपि न क्षतिः ।

[[3]वस्तुतस्तु प्रतियोगितावच्छेदकावच्छिन्ने भावत्वमनिवेश्य प्रतियोगितावच्छेदकेऽभावावृत्तित्वमेव निवेश्यम्, तादृशविशिष्टत्वं चाभावसाधारणमिति ।]

यावदभावानामित्यत्रापि अभावपदं भावभिन्नपरम्, अतः कालिकादिसंबन्धेन हेतुसमानाधिकरणस्य वह्न्यादिव्यापकता-वच्छेदकह्रदत्वाद्यभावत्वावच्छिन्नप्रतियोगिताकस्य ह्रदत्वादेः स्व-प्रतियोगितावच्छेदकावच्छिन्नभावसामानाधिकरण्यासंभवेऽपि न क्षतिः; न च ह्रदत्वाभावाभावस्य ह्रदत्वाभावप्रकारकप्रमाविषय-त्वाभावसमनियततया स्वप्रतियोगितावच्छेदकतादृशप्रमाविषय-त्वत्वावच्छिन्नभावसामानाधिकरण्यमस्त्येवेति वाच्यम्, तस्य

[1] तदभिन्नाभावप्रतियोगिरूपतया इत्यर्थः यथा घटाभावमात्रप्रतियोगिका-भावस्यैव घटाभावप्रतियोगिघटरूपत्वम् । ——रा.

[2] अयोगोलकीयवह्न्यादि——रा.

[3] [ ] क्वाचित्कोऽयं पाठः इति——अ.

**[1]भावतया भिन्नत्वात् । [2]एवं च सति कपिसंयोगाभाववान् मेयत्वादित्यादौ कपिसंयोगात्मकाभावस्य लक्षणाघटकत्वेऽपि विवक्षणीयस्वविशिष्टेत्यस्य सार्थकता [3]पूर्वोक्तदिशा अवसेया ।**

कृष्णंभट्टीयम्

'अथ' इति । आत्मा ज्ञानादित्यादौ आत्मत्वाभावमादाय हेतुसमानाधिकरणाभावीयत्वं प्रतियोगिताविशेषणम् । 'तर्हि' इति । प्रतियोगितायां यावत्त्वोक्तावधिकमभाववैयर्थ्यमेव लक्षणदोषः । तथा सति आत्मत्वत्वावच्छिन्नात्मत्वनिष्ठप्रतियोगिताया यावदन्तर्गततया तन्निरूपकाभाव[4]स्यातथात्वाद् अव्याप्तिशङ्कायामर्थतः प्रतियोगिसामानाधिकरण्येऽभावनिष्ठत्वत्यागात् नाव्याप्तिः । एवं च स्वविशिष्टत्वहेतुसामानाधिकरण्ययोरपि वैयर्थ्यमित्यभिप्रायेणेदम् । तेन प्रतियोगितायां यावत्त्वानुपादानेऽपि एतेषां वैयर्थ्यस्य सत्त्वाद् दोषतया अभिधानासङ्गतिरिति नाशङ्क्यम् ।

अथ साध्यव्यापकतावच्छेदकीभूतव्यधिकरणधर्मावच्छिन्नप्रतियोगिताका यावन्तोऽभावा यदधिकरणावच्छेदेन प्रतियोगिसमानाधिकरणाः तत्त्वमित्युक्तौ धूमवान् वह्नेरित्यादौ उक्ताभावानां व्युदासः; आत्मा ज्ञानादित्यादौ आत्मत्वसामान्याभावादेश्चेति चेत्; तर्हि धूमवान् वह्नेरित्यादौ अतिव्याप्तिः; घटत्वेन धूमाभाव-घटत्वेन वह्न्यभावयोरैक्यात्; तद्भेदेऽपि प्रतियोगितावच्छेदकैक्येन प्रतियोगितैक्याच्च । यदि च तथाविधयद्यत्प्रतियोगिताका यावन्तोऽभावाः [5]तत्प्रतियोगिताश्रयेत्यादिरीत्या निवेशः

[1] तथा च समनियतयोः भावभिन्नयोरेवैक्यं न तु भावाभावयोरपीति भावः (रा) भावतयेतीति प्रतीकम्––कृ.

[2] एवं सति इति (अ) कृष्णंभट्टीये अपि एवं सतीति प्रतीकम्––स्व.

[3] सत्तावान् जातेरित्यादौ पूर्वावोक्तदिशा अवसेया––अ.

[4] तथात्वात्––अ.

[5] तत्तत्––अ.

धूमभिन्नत्वेन धूमाभावमादाय नातिव्याप्तिः; तस्यापि वह्निभिन्नत्वेन वह्न्यभावरूपत्वात् स एव दोष इति यद्यदिति । धूमभिन्नत्वेन धूमाभाव-धूमभिन्नत्वेन धूमतद्भिन्नोभयाभावप्रतियोगितयोः नैक्य[1]मसजातीयत्वादित्युच्यते; तदा व्यधिकरणधर्मावच्छिन्नत्वरूपविशेषणं व्यर्थमिति ।

यथासन्निवेशेऽवैयर्थ्यादाह--'एवम्' इति । व्यधिकरणसंबन्धावच्छिन्नवाच्यत्वाभावमादाय लक्षणसङ्गतिस्तु प्रतियोगितावच्छेदकसंबन्धेन व्यापकताकल्पेनेति तदुपेक्षा । उभयाभावादेः उभयत्वाद्यभावरूपतापक्षे उभयत्वनिष्ठप्रतियोगितायाः साध्यव्यापकतावच्छेदकत्वाभावाद् यथोक्तविशेषणाक्रान्तव्यधिकरणधर्मावच्छिन्नाभावोपगमेनैवावतारकत्वम् । अतः सिद्धान्तमनुरुध्याह--'उभयेति' । 'अप्रामाणिकत्वेऽपि' इति ।

अत्र च भट्टाचार्यैः व्यापकताघटकत्वेन सामानाधिकरण्येनेत्युपादानात् नावतारकत्वभङ्गश्चक्रवर्त्तिलक्षणवदिति तु न वाच्यम्; चक्रवर्त्तिनां सामानाधिकरण्येनेत्युपादानमेवोभयाद्यभावमालोचयतां व्यधिकरणधर्मावच्छिन्नाभावव्यञ्जकम्; तदभा[2]वासत्त्वेऽपि व्यधिकरणधर्मावच्छिन्नाभावसत्त्वात् तमालोच्यैव साध्याभावघटितलक्षणकथनात् न त्विह तेषां तथा किञ्चिदस्ति; दीधितौ सामानाधिकरण्येनेत्यस्यानुक्तेः तदप्रामाणिकत्वे तदघटितसाध्यव्यापकतावच्छेदकत्वस्यैव लाभसंभवात् । अवच्छेदकानवच्छेदकोभयादिभेदवारणाय प्रतियोगिताविशेषसंबन्धेनावच्छेदकविशेषितभेदनिवेशाद् अर्थत एव न तत्र तादृशाभावव्यक्तिसंभवः । एवं साध्यवद्यत्किञ्चिद्व्यक्तीत्यादिव्यापकतामतेऽपि । नन्वेवमेतादृशदुष्टलक्षणाभिधानं दीधितिकृतामसङ्गतमिति चेन्न; समवायित्वेन वाच्यत्वाभावमालोच्य आपाततः तेषां तथाभिधानम्; पश्चाद् दोषालोचने ज्ञेयत्वत्वेन वाच्यत्वाभावोपलक्षणत्वात् ।

[1] सजातीयत्वात्--अ.

[2] तदभावसत्वेऽपि--अ.

'तथा च' इति। तथा च प्रतियोगितावच्छेदकतापर्याप्तिप्रवेश इति भावः। 'न भासते' इति। तदभानेऽपि प्रतीत्युपपत्तेरिति भावः। एतेन समवायित्वेन वाच्यत्वं नास्तीति प्रतीतिसिद्धो मणिकृद्भिः वह्नित्वेन प्रमेयं नास्ति वह्नित्वेन महानसीयवह्निघटान्यतरन्नास्तीत्यादिप्रतीत्या यत्किञ्चित्प्रतियोग्यवृत्तिधर्मावच्छिन्नाभावो दीधितिकृद्भिः व्यधिकरणधर्मावच्छिन्नप्रतियोगितावच्छेदकताकभेदः समवायितया वाच्यत्ववद्भेदोऽपि द्रष्टव्य इति मिश्रैश्च कण्ठरवेणैवोक्त इति एत एव सौन्दलसंमताः न तु तद्भिन्नः सामान्यरूपेण विशेषाभावः [[1]मणिकाराद्यननुमतः व्यधिकरणधर्मावच्छिन्नाभावाप्रभेदतया सौन्दलसंमत इति तदप्रामाणिकत्वबीजमाविष्कृतम्।] अत एवाग्रे तदखण्डनेन[2] न न्यूनता। न च निरुक्तभेदस्याग्रेऽखण्डनात् न्यूनतेतिवाच्यम्; प्रतियोगिताया व्यधिकरणधर्मावच्छिन्नत्वखण्डनदिशा तदवच्छेदकतायाः तत्खण्डनसिद्धेः।

एतेन तादृशाभावाङ्गीकारेऽपि प्रतियोगितावच्छेदकपदेन प्रतियोगितानतिरिक्तवृत्त्यवच्छेदकस्य तत्प्रतियोगितासमानाधिकरणं तत्प्रतियोगितानिरूपकाभाववद्वृत्तितावच्छेदकं तदन्यप्रतियोगितावच्छेदकस्य वा अग्रे विवक्षणीयतया नातिव्याप्तिः। स्वन्यूनवृत्तिभिन्नप्रतियोगितावच्छेदकेत्यादिविवक्षायास्तु अतिव्याप्तिग्रस्तत्वेन हेयत्वादिति पूर्वपक्षोऽपि निरस्तः।

तादृशाभावस्यैवाप्रामाणिकत्वात्। न च द्रव्यत्वेन धूमो नास्तीति प्रत्ययस्य द्रव्यत्वेन धूमवानिति ज्ञानप्रतिबन्धकत्वानुरोधेन तादृशाभावः सुवचः; सिद्धान्ते द्रव्यत्वविशिष्टधूमवत्ताज्ञाने धूमाभाववत्ताज्ञानस्य क्लृप्तप्रतिबन्धकतयोपपत्तेरतिरिक्तप्रतिबन्धकतायां मानाभावात्। [3]एवं वह्नित्वेन तार्णातार्णवह्न्युभयाभावेऽपि वह्नित्वं न प्रतियोगितावच्छेदकं तृतीयोल्लि-

[1] [ ] व्यधिकरणधर्मावच्छिन्नाभावाप्रभेदतया सौन्दलसंमत इति मणिकाराद्यनुक्ततदप्रामाणिकत्वबीजमाविष्कृतम्--अ.

[2] तदखण्डनेऽपि--अ. [3] एवं च--अ.

खितवैशिष्ट्येनैवोपपत्तेः किन्तु तदुभयत्वमेव; अत एव यावन्तः साध्याभावाः तद्व्यापकीभूताभावप्रतियोगितावच्छेदकहेतुतावच्छेदकवत्त्वलक्षणे ज्ञेयं प्रमेयादित्यादौ प्रमेयत्वव्यधिकरणप्रतियोगित्वा[1]प्रसिद्धेः अव्याप्त्यभिधानसङ्गतिः ।

अन्यथा प्रमेयत्वेन घटपटोभयभेदमादाय तदसङ्गतेः । न च तद्भेदसत्त्वेऽपि गौरवेण प्रमेयत्वं न प्रतियोगितावच्छेदकमिति तत्सङ्गतिः विषयतामात्रस्यैव हेतुतावच्छेदकत्वात् । प्रमेयत्वावच्छिन्नप्रतियोगित्वेत्यनभिधाय प्रमेयत्वव्यधिकरणेत्यभिधाने उन्मत्तप्रलपितत्वापत्तेश्च । न च धूमवान् वह्नेरित्यादौ वह्नित्वेन तद्वह्न्यभाववारणाय स्वन्यूनवृत्तिभिन्नप्रतियोगितावच्छेदकत्वं प्रतियोगिता[2]नतिरिक्तवृत्तिप्रतियोगितावच्छेदकं वा वाच्यमिति तत्सङ्गतिरिति वाच्यम्; एवमपि प्रमेयत्वेन गगनतद्भिन्नोभयभेदमादाय लक्षणसङ्गतेः; वह्नित्वेनार्द्रेन्धनजवह्निशुष्केन्धनजवह्न्युभयाभावादिकमादायातिव्याप्तेः । न च प्रतियोगितापर्याप्त्यनधिकरणावृत्तित्वं प्रतियोगितावच्छेदकविशेषणम् । पर्याप्तिरूपव्यधिकरणसंबन्धावच्छिन्नप्रतियोगित्वाभावस्य धूमे सत्त्वादव्याप्तेः अयमेको घट इत्यग्रिमग्रन्थस्य प्रत्येकपर्यवसितसंवन्धातिरिक्तसंवन्धाव्यवस्थापकत्वात्; विशेषणपूरणापाताच्चेति दिक् ।

'तादृशेति'। प्रतियोगितावच्छेदकत्वं तृतीयार्थ इत्यभिमानः । प्रतियोगिविशेषणविशिष्टप्रतियोगितावच्छेदकविशिष्ट[3]वति अभावविरोधाद् धूमाभावसमनैयत्यम् । धूमशून्यवह्निकाले धूमाभावसत्त्वेन न समनैयत्यमतो धूमकालीनेति[4] । एतच्च काल एव द्रव्यमव्याप्यवृत्तीति मते; तेन नितम्वादौ वह्न्यादिसत्त्वे शिखरे धूमाभावस्य तादृशतृणादेश्च सत्त्वेन

[1] असिद्धेः––अ.

[2] विरुद्धव्यावृत्तं बोध्यम्––अ.

[3] विशिष्टवत्तया––अ.

[4] धूमकालेति––अ; गादाधर्यामपि धूमकालीनेति नास्ति––स्थ.

समनैयत्यभङ्ग इति वह्नित्वस्य प्रतियोगितावच्छेदककोटिप्रवेश आवश्यकः। न चैतन्मते तृणादिवारणाय वह्नित्वस्य प्रतियोगिविशेषणत्वमस्तु शिखरादौ अयःपिण्डीयवह्न्यन्तरसंभवादिति शङ्कानवकाशः। धूमवद्वृत्तित्वविशिष्टवह्निमतीति अयःपिण्डसाधारणदीर्घं धूमध्वंसकालानुवृत्तं वा वह्निमभिप्रेत्य धूमकालावच्छिन्नधूमवन्निरूपितकालिकसंबन्धावच्छिन्नवृत्तित्वस्य वा निवेशः; प्रयोजनाभावेन वह्नित्वस्य न प्रतियोगितावच्छेदककोटिप्रवेश इति भावः। देशतोऽपि द्रव्याव्याप्यवृत्तित्वमते च देशकालसाधारणावच्छेदकत्वमङ्गीकृत्य धूमवदवच्छिन्नत्वं धूमवदवयवावच्छिन्नत्वं वा दत्त्वा समनैयत्यमुपपाद्यमिति वदन्ति।

## न्यायरत्नम्

**'द्रव्यत्वेन धूमो नास्ति' इति। अथ द्रव्यत्वेन धूमाभावीयप्रतियोगितायां द्रव्यत्वस्यावच्छेदकत्वेऽपि प्रतियोगितावच्छेदकेत्यनेन प्रतियोगिताया अनतिरिक्तवृत्ति सत् यदवच्छेदकमित्यादिविवक्षाया आवश्यकत्वेन तादृशाभावीयप्रतियोगितायां द्रव्यत्वादेः अतिरिक्तवृत्तित्वेनैव नातिव्याप्तिः। अथ सामान्यधर्मस्य विशेषाभावीयप्रतियोगितायामवच्छेदकत्वस्वीकारे मिश्रलक्षणे प्रमेयत्वेन गगनाभावस्य साध्याभावव्यापकतया तत्प्रतियोगितावच्छेदकत्वस्य प्रमेयत्वे सत्त्वाद् वाच्यत्वसाध्यकप्रमेयहेतुकेऽव्याप्तिकथनं दीधितिकृतो विरुध्येत; न च प्रमेयत्वस्य प्रमाविषयत्वरूपस्य विषयत्वापेक्षया गुरुत्वेनाभावप्रतियोगितावच्छेदकत्वं न संभवतीत्यव्याप्तिसंगतिरिति वाच्यम्; एवं सति प्रमेयत्वस्य गुरुत्वेनानवच्छेदकत्वादित्युपेक्ष्य प्रमेयत्वव्यधिकरणप्रतियोगिताया अप्रसिद्धत्वादिति लेखनस्वारस्यभङ्गादिति चेन्न; इति धूमवान् वह्नेरित्यादौ धूमाभावव्यापको यो वह्नित्वेनायोगोलकवृत्तितदन्यवृत्तिवह्न्युभयाभावः तत्प्रतियोगितावच्छेदकत्वमादायातिव्याप्तिवारणाय स्वसमानाधिकरणस्वनिरूपकाभाववद्वृत्तितानवच्छेदकस्वावच्छेदकस्य प्रतियोगितावच्छेदकेत्यनेन विवक्षणीयतया उक्तस्थले प्रमेयत्वस्यातथात्वेनाव्याप्तिकथनविरोधाभावात्;**

अत्र केचित्––प्रतियोगिताया न्यूनवृत्तिभिन्नं सद् यदवच्छेदकमिति प्रथमपरिष्कारातिव्याप्तिवारणानुरोधेन वस्तुगतिमनुरुध्य वा द्रव्यत्वस्य तादृशभावप्रतियोगितावच्छेदकत्वनिराकरणमित्याहुः ।

ननु द्रव्यत्वेन धूमाभावीयप्रतियोगितायां द्रव्यत्वस्यावच्छेदकत्वास्वीकारे शुद्धधूमवत्तानिश्चयोत्तरं द्रव्यत्वेन धूमाभाववत्ताबुद्ध्यनापत्तिः; तस्याः धूमवत्तानिश्चयप्रतिबद्ध्यतावच्छेदकधूमत्वावच्छिन्नप्रतियोगिताकाभावत्वावच्छिन्नप्रकारताशालिबुद्धित्वाक्रान्तत्वादिति चेन्न; शुद्धधूमत्वावच्छिन्नप्रतियोगितासंबन्धावच्छिन्नशुद्धधूमत्वावच्छिन्नप्रकारताघटितधर्मस्यैव धूमवत्तानिश्चयप्रतिबद्ध्यतावच्छेदकत्वोपगमात्; तादृशप्रतीतौ द्रव्यत्ववैशिष्ट्यस्याधिकस्य धूमांशे भानात् नोक्तापत्तिः; [1]द्रव्यत्वेन धूमाभावीयप्रतियोगितायां द्रव्यत्वस्यावच्छेदकत्ववादिनोऽपि महानसीयधूमो नास्तीति बुद्धेः धूमवत्तानिश्चयप्रतियबद्ध्यत्ववारणाय निरुक्तरूपस्य प्रतिबद्ध्यतावच्छेदकत्वोपगमस्य आवश्यकत्वाच्च ।

धूमशून्येऽङ्गारशेषे धूमवद्वृत्तित्वविशिष्टवह्न्यभावासत्वात् तादृशाभावस्य न धूमाभावसमनैयत्यसंभव इति धूमकालावच्छिन्नेति धूमवद्वृत्तित्वे विशेषणम्; उक्तप्रतीतेः वह्नित्वेऽवच्छेदकतावगाहित्वेऽपि तद्विषयस्य सामान्यरूपेण विशेषाभावत्वाप्रसक्तेः इत्यभिप्रायेणाह––'अस्तु वा' इति । घटभिन्नत्वेनेति । अत्र धूमत्वस्यावच्छेदकताप्रयोजकतृतीयान्तोल्लेख्यत्वाभावाद् घटधूमभेदद्वयावच्छिन्नप्रतियोगिताकभेदवत्त्वरूपान्यतरत्वावच्छिन्नरूपप्रतियोगिनि साक्षाद् विशेषणत्वाभावाच्च न तादृशाभावप्रतियोगितावच्छेदकत्वशङ्केति ध्येयम् । भेदत्वेनेति । अत्राप्ययोगोलकभेदशून्ये घटाभाववति तादृशप्रतीत्यनुदयापत्तेः न तादृशान्यतरत्वमात्रस्य प्रतियोगितावच्छेदकत्वम् । भेदत्वेनायोगोलकभेदघटान्यतराभावस्य

[1] निरुक्तरूपस्य प्रतिबध्यतावच्छेदकत्वोपगमेऽपि सिद्धान्तिमते गौरवं नास्तीति प्रतिपादयति––द्रव्यत्वेनेत्यादिना––स्व.

संयोगसंबन्धावच्छिन्नप्रतियोगिताकस्य केवलान्वयित्वेन नायोगोलकभेदाभावसमनैयत्यं; स्वरूपसंबन्धावच्छिन्नप्रतियोगिताकस्य तत्समनैयत्यसंभवेऽपि अयोगोलकभेदशून्यस्य स्वरूपसंबन्धेन तादृशान्यतरत्वावच्छिन्नवतोऽप्रसिद्धत्वेनातिप्रसङ्गविरहात् तादृशान्यतरत्वस्यैव प्रतियोगितावच्छेदकत्वसंभवेनातिव्याप्त्यप्रसक्तेः तादृशाभावोपेक्षेति ध्येयम् । 'न्यूनवृत्तित्वं च' इति । यद्यपि वाच्यत्वसाध्यके लक्षणघटकज्ञेयत्ववत्वेन वाच्यत्वाभावीयप्रतियोगिताया न्यूनवृत्त्यैव ज्ञेयत्ववत्वं न्यूनवृत्तित्वनिरुक्तौ स्वपदेन तदभावीयप्रतियोगिताया एवोपादेयतया समनियताभावैक्यमते तादृशाभावस्य वाच्यत्ववत्वेन ज्ञेयत्वाभावाभिन्नतया तदीयप्रतियोगिताया ज्ञेयत्वेऽपि सत्वात्, तथापि स्वसमानाधिकरणभेदप्रतियोयोगितावच्छेदकत्व-स्वावच्छेदकत्व-सामानाधिकरण्यैतत्त्रितयसंबन्धावच्छिन्नप्रतियोगिताकतदभावीय - प्रतियोगित्वाभाववत्तदभावीयप्रतियोगितावच्छेदकं न्यूनवृत्तिभिन्नं सद् यदवच्छेदकमित्यनेन विवक्षणीयमिति न दोषः । एतत्कल्पे साध्यव्यापकतावच्छेदकरूपावच्छिन्नप्रतियोगितायामपि स्वन्यूनवृत्तिधर्मानवच्छिन्नत्वं देयम्; तेन वह्निसाध्यके वह्नित्वेन महानसीयवह्निघटान्यतराभावस्य यावदन्तर्गतस्य प्रतियोगिताया न्यूनवृत्तिभिन्नावच्छेदकाप्रसिद्धावपि न क्षतिः ।

वह्न्याद्यभावीयप्रतियोगितायाः प्रमेयसामान्यवृत्तित्वे त्वाह— 'अथवा' इति । 'स्वव्यापकतत्कान्यत्व' इति । स्वनिरूपकत्व-स्वाश्रयसमानाधिकरणभेदप्रतियोगितावच्छेदकत्व-स्वाश्रयसामानाधिकरण्यैतत्त्रितयसंबन्धेनावच्छेदकताविशिष्टान्यप्रतियोगितावच्छेदकमेव तादृशोभयाभाववत्प्रतियोगितावच्छेदकमित्यनेन विवक्षणीयमिति नाननुगमादिः दोषः; एतत्कल्पे व्यापकतावच्छेदकरूपावच्छिन्नप्रतियोगितायामपि निरुक्तत्रितयसंबन्धेनावच्छेदकताविशिष्टान्यत्वं देयं; तेन वह्नित्वेन महानसीयवह्निघटान्यतराभावीयतादृशावच्छेदकत्वस्याप्रसिद्धावपि नाव्याप्तिः ।

अत्र स्वव्यापकत्वशरीरे स्वाधिकरणत्वस्य प्रतियोगितावच्छेदकताघटकसंबन्धेनैव विवक्षणीयतया यादृशाभावप्रतियोगितावच्छेदकताघटकः कालिकसंबन्धो विषयितासंबन्धो वा तदभावीयतादृशप्रतियोगितावच्छेदकत्वस्य स्वव्यापकतत्कान्यत्वाप्रसिद्धया अप्रसिद्धिरत आह---'[1]स्वन्यूनवृत्तिभिन्नायाः प्रतियोगितायाः' इति । अवच्छिन्नत्व-सामानाधिकरण्यसमानाधिकरणभेदप्रतियोगितावच्छेदकत्वैतत्त्रितयसंबन्धेन धर्मविशिष्टान्यायाः इत्यर्थः; तेन नाननुगमः । एतत्कल्पे व्यापकतावच्छेदकरूपावच्छिन्नप्रतियोगितायामपि निरुक्तत्रितयसंबन्धेन धर्मविशिष्टान्यत्वं देयं, तेन वह्नित्वेन महानसीयवह्निघटान्यतराभावीयप्रतियोगितायाः तादृशत्वविरहेऽपि अव्याप्तिः ।

निरुक्तकल्पत्रयेऽपि भावरूपप्रतियोगिसामानाधिकरण्यनिवेशावश्यकतया गौरवाद् आह---'तत्प्रतियोगितासमानाधिकरण' इति । एतत्कल्पे प्रतियोगिनि भावत्वनिवेशः प्रयोजना[2]भावाद्धेयः ।

'असंभव' इति । हेतुसामानाधिकरण्यांशे स्वरूपसंबन्धनिवेशपर्यवसितभावभिन्नत्वनिवे[3]शाभिप्रायेण । 'अव्याप्तिर्वा' इति । व्यापकतावच्छेदकरूपे भाववृत्तित्वनिवेशकल्पाभिप्रायेण; तत्कल्पे [4]भावभिन्नत्वा-

[1] अत्र पाठभेदः गादाधर्यां दर्शितः---स्व.

[2] विशेषणताविशेषेण किञ्चिद्विशिष्टस्वाभावनिष्ठतादृशाभावत्वरूपप्रतियोगितावच्छेदकावच्छिन्नसामान्याधिकरण्यमस्तीति व्यभिचारिणि अतिव्याप्तिः; तद्वारणाय प्रतियोगितावच्छेदकावच्छिन्नसामानाधिकरण्यं भट्टाचार्यैः विवक्षितम् । एतत्कल्पे प्रतियोगिनि भावत्वं न निवेशनीयमिति प्रतिपादयति 'एतत्कल्प' इति---स्व.

[3] यद्यपि भट्टाचार्यैः कपिसंयोगात्मकाभावस्य दैशिकविशेषणतया हेतुसामानाधिकरण्यविरहेण भावभिन्नत्वविरहेण च इति वक्ष्यमाणत्वाद् भावभिन्नत्वविशेषणमपि आवश्यकमिति प्रतिभाति तथापि हेतुसामानाधिकरण्ये स्वरूपसंबन्धानिवेशेन दोषवारणाद् भावभिन्नत्वनिवेशो अनास्थयोक्तमित्यभिप्रायः---स्व.

[4] भावभिन्नत्वानिवेशादित्यस्य हेतुसामानाधिकरण्यांशे स्वरूपसंबन्धानिवेशादित्यर्थः---स्व.

निवेशात् 'प्रमेयसाध्यकस्थल' इति। ननु एतत्कल्पे धूमसाध्यके कालिकसंबन्धेन धूमाभावप्रतियोगितावच्छेदकविशिष्टवह्निसामानाधिकरण्यमादायातिव्याप्तिवारणाय प्रतियोगितावच्छेदकताघटकसंबन्धेन प्रतियोगितावच्छेदकवैशिष्ट्यं निवेशनीयं; तथा च वह्निसाध्यकसद्धेतौ विषयितया वह्नित्वविशिष्टाभावस्य प्रतियोगितावच्छेदकताघटकविषयितया प्रतियोगितावच्छेदकविशिष्टज्ञानादिना पर्वतादौ सामानाधिकरण्याभावादव्याप्तिवारणाय साध्यतावच्छेदकनिष्ठावच्छेदकतायां साध्यतावच्छेदकताघटकसंबन्धवच्छिन्नत्वनिवेशावश्यकतया कथं संयोगादिसंबन्धावच्छिन्नप्रमेयत्वनिष्ठावच्छेदकताकाभावमादाय लक्षणसमन्वय इति चेन्न; अतिव्याप्तिवारणाय साध्यतावच्छेदकताघटकसंबन्धेनैव प्रतियोगितावच्छेदकवैशिष्ट्यस्य निवेश्यत्वात् साध्यतावच्छेदकनिष्ठावच्छेदकतायां तत्संबन्धावच्छिन्नत्वानिवेशत्। 'लघुरूपसमनियत' इति। प्रमेयवह्नित्वाद्यवच्छिन्नसाध्यक इत्यर्थः; यद्यपि गुरुधर्मस्यावच्छेदकत्वं सिद्धान्ते आवश्यकम्, अन्यथा साध्यवन्निष्ठगोत्वाभावीयप्रतियोगितायां लाघवेन गोसमवेतत्वस्यैवावच्छेदकतया तद्भिन्नगवेतरासमवेतत्वसकलगोवृत्तित्वाभ्यां गोत्वभिन्नाभावस्य यावदन्तर्गतस्य गोत्वरूपप्रतियोगिसामानाधिकरण्याभावादसंभवापत्तेः, तथापि तत्समनियताभावान्तरमादाय तस्यापि प्रतियोगिसामानाधिकरण्यात् नासंभव इति तदनावश्यकम्।

ननु प्रमेयवह्निसाध्यके विषयितया प्रमेयवह्नित्वविशिष्टाभावस्यैव प्रसिद्धेः नाव्याप्तिः; न हि वह्नित्वस्यैव तादृशाभावप्रतियोगितावच्छेदकत्वं संभवति; प्रमेयवह्न्यविषयकवह्निविषयकज्ञानवति तादृशाभावासत्वप्रसङ्गात्; न च संयोगेन प्रमेयवह्निसाध्यके विषयितया प्रमेयवह्नित्वविशिष्टस्य संयोगेन योऽभावः तस्य केवलान्वयितया वह्नित्वस्यावच्छेदकत्वेऽपि संयोगेन विषयितया वह्नित्वविशिष्टस्यासत्वादेव नातिप्रसंग इति वाच्यम्; प्रतियोगितायां साध्यतावच्छेदकसंबन्धावच्छिन्नत्वस्य प्रयोजनाभावेनानिवेशात् समवायेन तादृशाभावप्रसिद्धेः। न च प्रमेयत्वविशिष्टात्मत्वसाध्यक

ईश्वरत्वहेतुके विषयितया साध्यतावच्छेदकविशिष्टाभावस्य हेतुसामानाधिकरण्याभावेन व्यधिकरणधर्मावच्छिन्नाभावस्याप्रसिद्धेः अव्याप्तिरिति वाच्यम्; आत्मत्वमात्रविषयकज्ञान-प्रमेयत्वमात्रविषयकज्ञानान्यतरत्व-विशिष्टस्य साध्यतावच्छेदकरूपेणाभावस्यैव प्रसिद्धेरिति चेन्न; प्रमेयत्व-विशिष्टेश्वरावृत्तिसाध्यक ईश्वरत्वहेतुके विषयितया साध्यतावच्छेदक-विशिष्टाभावस्य हेतुसामानाधिकरण्यविरहेण व्यधिकरणधर्मावच्छिन्नाभा-वमादायातिव्याप्तेः साध्यतावच्छेदकनिष्ठावच्छेदकतायां विषयितासंबन्धा-नवच्छिन्नत्वनिवेशस्यावश्यकतयोक्तगुरुधर्मावच्छिन्नसाध्यके तादृशावच्छेद-कताकाभावाप्रसिद्धचा अव्याप्तेर्दुर्वारत्वात् ।

'पूर्वोक्तदिशातिव्याप्तेः' इति । पूर्वक्षणवृत्तित्वविशिष्टस्वाभाव-रूपप्रतियोगिसामानाधिकरण्यमादायातिव्याप्तेरित्यर्थः । ननु पूर्वक्षणवृत्ति-त्वविशिष्टस्वाभावत्वे तत्प्रतियोगितासमानाधिकरणतत्प्रतियोगितानिरूप-काभाववद्वृत्तितावच्छेदकान्यतत्प्रतियोगितावच्छेदकत्वाभावात् नोक्ताति-व्याप्तिरिति चेन्न; तादृशविवक्षाकल्पे वह्निसाध्यके यावदन्तर्गतवह्नित्वेन महानसीयवह्निघटान्यतराभावस्य तादृशप्रप्रतियोगितावच्छेदकाप्रसिद्धचा अव्याप्तिवारणाय साध्यव्यापकतावच्छेदकरूपावच्छिन्नप्रतियोगितायामपि स्वसमानाधिकरणस्वनिरूपकाभाववद्वृत्तितावच्छेदकधर्मावच्छिन्ना या या प्रतियोगिता तत्तदन्यत्वनिवेशावश्यकतया संयोगेन द्रव्यस्य अव्याप्यवृत्ति-त्वमते धूमाभावस्य लक्षणघटकत्वानुपपत्त्या व्यधिकरणधर्मावच्छिन्नाभाव-मादायातिव्याप्तेर्वारणाय प्रतियोगिताया अनतिरिक्तवृत्ति सत् यदवच्छेद-कमित्येतादृशविवक्षणस्यैवादरणीयत्वेन पूर्वक्षणवृत्तित्वविशिष्टस्वाभावत्वे तादृशावच्छेदकत्वाक्षतेरतिव्याप्तेर्दुर्वारत्वात्; न च तादृशप्रतियोगिता-वच्छेदकावच्छिन्नभावसामानाधिकरण्यनिवेशान्नातिव्याप्तिः; सिद्धान्तेऽपि प्रतियोगितावच्छेदकावच्छिन्ने भावत्वनिवेशस्यावश्यकतया मन्मते तन्निवेशे गौरवविरहादिति वाच्यम्; सिद्धान्ते तत्प्रतियोगितासमानाधिकरणेत्यादि-कल्पस्यैवादरणीयतया पूर्वक्षणवृत्तित्वविशिष्टस्वाभावत्वरूपप्रतियोगिताव-

च्छेदकावच्छिन्नसामानाधिकरण्यमादायातिव्याप्त्यप्रसक्तेः तदनावश्यकत्वात्; किञ्च एतन्मते संयोगेन द्रव्यस्याव्याप्यवृत्तित्वमते संयोगेन वह्न्यादिसाध्यके साध्यतावच्छेदकसंबन्धघटितव्यापकताप्रसिद्ध्यर्थम् साध्यवन्निष्ठाभावे प्रतियोगिवैयधिकरण्यनिवेशावश्यकतया वाच्यत्वसाध्यकेऽपि दर्शितविशिष्टाभावमादाय लक्षणसमन्वयसंभवे प्रतियोग्यवृत्तिश्चेति ग्रन्थानुत्थितिः गौरवं च ।

## गादाधरी

(३४) व्यापकतावच्छेदकरूपे भाववृत्तित्वविशेषणम् ।

न च भावभिन्नाभावविवक्षणेऽपि अयमात्मा ज्ञानादित्यादौ दैशिकविशेषणतया हेतुसमानाधिकरणस्य साध्यतावच्छेदकतावच्छिन्नव्यापकतावच्छेदकीभूतकालिकसंबन्धावच्छिन्नप्रतियोगिताकाकाशाभावाभावत्वाद्यवच्छिन्नप्रतियोगिताकस्य आकाशाभावादेः स्वप्रतियोगितावच्छेदकावच्छिन्नभावसामानाधिकरण्यासंभवात् लक्षणसमन्वयासंभव इति वाच्यम्, [1]आकाशाभावीयतादृशाभावत्वस्य दैशिकविशेषणतया साध्यवद्वृत्तेः आकाशाभावस्य प्रतियोगितावच्छेदकतया साध्यव्यापकतावच्छेदकत्वविरहेण तदवच्छिन्नाभावस्य लक्षणाघटकत्वात्; अस्तु वा व्यापकतावच्छेदकरूपांश एव भाववृत्तित्वविशेषणम्, इदं वाच्यं ज्ञेयत्वादित्यादौ च व्यधिकरणसंबन्धावच्छिन्नप्रतियोगिताकवाच्यत्वाद्यभावस्य प्रतियोगितावच्छेदकं न प्रतियोगितावच्छेदकसंबन्धघटितव्या-

[1] आकाशाभावस्यात्मत्वप्रकारकप्रमाविषेष्यतात्वेन घटाभावसमनियततया भावसामानाधिकरण्यासंभवेन इयमाशङ्का अनुपपन्ना; इदमेव साधनं कुतो न कृतमित्याशङ्कामपि निरस्यति आकाशाभावीयेत्यादिनेति। वस्तुतो व्यापकत्वविरहात् कालिकसंबन्धेन घटाभावप्रकारकप्रमाभावमादायाव्याप्तिर्बोध्या ।--रा.

पकतावच्छेदकम्, अतस्तादृशाभावस्य न लक्षणघटकतेति नोक्त-प्रतियोग्यवृत्तिश्चेत्यादिग्रन्थासंगतिरिति ।

न च प्रतियोगितावच्छेदकसंबन्धेन व्यापकताविवक्षणेऽपि इदं वाच्यं ज्ञेयत्वाद् इत्यादौ विषयितादिसंबन्धेन वाच्यत्ववत्वा-दिमतो ज्ञानादेः यः स्वरूपसंबन्धेनाभावः तस्य स्वप्रतियोगिता-वच्छेदकीभूतस्वरूपसंबन्धघटितवाच्यत्वनिष्ठव्यापकतावच्छेदक - वाच्यत्वत्वाद्यवच्छिन्नप्रतियोगिताकतया हेतुसमानाधिकरणतया स्वरूपसंबन्धेन प्रतियोगितावच्छेदकावच्छिन्नवाच्यत्वादिसमाना - धिकरणतया च तत्र व्यधिकरणधर्मावच्छिन्नाभावानभ्युपगमेऽपि तमादायैव लक्षणसामञ्जस्यमिति तादृशग्रन्थासंगतितादवस्थ्य-मिति वाच्यम्, धूमवान् वह्नेः इत्यादौ संयोगादिसंबन्धावच्छिन्न-प्रतियोगिताकधूमाद्यभावस्य कालिकसंबन्धेन धूमत्वादिविशिष्ट-वह्न्यादिना संयोगेन—समवायसंबन्धावच्छिन्नप्रतियोगिताकस्य अयोगोलकावृत्तिजातित्वाद्यवच्छिन्नाभावस्य कालिकादिसंबन्धेन तादृशजातित्वादिविशिष्टायोगोलकीयरूपादिना समं समवायेन—स्वरूपसंबन्धावच्छिन्नप्रतियोगिताकस्य धूमवत्त्वप्रकारकप्रमाविष-यत्वाद्यभावस्य कालिकादिसंबन्धेन—तादृशविषयत्वत्वादिविशिष्ट-संयोगादि[1]ध्वंसेन अनुयोगिताविशेषसंबन्धेन तादृशविषयत्वत्वा-दिविशिष्टतादृशविषयत्वाद्यभावेन च समं स्वरूपसंबन्धेन——विष-यतासंबन्धावच्छिन्नप्रतियोगिताकधूमवत्त्वप्रकारकप्रमाद्यभावस्य विषयितासंबन्धेन, कालिकसंबन्धेन वा तादृशप्रमात्वविशिष्टं यद-

[1] न्यायरत्ने संयोगध्वंसेनेति प्रतीकधारणम्——स्व.

**योगोलकादिविषयकज्ञानं तेन समं विषयतासंबन्धेन---सामानाधिकरण्यसत्त्वादतिव्याप्तेर्वारणाय प्रतियोगितावच्छेदकत्व[1]घटकसंबन्धेनैव प्रतियोगितावच्छेदकविशिष्टत्वस्य विवक्षणीयतया वह्निमान् धूमाद् इत्यादौ विषयितासंबन्धेन द्रव्यत्ववत्वादिमतः समवायादिसंबन्धावच्छिन्नाभावस्य स्वप्रतियोगितावच्छेदकसमवायादिसंबन्धघटितद्रव्यत्वादिनिष्ठव्यापकतायां स्वरूपसंबन्धेन अवच्छेदकीभूतो यो द्रव्यत्ववत्वादिः तदवच्छिन्नप्रतियोगिताकस्य स्वप्रतियोगितावच्छेदकत्वघटकविषयितादिसंबन्धेन प्रतियोगितावच्छेदकविशिष्टज्ञानादिना समं हेत्वधिकरणे स्वप्रतियोगितावच्छेदकसमवायादिना सामानाधिकरण्यं न संभवतीति व्यापकतावच्छेदकतायामपि स्वप्रतियोगितावच्छेदकताघटकसंबन्धावच्छिन्नत्वस्यावश्यं निवेशनीयत्वेन इदं वाच्यं ज्ञेयत्वाद् इत्यादौ दर्शिताभावानां लक्षणाघटकत्वादिति दिक्[2] ।**

कृष्णंभट्टियम्

उक्तप्रतीतौ तृतीयया वह्नित्व[3]वैशिष्ट्योल्लेखो न संभवति । तदभावस्य सामान्यरूपेण विशेषाभावत्वापत्तेः[4] इत्यनायत्त्या वह्नित्वस्य प्रतियोगितावच्छेदकत्वमावश्यकमित्यत आह 'अस्तु वा' इति । पूर्वाभिमत-

[1] प्रतियोगितावच्छेदकतावच्छेदकसंबन्धेनैव---अ.

[2] व्यापकतावच्छेदकताघटकसंबन्धेन प्रतियोगितावच्छेदकताघटकवैशिष्टयभिधानेनातिव्याप्तिवारणसंभवे स्वप्रतियोगितावच्छेदकताघटकसंबन्धेन तद्वैशिष्ट्यं निवेश्य वह्निमान् धूमादित्यादौ अव्याप्तिं प्रदर्श्य तेनैव संबन्धेन व्यापकतावच्छेदकत्वकथनमयुक्तमिति ध्येयम्---रा.

[3] वैशिष्ट्यस्योल्लेखो---अ.

[4] अनन्तरम् अनुद्धारात् इत्यधिकपाठः---अ.

पर्याप्तिप्रवेशं स्मारयति––'प्रति' इति। वस्तुतस्तु पूर्वकल्पेऽपि पर्याप्ति-निवेश आवश्यकः; अन्यथा वह्निसाधारणाधेयतायाः प्रतियोगितावच्छे-दकत्वाद् अतिव्याप्तितादवस्थ्यात्; परं तु आधेयता नानैव तदनुगमकं चाधेयतात्वं वृत्तित्वविशेषसंबन्धेन धूमवत एव वा प्रतियोगितावच्छेद-कत्वम् तदवच्छिन्नाधिकरणतायाश्च धूमकालावच्छेदनैव धूमवति सत्त्वाद् इत्युच्यते; तदा तत्र न प्रयोजनमित्याशयेन तत्कल्पे तदनुत्कीर्तनमिति।

एतेन यथा वह्नित्वेन धूमवद्वृत्तित्वविशिष्टाभावस्य वह्नित्व-सहितम[1]सहितं वा प्रतियोगिविशेषणमेव प्रतियोगितावच्छेदकम् तथा वह्नित्वेन तार्णतार्णदहनाभावस्यापीति सूचितम्। तेन चक्रवर्त्तिलक्षणे नेदृशाभावमादाय दोषः।

'घटभिन्नत्वेन' इति। नन्वत्र धूमत्वमात्रं प्रतियोगितावच्छेदकं स्यात्[2]। वह्नित्वेन प्रमेयसामान्याभावभिन्नस्य वह्नित्वेन महानसीय-वह्निघटान्यतराभावस्येव घटभिन्नत्वेन प्रमेयसामान्याभावान्यस्य[3] एतद-भावस्य यत्किञ्चित्प्रतियोग्यवृत्तिधर्मावच्छिन्नाभावप्रभेदस्य सर्वमतसिद्ध-त्वात्। वह्नित्वेन प्रमेयसामान्याभावप्रतियोगिताया वह्निमात्रवृत्तित्वम-तेऽपि वह्नित्वावच्छिन्नमहानसीयवह्निघटान्यतरवृत्तिप्रतियोगित्वान्तरमा-वश्यकम् कृत्स्नवह्न्यवृत्तित्वात्। घटव्यावृत्तत्वे तु सामान्यरूपेण विशेषा-भावत्वापत्तेः। अन्यतरत्वेन प्रतियोग्युल्लेखश्च प्रतियोगिताया व्यासज्य-वृत्तित्वं नास्तीति सूचनाय।

केचित्तु––धूमत्वमात्रस्यावच्छेदकत्ववारणाय प्रतियोगिविशेषणता-पन्नांशे अवच्छेदकत्वावगाहिप्रत्ययः। असति बाधके प्रतियोगिविशेषणम्

[1] असहितमिति नास्ति––अ.

[2] अनन्तरं 'न स्यात्' इत्यधिकपाठः––अ.

[3] प्रमेयसामान्याभावस्य––अ.

यद्यत् तत्रैवावच्छेदकत्वमवगाहते। सति च बाधके न क्वापि तत्र समुदायस्य प्रत्येकानन्यत्वात्; अन्यथा नीलो घटो नास्तीत्यत्रापि घट-सामान्याभावादिभानापत्तेरिति नियममाहुः।

'भेदत्वेन' इति। अयोगोलकभेदशून्यघटाभाववति तत्प्रतीतिसत्त्वात् नान्यतरत्वं प्रतियोगितावच्छेदकम्। न च भेदत्वेन अयोगोलकभेद-घटान्यतराभावः कुतो नोक्तः; संयोगाद्यवच्छिन्नप्रतियोगिताकस्य तस्य केवलान्वयित्वात्। विशेषणताविशेषावच्छिन्नस्य च तस्यान्यतरत्वे एव प्रतियोगितावच्छेदकतासंभवात्। अयोगोलकभेदशून्यस्य तत्संबन्धेन घट-वतोऽप्रसिद्धत्वात्। विशेषणताविशेषावच्छिन्नायोगोलकभेदद्रव्यान्यतराभा-वस्तु नोक्तः; लाघवेनायोगोलकभेदत्वस्यैव तत्प्रतियोगितावच्छेदकत्वात्। तेन संबन्धेन प्रतियोगितावच्छेदकावच्छिन्नसामानाधिकरण्यानुपपत्तेश्च। 'एवम्' इति। घटादावपि तादृशप्रतीतिसत्त्वात् नान्यतरत्वं प्रतियोगिता-वच्छेदकम्। स्वमते धूमभेदस्य लक्षणाघटकत्वेऽपि मतान्तरे साध्यता-वच्छेदकसंबन्धघटितव्यापकतासत्त्वात् तत्रापि इयं शङ्केत्याशयेन प्रदर्शनम्। धूमभेदमादाय चेदतिव्याप्तिर्वार्यते; तदा मतान्तराश्रयणमपि सुकरमिति वा आशयः। धूमाद्यभावप्रतियोगितायाः न्यूनवृत्तिभिन्नं द्रव्यत्वादिकमा-दाय दोषादाह—'अवच्छेदकम्' इति। ननु यत्किञ्चित्प्रतियोग्यवृत्तित्वं न्यूनवृत्तित्वं यत्किञ्चित्त्वघटितत्वेन दुर्वचमित्यत आह—'न्यूनेति'। न च ज्ञेयत्वत्वेन वाच्यत्वाभावस्य एकमात्रवृत्तिप्रतियोगिताकतया तन्न्यून-वृत्तित्वाप्रसिद्धिः। तादृशभावस्य वाच्यत्वत्वेन घटाद्यभावाभिन्नत्वेन तत्प्रसिद्धेः। एवमेकमात्रवृत्तिसाध्यके एतद्रूपाभावादेः एतद्रूपकालावच्छिन्नै-तद्रूपवद्वृत्तित्वावच्छिन्नै[1]तद्रूपान्यप्रमेयाभावाभिन्नतया तत्प्रसिद्धिर्बोध्या।

वस्तुतस्तु स्वसमानाधिकरणभेदप्रतियोगितावच्छेदकत्वस्वसमाना-धिकरणत्वोभयाभावो निवेश्यः; भेदे चोक्तरीत्या प्रतियोग्यवृत्तित्वमा-

[1] एतद्रूपत्वे न्यूनवृत्तित्ववारणाय—अ.

वश्यकम् । अन्यथा द्रव्यत्वाभावादेः तादृशप्रतियोगितावच्छेदकाप्रसिद्ध्या अव्याप्तेः ।

'अव्याप्तिः' इति । न च हेतुसमानाधिकरणाभावेऽपि तादृशधर्मावच्छिन्नप्रतियोगिताकत्वनिवेशात् नायं दोषः; तथा सति धूमाभावादीनामुक्तरीत्या लक्षणाघटकत्वेन व्यधिकरणधर्मावच्छिन्नाभावस्य वह्नित्वेन घटाभावाभिन्नतया अतिव्याप्तेः; धूमाभावस्य प्रतियोगितानतिरिक्तवृत्तिसत्त्वद्रव्यत्वाद्यवच्छिन्नसामानाधिकरण्यादतिव्याप्तेः । 'अवच्छेदकम्' इति । एवमुत्तरत्रापि । वह्नित्वेन घटभिन्नत्वेन वा महानसीयवह्निघटान्यतराभावस्य तादृशावच्छेदकाप्रसिद्धिः महानसीयवह्न्यभावाभिन्नत्वमते तु तादृशावच्छेदकं महानसीयवह्नित्वमेवेत्यव्याप्तिरतो रूपमपि निरुक्तन्यूनवृत्तिभिन्नत्वेन निरुक्तानतिरिक्तवृत्तित्वेन वा विशेषणीयम् । तेन धूमवान् वह्नेरित्यादौ साध्यासामान्याभावादेः प्रमेयसामान्यवृत्तिप्रतियोगिताकत्वेऽपि नातिव्याप्तिः ।

नन्वत्र स्वनिष्ठव्याप्यत्वं प्रतियोगितावच्छेदकताघटकसंबन्धेन ग्राह्यम् । अन्यथा गगनादेः स्वरूपसंबन्धेन विषयितादिसंबन्धेन च [1]वृत्तिमत्त्वे अप्रसिद्धेः; प्रमेयसामान्यवृत्तिप्रतियोगितायाः तत्संबन्धेन गगनव्यापकत्वात् । एवं च तेन[2] संबन्धेन वह्नित्वादेः साध्यतावच्छेदकत्वेऽप्रसिद्धिरित्यत आह—स्वन्यूनेति । अत्रापि एकव्यक्तिसाध्यके साध्यसामान्याभावस्य स्वन्यूनवृत्तिप्रतियोगित्वाप्रसिद्धिः उक्तरीत्या उभयाभावं वा निवेश्य वारणीया । नन्वप्रसिद्धिवारणाय प्रतियोगितावच्छेदकताघटकसंबन्धेन स्वनिष्ठव्याप्यत्वं यत् तद्घटितं स्वव्यापकतत्कान्यत्वतत्सामानाधिकरण्योभयाभाववत्त्वं रूपविशेषणं पर्यवसन्नम् । एवं च कालिकसंबन्धेन वह्नित्वविशिष्टस्य साध्यत्वे साध्याभावो न लक्षणघटकः; किन्तु व्यधि-

[1] वृत्तिमत्त्वेन—अ.

[2] तेन तेन—अ.

करणधर्मावच्छिन्नप्रतियोगिताको द्रव्यत्वादिना गुणाद्यभाव इति किम् ईदृशप्रतियोगिताविशेषणेनेति चेन्न; लाघवमात्रादेवोत्तरकल्पस्यावतारणीयत्वात्। घटभिन्नत्वेन घटमहानसीयवह्न्यन्यतराभाववारणाय च रूपावच्छिन्नप्रतियोगितायामपि स्वन्यूनवृत्तिभिन्नत्वं निवेश्यम्।

अत्र कल्पत्रयेऽपि यथायथं धूमवद्वृत्तित्वविशिष्टद्रव्याभाववह्निधूमोभयाभावादिवारणाय प्रतियोगितावच्छेदकतापर्याप्तेः वाच्यतया गौरवम्। एवं समनिताभावभेदपक्षे वह्नित्वगगनाभ्यां वह्नित्वेन्धनत्वाभ्यां वा वह्न्यभावमादायासंभवः। वह्नित्वेन घटाभावमादाय तथात्वासंभवात्। एवं यद्यपि महानसीयवह्न्यभावस्य वह्नित्वेन महानसीयवह्निघटान्यतराभावैक्येऽपि अवच्छेदकविशेषणेन वह्नित्ववारणाद् अवच्छेदकतापर्याप्त्यधिकरणशब्देन [1]न महानसीयवह्नित्वस्योपादानम् रूपविशेषणस्य वह्नित्वेऽसत्त्वेन तस्य लक्षणाघटकत्वात्। तथापि पर्वतान्यत्वविशिष्टसत्ताभावमादायाव्याप्तिः। सत्तात्वे रूपविशेषणसत्त्वात्, विशिष्टसत्तात्वस्यावच्छेदकतापर्याप्त्यधिकरणत्वात्। तस्य पर्वतान्यत्वविशिष्टत्वेन सत्तापर्वतत्वान्यतरा[2]भावत्वरूपत्वेऽपि तादृशविशिष्टत्वस्यावच्छेदकविशेषणासत्त्वेन, दुर्धरत्वादतः वृत्तिमद्रूपपर्याप्तप्रतियोगितावच्छेदकताकत्वमपि निवेश्यमिति गौरवमिति तदुभयानिवेशमभिप्रेत्याह—तत्प्रतियोगितेति। वृत्तित्वं प्रतियोगितावच्छेदकसंबन्धेन; प्रयोजनं स्फुटम्। धूमाभावस्य प्रतियोगितासमानाधिकरणतत्प्रतियोगितानिरूपकीभूताभाववद्वृत्तितावच्छेदकान्यत्वस्य वह्नित्वादौ सत्त्वादतिव्याप्तिरतोऽवच्छेदकेति। तदन्यान्तं रूपविशेषणमपि कार्यम्। तेन घटभिन्नत्वेन घटमहानसीयवह्न्यन्यतराभावादिनिरासः। प्रतियोगितायां वा स्वावच्छिन्नसमानाधिकरणाभावनिरूपितत्वे सति स्वसमानाधिकरणं यद्यत्तदन्यत्वं देयम्। वह्निघटोभयत्वादीत्यादिना जलवृत्तिद्र-

[1] नकारो नास्ति—अ.

[2] अभावरूपत्वेऽपि—अ.

व्यत्वाद्यभावपरिग्रहः। चतुर्थपक्षे तु समवायसंबन्धावच्छिन्नजलत्वविशिष्टत्वावच्छिन्नाभावस्य समवायावच्छिन्नाधेयतासंबन्धेन जलावच्छिन्नाभावस्य च साध्यव्यापकतावच्छेदकद्रव्यत्वादिनिष्ठप्रतियोगिताकस्य परिग्रहः। यदि चोक्तविशेषणस्थाने प्रतियोगितायां स्वनिरूपकीभूताभाववद्वृत्तितावच्छेदकत्वव्यधिकरणधर्मानवच्छिन्नत्वोभयाभाववत्त्वं निवेश्यते वैयधिकरण्यं च धूमाभावप्रतियोगितायाः प्रमेयमात्रवृत्तित्वमते यत्किञ्चित्प्रतियोग्यवृत्तित्वं तदा [[1]न कोऽपि दोषः इति बोध्यम्।]

'अप्रसिद्ध्या' इति। यद्यपि पर्वतादेः कालोपाधित्वानुपगमे वह्न्यभावस्य हेतुमद्वृत्तित्वासंभवेऽपि कालो घटवान् कालपरिमाणादित्यादौ साध्यसामान्याभावस्य कालिकसंवन्धेन हेतुमद्वृत्तित्वाद् अव्याप्तिरेव; तथापि स्वरूपसंबन्धेन हेतुसामानाधिकरण्यमभिप्रेत्येदम्। अन्यथा त्वाह––'अयम्' इति। एतत्क्षणान्यवृत्तित्वेति। एतत्क्षणान्यत्वस्य [2]व्याप्यवृत्तितया स्वरूपसंबन्धेन तद्वृत्तित्वविशिष्टवाच्यत्वाभावः एतत्क्षणावच्छेदेन सुलभः। स च एतत्क्षणान्यवृत्तित्वविशिष्टवाच्यत्वाधिकरणतायाः सर्वत्र सत्त्वेन प्रतियोगिवैयधिकरण्याभावात् लक्षणघटकः। नन्वतत्क्षणान्यत्वस्य व्याप्यवृत्तितया एतत्क्षणान्यवृत्तित्वविशिष्टवाच्यत्वाभावस्य साध्यवति एतत्क्षणरूपशब्दज्ञानादौ प्रतियोगिवैयधिकरण्यात् न लक्षणघटकत्वमत आह––'विषयता' इति। एतत्क्षणान्यक्षणेति[3] पाठे एतत्क्षणान्यीयकालिकसंबन्धावच्छिन्नवृत्तित्वविशिष्टवाच्यत्वाभावो न प्रतियोगिव्यधिकरणः; एतत्क्षणस्यापि स्वान्यक्षणसमानकालतया एतत्क्षणान्यक्षणासमानकालीनाप्रसिद्धेः; सर्वत्रापि तादृशवाच्यत्वसत्त्वात्; तथा च क्षणिकपदार्थानङ्गीकारादयं लक्षणघटको भवतीत्याशयः। तत्तत्क्षणवृत्तित्वविशिष्टवाच्यत्व-

[1] [ ] एतदन्तर्गतपाठो नास्ति। तत्स्थाने असंभवासंभवादाह––अत एवेति––अ.

[2] अव्याप्यवृत्तितयेति––अ.

[3] एतादृशपाठः गादाधर्यां दर्शितः––स्व.

त्वावच्छिन्नानधिकरणत्वं तत्तत्क्षणासमानकालीनपदार्थ इति तादृशवाच्यत्वाभावः प्रतियोगिव्यधिकरणत्वात् न लक्षणघटकः। तत्तत्क्षणावृत्तिवाच्यत्वं त्वप्रसिद्धमिति तत्परित्यागः। क्षणिकपदार्थाङ्गीकारेऽपि अभावं दर्शयति—'विषयता' इति। महाप्रलयानङ्गीकारे जन्यज्ञानसामान्याभावासत्त्वाद् आह—विश्वेति। प्रतियोगीति। साध्यवन्निष्ठाभावप्रतियोगितानवच्छेदकत्वस्य घटत्वाद्यवच्छिन्नप्रतियोगित्वरूपगरुधर्मसाधारण्येऽपि तदवच्छिन्नाभावाप्रसिद्धेर्नासंभवः।

यत्तु—प्रतियोगिवैयधिकरण्याघटितसाध्यवन्निष्ठेत्यादिव्यापकतानिवेशने गोत्वादिभेदस्य लक्षणघटकतापत्त्या असंभवः; साध्यवन्निष्ठगोत्वाभावप्रतियोगितायां लाघवेन गवेतरावृत्तित्वस्यैवावच्छेदकतया सकलगोवृत्तित्वे सति गवेतरावृत्तित्वस्यानवच्छेदकत्वेन व्यापकतावच्छेदकत्वात्। न च गोत्वभेदस्यापि प्रतियोगितावच्छेदकं गवेतरासमवेतत्वमात्रमिति वाच्यम्; रूपादौ गोत्वं न भवतीति प्रत्ययानुरोधेन तत्रोक्तविशिष्टधर्मस्यैव प्रतियोगितावच्छेदकत्वाद् इत्यतः साध्यवद्यत्किञ्चिद्व्यक्त्यसंबद्धस्वविशिष्टसामान्यकं यद्यत् तद्भेदकूटवत्त्वमेव साध्यव्यापकतावच्छेदकत्वं विवक्षणीयम्; एवं च साध्यवत्त्वप्रकारकप्रमाव्यक्तेः साध्यवदसंबद्धत्वविरहेण साध्यव्यापकतावच्छेदकत्वं तादृशप्रमाव्यक्तित्वेऽक्षतमिति तदवच्छिन्नाभावमादायैव सर्वत्र लक्षणसमन्वयसंभवात् प्रतियोग्यवृत्तिश्चेति ग्रन्थासङ्गतिर्दुर्वारैवेति।

तदसत्। स्वप्रतियोगितावच्छेदकसंबन्धेन व्यापकताया निवेशितत्वात्। तदनिवेशेऽपि गौरित्याकारज्ञानीयप्रकारताविशेषस्यैवातिलाघवेन भेदप्रतियोगितावच्छेदकत्वाच्च। [साध्यतावच्छेदकताघटकसंबन्धेन प्रतियोगितावच्छेदकवैशिष्ट्यनिवेशाद् धूमाभावस्य कालिकसंबन्धेन धूमत्वादिविशिष्टवह्न्यादिकं प्रतियोगितावच्छेदकसंबन्धेन प्रतियोगिसामाना-

धिकरण्यप्रवेशात् कालिकसंबन्धेनायोगोलकादेः धूमवत्त्वं चादाय नातिव्याप्तिः ।][1]

ननु प्रमेयसाध्यके साध्यतावच्छेदकसंबन्धावच्छिन्नसाध्याभावाप्रसिद्धिरत आह––प्रमेयेति । 'लघुरूप' इति । विषयितासंबन्धेन प्रमेयवह्नित्ववज्ज्ञानाभावस्य संयोगसंबन्धावच्छिन्नप्रतियोगिताकस्य लाघवेन वह्नित्व एव प्रतियोगितावच्छेदकत्वमिति भावः । ननु प्रतियोगितायां साध्यतावच्छेदकसंबन्धावच्छिन्नत्वं न निवेश्यते वैयर्थ्यात्; किन्तु साध्यतावच्छेदकसंबन्धेन प्रतियोगिसामानाधिकरण्यमेव । उक्तस्थले च समवायावच्छिन्नप्रतियोगिताकं विषयितया प्रमेयवह्नित्ववज्ज्ञानाभावमादाय [नातिव्याप्तिरिति चेन्न; तथा सति प्रमेयसाध्यकेऽपि विषयितया प्रमेयत्ववज्ज्ञानाभावमादाय][2] लक्षणसङ्गतिसंभवात् प्रतियोग्यवृत्तिश्चेत्यस्यानवतारापत्तेः ।

[3]वस्तुतः तद्ग्रन्थावतारार्थं प्रतियोगितावच्छेदकताघटकसंबन्धेन साध्यव्यापकतावच्छेदकत्वं न प्रवेश्यम्; किन्तु लाघवेन साध्यतावच्छेदकनिष्ठप्रतियोगितावच्छेदकतायां व्यधिकरणसंबन्धावच्छिन्नत्वमेव । साध्यतावच्छेयकताघटकसंबन्धेन प्रतियोगितावच्छेदकवैशिष्ट्यनिवेशेनानतिप्रसङ्गात् । एवं च प्रतियोगितायामपि न साध्यतावच्छेदकसंबन्धावच्छिन्नत्वं प्रवेश्यते; प्रयोजनाभावादिति शङ्कार्थः । 'लघूरूप' इति । विषयितासंबन्धेन प्रमेयवह्नित्व[4]वज्ज्ञानाभावो न लक्षणघटकः अवच्छेदकतायाः व्यधिकरणसंबन्धानवच्छिन्नत्वात् । साध्यतावच्छेदकव्यापकरूपावच्छिन्नाभावनिवेशे तु सत्तावान् जातेरित्यादौ विशिष्टसत्ताभावमादायाव्याप्तिरिति कृतबुद्धयो विदांकुर्वन्तु ।

1 [ ] एतदन्तर्गतपाठः नास्ति––अ.

2 [ ] एतदन्तर्गतपाठो नास्ति––अ.

3 वस्तुतस्तु––अ.

4 समवायावच्छिन्न––अ.

द्रव्यत्वत्वेन घटात्यन्ताभावस्य साध्यतावच्छेदकसंबन्धेनातथात्वादाह--'साध्यतावच्छेदकसंबन्धेन व्यापकत्वम्' इति । ननु महाकालान्यत्वविशिष्टघटवान् कालत्वादित्यादावतिव्याप्तिः । संयोगेन वह्न्यादिसाध्यके साध्यवति उत्पत्तिकालावच्छेदेन तदभावसत्त्वात् साध्यतावच्छेदकसंबन्धेन साध्यव्यापकत्वाप्रसिद्धिवारणाय तत्र प्रतियोगिवैयधिकरण्यस्यावश्यकतया तद्घटितसाध्यव्यापकतावच्छेदकरूपावच्छिन्नप्रतियोगिताकस्य कालिकसंबन्धावच्छिन्नमहाकालान्यत्वाभावस्य महाकालावच्छेदेन हेतुमद्वृत्तेः साध्यतावच्छेदकीभूतकालिकसंबन्धेन प्रतियोगितावच्छेदकावच्छिन्नसमानाधिकरणत्वादित्यत आह--महेति । तथा च प्रतियोगितावच्छेदकावच्छिन्नसामानाधिकरण्यदले प्रतियोगितावच्छेदकतापर्याप्तिनिवेश आवश्यक इति भावः ।

वस्तुतस्तु--साध्यतावच्छेदकसंबन्धेन व्यापकताघटितपूर्वलक्षणे महाकालान्यत्वविशिष्टघटाभावमादायापि अतिव्याप्तिरित्यस्वरसादेतल्लक्षणारम्भः, अत्र तु सा नास्तीति भावः ।

ननु प्रतियोग्यवृत्तिश्चेति ग्रन्थावतारानुरोधेन तदावश्यकत्वमत आह--'तन्निवेशेऽपि' इति । 'पूर्वोक्त' इति । घटत्वाभावघटभेदाभावयोर्घटत्वरूपतया किञ्चिद्विशिष्टस्वाभावत्वरूपप्रतियोगितावच्छेदकावच्छिन्नसमानाधिकरणत्वात् । एवं व्यधिकरणधर्मावच्छिन्नाभावस्यापि । नन्वेतद्दोषवारणाय एतन्मतेऽपि स्वसमानाधिकरणतत्प्रतियोगितानिरूपकीभूताभाववद्वृत्तितावच्छेदकान्यत्वेन प्रतियोगितावच्छेदकं विशेषणीयम् । न च सत्तावान् जातेरित्यादौ सत्ताभावस्य प्रतियोगितावच्छेदकसत्तात्वे संबन्धसामान्येन तत्प्रतियोगितानिरूपकीभूताभाववद्वृत्तितावच्छेदकत्वसत्त्वादव्याप्तिः । तत्प्रतियोगितावच्छेदकविशिष्टतत्प्रतियोगिता[1]श्रयवत्ताग्रह-

[1] तद्वत्ताज्ञानं प्रति अव्याप्यवृत्तित्वज्ञानाभावविशिष्टतदभाववत्ताज्ञानस्य विरोधित्वात्--अ.

विरोधितानियामकसंबन्धेन तादृशाभाववत्त्वस्य निवेशनीयत्वात् । मैवम्—उक्तरीत्या साध्यव्यापकत्वस्य प्रतियोगिवैयधिकरण्यघटिततया घटत्वाभाववान् पटत्वादित्यादौ किञ्चिद्विशिष्टसाध्याभावत्वं तद्घटितसाध्यव्यापकतावच्छेदकं तदवच्छिन्नाभावो घटत्वाभावः तस्य तादृशप्रतियोगितावच्छेदकाप्रसिद्ध्या अव्याप्तेः । व्यधिकरणधर्मावच्छिन्नाभावानुपगमेऽपि अयमात्मा ज्ञानात् परममहत्वम् आकाशपरिमाणत्वादित्यादौ पूर्वक्षणवृत्तित्वविशिष्टसाध्यतावच्छेदकं साध्यव्यापकतावच्छेदकं तदवच्छिन्नाभावमादाय लक्षणसमन्वयसंभवाद् अवतारकत्वानुपपत्तेश्च । न च रूपमपि तेन विशेषणीयम्; तथापि तादात्म्येन प्रमेयसाध्यकेऽव्याप्तेः; समवायादिसंबन्धावच्छिन्नप्रमेयाभावस्य समवायित्वेन प्रमेयत्ववद्भेदस्य च रूपस्य प्रतियोगितावच्छेदकस्य च तादृशविशेषणशून्यत्वात् लक्षणघटकाभावा-[1]प्रसिद्धेः । [2]प्रतियोगितावच्छेदकसंबन्धसामान्ये यदवच्छिन्नप्रतियोगिकत्वतदभावाधिकरणवृत्तित्वोभयाभावः तत्त्वनिवेशे तु प्रतियोगितासामानाधिकरण्याप्रवेशप्रसङ्ग इत्यन्यैरनुज्जृम्भितः पन्थाः ।

अथैतन्मते भावभिन्नत्वनिवेशाद् घटत्वात्मकाभावस्य प्रतियोगितावच्छेदकावच्छिन्नभावसामानाधिकरण्यनिवेशाच्च घटत्वाभावत्वादिना घटाभावस्य वारणाद् अभावाप्रसिद्ध्यैव नातिव्याप्तिः; घटत्वाभाववान् पटत्वादित्यादौ घटत्वाभावादिना पटाद्यभावादेः समनियताभावभेदमते भावरूपप्रतियोगितावच्छेदकावच्छिन्नाप्रसिद्ध्या अव्याप्तिरतो भाववृत्तित्वं रूपविशेषणम्; वाच्यत्वत्वेन [3]ज्ञेयत्वाभावमादायैव लक्षणसङ्गतिरिति । मैवम्;—प्रतियोगितायां संबन्धावच्छिन्नत्वस्य वैयर्थ्याद् अवतारकत्वानुपपत्तेः ।

[1] अभावाद्यप्रसिद्धेः—अ.

[2] रूपविशेषणम्—अ.

[3] ज्ञेयत्वाद्यभावम्—अ.

'यावद्' इति। एतन्मते घटत्वाभावादिसाध्यके तत्प्रकारकप्रमाद्य- भाव एवातिव्याप्तिवारकः। दोषान्तरमाह—'ज्ञेयत्वत्वादिना' इति। 'किन्तु' इति। नित्यज्ञानं नित्यसविषयकत्वादित्यादौ दैशिकविशेषणतासं- बन्धावच्छिन्नेच्छान्यत्वाभावमादायानतिप्रसङ्गाद् वीप्सा न कार्येति लाघवं द्रष्टव्यम्। व्यभिचारिणीति। न च प्रतियोगितावच्छेदकसंवन्धैक्यविव- क्षयैव निर्वाहाद् भावपदं व्यर्थमिति वाच्यम्; स्वाभावत्वस्य साध्यव्या- पकतावच्छेदकत्वमादायापि दोषसंभवात्।

भावेति। अत्रेदं बोध्यम्—किञ्चिद्विशिष्टस्य स्वस्य योऽभावः तद्वृत्तेः तादृशाभावत्वरूपप्रतियोगितावच्छेदकस्य तादृशाभावनिष्ठप्रति- योगितासमानाधिकरणत्व सति तत्प्रतियोगितानिरूपको यः शुद्धस्वात्म- कोऽभावःतद्वद्वृत्तितावच्छेदकत्वेनातिव्याप्त्यभावाद् भावपदं चतुर्थकल्पे व्यर्थम्।

ननु प्रतियोगितावच्छेदकं तत्प्रतियोगितासमानाधिकरणेत्यादिरीत्या न विशेषणीयम् सुतरामेव रूपम् घटभिन्नत्वेन धूमघटान्यतराभावस्य धूमा- भावैक्येऽपि घटभिन्नत्वस्य धूमत्वादिनिष्ठप्रतियोगितावच्छेदकताघटकसम- वायसंवन्धेनावृत्तित्वेन दुर्धरत्वात्। एवं चोक्तरीत्या भावपदसार्थक्यमिति चेत्, मैवम्। वह्नित्वेन धूमायोगोल[1]कावृत्तिवह्न्यन्यतराभावस्य धूमा- भावरूपतया अतिव्याप्तिवारणाय प्रतियोगितावच्छेदके तद्विशेषणावश्य- कत्वात्।

'सामानाधिकरण्यम्'। तदधिकरणे संबन्धसामान्येन वृत्तित्वम्। न च विशिष्टस्वाभावविशिष्टाभावस्य विशिश्टस्वस्वरूपतायामनतिप्रसङ्गेऽपि शुद्धस्वस्वरूपतायामतिप्रसङ्गो दुर्वार इति वाच्यम्। अयोगोलके विशिष्ट- स्वाभावविशिष्टाभावत्वेन वृत्तेरनङ्गीकारेण तद्वारणात्। 'स्वस्मात्'।

[1] धूमवद्भिन्नेत्यर्थः—अ.

धूमाभावात् । भावः । अयोगोलकीयवह्न्यादिः; तत्प्रमाविषयत्वं च । 'भावतयेति' इति[1] । समनियतयोर्भावभिन्नयोरैक्यं न तु भावाभावयोरपि; तथा सति प्राभाकरा एव विजयेरन्निति भावः ।

'[2]एवं सति' इति । अत्र वदन्ति—एवं सतीत्यस्य [3]भावभिन्नत्वे सतीत्यर्थे प्रतियोगिवैयधिकरण्याघटितसाध्यव्यापकताया एवात्र निवेशितत्वात् कपिसंयोगस्य लक्षणघटकत्वमेव नेत्युपष्टम्भासङ्गतिः । न च साध्यवन्निष्ठत्वं स्वरूपसंबन्धेन निवेश्यम्, अन्यथा स्पन्दो गतित्वादित्यादौ साध्यवति कालिकसंबन्धेन साध्याभावसत्त्वात् वाच्यत्वत्वेन घटाद्यभावमादायातिव्याप्तेरनुपदं स्वयमपि दैशिकविशेषणतया साध्यवन्निष्ठत्वोक्तेरिति वाच्यम्; तथा सति पर्वतत्वरूपाभाववारणार्थमेव भावभिन्नत्वनिवेशसंभवात् ह्रदत्वात्मकाभावपर्यन्तानुधावनस्य निर्बीजत्वापातात् । न च प्रतियोगिमत्ताग्रहविरोधितानियामकसंबन्धेनैव साध्यवन्निष्ठत्वं निवेश्यम्; तथा सति पर्वतत्वरूपाभावस्य वारितत्वात् ह्रदत्वात्मकाभावपर्यन्तानुधावनसार्थक्यमिति वाच्यम् । तथा सति निरवच्छिन्नसंयोगाभाववत्ताज्ञानं प्रति समवायसंबन्धेन संयोगवत्ताज्ञानस्य विरोधित्वाद् उपष्ठम्भासङ्गतिर्दुर्वारैव । ननु साध्यवद्यत्किञ्चिद्वृत्त्यसंबद्धस्वविशिष्टसामान्यकभिन्नं यद्रूपं तदवच्छिन्नप्रतियोगिताकाभावे भावभिन्नत्वनिवेशे सतीत्येव तदर्थ इति चेन्न; प्रतियोगिवैयधिकरण्याघटिताया एव व्यापकताया इति ग्रन्थविरोधात् । जन्यज्ञानत्वादेरुक्तव्यापकतावच्छेदकतया तदवच्छिन्नाभावमादाय लक्षणसङ्गतेरवतारकत्वानुपपत्तेश्च । तस्मादेवं सतीत्यस्य प्रतियोगिवैयधिकरण्याघटितसाध्यव्यापकत्वोपादाने सतीत्येवार्थः इति ।

[1] भावतयेति प्रतीकम् अ—स्व.

[2] एवं च सती इत्यपि पाठो गादाधर्यां वर्तते—स्व.

[3] भावभिन्नत्वनिवेशे—अ.

यद्वा एवं सतीत्यस्य भावभिन्नत्वविवक्षणे सतीत्येवार्थः । प्रतियोगिमत्ताग्रहविरोधितानियामकसंबन्धेन वृत्तित्वं विवक्षितम्; संबन्धो निरवच्छिन्नसमवायः । तेन संयोगस्य साध्यवद्वृत्तित्वासंभवात् कपिसंयोगात्मकाभावो लक्षणघटकः; स च न भावभिन्न इति द्रष्टव्यम् ।

वस्तुतस्तु दैशिकविशेषणतया साध्यवन्निष्ठत्वं प्रविष्टमित्याशयेनेदम्। पर्वतत्वरूपाभावोपेक्षा च सर्वाधारतानियामकसंबन्धान्यसंबन्धावच्छिन्नतन्निवेशोऽस्तु[1] इत्याशङ्कावारणाय ।

'पूर्वोक्तदिशेति'। सत्तावान् जातेरित्यादौ कालिकसंबन्धेन हेतुसमानाधिकरणस्य सत्ताभावस्य गगनादौ तादृशप्रतियोगिसामानाधिकरण्याभावाद् अव्याप्तिः यदि स्वविशिष्टपदं न स्यादित्यर्थः । यद्यपि पूर्वलक्षणे दैशिकविशेषणतया हेतुसामानाधिकरण्योक्तावपि गगनादिवृत्तित्वविशिष्टसत्ताभावमादायाव्याप्तेः स्वविशिष्टपदमावश्यकम् । परन्तु तत्राभावा इति स्वरूपकीर्तनमात्रं पर्वतत्वात्मकाभावस्य स्वाभावरूपप्रतियोगिसामानाधिकरण्यात् पर्वतत्वाभावनिष्ठप्रतियोगितायाः साध्यव्यापकतानवच्छेदकत्वाद् वा दैशिकविशेषणतारूपसंबन्धभावभिन्नत्वयोर्वैयर्थ्यात् तथापि एतल्लक्षणे दैशिकविशेषणतानिवेशेन ह्रदत्वात्मकाभाववारणेऽपि स्वविशिष्टत्वनिवेशवैयर्थ्यभयेन अभावानामिति दीधित्यनुसारेण गुरुतरभावभिन्नत्वनिवेश उक्त इति ।

ननु प्रथमलक्षणे साध्यनिष्ठसंबन्धप्रतियोगिताया व्यापकतावच्छेदकत्वात् तन्निरूपकस्य यावदन्तर्गतसंबन्धस्य लक्षणघटकताप्रसङ्गेन गौरववारणाय अभावा इति अभावीयप्रतियोगितालाभार्थमिति कथमभावा इति स्वरूपकीर्तनमात्रमित्युक्तमिति चेन्न; संबन्धाभावप्रतियोगितयोः एकरूप-

[1] तन्निवेश एवास्तु—अ.

त्वाभावेनाभावीयविलक्षणप्रतियोगितायां साध्यव्यापकतावच्छेदकत्वनिवेशसूचकत्वेऽपि तदर्थाप्रवेशादिति ।

कालिकसंबन्धावच्छिन्नप्रतियोगिताकगगनाभावाभावत्वस्य वह्न्यादिव्यापकतानवच्छेदकत्वाद् वह्न्यादिसाध्यकेऽदोषाद् अयमात्मेति । स्वप्रतियोगिमत्ताग्रहविरोधितानियामकसंबन्धेन साध्यवद्वृत्तित्वं वाच्यम्; अन्यथा वह्न्याद्यधिकरणे वह्न्याद्यभावस्य कालिकसंबन्धेन सत्त्वाद् वह्नित्वादेः साध्यव्यापकतावच्छेदकत्वं न स्यादित्याशयः । समनियताभावैक्यमते तु नैतच्छङ्कावतारः तन्मते [1]वाच्यत्वत्वादिरूपप्रतियोगितावच्छेदकावच्छिन्नसामानाधिकरण्यसंभवात् । स्वरूपसंबन्धेन साध्यवद्वृत्तित्वं निविष्टमित्यभिप्रायेण समाधत्ते––आकाशेति ।

ननु वह्निमान् धूमादित्यादौ घटवृत्तिरूपध्वंसवदन्यत्वाभावादेः कालिकसंबन्धेन हेतुसमानाधिकरणस्य भावरूपप्रतियोग्यप्रसिद्धेः घटत्वाभावादिसाध्यके यावदन्तर्गतघटत्वाभावत्वेन [2]पटाद्यभावस्य तत एवाव्याप्तिः । एवं गगनाभावत्वेन ह्रदत्वाभावत्वेन वा पटाद्यभावमादायासंभवश्चेत्यतः भावभिन्नत्वं परित्यज्य प्रकारान्तरमनुसरति––'अस्तु वा' इति ।

केचित्तु––प्रतियोगितावच्छेदकावच्छिन्नभावनिवेशो न कार्यः; किन्तु प्रतियोगितावच्छेदके अभाववृत्तित्वं निवेश्यम्; एवं च पूर्वोक्तह्रदवृत्तित्वविशिष्टस्वाभावविशिष्टत्वावच्छिन्नाभावस्यानतिरिक्तत्वेऽपि नातिव्याप्तिः तत्प्रतियोगितावच्छेदकस्याभाववृत्तित्वात्; एवं च घटभिन्नत्वेन घटधूमान्यतराभाववारणेऽपि[3] अभावभिन्नत्वेन धूमघटाभावान्यतराभाववारणायैव स्वन्यूनवृत्तिभिन्नप्रतियोगितावच्छेदकाद्युपादानमित्याहुः ।

[1] वाच्यत्वादिरूप––अ.

[2] पटाद्यभावभावस्य––अ.

[3] अभावादिवारणेऽपि––अ

'इदम्' इति। न च तादृशग्रन्थासङ्गतिभयेन स्वप्रतियोगितावच्छेदकसंबन्धावच्छिन्नत्वविवक्षणमसङ्गतमिति वाच्यम्। नित्यज्ञानं नित्यसविषयकत्वादित्यादौ समवायावच्छिन्ननित्यज्ञानत्वाद्यभावस्य विषयतासंबन्धेन साध्यव्यापकप्रतियोगिकस्य तेन संबन्धेन प्रतियोगितावच्छेदकावच्छिन्नसामानाधिकरण्यादतिव्याप्तिवारणाय वीप्सामपेक्ष्य लाघवेन तद्विवक्षणात्। एवं च व्यापकताघटकसंबन्धावच्छिन्नप्रतियोगिताकस्य तेन संबन्धेन प्रतियोगिसामानाधिकरण्योक्तौ समवायविषयितयोर्व्यापकताघटकतया दोषावारणेन तादृशयत्संबन्धावच्छिन्नप्रतियोगिताकत्वमित्येतावत्पर्यन्ताभिधानवारणायेत्थमुक्तम्। अयोगोलकनाशजन्यसंयोगनाशसंभवाद् उक्तमनुयोगितेति। अयोगोलकत्वप्रकारकप्रमाविषयत्वस्य कालत्वसंदेहात् कालिकसंबन्धोपेक्षा भाववृत्तित्वनिवेशपक्षे इदम्।

वस्तुतस्तु प्रतियोगितावच्छेदकताघटकसंबन्धेन प्रतियोगितावच्छेदकवैशिष्ट्याविवक्षणे भावत्वं व्यर्थम्। तन्निवेशेऽपि कालिकसंबन्धेन धूमत्वविशिष्टवह्न्यादिसामानाधिकरण्यादिति।

इदमापाततः—उक्तसंयोगादिध्वंसादि[1]वारणायैव भावत्वनिवेशसंभवात्। तावतापि प्रतियोगितावच्छेदकताघटकसंबन्धेन प्रतियोगितावच्छेदकवैशिष्ट्यनिवेशप्रतिक्षेपसिद्धेः; एतन्निवेशेन भावत्वनिवेशाप्रतिक्षेपाच्च।

'व्यापकतावच्छेदकतायामपि' इति। न च विषयितासंबन्धेन द्रव्यत्वत्वादिमज्ज्ञानाभावस्य किंचिद्विशिष्टस्वाभावत्वनिष्ठप्रतियोगितावच्छेदकताघटकीभूतस्वरूपसंबन्धेन द्रव्यत्वत्वविशिष्टो यो द्रव्यत्वादिरूपाभावः तत्सामानाधिकरण्यात् नाव्याप्तिरित्येतद्विशेषणवैयर्थ्यमिति वाच्यम्। शब्दवान् एतत्त्वादित्यादौ प्रतियोगिवैयधिकरण्याघटितसाध्यव्यापकतावच्छेदकं

[1] वारणार्थमेव—अ

यत् सत्त्वादि विषयितासबन्धेन तद्विशिष्टज्ञानाभावस्य हेतुमति दर्शितरीत्या समवायेन तादृशज्ञानसामानाधिकरण्याभावादव्याप्तेः तदुपादानादिति । अधिकमनुपदं वक्ष्यामः ।

'दर्शिताभावानाम्' इति । यद्यपि विषयितासंबन्धेन वाच्यत्वत्व-विशिष्टज्ञानाभावादेः किञ्चिद्विशिष्टस्वाभावत्वनिष्ठस्वप्रतियोगितावच्छे-दकत्वघटकीभूतस्वरूपसंबन्धेन साध्यव्यापकतावच्छेदकवाच्यत्वत्वनिष्ठ-प्रतियोगितावच्छेदकताकत्वात् लक्षणघटकत्वमेव । न च प्रतियोगितावच्छे-दकावच्छिन्नभावेत्यादिस्थले [1]भाववृत्तिप्रतियोगितावच्छेदकताघटकसंबन्धेन प्रतियोगितावच्छेदकविशिष्टो यः तत्सामानाधिकरण्यनिवेशेऽपि व्यभिचा-रिणि दोषवारणसंभवाद् उक्ताभावानां लक्षणाघटकत्वमेव तेषां भाववृत्ति-[2]प्रतियोगितावच्छेदकता[3]घटकविषयतासंबन्धेन वाच्यत्वत्वविशिष्टज्ञाना-सामानाधिकरण्यादव्याप्तिवारणाय भाववृत्तिप्रतियोगितावच्छेदकताघटक-संबन्धेन साध्यव्यापकतावच्छेदकत्वस्यावश्यकत्वादित्याशय[4] इति वाच्यम् । तथा सति घटत्वाभाववान् [5]प्रमेयत्वादित्यादौ घटत्वाभावप्रकारकप्रमा-विषयत्वाभावस्य स्वरूपसंबन्धेन स्वाभावरूपप्रतियोगिसामानाधिकरण्या-दतिव्याप्तेः । घटत्वाभावप्रमाभावस्तु न प्रतियोगिवैयधिकरण्याघटितसा-ध्यव्यापकप्रतियोगिकः; तथापि तत्प्रतियोगितावच्छेदकताघटकसंबन्धेन व्यापकतावच्छेदकत्वं तद्वैशिष्ट्यं च विवक्षितमित्यदोषः । साध्यव्यापकता-वच्छेदकताघटकसंबन्धावच्छिन्नप्रतियोगितावच्छेदकताकत्वोक्तौ स्वाभाव-त्वनिष्ठप्रतियोगितावच्छेदकतायाः तादृशस्वरूपसंबन्धावच्छिन्नत्वं न हीयते इति तादृशाभावस्य लक्षणघटकत्वापत्तिः । तत्र तत्प्रतियोगितोपादानेऽपि

[1] भाववृत्तिवृत्ति--अ.
[2] भाववृत्तिवृत्ति--अ
[3] घटकीभूतविषयिता--अ.
[4] इत्याशयः इति नास्ति--अ.
[5] मेयत्वादित्यादौ--अ.

धूमाद्यभावत्वादौ कालिकसंबन्धस्यापि व्यापकतावच्छेदकघटकतया अतिव्याप्तिरतो यत्संबन्धपर्यन्ताभिधानं स्यादतः तन्नोक्तम् ।

## न्यायरत्नम्

**अत्र यद्यपि स्वप्रतियोगितावच्छेदकसंबन्धघटितव्यापकत्वमिति सिद्धान्तेऽपि व्यधिकरणधर्मावच्छिन्नाभावसंग्रहो न संभवति, संयोगेन वाच्यत्वाभावस्यापि पूर्वक्षणवृत्तित्वविशिष्टस्वाभावनिष्ठा या स्वप्रतियोगिता तदवच्छेदकस्वरूपसंबन्धघटितसाध्यव्यापकतावच्छेदकरूपावच्छिन्नप्रतियोगिताकत्वेन लक्षणघटकतया तस्य च तादृशस्वरूपसंबन्धेन वाच्यत्वत्वरूपप्रतियोगितावच्छेदकावच्छिन्नसामानाधिकरण्यमादाय सर्वत्र लक्षणसमन्वयात्; न च संयोगेन वाच्यत्वाभावीयप्रतियोगितायाः स्वसमानाधिकरणस्वनिरूपकाभाववद्वृत्तितावच्छेदकवाच्यत्वत्वावच्छिन्नत्वेन तदन्यत्वविरहात् तादृशाभावस्य न लक्षणघटकतेति वाच्यम्; स्वनिरूपकाभाववद्वृत्तित्वांशे स्वावच्छेदकसंबन्धावच्छिन्नत्वनिवेशावश्यकत्वेन तादृशसंयोगेन वाच्यत्वादेरवृत्तेः वाच्यत्वत्वस्य तादृशवृत्तितावच्छेदकत्वविरहात्; न चैवं तादृशाभावस्य लक्षणघटकत्वेऽपि तत्प्रतियोगितासमानाधिकरणेत्याद्यवच्छेदकत्वस्य वाच्यत्वत्वेऽसंभवेन न तदवच्छिन्नसामानाधिकरण्यमादाय लक्षणयोग इति वाच्यम्; तत्रापि स्वनिरूपकाभाववद्वृत्तित्वांशे स्वावच्छेदकसंबन्धावच्छिन्नत्वविवक्षाया आवश्यकत्वेन वाच्यत्वत्वे तादृशावच्छेदकत्वानपायात्; न च स्वनिरूपकाभाववद्वृत्तित्वांशे स्वावच्छेदकसंबन्धावच्छिन्नत्वनिवेशे वह्न्यादिसाध्यके सत्तासामान्याभावस्यापि लक्षणघटकतया यावदन्तर्गततादृशाभावीयप्रतियोगितानिरूपकाभाववति सामान्यादौ स्वावच्छेदकसमवायसंबन्धेन वृत्तेरप्रसिद्ध्या तत्प्रतियोगितासमानाधिकरणेत्याद्यवच्छेदकाप्रसिद्ध्या अव्याप्तिरिति वाच्यम्; सत्ताभावस्य स्वरूपसंबन्धेन हेतुसामानाधिकरण्याभावेन लक्षणघटकत्वविरहादिति पूर्वपक्षोऽवतरति; तथापि व्यधिकरणधर्मावच्छिन्नाभावास्वीकारे तत्प्रतियोगितावच्छेदकसं-**

प्रहायोपात्ततत्प्रतियोगितासमानाधिकरणेति विशेषणवैयर्थ्यं स्यादिति तदावश्यकता द्वितीयचक्रवर्तिलक्षणवदिति बोध्यम्; एवं वह्नित्वेन धूमकालावच्छिन्नधूमवद्वृत्तित्वविशिष्टाभावस्य धूमाभावसमनियततया तदवच्छेदकवह्नित्वावच्छिन्नसामानाधिकरण्यमादायातिव्याप्तिवारणाय प्रतियोगितावच्छेदकतापर्याप्त्यधिकरणमेव तदवच्छेदकेत्यनेन विवक्षणीयम्; तथा च महानसीयवह्न्यभावस्यातथात्वादव्याप्तिरतो व्यापकतावच्छेदकरूपपर्याप्तावच्छेदकताकप्रतियोगिताकाभावस्यैव विवक्षणीयतया न सर्वत्र विशिष्टाभावमादाय लक्षणसत्वशङ्केति ध्येयम् ।

'पूर्वोक्तदिशा' इति । सत्तावान् जातेः इत्यादौ कालिकसंबन्धेन हेतुसमानाधिकरणसत्ताभावमादायेत्यर्थः । ननु भावभिन्नाभावनिवेशे वह्निसाध्यके घटवृत्तिरूपध्वंसवदन्यत्वाभावस्य कालिकसंबन्धेन हेतुसमानाधिकरणस्य भावरूपप्रतियोगिसामानाधिकरण्याभावादव्याप्तिरत आह— 'अस्तु वा' इति । 'संयो[1]गध्वंसेन' इति । तत्प्रतियोगितासमानाधिकरणेत्यादिप्रतियोगितावच्छेदकनिवेशाभिप्रायेणेदं; तत्कल्पे प्रतियोगिनि भावत्वत्यागस्योक्तत्वात्; अयोगोलकनाशजन्यसंयोगनाशसंभवस्थलानुरोधेनाह— 'अनुयोगिता' इति । वह्निप्रकारकप्रमाविषयत्वादेः कालत्वसंदेहात् कालिकसंबन्धपरित्यागः । '[2]प्रतियोगिवृत्तय' इति । प्रतियोगितावच्छेदकसमानाधिकरणा इत्यर्थः; तेनायोगोलकान्यत्वप्रकारकप्रमाविषयत्वाभावस्य तादृशविषयत्वत्वादिना प्रमेयाभावाभिन्नत्वेन प्रमेयमात्रस्य तत्प्रतियोगित्वेन तादृशाभावस्य प्रमेयरूपप्रतियोगिवृत्तित्वेऽपि नातिव्याप्तिरिति बोध्यम् ।

दीधितिः

यत्समानाधिकरणानां साध्यतावच्छेदकावच्छिन्नव्यापकतावच्छेदकरूपावच्छिन्नप्रतियोगिताकानां यावतामभावानां प्रतियो-

[1] संयोगादिध्वंसेन इति गादाधर्यां राठो दृश्यते—स्व.

[2] प्रतियोगिवृत्तयः इति गदाधरीदाठो न दृश्यते—स्व.

गितावच्छेदकावच्छिन्नसामानाधिकरण्यं तत्त्वं वा तद् ज्ञेयत्वत्वादिना वाच्यत्वादीनामभावः सुलभ एव; शेषं दर्शितदिशावसेयमित्यत आह--प्रतियोग्यवृत्तिश्चेति ।

## गादाधरी

(३५) शेषमितिदीधितेरर्थवर्णनम् ।

**नन्वत्र लक्षणे समवायित्वादिना वाच्यत्वाद्यभावीयसमवायित्वादिरूपप्रतियोगितावच्छेदकस्य वाच्यत्वादिव्यापकतानवच्छेदकत्वाद् वाच्यत्वादिसाध्यकस्थले न तादृशाभावानां लक्षणघटकता, तथा च तत्र तादृशाभाव एव दुर्लभ इत्यत आह--ज्ञेयत्वत्वादिनेति । वाच्यत्वादीनाम् इत्यादिपदाद् [1]घटादेरपि परिग्रहः । शेषमिति । स्वविशिष्टयावद्धेत्वधिकरणान्तर्भावेन प्रतियोगितावच्छेदकावच्छिन्नसामानाधिकरण्यविवक्षणं हेतुसामानाधिकरण्यादिशरीरे संबन्धविशेषनिवेशनं तत्प्रयोजनं चेत्यर्थः । अत्र च निरुक्ताभावेषु स्वविशिष्टहे[2]त्वधिकरणसामान्यान्तर्भावेन प्रतियोगितावच्छेदकावच्छिन्नसामानाधिकरण्यनिवेशापेक्षया प्रतियोगि[3]वृत्तित्वमेव निवेशयितुमुचितम्, सद्धेतौ व्यधिकरणधर्मावच्छिन्नप्रतियोगिताकानां तादृशाभावानां केवलान्वयितया प्रतियोगिन्यपि वृत्तेः लक्षणसमन्वसंभवाद् वह्निमान् धूमादित्यादौ कालिकादिसंबन्धेन हेतुसमानाधिकरणस्य रूपान्यत्वप्रकारकप्रमाविषय-**

[1] घटत्वादेः--अ.

[2] यावद्धेत्वधिकरणान्तभावेन--अ.

[3] प्रतियोगिवृत्तय इति न्यायरत्ने प्रतीकधारणम् । तादृशरीत्या पाठो न दृश्यते --स्व.

**त्वाद्यभावस्य दैशिकविशेषणतया हेतुसामानाधिकरण्यनिवेशेन[1] वह्न्यादिभेदस्य प्रतियोगितावच्छेदकतादात्म्यसंबन्धघटितसाध्यव्यापकतावच्छेदकावच्छिन्नप्रतियोगिताकत्वविरहेण लक्षणाघटकतया प्रतियोग्यवृत्तित्वेऽपि क्षतिविरहात्; कपिसंयोगाभाववान् मेयत्वादित्यादौ कपिसंयोगादेः उक्तरीत्या व्यापकताव[2]च्छेदकरूपावच्छिन्नप्रतियोगिताकत्वविरहेण दैशिकविशेषणतया हेतुसामानाधिकरण्याभा[3]वेनाभावे भावभिन्न[4]त्वविरहेण च लक्षणाघटकताया प्रतियोग्यवृत्तित्वेऽपि न क्षतिः। धूमवान् वह्नेरित्यादौ धूमाद्यभावस्य प्रतियोगिवृत्तित्वेऽपि अयोगोलकान्यत्वादिप्रकारकप्रमाविषयत्वाद्य[5]भावस्य भावप्रतियोगिकतया अयोगोलकत्वाद्यतिरिक्तस्य प्रतियोग्यवृत्तित्वात् नातिव्याप्तिरित्यवधेयम्।**

कृष्णंभट्टीयम्

ननु व्यापकतावच्छेदकताघटकसंवन्धेन प्रतियोगितावच्छेदकविशिष्टाभिधानेनातिव्याप्तिवारणसंभवात् स्वप्रतियोगितावच्छेदकताघटकसंवन्धेन तद्वैशिष्ट्यं निवेश्य वह्निमान् धूमादित्यादौ अव्याप्तिं प्रदर्श्य तेनैव संवन्धेन [6]व्यापकत्वावच्छेदकत्वकथनमयुक्तमिति चेन्न; कालिकसंवन्धस्यापि धूमत्वनिष्ठव्यापकतावच्छेदकत्वघटकतया अतिव्याप्त्यनुद्धारापत्तेः;

1 हेतुसामानाधिकरण्यनिवेशात् तद्विरहेण--अ.

2 विशेषणतया साध्यवन्निष्ठत्वस्य निवेशात् तस्य व्यापकतावच्छेदकत्वं दुर्वारमिति बोध्यम्--रा.

3 विरहेण--अ.

4 इदमनास्थायाम्--ऽ.

5 आदिपदाघटितपाठः--(अ) अयोगोलकान्यत्वप्रकारकप्रमाविषयत्वाभावस्येति प्रतीकम्--कृ.

6 व्यापकतावच्छेदकत्व--अ.

व्यापकतावच्छेदकताघटकयावत्संबन्धनिवेशे गौरवात् । न च धूमवत्त्वप्रकारकप्रमाविषयत्वाभावमादायैव नातिव्याप्तिः । एवमपि तादृशप्रमाविषयत्वस्यानुयोगिताविशेषसंबन्धेन साध्यव्यापकतावच्छेदकत्वाद् अतिव्याप्तेः । यादृशायोगोलके संयोगध्वंसो नियतः तन्मात्रान्तर्भावेन व्यभिचारिण्यतिव्याप्तेश्च । प्रतियोगितावच्छेदकावच्छिन्नभावोक्तावपि विषयताया विषयादिरूपत्वेन जन्यत्वसंभवाद् वह्निमत्ताज्ञानविषयत्वे कालिकसंबन्धेन धूमप्रकारकप्रमाविषयतात्वसत्त्वेनातिव्याप्तेरिति ।

ननु वह्नावपि संयोगेन वह्नित्वं न वर्तते इति संयोगसंबन्धावच्छिन्नवह्नित्वनिष्ठप्रतियोगितावच्छेदकताकाभावस्यापि साध्यवन्निष्ठाभावप्रतियोगितायाः सामानाधिकरण्येनानवच्छेदकत्वघटितलक्षणघटकतया प्रतियोगितावच्छेदकीभूतसंयोगेन तद्वैशिष्टचं दुर्घटमित्यव्याप्तिरतो दिगिति । तेन सवन्धेन वृत्तित्वस्यापि व्यापकतावच्छेदकत्वनिरुक्तिघटकत्वादिति ।

इदं तु बोध्यम्––प्रतियोगितावच्छेदकावच्छिन्नसामानाधिकरण्ये प्रयोजनाभावेनाभावनिष्ठत्त्वत्यागे प्रतियोगितायामेव यावत्त्वोपादाने वा तन्निरूपकाभावस्यापि त्यागात् स्वविशिष्टत्वहेतुसामानाधिकरण्ययोः वैयर्थ्यम्, परंतु अवतारकत्वं न हीयत इति द्रष्टव्यम् । दीधितौ ज्ञेयत्वत्वादिना वाच्यत्वादीनामिति लक्षणद्वयाभिप्रायकताया प्रतियोगिविशेषणस्य प्रतियोगितावच्छेदकत्वार्थं चोक्तम् ।

'वह्न्यादिभेदस्य' इति । संवन्धभेदानिवेशेन कालिकसंबन्धेन तस्य प्रतियोगिवृत्तित्वसंभवेऽपि न क्षतिः । आदिना द्रव्यत्वादिभेदपरिग्रहात् । न च समनियताभावैक्यमते तस्य द्रव्यत्वत्वाभावतया द्रव्यत्वरूपप्रतियोगिवृत्तित्वमिति वाच्यम् । समनियताभावभेदपक्षानुरोधेन प्रतियोगितावच्छेदकसंबन्धेन व्यापकताया आवश्यकत्वात् । [2]प्रतियोगितावच्छेदकसंबन्धेन

[1] विषयत्वत्वस्य––अ. [2] प्रतियोगिताघटकसंबन्धेन––अ.

साध्यव्यापकताया उक्तत्वाद् व्यधिकरणसंवन्धावच्छिन्नवाच्यत्वाद्यभावानां वह्निमान् धूमादित्यादौ तादात्म्यसंवन्धघटितसाध्यव्यापकतावच्छेदकं यद्द्रव्यत्वादि विषयितासंवन्धेन तद्विशिष्टज्ञानादिभेदस्य प्रतियोगिवृत्तित्वेनाव्याप्तिरिति स्वप्रतियोगितावच्छेदकताघटकसंवन्धावच्छिन्नव्यापकतावच्छेदकताया निवेशनीयतया विषयितासंवन्धावच्छिन्नवाच्यत्वत्वप्रतियोगितावच्छेदकताकाभावानां लक्षणाघटकत्वेन प्रतियोग्यवृत्तिश्चेति मूलावतारः। प्रतियोगिवैयधिकरण्याघटितव्यापकताकल्पे स्वरूपसंवन्धेन साध्यवन्निष्ठत्वस्य निवेशनीयतया कपिसंयोगात्मकाभावस्य लक्षणघटकत्वमत आह—[1]दैशिकेति। दीधित्यनुसारेणाह—'भावभिन्नत्वेति'।

इदमनास्थयोक्तम्। रूपान्यत्वप्रकारकप्रमाविषयत्वाभाववारणाय दैशिकविशेषणताया आवश्यकत्वात्।

'[2]अयोगोलकान्यत्वप्रकारकप्रमाविषयत्वाभावस्येति'। न च समनियताभावैक्यमतेऽयोगोलकतदन्यत्वप्रकारकप्रमाविषयत्वान्यतराभावस्यायोगोलकान्यत्वप्रकारकप्रमाविषयत्वत्वेनायोगोलक-अयोगोलकान्यत्वप्रकारकप्रमाविषयत्वान्यतराभावस्य अयोगोलकावृत्तित्वावच्छिन्नाभावस्य च दर्शिताभावसमनियततया तदात्मकत्वेनायोगोलकरूपप्रतियोगिवृत्तित्वाद् अतिव्याप्तितादवस्थ्यमेवेति वाच्यम्; तन्मते उभयावृत्तिप्रतियोगिताश्रयवृत्तित्वस्य वाच्यत्वात्; सद्धेतौ च वह्नित्वादिना [4]तद्घटाभावप्रतियोगितामादाय लक्षणसमन्वयः। उभयावृत्तित्वं च स्वप्रतियोगिवृत्तित्वस्वसामानाधिकरण्योभयसंवन्धेन भेदविशिष्टान्यत्वम्।

1 दैशिकतयेति प्रतीकधारणम्—अ; 'दैशिकविशेषणतया' इत्येव पाठः गादाधर्यां दृश्यते। 'दैशिकतयेति' प्रतीकधारणात् पाठान्तरमपि वर्तत इति ज्ञायते —स्व.

2 अयोगोलकान्यत्वादिप्रकारकप्रमाविषयत्वाद्यभावस्येति पाठः अयोगोलकान्यत्वादिप्रकारकप्रमाविषयत्वाभावस्येति पाठश्च गादाधर्यां दृश्यते—स्व.

वस्तुतस्तु––अयोगोलकत्वप्रकारकप्रमाविशेष्यत्वाभावत्वस्यापि धूमव्यापकतावच्छेदकतया तदवच्छिन्नप्रतियोगिताकस्य तादृशप्रमाविशष्यत्वरूपाभावस्य अभावमात्रवृत्तिप्रतियोगिताकस्य भाववृत्तिप्रतियोगिताकायोगोलकावृत्तित्वावच्छिन्नाभावादतिरिक्तस्य प्रतियोग्यवृत्तित्वनातिव्याप्तिविरहाद् उभयावृत्तित्वं प्रतियोगिताविशेषणं व्यर्थमेव । न चैवमपि घटत्वाभावभिन्नं [2]प्रमेयत्वादित्यादौ घटत्वाभावत्वप्रकारकप्रमाविशष्यत्वाभावाभावस्य [3]घटत्वाभावत्वस्वरूपतया घटत्वाभावत्वेन रूपेण विशेषणतासंबन्धेन स्वप्रतियोगिनि तादृशविशेष्यत्वाभाव सत्त्वादतिव्याप्तिः । एवमयमात्मा ज्ञानादित्यादौ घटान्यत्वप्रकारकप्रमाविशेष्यत्वाभावस्य स्ववृत्तिघटादिवृत्तित्वविशिष्टगोत्वाभावाभावात्मकतया तादृशगोत्वाभावाभावत्वेन हेत्वधिकरणवृत्तेः तस्य तादृशविशेष्यत्वरूपप्रतियोग्यवृत्तित्वेनाव्याप्तिरिति वाच्यम्; प्रतियोगिवृत्तित्वहेतुमद्वृत्तित्वयोः तादृशाभावत्वेन निवेशनीयत्वादिति ।

नन्वेतल्लक्षणे इदं वाच्यं ज्ञेयत्वादित्यादौ वाच्यत्वत्वेन वाच्यत्ववृत्तित्वविशिष्टवाच्यत्वाभावस्य वाच्यत्वरूपप्रतियोग्यवृत्तित्वेनाव्याप्तिः । न च तस्य ज्ञेयत्वत्वेन वाच्यत्ववृत्तित्वविशिष्टज्ञेयत्वाभावरूपतया ज्ञेयत्वरूपप्रतियोगिवृत्तित्वमिति वाच्यम्; समनियताभावभेदमतेऽगतेरिति चेन्न; वह्नित्वेन महानसीयवह्न्यभावानुपगन्तृभिः ईदृशाभावानुपगमादिति । यत्समानाधिकरणानां साध्यव्यापकतावच्छेदकप्रतियोगिताकयावदभावानां प्रतियोगिवृत्तित्वोक्तौ वाच्यत्ववृत्तित्वेन वाच्यत्वाद्यभावमादाय अव्याप्तेः तल्लक्षणे तथा नोक्तमिति स्मर्तव्यम् ।

इति चतुर्दशलक्षण्यां द्वितीयस्वलक्षणम्

---

[1] तद्घटाद्यभाव––अ.

[2] मेयत्वादित्यादौ––अ.

[3] घटत्वाभावस्वरूपतया––अ.

[4] आदिपदाघटितपाठः––अ.

# चक्रवर्तिलक्षणम्

## दीधितिः

केचितु व्याप्यवृत्तेर्हेतुसमानाधिकरणस्य साध्याभावस्य प्रतियोगितायामनवच्छेदकं, हेतुसमानाधिकरणस्य व्याप्यवृत्तेः प्रतियोगिव्यधिकरणस्य वा अभावस्य प्रतियोगितायां सामानाधिकरण्येनानवच्छदकं वा, यत्साध्यतावच्छेदकं तदवच्छिन्नसामानाधिकरण्यं व्याप्तिः ।

एवं च व्याप्तेरव्यभिचारिसम्बन्धरूपतापि सङ्गच्छते । हेतौ साध्यतावच्छेदकावच्छिन्नसाध्याभाववद्वृत्तित्वस्येव साध्यतावच्छेदके हेतुमन्निष्ठभावप्रतियोगितावच्छेदकत्वस्यापि व्यभिचारत्वात् ।

अवच्छेदकत्वं चेह तत्पर्याप्त्यधिकरणत्वम् । तेन विशिष्टवह्न्यभावस्य ह्रदत्ववह्नित्वोभयावच्छिन्नाभावस्य च प्रतियोगितावच्छदकत्वेऽपि वह्नित्वस्य न क्षतिः ।

सत्तावति[1] च गुणादौ संयोगाद्यभावोऽपि व्याप्यवृत्तिः ।

वक्ष्यमाणं वा प्रतियोगितावच्छेदकानतिरिक्तवृत्तित्वमेव तदवच्छेदकत्वम् इहापि बोध्यम् । भवति च गुणत्वगुणवृत्तित्वद्रव्यमात्रसमवेतत्वाद्यवच्छिन्नप्रतियोगिताकव्याप्यवृत्त्यभावप्रतियोगितावच्छेदकगुणत्वाद्यनतिरिक्तवृत्त्येव संयोगत्वमित्याहुः ।

[1] सत्ववतीति गादाधर्यां पाठः ।

## गादाधरी

(३२) **चक्रवर्तिलक्षणम् ।**

**चक्रवर्तिलक्षणमाह--केचित्त्विति [1]सद्धेतौ साध्यावृत्तिघटत्वादिना साध्याभाव एव लक्षणघटकः तत्प्रतियोगितानवच्छेदकत्वस्य साध्यतावच्छेदके सत्त्वात् लक्षणस[2]मन्वयः व्यभिचारिणि साध्यतावच्छेदकावच्छिन्नसाध्याभावस्यापि लक्षणघटकत्वात् नातिव्याप्तिः ।**

**'कपिसंयोगी एतत्त्वात्' इत्यादावव्याप्तेर्वारणाय व्याप्यवृत्तेरिति । व्याप्यवृत्तित्वं च निरवच्छिन्नवृत्तिकत्वम्, न तु अवच्छिन्नवृत्तिकान्यत्वम् । कपिसंयोगी सत्त्वाद् इत्यादौ, [4]कपिसंयोगा-**

[1] व्याप्यवृत्तेरिति प्रतीकधारणम् । अनन्तरं सद्धेताविति--अ.

[2] प्रमेयसाध्यके च घटभिन्नत्वेन पटाभावः घटत्वपटत्वाभ्यां प्रमेयसामान्याभावो वा लक्षणघटकः--रा.

[3] अवधेयमिति पाठो नास्ति--अ. नन्वयोगोलकान्यत्वप्रकारकप्रमाविशेष्यत्वाभावस्यायोगोलकावृत्तित्वावच्छिन्नाभावसमनियततया तदभिन्नत्वेन तादृशाभावप्रतियोग्ययोगोलकावृत्तौ अयोगोलके अयोगोलकान्यत्वप्रकराकप्रमाविशेष्यत्वाभावसत्त्वादतिव्याप्तिरिति चेन्न; हेतुसमानाधिकरणसाध्यतावच्छेदकावच्छिन्नव्यापकतावच्छेदकायोगोलकत्वप्रकारकप्रमाविषयत्वाभावत्वावच्छिन्नप्रतियोगिताकस्यायोगोलकत्वप्रकारकप्रमाविषयत्वस्वरूपाभावस्याभावमात्रवृत्तिप्रतियोगिताकत्वेन स्वसमनियतादपि भाववृत्तिप्रतियोगिताकत्वेनातिरिक्तादयोगोलकावृत्तित्वावच्छिन्नाभावादतिरिक्तस्य यावदन्तर्गतस्य प्रतियोगिवृत्तित्वविरहेणातिव्याप्तिविरहात् । हेत्वधिकरणवृत्तित्वं प्रतियोगिवृत्तित्वं च तादृशाभावत्वरूपेण बोध्यम्, तेनाधिकरणस्वरूपाभावमादाय कुत्राप्यव्याप्त्यतिव्याप्त्योर्नावकाशः । एवमयोगोलकभेदत्वेन प्रमेयसामान्याभावीयप्रतियोगिताया यदि यावत्प्रमेयवृत्तित्वं विचारसहं तदा प्रतियोगितावच्छेदकसमानाधिकरणत्वमेव विवक्षणीयमित्यवधेयम् । अधिक पाठः--क.

[4] कपिसंयोगत्वावच्छिन्नकपिसंयोगाभावादेः--अ.

**भावादेर्द्रव्येऽवच्छिन्नवृत्तिकतया तदन्यत्वाभावाद् घटत्वादिना साध्याभावस्यैव लक्षणघटकतया अतिव्याप्त्यापत्तेः। निरुक्तव्याप्यवृत्तित्वविशिष्टस्य च हेत्वाधिकरणवृत्तित्वं बोध्यम्, अन्यथा कपिसंयोगी एतत्वाद् इत्यत्र कपिसंयोगत्वावच्छिन्नकपिसंयोगाभावस्य [1]द्रव्ये हेतुसमानाधिकरणतया गुणादौ च निरवच्छिन्नवृत्तिकतया तमादायाव्याप्तेर्वारणासंभवात्।**

**हेत्वधिकरणनिरूपितनिरवच्छिन्नाधेयतावत्त्वं, हेत्वधिकरणनिष्ठ[2]निरवच्छिन्नाधिकरणताकत्वं वा दलद्वयपर्यवसितार्थः।**

कृष्णंभट्टीयम्

[4]निरवच्छिन्नवृत्तित्वे। हेत्वधिकरणवृत्तितावच्छेदकत्वनिशेवे। [4]गौरवादाह्––हेत्विति। परेत्विति मतानुरोधेनाह्––हेत्विति।

**न्यायरत्नम्**

हेत्वधिकरणीभूतेति। **संयोगी सत्वाद् इत्यादौ संयोगानिरवच्छिन्नवृत्तिकत्वविशिष्टस्य कपिसंयोगाभावस्य शुद्धविशेष्यानतिरिक्ततया** अव्याप्तितादवस्थ्यम् अत आह––हेत्विति। **आधेयताया आधेयस्वरूपत्वे आधेयतावच्छेदकरूपत्वे वा कपिसंयोगाभावरूपायाः कपिसंयोगत्वरूपाया**

[1] वृक्षे––अ.

[2] निरवच्छिन्नत्वं च अव्याप्यवृत्तितानियामकीभूतावच्छेदकत्वानिरूपकत्वं बोध्यम्––स्व.

[3] ननु निरवच्छिन्नवृत्तित्वविशिष्टस्याभावस्य हेत्वधिकरणवृत्तित्वविवक्षयैवोक्तदोषवारणसंभवाद् हेत्वधिकरणेत्यादिना पर्यवसितार्थकथनमयुक्तमित्यत आह–– निरवच्छिन्नवृत्तित्व इति।

[4] गौरवादिति। हेत्वधिकरणनिरूपितनिरवच्छिन्नवृत्तित्वावच्छिन्नाधेयताश्रयाभावस्य हेत्वधिकरणनिरूपितनिरवच्छिन्नाधेयताश्रयाभावापेक्षया गुरुत्वादित्यर्थः।

वा निरवच्छिन्नाधेयताया हेत्वधिकरणनिरूपितत्वानपायादव्याप्तिताद-वस्थ्यम् अत आह––हेत्वधिकरणनिष्ठेति ।

हेत्वधिकरणीभूतेति । संयोगी सत्वाद् इत्यादौ संयोगाभावनिष्ठ-तद्व्यक्तित्वस्य हेतुमन्निष्ठाभावप्रतियोगितानवच्छेदकत्वविरहाद् व्यधि-करणधर्मावच्छिन्नाभावमादायातिव्याप्तिरतो यत्किंचिदिति । तथा च संयोगाभावनिष्ठतद्व्यक्तित्वादेः यत्किंचिद्धेत्वधिकरणगुणनिष्ठाभावप्रति-योगितानवच्छेदकत्वात् नातिव्याप्तिः ।

नन्वतिव्याप्तिर्नाम असल्लिङ्गकानुमितिजनकपरामर्शस्य प्रमात्वा-पत्तिः । तत्र च गुणनिष्ठाभावप्रतियोगितावच्छेदकं यदभावनिष्ठं तद्व्यक्ति-त्वं तादृशाभावप्रतियोगितानवच्छेदकत्वावगाहिज्ञानस्य प्रमात्वविरहेऽपि द्रव्यस्यापि हेत्वधिकरणत्वात् तन्निष्ठाभावप्रतियोगितायां सामानाधिकरण्ये-नानवच्छेदकं यदभावनिष्ठं तद्व्यक्तित्वं तादृशाभावप्रतियोगितानवच्छेदक-साध्यतावच्छेदकावच्छिन्नसमानाधिकरणहेतुमानिति परामर्शस्य प्रमात्वा-नपायात् ततो गुणः संयोगवान् इत्यभ्रान्तस्यानुमितिर्दुर्वारा । मैवम्––स्वनिष्ठाभावीयप्रतियोगिताविशिष्टतद्व्यक्तित्ववत्त्वसंबन्धेन हेत्वधिकरण-विशिष्टाभावप्रतियोगितावच्छेदकत्वसामान्याभावावगाहिज्ञानस्यैव कारण-तयोक्तापत्तेरभावात् । प्रतियोगितावैशिष्ट्यं च, सामानाधिकरण्य-अवच्छे-दकत्वोभयाभाववत्त्वसंबन्धेन बोध्यम् ।

व्यधिकरणधर्मावच्छिन्नाभावनिष्ठतद्व्यक्तित्वस्यापि हेत्वधिकरण-निष्ठव्यधिकरणधर्मावच्छिन्नाभावप्रतियोगितावच्छेदकत्वात् तादृशाभावा-प्रसिद्धिरतः सामानाधिकरण्येनेति ।

अत्र च हेत्वधिकरणवृत्तित्वांशे संबन्धविशेषानिवेशे संयोगी जन्य-सत्वाद् इत्यादौ संयोगात्मकाभावस्यापि कालिकसंबन्धेन हेत्वधिकरण-वृत्तित्वात् संयोगाभावस्य लक्षणाघटकत्वेन व्यधिकरणधर्मावच्छिन्नाभाव-

मादायातिव्याप्तिः स्याद् अतः स्वीययादृशनिरूपकताश्रयवत्ताज्ञानं प्रति येन संबन्धेन स्वाश्रयवत्ताज्ञानं विरोधि तेन संबन्धेन साध्यतावच्छेदकसंबन्धेन वा तन्निवेशनीयम् । तथा च द्रव्यत्वसाध्यके द्रव्यध्वंसान्यतरत्वादावतिव्याप्तिः, हेतुमति ध्वंसे तादृशसमवायसंबन्धेन वृत्त्यप्रसिद्धेः; द्रव्ये च द्रव्यत्वस्य तेन संबन्धेन वृत्तेः व्यधिकरणधर्मावच्छिन्नाभावस्यैव लक्षणघटकत्वादित्यस्वरस आहुरित्यनेन सूचितः । परेत्वित्यादिमतेऽधिकरणतास्वीकारोऽस्वरसः ।

भावानां दैशिकविशेषणतास्वीकारे त्वाह—एवम् इति । बाधकविरहादिति । द्रव्यान्यत्वविशिष्टसत्ताभावसाध्यके सत्तायाः साध्याभावरूपत्वे गुणादौ तादृशाभावो नास्तीति व्यवहारस्य तादृशप्रतीतौ विशिष्टाधिकरणतायाः नियामकत्वमङ्गीकृत्य वारणेऽपि वक्ष्यमाणप्रतियोगिसत्ताग्रहविरोधितानियामकसमवायसंबन्धेन तस्याः हेतुमद्वृत्तितयाव्याप्तिरिति विशिष्टाधिकरणताया एव विशिष्टाभावाभावत्वमभ्युपगतं, तथेह न बाधकमस्तीति भावः ।

'स्वीययादृशप्रतियोगिताश्रयवत्ताज्ञानं प्रति' इति । अत्र प्रतियोगितायां स्वीयत्वविशेषणं व्यर्थम् । प्रतियोगितावच्छेदकरूपेणाप्रतियोगिमत्तावगाहिज्ञानस्यापि प्रतिबद्धचत्वात् ।

प्रतियोगिप्रकारकत्वनिवेशो व्यर्थ इति तं परित्यजति—एवं च इति । प्रयोजनाभावाद् इति । अथ प्रतियोगितावच्छेदकावच्छिन्नप्रकारताशालिज्ञानसामान्यं प्रतीत्यवश्यं वक्तव्यम् । अन्यथा आकाशाभावप्रतियोगितावच्छेदकाकाशाभावत्वावच्छिन्नप्रकारक-आकाशत्वावच्छिन्नप्रकारक समूहालम्बनं प्रति दैशिकविशेषणतासंबन्धेन आकाशाभाववत्ताज्ञानस्य प्रतिबन्धकतया दैशिकविशेषणताया निरुक्तसाध्यके संग्रहो दुर्वारः । तथा च तादृशसामान्यान्तर्गतघटत्वादिना वह्न्याद्यभावप्रतिगोगितावच्छेदकघटत्वादिना घटावगाहि ज्ञानं प्रति घटत्वादिना वह्न्यभावाद्यवगाहिज्ञानस्या-

प्रतिबन्धकतया तादृशाभावासंग्रह इति यादृशप्रतियोगिताश्रयप्रकारकत्वमावश्यकमिति चेत्, न, प्रतियोगिप्रकारकत्वनिवेशेऽपि वह्नित्वाविषयकस्य घटत्वेन वह्निमत्ताज्ञानस्यापि तादृशज्ञानसामान्यान्तर्गततया तद्दोषवारणासंभवात्। दर्शितसमूहालम्बनमादाय दर्शितदोषवारणं तु यादृशप्रतियोगितावच्छेदक-यादृशप्रतियोगितासंबन्धवाच्छिन्नप्रकारतावच्छेदक- एतदुभयातिरिक्तधर्मावच्छिन्नप्रकारताशून्यज्ञानं प्रतीति विवक्षया कर्तव्यम्।

साध्यतावच्छेदकप्रकृतप्रतियोगितावच्छेदकातिरिक्तेति। अथैवं विवक्षणे वह्नित्वेन घटाभाववत्ताज्ञानस्य वह्नित्वेन घटवत्ताज्ञानं प्रत्येव प्रतिबन्धकतया तादृशज्ञानस्य च साध्यतावच्छेदकप्रकृतप्रतियोगितावच्छेदकातिरिक्तघटत्वानवच्छिन्नप्रकारताकत्वविरहेण वह्नित्वेन घटाभावस्य लक्षणाघटकतयैवाव्याप्त्यप्रसक्तेः तद्वारणायोपात्तसाध्याभावपदवैयर्थ्यमिति चेत्, न, विषयितया वह्नित्ववतो वह्नित्वेनाभावमादाय वह्निसाध्यकेऽव्याप्तिवारणाय तदावश्यकत्वात्। साध्यतावच्छेदकव्याप्यप्रतियोगिताकत्वस्य तदर्थत्वाच्च न ज्ञानवान् आत्मत्वाद् इत्यादौ कालिकेन ज्ञानत्ववतो ज्ञानत्वेनाभावमादाव्याप्तिः।

इदमत्र चिन्त्यम्--एवं रीत्या साध्याभावांशसार्थक्येऽपि सर्वत्र द्वित्वावच्छिन्नाभावमादाय लक्षणसमन्वयप्रदर्शनमसंगतं स्यात्। तस्य साध्यतावच्छेदकव्याप्यप्रतियोगिताकत्वविरहात्। न च तद्वृत्तित्वविशिष्टसाध्यतदन्यवृत्तित्वविशिष्टसाध्योभयाभावमादायैव लक्षणसमन्वयो विवक्षित इति वाच्यम्। एकमात्रवृत्तिसाध्यके तादृशाभावाप्रसिद्धेः, क्षणविशेषविशिष्टसाध्याभावस्य हेत्वधिकरणे व्याप्यवृत्तित्वविरहात्, तत्र व्यधिकरणधर्मावच्छिन्नाभावस्यावश्यकत्वादिति।

यदि च स्वन्यूनवृत्तिधर्मानवच्छिन्नत्वं प्रतियोगितायां निवेश्य साध्यतावच्छेदकव्याप्यत्वविशेषणवारणीयाव्याप्तिवारणं सर्वत्रेति ग्रन्थसंगमनं च भवति, न्यूनवृत्तित्वस्य प्रतियोग्यवृत्तित्वविशेषितभेदघटितत्वादि-

त्युच्यते; तदा न्यूनवृत्तित्वस्य विरुद्धव्यावृत्तस्य निवेशे प्रयोजनाभावेन वह्नित्वेन घटाभावीयप्रतियोगितायाः तादृशत्वविरहाद् वक्ष्यमाणसमनियतनानाधर्मावच्छिन्नप्रतियोगित्वाभेदमताभिप्रायेणापि तत्सार्थक्यासंभवादिति ।

सर्वत्र द्वित्वावच्छिन्नप्रतियोगिताकसाध्याभावमादायेति । ननु वह्निसाध्यके वह्निघटोभयाभावीयप्रतियोगितावच्छेदकतायाः साध्यतावच्छेदकताघटकसंबन्धावच्छिन्नाया अप्रसिद्ध्या न तादृशाभावमादाय लक्षणसमन्वयः । एवम् एतद्रूपवान् एतद्रसादित्यादावपि; तत्र विशिष्टाभावस्य हेत्वधिकरणे व्याप्यवृत्तित्वविरहात्, उभयाभावीयप्रतियोगितावच्छेदकतायाः साध्यतावच्छेदकताघटकसंबन्धावच्छिन्नत्वविरहाच्च । एतेन, वह्निसाध्यके महानसीयवह्न्यभावमादाय लक्षणसमन्वयेऽपि न क्षतिः ।

## गादाधरी

(३३) तत्र मतान्तरोपन्यासः ।

**केचित्तु——व्याप्यवृत्तेः हेतुसमानाधिकरणसाध्याभावस्येति समुदायस्य, हेत्वधिकरणे व्याप्यवृत्तिर्यः साध्याभावः तस्येत्यर्थः, हेत्वाधिकरणे व्याप्यवृत्तित्वं च हेत्वधिकरणीभूतयत्किंचिद्व्यक्तिनिष्ठात्यन्ताभावप्रतियोगितायाः सामानाधिकरण्येनानवच्छेदकं यदभावनिष्ठं तद्व्यक्तित्वं तत्त्वम् ।**

**न च विशिष्टसत्तावान् जातेरित्यादौ गुणादिनिष्ठसत्त्वादिरूपाभावप्रतियोगितायां विशिष्टसत्ताभावनिष्ठतद्व्यक्तित्वस्यावच्छेदकत्वाद् विशिष्टसत्त्वाद्यभावस्य व्याप्यवृत्तित्वानुपपत्तिः, यदभावाभावत्वावच्छिन्नानधिकरणत्वं हेतुमतः तत्त्वमिति विवक्षणे व्यधिकरणधर्मावच्छिन्नाभावस्यासंग्रहप्रसंगः, तदभावाप्रसिद्धेरिति**

**वाच्यम् । यत्किंचिद्धेत्वधिकरणवृत्तितावच्छेदकानुयोगितानिरूपकतानवच्छेदकं यदभावत्वं तत्त्वस्य विवक्षितत्वाद् गुणे गुणान्यत्वविशिष्टसत्ताभावो नास्तीत्यप्रत्ययेन विशिष्टसत्ताभावत्वाद्यवच्छिन्ननिरूपितानुयोगिताविशिष्टाया: सत्ताया गुणादिवृत्तितानभ्युपगमेन विशिष्टसत्ताद्यभावस्य व्याप्यवृत्तितानिर्वाहादित्याहुः ।**

## कृष्णंभट्टीयम्

संयोगी सत्त्वादित्यादौ साध्यसामान्याभावनिष्ठतद्व्यक्तित्वस्य हेत्वधिकरणनिष्ठाभावप्रतियोगितावच्छेदकत्वादुक्तम् [1]यत्किंचिदिति । सामानाधिकरण्येनेति । प्रयोजनं [2]तूह्यम् । साध्याभावत्वस्य व्यधिकरणधर्मावच्छिन्नाभावसाधारणतया तदवच्छिन्नाभावासत्त्वादुक्तं यदभावनिष्ठमित्यादि । यदभावेति । हेतुमत्सामान्यं यद्यदभावत्वावच्छिन्नाधिकरणं तत्तद्भेदकूटवत्त्वोक्तौ च केवलान्वयिहेतुकेऽप्रसिद्धिः ।

यत्किंचिदिति । निरूपकता साध्यवत्ताग्रहविरोधितानियामकसंबन्धेन । तेन वह्न्यभाववान् धूमाभावादित्यादौ साध्याभावस्य वह्नेः समवायाद्यवच्छिन्नाभावप्रतियोगित्वेऽपि नातिव्याप्तिः । समनियताभावैक्यमतेऽपि कपिसंयोगाद्यभावस्य न गगनाद्यभावैक्यम् । तथा सति गगनाद्यभावस्य अवच्छिन्नवृत्तिकत्वप्रसङ्गात् ।

[1] यत्किंचित्पदोपादाने तु हेत्वाधिकरणयत्किंचित्पदेन गुणं कर्म वा आदाय संयोगसामान्याभावनिष्ठतद्व्यक्तित्वस्यानवच्छेदकत्वमुपपादनीयमिति भाव: ।

[2] ऊह्यमिति । घटत्वेन वह्न्यभावनिष्ठं यत् तद्व्यक्तित्वं तस्यापि हेत्वधिकरणपर्वतनिष्ठ: य: तादृशतद्व्यक्तित्वेन घटाभाव: तत्प्रतियोगितायां व्यधिकरणतया अवच्छेदकतया अनवच्छेदकं साध्याभावनिष्ठं तद्व्यक्तित्वमप्रसिद्धं स्यादिति तत्प्रयुक्तासंभववारणाय सामानाधिकरण्येनेत्युक्तमिति भाव: ।

एतेन तदैक्येऽपि गगनाद्यभावनिष्ठतद्व्यक्तित्वस्य न निरुक्तव्याप्यवृत्तित्वावच्छेदकत्वमुपपादयितुं शक्यते, हेतुमद्वृक्षनिष्ठसंयोगात्मकाभावप्रतियोगितावच्छेदकत्वादिति कपिसंयोगसाध्यकसद्धेतौ नाव्याप्तिरिति प्रत्युक्तम् । व्यधिकरणधर्मावच्छिन्नाभावस्यापि तुल्यन्यायेव संयोगाभावरूपतया तत्र निरुक्तव्याप्यवृत्तित्वोपपादनासंभवेनाव्याप्तिः स्यात् ।

अत्र साध्यतावच्छेदकसंवन्धेन स्वीययादृशनिरूपकताश्रयवत्ताज्ञानं प्रति येन संवन्धेन स्वाश्रयप्रकारकं ज्ञानं विरोधि तेन संवन्धेन हेतुमद्वृत्तित्वं वाच्यम् । अन्यथा गुणादौ कालिकसंवन्धेन संयोगसत्त्वात् तत्सामान्याभावासंग्रहेण संयोगी जन्यत्वे सति सत्त्वादित्यादावतिव्याप्तेः । तथा च द्रव्यं द्रव्यध्वंसान्यतरत्वादित्यादावतिव्याप्तिः, हेतुमति ध्वंसे तादृशसमवायेन वृत्त्यप्रसिद्धेः द्रव्ये च द्रव्यत्वसत्त्वेन द्रव्यत्वाभावस्य तत्प्रतियोगित्वादित्यस्वरसः ।

यदि च तादृशसंवन्धावच्छिन्नाधेयतावदभावप्रतियोगितावच्छेदकतासंवन्धेन यत्किंचिद्धेत्वधिकरणाभावः, तदा न दोषः । हेत्वधिकरणवृत्तित्वं चेत् साध्यतावच्छेदकसंवन्धेतरसाध्यप्रतियोगिकसंवन्धानवच्छिन्नं निवेश्यते, तदा प्रमेयसाध्यके दोषवारणं प्रयत्नसाध्यमिति बोध्यम् ।

[1]संयोगिभिन्नमिति । भेदाव्याप्यवृत्तित्वे चायं सद्धेतुः ।

नन्वेवमपसिद्धान्त[2] इत्यत आह—विशिष्टेति ।

## न्यायरत्नम्

**अत्र केचित्—महानसवृत्तिवह्न्यभावीयप्रतियोगितानिरूपितसाध्यतावच्छेदकताघटकसमवायसंबन्धावच्छिन्नावच्छेदकतापर्याप्तेः वह्नित्व एव**

[1] संयोगिभेदभिन्नमिति प्रतीकधारणम्—अ. संयोगिभेदभिन्नमिति गादाधर्यां पाठो न वर्तते—स्व.

[2] अपसिद्धान्त इति । अभावाभावः प्रथमाभावप्रतियोगिरूप इति सिद्धान्तभङ्ग इत्यर्थः ।

सत्वाद् वह्निसाध्यकेऽव्याप्तिवारणाय साध्यतावच्छेदकताघटकसंबन्धावच्छिन्नावच्छेदकताका या हेतुसमानाधिकरणाभावीयप्रतियोगिता तदवच्छेदकतात्वावच्छिन्नपर्याप्तिशून्यत्वस्यैवानवच्छेदकपदेन विवक्षणीयतया एतद्रूपतद्रूपोभयाभावीयप्रतियोगितायामवतरणग्रन्थोक्तरीत्या एतद्रूपत्वतद्रूपत्वद्वित्वैतत्त्रितयस्यावच्छेदकत्वावश्यकत्वात् तादृशोभयाभावीयप्रतियोगितायाया अपि साध्यतावच्छेदकताघटकसंबन्धावच्छिन्नैतद्रूपवत्त्वतद्रूपवत्त्वनिष्ठावच्छेदकताकत्वाक्षतेरित्याहुः ।

## गादाधरी

(३४) संयोगिभिन्नं प्रमेयत्वादित्यत्रातिव्याप्तिनिरासप्रकारः ।

ननु संयोगिभिन्नं प्रमेयत्वाद् इत्यत्राति[1]व्याप्तिः, संयोगिभेदाभावस्य तद्भेदप्रतियोगितावच्छेदकीभूतसंयोगात्मकस्याव्याप्यवृत्तित्वेन लक्षणघटकत्वाभावात्, व्यधिकरणधर्मावच्छिन्नाभावमादाय लक्षणगमनादिति चेत् न संयो[2]गिभेदस्य व्याप्यवृत्तित्वेन तस्य द्रव्यत्वसंयोगप्रकारकप्रमाविशेष्यत्वाद्यवच्छिन्नभेदसमनियततया तदभिन्नत्वेन तद्भेदप्रतियोगितावच्छेदकद्रव्यत्वादिकमपि संयोगिभेदाभावः, तस्य हेत्वधिकरणे व्याप्यवृत्तितया तत्प्रतियोगितावच्छेदकत्वस्य साध्यतावच्छेदके सत्वेनातिव्याप्त्यनवकाशात् ।

एवं 'द्रव्यान्यत्वविशिष्टसत्ताभाववान् द्रव्यत्वात्' इत्यादौ व्याप्यवृत्तेः सत्तादिरूपाभावस्य प्रतियोगितावच्छेदकं साध्यतावच्छेदकमित्यव्याप्तिरित्यपि नाशङ्कनीयम्, सत्तादिसत्वेऽपि

[1] प्रथमकल्पे--रा.

[2] संयोगिभेदाभावस्याव्याप्यवृत्तित्वेऽपि---अ.

**द्रव्यादौ द्रव्यान्यत्वविशिष्टसत्ताभावो नास्तीति प्रत्ययानुदयात् । विशिष्टनिरूपिताधिकरणताविशेषस्यैव विशिष्टाभावाभावत्वोपगमात्, विशिष्टाभावस्य विशिष्टाधिकरणत्वाभावसमनियततया तदभिन्नतया विशिष्टसत्ताधिकरणताया [1]अपि [2]विशिष्टाभावप्रतियोगित्वात् ।**

## गादाधरी

(३५) तत्र मतान्तरोपन्यासः ।

**परे तु––संयोगत्वेन संयोगनिरूपिताया अधिकरणतायाः किंचिदवच्छिन्नत्वेऽपि संयोगिभेदाभावत्वेन तन्निरूपिताधिकरणता निरवच्छिन्नैव । द्रव्ये संयोगिभेदस्याप्रत्ययात्, अवच्छेदकमनन्तर्भाव्यैव तदभावत्वावच्छिन्नवत्ताप्रतीतेः । एवं द्रव्यादौ सत्तात्वाद्यवच्छिन्नसत्ताद्यधिकरणतासत्वेऽपि द्रव्यान्यत्वविशिष्टसत्तात्वादिनेव तदवच्छिन्नप्रतियोगिताकाभावाभावत्वेनापि न वृत्तिः । तत्र विशिष्टाभावो नास्तीत्यप्रत्ययात् । तथा च साध्यनिष्ठयादृशप्रतियोगिताकाभावत्वावच्छिन्ननिरूपिता अनवच्छिन्नाधिकरणता हेत्वाधिकरणवृत्तिः तादृशप्रतियोगितानवच्छेदकत्वमेव साध्यतावच्छेदके निवेश्यमिति न कश्चिद् दोष इत्याहुः ।**

### कृष्णंभट्टीयम्

परेत्विति । [3]अधिकरणत्वाङ्गीकारोऽत्रास्वरसः ।

[1] अपि द्रव्ये––अ.

[2] विशिष्टाभावाभावत्वादित्यर्थः, अभावाभावस्यैव प्रतियोगिता––रा.

[3] अधिकरणताङ्गीकार' इति––अ.

## न्यायरत्नम्

परेतु--प्रतियोगितायां साध्यतावच्छेदकताघटकसंबन्धावच्छिन्नत्वदानेऽपि कालिकेन महानसीयत्वविशिष्टस्य समवायेन वह्नित्वादिविशिष्टस्य साध्यतायां सद्धेतौ समवायेन महानसीयत्वविशिष्टस्य कालिकेन वह्नित्वविशिष्टस्याभावमादायाव्याप्तिवारणाय स्वानवच्छेदकसंबन्धावच्छिन्नत्वस्वसामानाधिकरण्यैतदुभयसंबन्धेन साध्यतावच्छेदकताविशिष्टान्यत्वस्य हेतुसमानाधिकरणाभावीयप्रतियोगितावच्छेदकतायामवश्यं निवेशनीयतया गुणवान् द्रव्यत्वाद् इत्यादौ विषयितया गुणत्वविशिष्टाभावीयप्रतियोगितावच्छेदकतायां तादृशोभयसंबन्धेन साध्यतावच्छेदकताविशिष्टान्यत्वविरहेणाव्याप्त्यप्रसक्तेः प्रतियोगितावच्छेदकतायां साध्यतावच्छेदकताघटकसंबन्धावच्छिन्नत्वस्यानिवेशनीयतया नोक्तपूर्वपक्षावसर इति वदन्ति ।

ननु द्वितीयलक्षणे व्यधिकरणधर्मावच्छिन्नाभावास्वीकारे वह्नित्वादिना घटाभावमादायाव्याप्तिवारणायोपात्तसामानाधिकरण्येनेत्यस्य वैयर्थ्यं स्यादिति तदावश्यकत्वं दर्शयिष्यते, तद्वदिहापि व्यधिकरणधर्मावच्छिन्नाभावास्वीकारे वह्नित्वादिना घटाद्यभावमादायाव्याप्तिवारणायोपात्तस्य साध्याभावस्येत्यस्य वैयर्थ्यं स्यादिति तदावश्यकता संभवतीति चेत्, न, अखण्डाभावघटकतासंपादकत्वेन साध्याभावांशस्यात्र सार्थक्यसंभवात् । न हि द्वितीयलक्षणेऽप्येवं संभवति । व्यधिकरणधर्मावच्छिन्नाभावास्वीकारे हेतुसमानाधिकरणाभावीयप्रतियोगितावच्छेदकत्वतादृशाभावीयप्रतियोगितायां सामानाधिकरण्येनावच्छेदकत्वयोः समनैयत्येन समनियतनानाधर्मावच्छिन्नप्रतियोगितानामभेदस्यान्यत्रोक्तत्वेनाभावभेदप्रयोजकप्रतियोगिताभेदविरहात् । हेतुसमानाधिकरणाभावप्रतियोगितावच्छेदकत्वतादृशसाध्याभावप्रतियोगितावच्छेदकत्वयोः समनैयत्यविरहेण तदवच्छिन्नाभावयोः भेदस्यावश्यं वक्तव्यत्वात् ।

## गादाधरी

(३६) हेत्वधिकरणवृत्तित्वे संबन्धविशेषनिवेशनम् ।

अभावहेत्वधिकरणवृत्तित्वं यदि येन केनचित् संबन्धेन, तदा कालिकादिसंबन्धेन धूमाधिकरणवृत्तिवह्नित्वावच्छिन्नवह्न्यभावादिकमादायाव्याप्तिः यदि च कालिकसंबन्धेन काले वह्न्यभावादेः वृत्तिः वह्न्यनधिकरणदेशावच्छिन्नैवेति नासौ हेत्वधिकरणे निरवच्छिन्नवृत्तिक इति मन्यते, तदापि सत्तावान् जातेः इत्यादौ हेतुमति ज्ञानादौ विषयितासंबन्धेन वर्तमानं साध्याभावमादायाव्याप्तिर्दुर्वारैव, दैशिकविशेषणतासंबन्धेन हेत्वधिकरणवृत्तित्वनिवेशने च घटत्वाभावादिसाध्यके व्यभिचारिण्यतिव्याप्तिः तत्र समानाधिकरणधर्मावच्छिन्नप्रतियोगिताकस्य भावरूपसाध्याभावस्य तेन संबन्धेनावृत्तेः व्यधिकरणधर्मावच्छिन्नाभावस्यैव लक्षणघटकत्वात् । [1]एवं कालिकसंबन्धावच्छिन्नप्रतियोगिताके आकाशाभावाभावे साध्ये आत्मत्वादिहेतावव्याप्तिः दैशिकविशेषणतया हेतुसमानाधिकरणस्याकाशाभावस्य प्रतियोगितावच्छेदकतायाः साध्यतावच्छेदके सत्वात् कालिकसंबन्धेन आकाशाभावरूप[2]प्रतियोगिसत्ताया एव कालिकसंबन्धावच्छिन्नप्रतियोगिताकाकाशाभावाभावो नास्तीति प्रत्ययनियामकत्वाद् आकाशाभावस्यैव तादृशसाध्याभावरूपत्वे बाधकविरहादिति चेत् न ।

[1] ननु घटत्वाभाववान् मेयत्वादित्यादौ घटत्वप्रकारकप्रमाविशेष्यत्वाद्यात्मकाभावप्रतियोगितावच्छेदकत्वात् साध्यतावच्छेदकस्य नातिव्याप्तिरित्यत आह––एवमिति––रा.

[2] प्रतियोगिमत्तायाः पाठः––अ.

स्वीययादृशप्रतियोगिताश्रयवत्ताज्ञानं प्रति यादृशसंबन्धेन स्वप्रकारकं ज्ञानं विरोधि, तादृशसंबन्धेन हेत्वधिकरणवृत्तिः योऽभावः तदीयतादृशप्रतियोगितानवच्छेदकत्वस्यैव निवेशनीयत्वात् । आकाशाभावस्य दैशिकविशेषणतासंबन्धश्च न दर्शिताकाशाभावाभाववत्ताज्ञानविरोधिज्ञानविषयः, अपि तु कालिकसंबन्ध एव । स च तेन संबन्धेन आत्मनि न वर्तते । अत आकाशाभावाभावीयसाध्यनिष्ठप्रतियोगिताया यादृशप्रतियागितेत्यनेन उपादानासंभवः । अपि तु व्यधिकरणधर्मावच्छिन्नसाध्याभावीयप्रतियोगिताया एव । तादृशाभावज्ञानस्य दैशिकविशेषणतासंसर्गकस्य व्यधिकरणधर्मप्रकारेण साध्यावगाहिनं भ्रमं प्रति विरोधित्वात् ।

सामान्यतः प्रतियोगिप्रकारकज्ञाननिवेशे आकाशप्रकारकज्ञानं प्रति दैशिकविशेषणतासंबन्धेन आकाशाभावप्रकारकज्ञानस्य प्रतिबन्धकतया उक्तदोषतादवस्थ्यमिति यादृशप्रतियोगिताश्रयेत्युक्तम् । प्रतियोगिताश्रयवत्ताज्ञानं च तत्प्रतियोगितावच्छेदकधर्मावच्छिन्नप्रकारकं ग्राह्यम् । तेन आकाशत्वेन तादृशसाध्यवत्ताज्ञानं प्रति दैशिकविशेषणतासंबन्धेन आकाशाभावप्रकारकज्ञानस्य विरोधित्वेऽपि न क्षतिः । एवं च प्रतियोगिताश्रयावगाहित्वनिवेशे प्रयोजनाभावाद् यादृशप्रतियोगितावच्छेदकावच्छिन्नप्रकारताशालिज्ञानं प्रति प्रतिबन्धकमित्येव वक्तव्यम् ।

साध्यवत्ताज्ञानविरोधित्वं वा एतल्लक्षणे निवेशनीयम् ।

न च आकाशत्वादिना साध्यवत्ताज्ञानविरोधितामादाय दर्शितदोषतादवस्थ्यात्, साध्यतावच्छेदकावच्छिन्नप्रकारकज्ञान-

विरोधित्वपर्यन्तनिवेशे व्यधिकरणधर्मावच्छिन्नप्रतियोगिताकसाध्याभाववत्ताज्ञानस्यापि व्यधिकरणधर्मादिप्रकारकसाध्यवत्ताज्ञानं प्रत्येव विरोधित्वेन साध्यतावच्छेदकावच्छिन्नप्रकारकज्ञानाविरोधितया तादृशसाध्याभा[1]वाप्रसिद्धिरिति वाच्यम्। घटत्वादिविशिष्टवह्निमानित्यादिज्ञानस्यापि साध्यतावच्छेदकावच्छिन्नप्रकारकताया 'अधिकं तु' इत्यादि न्यायेन अक्षतत्वात्।

न च तन्मात्रावच्छिन्नप्रकारकताकत्वमवश्यं निवेश्यम्, अन्यथा आकाशत्वनिरुक्तसाध्यतावच्छेदकोभयत्वरूपेण साध्यज्ञानं प्रति दैशिकविशेषणतया आकाशाभाववत्ताज्ञानस्य विरोधितया तद्दो[2]षतादवस्थ्यमिति कथं व्यधिकरणधर्मावच्छिन्नाभावसंग्रह इति वाच्यम्। प्रतियोगितावच्छेदकमात्रावच्छिन्नप्रकारतानिवेशेऽपि व्यधिकरणधर्मावच्छिन्नाभावासंग्रहात्। तदवच्छिन्नप्रकारतामात्रनिवेशे[3] उक्तस्थले आकाशाभावीयदैशिकविशेषणतावारणासंभवात्। द्वितीयलक्षणे यादृशप्रतियोगितावच्छेदकयादृशप्रतियोगितासंबन्धावच्छिन्नप्रकराताववच्छेदकातिरिक्तानवच्छिन्नप्रकारताशालिज्ञानं प्रति येन संबन्धेन स्वप्रकारकज्ञानं विरोधीति विवक्षणवद् एतल्लक्षणे साध्यतावच्छेदक[4]प्रकृतप्रतियोगितावच्छेद[5]कातिरिक्तानवच्छिन्नप्रकारताकज्ञानविरोधिता-

[1] तदसंग्रहादित्यर्थः—रा.

[2] पर्याप्त्यघटिताकाशत्वावच्छिन्नप्रकारताया एव तत्प्रतिबद्धचतावच्छेदकत्वात् —रा.

[3] निवेशेऽपि—अ.

[4] यादृश—अ.

[5] उभयातिरिक्त—अ.

**[1]निवेशेन प्रतीकारसंभवात्। आकाशत्वादेः आकाशाभावाभावत्वादिरूपप्रतियोगितावच्छेदकातिरिक्ततया तदवच्छिन्नप्रकारताकज्ञानविरोधितामादाय दोषाभावात्।**

**हेतु[2]समानाधिकरणस्य व्याप्यवृत्तेः वह्नित्वादिना घटाद्यभावस्य प्रतियोगितावच्छेदकमेव वह्नित्वादिरूपं साध्यतावच्छेदकम्, अतः साध्याभावस्येति ॥**

कृष्णंभट्टीयम्

कालिकेति। दैशिकविशेषणतासंवन्धेन व्याप्यवृत्तित्वविशिष्टमित्यादिः। कालिकसंवन्धावच्छिन्नवृत्तेः निरवच्छिन्नत्वमभिप्रेत्य वेदम्। भावानां विशेषणताङ्गीकारेऽप्याह––एवमिति।

द्रव्यान्यत्वविशिष्टसत्ताभावादिसाध्यके सत्ताया एव साध्याभावरूपत्वे द्रव्ये द्रव्यान्यत्वविशिष्टसत्ताभावो नास्तीति प्रतीतेः विशिष्टाधिकरणताया नियामकत्वोपगमेन वारणेऽपि, प्रतियोगिमत्ताग्रहविरोधिग्रहविषयसंवन्धेन हेतुसमानाधिकरणतया अव्याप्तिरित्यनायत्या तस्या एव विशिष्टाभावत्वपक्षोऽवलम्वितः। प्रकृते च प्रकारान्तरेण समाधानसंभवाद् आकाशाभावाधिकरणतायाः साध्याभावत्वमनालम्ब्य समाधत्ते––

[1] विवक्षणं––अ.

[2] यद्यपि यादृशप्रतियोगितावच्छेदकावच्छिन्नप्रकारताशालिग्रहत्वावच्छिन्नप्रतिबद्धयतानिरूपितप्रतिबन्धकतावच्छेदकसंबन्धेन हेत्वधिकरणवृत्तित्वं विवक्षणीयम्; अत्र गगनत्वावच्छिन्नप्रकारताया एव प्रतिबध्यतावच्छेदकत्वात् तदवच्छिन्नैव प्रतियोगिता यादृशपदेनोपादातुं शक्यते न गगनाभावाभावत्वावच्छिन्ना एवमत्रापि साध्यतावच्छेदकावच्छिन्नप्रकारतावच्छिन्नत्वं प्रतिबद्धयतायां निवेश्य दोषो वारयितुं शक्यते तथापि यत्र विशिष्टं साध्यतावच्छेदकं तत्र एकांशेऽपरस्य भ्रमसंग्रहाय निरूप्यनिरूपकभावापन्नविषयतानिवेशे गौरवादिदमिति ध्येयम्––रा.

न स्वीयेति । एवं च द्रव्यान्यत्वविशिष्टसत्ताभावादिसाध्यके सत्तारूपसाध्याभावाधिकरणतायाः साध्याभावत्वविशिष्टाधिकरणतारूपत्वेऽव्याप्तिरूपबाधकवत् प्रकृते आकाशाभावाधिकरणताया एव साध्याभावत्वविशिष्टाधिकरणतारूपत्वेऽपि न क्षतिरित्यपि द्रष्टव्यम् ।

स्वपदद्वयमपि लक्षणघटकाभावपरम् । न च स्वीयत्वं किमर्थं कालिकसंबन्धावच्छिन्नप्रतियोगिताके आकाशाभावाभावे कालिकसंबन्धेन साध्ये कालत्वादौ दैशिकविशेषणतासंबन्धेन साध्यरूपप्रतियोगिताश्रयवत्ताज्ञानं प्रति तत्संबन्धावच्छिन्नसाध्याभावग्रहस्य विरोधितया तद्विषयकालिकसंबन्धेन हेत्वधिकरणवृत्तिर्य आकाशाभावः तत्प्रतियोगितावच्छेदकत्वेनाव्याप्तिस्तु न संभवति । साध्यतावच्छेदकसंबन्धावच्छिन्नप्रतियोगिताकसाध्याभावस्यैव स्वपदेनोपादेयत्वात् । अन्यथा स्वीयत्वनिवेशेऽपि अनिस्तारादिति वाच्यम् । सामान्यतः प्रतियोगिगर्भप्रतिबन्धकत्वासिद्धिशङ्काव्युदासाय स्वीयत्वनिवेशात् ।

दैशिकेति । न चावच्छेदकधर्मदर्शनविधया कालिकसंबन्धावच्छिन्नाकाशाभावाभाववत्ताज्ञाने दैशिकविशेषणतासंबन्धेनाकाशाभाववत्ताज्ञानस्य विरोधित्वाद् दैशिकविशेषणतायाः संग्रहो दुर्वार इति वाच्यम् । तत्समानधर्मिकस्वप्रकारकनिश्चयत्वव्यापकप्रतिबन्धकताया उक्तत्वात् । न च ज्ञानवैशिष्टयानवच्छिन्नप्रतिबन्धकतानिवेशः सम्यक् । तथा सति निश्चयत्वोत्कीर्तनवैयर्थ्यात् ।

अत्र [1]तादृशप्रकारत्वावच्छिन्नप्रतिबन्धकतानिरूपितप्रतिबध्यतावच्छेदकस्वप्रकारत्वनिवेशस्तु न युक्तः । दैशिकविशेषणतासंबन्धेन आकाशाभाववत्ताज्ञानं प्रति अवच्छेदकधर्मदर्शनविधया कालिकसंबन्धावच्छिन्नाकाशाभावाभाववत्ताज्ञानस्य विरोधित्वात्, तादृशप्रकारताशालिनिश्चय-

[1] यादृशप्रतियोगिताश्रयप्रकारत्वावच्छिन्नेत्यादि––अ.

त्वव्यापकप्रतिबन्धकताया ज्ञानवैशिष्टयानवच्छिन्नतादृशप्रतिवन्धकताया वा निवेशे[1] गौरवात्। तादृशप्रतिबध्यताश्रयस्वप्रकारकज्ञानोक्तौ दैशिकविशेषणतासंबन्धेन कालिकविशेषणतासंबन्धेन च समूहालम्बनात्मकाका-[2]शाभावाभाववत्ताज्ञानमादायोक्तदोषात्। यादृशप्रतियोगितावच्छेदकेत्यादिरीतिमपेक्ष्य तत्प्रतियोगितावच्छेदकावच्छिन्नप्रकारताशालि निश्चयत्वव्यापकतायामनाहार्यत्वादिनिवेशेन गौरवात्। ज्ञानवैशिष्टयानवच्छिन्नप्रतिवन्धकतानिवेशपक्षे च तादृशरीतेः आवश्यकत्वादिति।

'सामान्यतः'। स्वीयप्रतियोगितात्वेन प्रतियोगितानिवेशे। अत्र च दैशिकविशेषणतासंबन्धेनोक्तसाध्यकस्थले आकाशतथाविधाकाशाभावाभावोभयवत्ताज्ञानं प्रति दैशिकविशेषणताया विरोधितानियामकसंवन्धतया अव्याप्तेः तादृशज्ञानसामान्यं प्रतीति वक्तव्यमिति तु न संभवति। तथा सति संबन्धान्तरेण प्रतियोगिप्रकारकज्ञानस्याप्रतिवध्यतया प्रतियोगिप्रकारतावच्छेदकसंबन्धानुपादानस्य निर्बीजतापत्तेः। उक्तदोषश्च प्रकारान्तरमालम्ब्य स्वयमग्रे वारणीयः।

विशिष्य यादृशप्रतियोगितासंबन्धावच्छिन्नप्रकारतावच्छेदकनिवेशस्थाने साध्याभावघटितलक्षणे विशिष्य साध्यतावच्छेदकनिवेशसंभवात् तथैवाह––साध्येति। व्यधिकरणेति। घटत्वविशिष्टवह्निमदिति भाने वह्नित्वं न भासत इत्यभिमानः। यद्वा आकाशत्वनिरुक्तसाध्यतावच्छेकोभयरूपेणेत्यादिदोषभयेन साध्यतावच्छेदकपर्याप्तप्रकारतावच्छेदकतानिवेशमभिप्रेत्याशङ्कायां पर्याप्तित्यागेन समाधाय तद्दोषवारणाय पुनः शङ्कते न चेतीत्यवतारणीयम्।

आवश्यकत्वार्थं द्वितीयलक्षण इति। प्रथमलक्षणे गौरवाशङ्काव्युदासाय अत्र परिष्कारारम्भः। तत्राकाशत्वेन साध्यवत्ताज्ञानमादाय दोषवा-

[1] प्रतिवध्यकोटौ स्वोपादानफलकसंबन्धनिवेशापत्त्या गौरवात् अधिकपाठः––अ.
[2] आकाशाभाववत्ताज्ञानमादाय––अ.

रणाय प्रतियोगितायां प्रकृतत्वोपादानं लक्षणघटकप्रतियोगित्वाभेदलाभार्थम् ।

ननु यादृशप्रतियोगितावच्छेदक यादृशप्रतियोगितासंबन्धावच्छिन्नप्रकारतावच्छेदकोभयावच्छिन्नवत्ताज्ञानं प्रतीतिवत् साध्यतावच्छेदकप्रकृतप्रतियोगितावच्छेदकोभयावच्छिन्नप्रकारताशालिज्ञानं प्रति विरोधित्वं निवेश्यम् । तावतापि साध्यतावच्छेदकवह्नित्वप्रतियोगितावच्छेदकघटत्वोभयावच्छिन्नप्रकारताकघटत्वेन वह्निमानिति ज्ञानं प्रति विशेषणतासंबन्धेन घटत्वेन वह्निर्नास्तीति ज्ञानस्य विरोधित्वेनैवोपपत्तेर्नञ् द्वयघटनानर्थक्यमित्यत आह आकाशत्वादेरिति ।

ननु साध्यतावच्छेदकसंबन्धेन तादृशज्ञानसामान्यं प्रति विरोधित्वनिवेशात् न नञ्द्वयघटनाप्रसङ्गः आकाशाभावाभाववत्ताज्ञानं प्रति दैशिकविशेषणतया अवच्छेदकधर्मदर्शनादिविधया विरोधिग्रहविषयत्वेन तद्वारकयत्नस्य नञ्द्वयोपादानकल्पेऽपि अविशेषात् । मैवम्——व्यापकत्वरूपसामान्यपदार्थनिवेशे महागौरवात् । न [1]च नञ्द्वयोपादानेऽपि उभयत्वविषयकस्य गगनवान् कालिकसंबन्धावच्छिन्नाकाशाभावाभाववानित्युभयसमूहालम्बनस्य निरुक्तप्रकारताशालितया अव्याप्तिरिति वाच्यम् । यादृशप्रतियोगितावच्छेदकसाध्यतावच्छेदकोभयातिरिक्तधर्मावच्छिन्नप्रकारताशून्यज्ञानं प्रतीति विवक्षणात् ।

यद्यपि, यादृशप्रतियोगितावच्छेदकावच्छिन्नप्रकारताशालिग्रहत्वावच्छिन्नप्रतिवध्यतानिरूपिताप्रतिबन्धकतावच्छेदकप्रकारतावच्छेदक - संवन्धेन हेत्वधिकरणवृत्तित्वं निवेश्यम्, तत्र गगनत्वावच्छिन्नप्रकारताया एव प्रतिवध्यतावच्छेदकतया तदवच्छिन्नैव प्रतियोगिता यादृशपदेनोपादातुं शक्यते न गगनाभावाभावत्वावच्छिन्ना । एवं साध्यतावच्छेदकावच्छिन्न-

[1] चैवम्——अ.

प्रकारत्वावच्छिन्नत्वं निवेश्यैवोक्तदोषो वारयितुं शक्यते, तथापि यत्र विशिष्टं साध्यतावच्छेदकं तत्रैकांशेऽपरस्य भ्रमसंग्रहाय निरूप्यनिरूपकभावापन्नविषयतानिवेशे गौरवाद् इत्थमभिधानम् ।

अत्राहुः—वह्न्यभाववदवृत्तिमान् धूमादित्यादौ साध्यतावच्छेदकावच्छिन्न[1]प्रकारत्वाद्यवच्छिन्नप्रतिबध्यत्वस्य नाप्रसिद्धिः । परस्परनिरूप्यनिरूपकभावापन्न[2]वह्नित्वावच्छिन्नविषयतासाधारणरूपेण प्रमीयसाध्यतावच्छेदकावच्छिन्नप्रकारताया अपि प्रतिबध्यतावच्छेदकत्वात् ।

यत्तु—घ्राणग्राह्यगुणवान् पृथिवीत्वादित्यादौ विषयतानिष्ठविषयत्वाद्यघटितस्य घ्राणजन्यप्रत्यक्षविषयसजातीयगुणत्वरूपसाध्यतावच्छेदकस्य भेदप्रतियोगितया निवेशे लाघवमिति । तदप्येतेन परास्तम् ।

अत्रेदं वक्तव्यम्—गगनकालिकसंबन्धावच्छिन्नाकाशाभावाभावोभयत्वावच्छिन्नप्रकारताया एकतया गगनप्रकारतात्वेनावच्छेद्यप्रतिबध्यतामादाय दैशिकविशेषणतासंग्रहप्रसङ्ग इति येन रूपेण [3]प्रकारतायाः प्रतिबध्यतावच्छेदकत्वं तद्रूपस्य निवेशनीयतया गौरवस्य दुर्वारतेति । न च वह्नित्वेन घटवानिति ज्ञानस्य वह्नित्वेन घटाभावज्ञानप्रतिबध्यत्वेऽपि साध्यतावच्छेदकप्रकृतप्रतियोगितावच्छेदकत्वयोरेकतया तदन्यघटत्वावच्छिन्नप्रकारताशालित्वेन तादृशाभावस्य स्वपदेन दुर्धरत्वात् साध्यपदवैयर्थ्यमिति वाच्यम्; समनियताभावैक्यपक्षे घटत्वेन वह्न्यभावाभिन्नवह्नित्वेन घटाभावस्य स्वपदेनोपादानसंभवाद् दोष इत्यतः साध्यवृत्तित्वस्योक्तत्वात् । तत्रापि प्रकृतप्रतियोगितानवच्छेदकत्वपर्यन्तोक्तौ वह्नित्वावच्छिन्नघटादिनिष्ठप्रतियोगिताया अप्रकृतत्वेऽपि तदनैक्ये च विषयितासंबन्धेन वह्नि-

[1] प्रकारित्वाद्यवच्छिन्न—अ.

[2] वह्नित्वाद्यवच्छिन्न—अ.

[3] प्रकारिताया—अ.

त्वाश्रयज्ञानादेः वह्नित्वेनाभाववारणायैव साध्यपदोपादानात् । तत्प्रतिवध्यस्य वह्नित्वेन वह्निमानिति ज्ञानस्य विषयितासंबन्धेन वह्नित्वाश्रयज्ञाननिष्ठप्रकारतायास्तादृशातिरिक्तधर्मानवच्छिन्नत्वात् । संयोगेन वह्नित्वेन वह्न्यभावमादाय तु न दोषः । साध्यतावच्छेदकताघटकसंबन्धेन तत्प्रतियोगितावच्छेदकत्वाप्रसिद्धेः ।

साध्याभावस्येतीति । एतन्मते वह्नित्वेन महानसीयवह्निघटान्यतराभावस्तु नास्ति । अन्यथा तस्य निरुक्तसाध्यवत्ताज्ञानाविरोधितया प्रथमलक्षणेऽदोषेऽपि तादृशप्रतियोगिमत्ताज्ञानविरोधितया द्वितीयलक्षणाति[1]व्याप्तेः । एवं च साध्यमात्रप्रतियोगित्वं न निवेशनीयम् ।

## गादाधरी

(३७) साध्याभावपदप्रयोजनम् ।

**यद्यपि वह्नित्वेन घटाभावादेः घटत्वेन वह्न्यभावाद्यभिन्नतया तादृशाभावोऽपि साध्याभाव एव, तथापि प्रतियोगितावच्छेदकभेदेनाभावभेदमतेनेदं लक्षणम्, समनियताभावानामैक्याभिप्रायेण चाग्रिमलक्षणम् ।**

**अथवा हेतुसमानाधिकरणाभावीयसाध्यनिष्ठप्रतियोगितानवच्छेदकत्वनिवेशान्न दोषः । वह्नित्वादिना घटाद्यभावस्य घटत्वादिना वह्न्याद्यभावाभिन्नत्वेऽपि तदीभघटादिनिष्ठप्रतियोगिताया एव व्यधिकरणवह्नित्वाद्यवच्छिन्नत्वेन वह्न्यादिनिष्ठप्रतियोगितायां वह्नित्वादेरनवच्छेदकत्वात् ।**

[1] अतिव्याप्तिः—अ.

## कृष्णंभट्टीयम्

नन्वेवं संयोगिभिन्नं मेयत्वादित्यादौ संयोगिभेदद्रव्यत्वाभावयोरैक्य [1]एवातिव्याप्त्युद्धा[2]राद् असङ्गतिरित्यत आह—अथवेति ।

वह्निमान् धूमादित्यादौ साध्यवृत्तिप्रतियोगितानिवेशकल्पे साध्यतावच्छेदकसंबन्धावच्छिन्नप्रतियोगिताकं विषयितासंबन्धेन वह्नित्ववज्ज्ञानाभावमादाय न व्यावृत्तिः । संयोगेन वह्नित्वेन वह्न्यभावमादाय सामानाधिकरण्येनेत्येतत्कल्पे न व्यावृत्तिः इत्यतो गुणवानिति ।

## गादाधरी

(३८) प्रतियोगितायां संबन्धविशेषनिवेशः ।

**प्रतियोगिता साध्यतावच्छेदकसंबन्धावच्छिन्नत्वेन [3]निवेशनीया, तेन संबन्धान्तरावच्छिन्नप्रतियोगिताकसाध्याभावमादाय नासंभवः । व्यधिकरणधर्मावच्छिन्नप्रतियोगिताया अपि संबन्धावच्छिन्नत्वं व्यवस्थापितमेव ।**

## गादाधरी

(३९) प्रतियोगितावच्छेदकतायां संबन्धविशेषनिवेशः ।

**प्रतियोगितावच्छेदकत्वं च साध्यतावच्छेदकताघटकसंबन्धावच्छिन्नं ग्राह्यम्, तेन 'गुणवान् द्रव्यत्वाद्' इत्यादौ हेतुसमानाधिकरणस्य विषयितया गुणत्वादिमतः समवायेनाभावस्य या**

1 एवकारो नास्ति—अ.
2 उद्धारासङ्गतिः—अ.
3 विशेषणीया—अ.

ज्ञानादिनिष्ठप्रतियोगिता तदवच्छेदकत्वेऽपि साध्यतावच्छेदकस्य [1]न क्षतिः ।

सर्वत्र द्वित्वावच्छिन्नप्रतियोगिताकसाध्याभावमादायैव एतल्लक्षणसमन्वयसंभवात् ।

## गादाधरी

(४०) चक्रवर्तिद्वितीयतृतीयलक्षणे ।

व्यधिकरणधर्मावच्छिन्नाभावानभ्युपगमेऽपि क्षतिविरहेण व्यधिकरणधर्मावच्छिन्नाभावखण्डनं मूलकृतोऽकिंचित्करम्, अतो लक्षणान्तरमाह––हेतुसमानाधिकरणस्येति ।

अत्र च व्यधिकरणधर्मावच्छिन्नाभावस्याप्रामाणिकत्वे व्यधिकरणधर्मावच्छिन्नाभावप्रतियोगितावच्छेदकत्वमादायाव्याप्तेर्वारणायोपात्तस्य सामानाधिकरण्येनेत्यस्य वैयर्थ्यात् लक्षणासामञ्जस्यमिति तादृशाभाव[2]खण्डनं संगच्छते ।

अत्रापि हेतुसमानाधिकरणस्य व्याप्यवृत्तेरित्यस्य पूर्वोक्त एव पर्यवसितार्थः, व्यावृत्त्यादिकमपि पूर्वोक्तमेव ।

कालिकसंबन्धावच्छिन्नप्रतियोगिताकाकाशाभावाभाववान् आत्मत्वाद् इत्यादौ अव्याप्तिवारणाय पूर्वोक्तरीत्यनुसरणे

[1] न क्षतिरिति । नाव्याप्तिरित्यर्थः ।

[2] पूर्वलक्षणे समनियताभावैक्यमते वह्नित्वेन घटाभावमादायाव्याप्तिवारणायोक्तसाध्यनिष्ठप्रतियोगितेत्यस्य वैयर्थ्यात् लक्षणासामञ्जस्यमिति तादृशाभावखण्डनं निरावाधमेवेति––रा.

**गौरवात्, व्याप्यवृत्तित्वं परित्यज्य प्रतियोगिव्यधिकरणत्वेनाभावं विशेषयति––प्रतियोगिव्याधिकरणस्य वेति पूर्वोक्तलक्षणे साध्याभावस्य विशिष्योपादानात् तस्य च हेत्वधिकरणे साध्यरूपप्रतियोगिसामानाधिकरण्यमावश्यकमेव[1] एकव्यक्तिसाध्यके, अतस्तत्र प्रतियोगिव्यधिकरणसाध्याभावाप्रसिद्ध्या अव्याप्तिरिति तन्नोक्तम् ।**

कृष्णंभट्टीयम्

अत्र चेति। नन्वेवं प्रथमलक्षणपरित्यागे साध्यस्योभयाभावमादाय व्यधिकरणधर्मावच्छिन्नाभावं विनापि तल्लक्षणसङ्गतिरित्येव बीजं, तच्चासङ्गतम् । यद्येतल्लक्षणे वह्नित्वेन घटाद्यभावमादाय दोषवारकस्य सामानाधिकरण्येनेत्यस्य व्यधिकरणधर्मावच्छिन्नाभावानुपगमे वैयर्थ्यम्, तदा तल्लक्षणेऽपि तादृशाभाववारकसाध्यपदस्य तदनुपगमे वैयर्थ्यात् तदुपन्यासस्यैवौचित्यात् । न च तदनुपगमेऽपि वह्नित्वेन तार्णातार्णदहनोभयाभावमादाय अव्याप्तेः साध्यपदं साध्यप्रतियोगिकपरं यत्किंचित्साध्यपर्याप्तिकप्रतियोगिताकत्वं तदर्थ इति तादृशाभाससङ्गतिरिति वाच्यम् । तादृशाभावानङ्गीकारात् । अत एव गौरवादित्येवाग्रिमावतारणम् । अन्यथा तादृशाभावमादायाव्याप्त्या तदवतारयेदिति ।

अत्राहुः––यथा प्रगल्भलक्षणे उभयाभावादिः परंपरासंबन्धेनोभयत्वादिरित्यभिप्रेत्यैव साध्यपदं कृतम्, अन्यथा उभयाभावादिकमादाय व्यधिकरणधर्मावच्छिन्नाभावं विनापि तल्लक्षणसङ्गतिप्रसङ्गात्, तथेहापि तथा अभिसंधायैव प्रथमतः साध्यपदं कृतम् । तत्र च यद्युभयाद्यभावप्रतियोगिता साध्ये उच्यते, तदा तदाभाससङ्गतिः । न च तद्वदेव तद्वैयर्थ्यमपि

[1] एव अत एकव्यक्तिवृत्तिसाध्यके तत्प्रतियोगिव्यधिकरणसाध्याभावाप्रसिद्ध्या अव्याप्तिरित्येव तन्नोक्तम्––अ.

वक्तुमुचितम् । घटाद्यभावावृत्तिप्रतियोगितावच्छेदकत्वेन साध्याभावप्रतियोगितावच्छेदकताकत्वाभावस्याखण्डतया प्रगल्भमताद्विशेषसंभवेनापाततः संदर्भवर्णनसङ्गतेः । न च प्रगल्भमते सामान्यपदार्थविवक्षया साध्यस्याखण्डाभावघटकत्वं व्युत्पादनीयमिति वाच्यम् । यथाश्रुते तदसत्त्वात् ।

वस्तुतो न किंचिदेतत् । सामानाधिकरण्येनानवच्छेदकत्वघटितलक्षणे व्यधिकरणधर्मावच्छिन्नाभाववारकतया सामानाधिकरण्यपदसार्थक्येनेव साध्याभावघटितलक्षणे वह्नित्वेन घटाभाववारकतया साध्यपदसार्थक्यसंभवेन व्यधिकरणधर्मावच्छिन्नाभावोपयोगितासंभवात् । सामानाधिकरण्येनेतिवत् साध्यनिष्ठस्य वैयर्थ्यपरतया च खण्डनसङ्गतिरित्येव सम्यक् ।

नन्वेवमपि साध्याभावप्रतियोगितावच्छेदकत्वाभावोऽखण्ड एव । वह्निघटोभयाभावप्रतियोगितावच्छेदकत्वाभावघटितत्वेऽपि घटाद्यभावप्रतियोगितावच्छेदकत्वाभावाद्य[1] घटितत्वात् । [2]तथा च स व्यधिकरणधर्मावच्छिन्नाभावानुपगमेऽपि सुनिवेश इति सर्वत्रेत्याभासो नाशुद्धः । सामानाधिकरण्येनावच्छेदकत्वाभावश्च नाखण्डः । तादृशाभावानुपगमे तस्यावच्छेदकत्वाभावरूपत्वात् । न च गुरुरूपेण हेतौ गुरुधर्मस्य प्रतियोगितानवच्छेदकतया तादृशप्रतियोगितावच्छेदकं यद्यत् [3]तद्भेदकूटनिवेशान्न साध्याभावनिवेश इति वाच्यम् । तत्रापि अव्यावर्तकभेदघटितकूटव्यावर्तकतया तन्निवेशात् । न च प्रमेयसाध्यके हेतुमद्वृत्तिसाध्याभावप्रतियोगितावच्छेदकत्वाभावस्य तादृशाभावप्रतियोगितावच्छेदकत्वाभावरूपतया न तन्निवेश इति वाच्यम् । व्यधिकरणधर्मावच्छिन्नाभावोपगमेऽपि तत्र साध्यपदनिवेशप्रयोजनाभावात् । समवायादिसंबन्धावच्छिन्नप्रमेयत्वनिष्ठावच्छेदकताया उपायान्तरेणैव वारणेनाव्याप्तेः वक्तुमशक्यत्वात् । एकोक्तौ तत्र तत्प्रयो-

[1] अभावाघटितत्वात्––अ.

[2] तथा चेति पाठो नास्ति––अ.

[3] तत्तद्भेद––अ.

जनाभावेऽपि क्षत्यभावादिति चेत्——तर्हि, सिद्धान्तलक्षणेऽपि अखण्डतारूपप्रयोजनान्तरानुरोधेन साध्याभावप्रतियोगितावच्छेदकत्वाभावनिवेशप्रसङ्गमालोच्य उक्तरीत्या साध्यनिष्टत्वनिवेशानिवेशयोरुपवर्णनसंभवात् तदेवाश्रयणीयम् । गुरुधर्मावच्छिन्नसाध्यके गौरवमेव साध्याभावघटितलक्षणपरित्यागबीजम् । समानाधिकरणवृत्त्यवच्छेदकत्वाभावे द्वितीयसामानाधिकरण्यं संसर्गः । सामानाधिकरण्यावच्छेदकत्वोभयाभावो वा निवेश्य इति लाघवमिति वदन्ति ।

वस्तुतः सिद्धान्तलक्षणे साध्याभावविषयिताया गौरवेण कारणतावच्छेदककोटौ न निवेशः । इह तु अनायत्या तत्र तन्निवेश इति तदाभासः सम्यगेवेत्यपि वदन्ति ।

ननु तादृशावच्छेदकत्वेन घटभेदमादायातिव्याप्तिवारणाय प्रथमलक्षणेऽपि सामानाधिकरण्येनेत्यस्यावश्यकत्वात् कथमेतत् । तादृशावच्छेदकतापर्याप्त्यधिकरणपर्याप्तप्रकारतानाश्रयत्वानिवेशेऽपि न तन्निवेशो हीयत इति चेत्, न, अवच्छेदकानवच्छेदकोभयाभावादिवारणाय प्रतियोगिताविशेषसंवन्धेन अवच्छेदकवद्भेदनिवेशाद् अर्थत एव व्यधिकरणधर्मावच्छिन्नभेदस्य लक्षणघटकत्वाप्राप्तेः । यदि च सौन्दलानामनवच्छेदकविशेष्यतापन्न एव प्रतियोगिताविशेषसंवन्धेनावच्छेदकत्वविशेषितो भेद [1]एव सुनिवेश इति तन्नावच्छेदकविशेषणं व्यधिकरणधर्मावच्छिन्नभेदवारकतया सार्थकीकर्तुं शक्यमित्युच्यते, तदा व्यधिकरणधर्मावच्छिन्नभेदानुपगमेनेदम् । अत एव अग्रे तस्य प्रामाणिकतामभिसंधाय प्रतियोगिवैयधिकरण्यनिष्कर्षं प्रदर्श्य एतदस्वरसाद् अथवेत्यादिकल्पान्तरमनुसृतम् । एवं च तादात्म्येन साध्यतायां सामानाधिकरण्येनेत्यस्य सार्थक्यासंभवेऽपि एकोक्तिमात्रेण तत्रापि तदुपादानम् । तादात्म्येन व्याप्त्यनुपगमो वेति बोध्यम् ।

[1] एवकारो नास्ति——अ.

गौरवादिति । तथा चेह हेतुमद्वृत्तित्वसामान्यनिवेश इति भावः ।

## गादाधरी

(४१) प्रतियोगिव्यधिकरणत्वपरिष्कारः ।

**प्रतियोगिव्यधिकरणत्वं च न प्रतियोग्यधिकरणावृत्तित्वम् । 'संयोगी सत्वाद्' इत्यादौ संयोगाद्यभावस्य अतथात्वात् तादृशाभावान्तरमादायातिव्याप्तेः । किन्तु प्रतियोग्यनधिकरणवृत्तित्वम् । एवं च प्रतियोग्यनधिकरणीभूतहेत्वधिकरणवृत्तेरिति, दलद्वयपर्यवसितार्थः ।**

**प्रतियोग्यनधिकरणत्वं च साध्यतावच्छेदकसंबन्धेन प्रतियोग्यधिकरणभिन्नत्वम् । अतः समवायेन ज्ञानादिसाध्यकद्रव्यत्वादिहेतौ नातिव्याप्तिः । [1]इत्थं च प्रतियोगिता न संबन्धविशेषावच्छिन्नत्वेन विशेषणीया ।**

**विशेषणताविशेषेणाभावसाध्यके सर्वस्यैवाभावस्य तेन संबन्धेन किंचिद्विशिष्टस्वाभावरूपप्रतियोगिसमानाधिकरणतया प्रतियोगिव्यधिकरणाभावाप्रसिद्धिः, अतो 'यादृशप्रतियोगिताश्रयानधिकरणत्वं हेतुमतस्तादृशप्रतियोगितायाः सामानाधिकरण्येनानवच्छेदकं यत् साध्यतावच्छेदकं तदवच्छिन्नसामानाधिकरण्यम्' इति सिद्धान्तलक्षणे वक्ष्यमाणरीत्या [2]निष्कर्षणीयम् ।**

[1] प्रतियोगितावच्छेदकसंबन्धनिवेशे वह्निमान् धूमादित्यादौ समवायेन वह्न्याद्यभावमादायाव्याप्तेः तादृशाभावीयप्रतियोगितायां साध्यतावच्छेदकसंबन्धावच्छिन्नत्वनिवेशनम् । प्रक्षालनाद्धीति न्यायमनुसृत्याह--इत्थं चेति--रा.

[2] परिष्करणीयम्--अ.

## कृष्णंभट्टीयम्

यादृशेति । यादृशप्रतियोगितावच्छेदकावच्छिन्नाधिकरणत्वयादृशप्रतियोगिताश्रयाधिकरणत्वोभयाभाववत्त्वं यादृशप्रतियोगितावच्छेदकावच्छिन्नाधिकरणत्वे सति यादृशप्रतियोगिताश्रयाधिकरणं यत्तदन्यत्वं वा अर्थः । तेन द्रव्यं सत्त्वादित्यादौ नातिव्याप्तिः । कालिकसंबन्धावच्छिन्नाकाशत्वाभावाभावे साध्ये हेतुमत आत्मन आकाशत्वसाध्योभयानधिकरणतयाअव्याप्तिरतो यादृशपदद्वयम् ।

अभावस्येति । तथा च एकधर्मावच्छिन्नत्वे सति एकाभावीयत्वं प्रतियोगितैकीकरणबीजमुक्तम् । वह्नित्वेन वह्निघटोभयाभावप्रतियोगितायाश्च नोक्ताभावप्रतियोगितैक्यम् । अभावभेदात् । समनियताभावैक्येऽभावाभेदेऽपि अवच्छेदकभेद एव प्रतियोगिताभेदकः । तथा सति उक्तस्थले वैजात्यमेव प्रतियोगिताभेदकम् । प्रतियोगितावच्छेदकधर्मैक्येऽपि संयोगसमवायात्मकावच्छेदकभेदः समानाधिकरणधर्मावच्छिन्नप्रतियोगिताभेद एव नियामकः । न त्विह सर्वैः संवन्धैः अवच्छिन्नप्रतियोगितेति । वक्ष्यमाणदीधितेरभावभेदेऽपि समानाधिकरणधर्मावच्छिन्नप्रतियोगिताया भेदानुपगमे च व्यधिकरणधर्मावच्छिन्नाभावस्य केवलान्वयित्वभङ्ग इत्यभावैक्यमुक्तम् ।

## गादाधरी

(४२) **सामानाधिकरण्येनेत्यस्य वैयर्थ्यशङ्का ।**

**अथ 'विशिष्टसत्तावान् जातेः' इत्यत्रातिव्याप्तेर्वारणाय यादृशप्रतियोगितावच्छेदकविशिष्टानधिकरणत्वं हेतुमत इत्यस्यैव वाच्यतया 'वह्निमान् धूमाद्' इत्यादौ वह्नित्वादिना घटाद्यभावीयप्रतियोगिताया [1]लक्षणघटतकत्वासंभवः । तदवच्छेदकवह्नित्वाव-**

[1] न लक्षणघटकत्वसंभवः—अ.

च्छिन्नानधिकरणत्वस्य हेतुमत्यसत्वात् तथा च सामानाधिकरण्येनेत्यनर्थकम् ।

## गादाधरी

(४३) केषांचिन्मतेन सामानाधिकरण्यदलसार्थक्यम् ।

अत्र केचित्—[1]यादृशप्रतियोगितावच्छेदकविशिष्ट[2]यादृशप्रतियोगिताश्रयोभयानधिकरणत्वं हेतुमत इत्येव तत्सार्थक्यार्थं विवक्षणीयम्, दर्शिताभावीयप्रतियोगितावच्छेदकवह्नित्वादिविशिष्टस्य हेतुमति सत्त्वेऽपि तादृशप्रतियोगिताश्रयघटादेरसत्वाद् [3]उभयानधिकरणत्वं हेतुमतोऽक्षतमेवेति तादृशप्रतियोगितावच्छेदकत्वमादाय दोषवारकतया सामानाधिकरण्येनेत्यस्य सार्थकता ।

न च वह्नित्वेन घटाद्यभावप्रतियोगिता यावद्वह्निभिन्नवृत्तिरेकैव स्वीक्रियते, न तु [4]घटादिरूपप्रतियोगिभेदेन भिन्ना, अभावस्य प्रतियोगितावच्छेदकस्य चैक्यात्; तथा च घटादिनिष्ठप्रतियोगिताश्रयसाधनादेरेव साधनवति सत्वात् तादृशप्रतियोगिताश्रयानाधिकरणत्वं न तत्रेति न सामानाधिकरण्येनेत्यस्य सार्थ-

[1] यादृशप्रतियोगितावच्छेदकविशिष्टानधिकरणत्वे सति यादृशप्रतियोगिताश्रयानधिकरणं हेत्वधिकरणमित्यर्थः; तेन द्रव्यं सत्त्वादित्यत्रोभयाधिकरणाप्रसिद्ध्या नातिव्याप्तिः—रा.

[2] अत्र यादृशप्रतियोगिताश्रयाधिकरणत्वयादृशप्रतियोगितावच्छेदकावच्छिन्नाधेयतानिरूपिताधिकरणत्वोभयाभाववत्त्वमेव वक्तव्यम्, अतः विशिष्टसत्तावान् जातेरित्यादौ न काप्यनुपपत्तिरिति ध्येयम्—रा.

[3] उभयाधिकरणं महानसं प्रसिद्धम्—रा.

[4] घटपटादि—अ.

कतासंभवः, प्रतियोगिभेदेन प्रतियोगिताभेदे तु महानसीयवह्न्या-दिनिष्ठायाः वह्न्यादिसामान्याभावीयप्रतियोगितायाः पर्वतीय-वह्न्याद्यवृत्तितया तादृशप्रतियोगिताश्रयानधिकरणत्वस्य हेतुमति पर्वतादौ सत्वाद् वह्नित्वादेः तदवच्छेदकत्वमादायाव्याप्तिरिति वाच्यम्; यतः प्रतियोगिभेदेन न प्रतियोगिताभेदः। अपितु अवच्छेदकभेदेनैव। एवमपि 'वह्निभिन्नवान् [1]घटाद्' इत्यादौ वह्निभिन्नत्वेन वह्न्यभावीयप्रतियोगिताया वह्निभिन्नेऽसंभावित-तया तदाश्रयानधिकरणत्वस्य वह्निशून्ये हेतुमत्यक्षततया तादृश-प्रतियोगितावच्छेदकत्वमादायाव्याप्तेः वारकतया सामानाधि-करण्येनेत्यस्य सार्थक्यम्, 'महाकालो घटवान् कालपरिमाणाद्' इत्यादौ महाकालान्यत्वविशिष्टघटाद्यभावीयप्रतियोगितैव ता-दृशी, महाकालस्य तदवच्छेदकमहाकालान्यत्वविशिष्टघटत्वाद्य-वच्छिन्नाधिकरणताशून्यत्वात्।

अथवा वक्ष्यमा[2]णरीत्या साध्यतावच्छेदकसंबन्धसामान्ये यादृशप्रतियोगितावच्छेदकविशिष्टप्रतियोगिकत्व-यादृशप्रतियो-गिताश्रयप्रतियोगिकत्व-हेत्वधिकरणीभूतयत्किंचिद्व्यक्त्यनुयोगि-कत्व-एतत्त्रित्वावच्छिन्नाभावस्तदनवच्छेदकत्वमेव वाच्यम्। एवं च तत्रावृत्तिगगनाद्यभावप्रतियोगितैव तादृशी। एवं च वह्नि-त्वादिना घटाद्यभावप्रतियोगिता[3] तादृशी, वह्नित्वविशिष्टप्रतियो-

[1] घटत्वादित्यादौ—अ.

[2] दिशा—अ.

[3] घटाद्यभावप्रतियोगितावच्छेदकवह्नित्वविशिष्टप्रतियोगिताकत्वतदाश्रयेत्यादि —अ.

**गिकत्वतदाश्रयवह्निभिन्नप्रतियोगिकत्वयोरेकस्मिन् संबन्धेऽसत्वेन तादृशप्रतियोगितायाः[1] अपि तथात्वात् तद्वारकतयापि सामानाधिकरण्येनेत्यस्य सफलत्वमवसेयमित्याहुः ।**

कृष्णंभट्टीयम्

वह्निभिन्नेऽसंभावितत्वेति । ननु वह्नित्वेन वह्निधूमोभयाभाववद् वह्निभिन्नत्वेन वह्नितद्भिन्नोभयं नास्तीति प्रतीतेस्तादृशाभावोऽपि सिद्धान्तसिद्धः । तस्य वह्निभिन्नत्वेन वह्न्यभावेनैक्याद् अवच्छेदकैक्याच्च प्रतियोगितापि एकैवेति तस्या वह्निभिन्ने संभावितत्वया कथं दर्शिताभावः प्रतियोगिव्यधिकरण इति चेत्, न । आस्तां वा उभयाभावप्रतियोगितापर्याप्तिरिति मते तस्या विलक्षणत्वात् । मतान्तरे च प्रतियोगितावच्छेदकस्यैव भेदात् । अत्र च हेतुमन्निष्ठभेदप्रतियोगितायां स्वावच्छेदकविशिष्टाधिकरणत्वस्वाश्रयाधिकरणत्वोभयसंवन्धेन अवच्छेदिकायाः प्रतियोगितायाः सामानाधिकरण्येनानवच्छेदकत्वमर्थः ।

एतेन जगदीशानां सामानाधिकरण्येन व्यधिकरणधर्मेणावच्छिन्नावच्छेदकत्वाभावनिवेशायासो नोपादेयः । तत्तत्प्रतियोगितावच्छेदकत्वाभावकूटमनिवेश्यापि उक्तरीत्या विशिष्टपरामर्शनिर्वाहात् । यादृशप्रतियोगिताश्रयानधिकरणहेत्वधिकरणकतादृशप्रतियोगितेत्यादिनिवेशे घटकत्वनिवेशाधिक्याच्च । महाकालान्यत्वविशिष्टघटादिकमपि महाकाले वर्तत इत्यनुसृत्याह––अथवेति ।

**न्यायरत्नम्**

**यादृशप्रतियोगितावच्छेदकविशिष्टेति । यादृशप्रतियोगितावच्छेदकावच्छिन्नाधिकरणत्वयादृशप्रतियोगिताश्रयाधिकरणत्वोभयाभाववत्त्वमे -**

[1] तथा च वह्निमान् धूमाद् इत्यादौ वह्निभिन्नत्वेन वह्निभिन्नमादायापि दोषवारणाय सामामाधिकरण्येनेति––रा.

वोभयानधिकरणत्वम्। तेन विशिष्टसत्तावान् जातेः इत्यादौ नातिव्याप्तिः। वह्निभिन्नेऽसंभावितत्वेति। वह्निभिन्नत्वेन वह्न्यभाववह्निभिन्नत्वेन वह्नितदन्योभयाभावयोः समनैयत्येन अवच्छेदकैक्येन च तदीयप्रतियोगितयोरप्यैक्यमिति तादृशाभावीयप्रतियोगिताया वह्निभिन्नेऽपि संभवस्तु नाशङ्क्यः वह्निभिन्नत्वेन वह्नितदन्योभयाभावीयप्रतियोगिताया 'आस्तां वा' इत्यवतरणग्रन्थोक्तरीत्या व्यासज्यवृत्तित्वेन वह्निभिन्नत्वेन वह्न्यभावीयप्रतियोगितातो विलक्षणत्वेन तत्पर्याप्त्याश्रयानधिकरणत्वस्य हेतुमति वह्निशून्येऽक्षतत्वात्।

अथवा वक्ष्यमाणरीत्येति। चैत्रान्यत्वविशिष्टैतद्दण्डसाध्यकएतद्दण्डसंयोगहेतुके व्यभिचारिणि एतद्दण्डसंयोगसामान्ये विशिष्टाभावप्रतियोग्येतद्दण्डप्रतियोगिकत्वचैत्रानुयोगिकत्वोभयसत्वेन विशिष्टाभावस्य लक्षणघटकत्वानुपपत्तिः, अतो यादृशप्रतियोगितावच्छेदकविशिष्टप्रतियोगिकत्वनिवेशः। धूमसंयोगे धूमत्वविशिष्टप्रतियोगिकत्वधूमप्रतियोगिकत्वयोर्द्वयोः सत्वेन धूमसाध्यके व्यभिचारिणि धूमाभावस्य लक्षणघटकत्वार्थं हेत्वधिकरणयत्किंचिद्व्यक्त्यनुयोगिकत्वनिवेशः। तत्रैव धूमसंयोगे वह्निमदनुयोगिकत्वस्यापि सत्वेन धूमाभावस्य लक्षणघटकत्वानुपपत्तिः, अतो यत्किंचिदिति। वह्नित्वेन घटाभावसंग्रहाय यादृशप्रतियोगिताश्रयप्रतियोगिकत्वनिवेशः।

लाघवादाह—अथवेति। साध्यनिष्ठतादृशप्रतियोगित्वाप्रसिद्ध्या न पूर्वोक्तलक्षणे प्रतियोगिव्यधिकरणत्वं निवेशितमिति।

अथ घटत्वेन एतद्रूपं नास्तीति प्रतीतौ घटत्वस्य स्वावच्छिन्नप्रतियोगिताकत्वसंबन्धेनाभावांशे स्वातन्त्र्येण भानस्याभ्युपगतत्वेन घटत्वावच्छिन्नैतद्रूपनिष्ठप्रतियोगित्वसंबन्धावच्छिन्ना या घटत्वनिष्ठप्रकारता तदवच्छेदकघटत्वत्वावच्छिन्नानधिकरणत्वस्य हेतुमति सत्वाद् घटत्वावच्छिन्नैतद्रूपनिष्ठप्रतियोगितैव तादृशी प्रसिद्धेति चेत्, न, घटत्वे नैतद्रूपाभावप्रतीतौ

घटत्वादेः स्वावच्छिन्नप्रतियोगिताकत्वसंबन्धेन भानेऽपि तादृशसंबन्धस्य परंपरासंबन्धत्वेन घटत्वनिष्ठप्रकारताया विशेष्यीभूतप्रतियोगित्वसंबन्धनिष्ठसांसर्गिकविषयतानिरूपितत्वरूपस्य तादृशप्रतियोगित्वसंबन्धावच्छिन्नत्वस्य विरहात् ।

अस्तुवा विशिष्टस्यैव तादृशप्रतियोगिताकत्वस्य संबन्धता, तथापि रूपत्वेन रूपं नास्तीति प्रतीतिसिद्धाभावीयप्रतियोगित्वसंबन्धावच्छिन्नरूपत्वनिष्ठप्रकारतावच्छेदकरूपत्वत्वावच्छिन्नानधिकरणत्वमादाय 'रूपवान् पृथिवीत्वाद्' इत्यादौ अव्याप्तिवारणाय प्रकारतायां प्रतियोगिनिष्ठत्वनिवेशस्य आवश्यकत्वान्न दोषः । न चैवमपि रूपघटोभयाभावीयप्रतियोगिताम् एतद्रूपतद्रूपान्यतरतद्रसोभयाभावीयप्रतियोगितां चादाय तादृशप्रतियोगित्वप्रसिद्धिः संभवतीति वाच्यम् । वह्नित्वेन महानसीयवह्निघटान्यतराभावीयप्रतियोगितामादायाव्याप्तिवारणाय प्रकारतायां साध्यतावच्छेदकव्याप्यत्वस्यैव निवेश्यत्वाद् दर्शितप्रतियोगित्वयोरतादृशत्वात् ।

## गादाधरी

(४४) परेषां मतेन सामानाधिकरण्येनेत्यस्य सार्थक्यम् ।

**परे तु——अत्यन्ताभावस्येवान्योन्याभावस्यापि प्रतियोग्यवृत्तिधर्मावच्छिन्नप्रतियोगिताकत्वोपगमात् पर्वतादौ [1]वह्नित्वविशिष्टाद्यवच्छिन्नजलादिमद्भेदोऽपि प्रामाणिकः । एवं च स्वावच्छेदकविशिष्टावच्छिन्नस्वाश्रयवन्निष्ठप्रतियोगिताकभेदवद्वृत्त्व-धिकरणकं यत्प्रतियोगित्वं तदनवच्छेदकत्वं साध्यतावच्छेदकस्य [2]निवेशनीयम् । एवं च वह्नित्वादिना जलाद्यभावीयप्रतियोगितापि**

[1] वह्निमत्त्वाद्यवच्छिन्न——अ.

[2] विवक्षणीयम्——अ.

तादृशं स्वम् । कथितभेदस्य तदवच्छेदकवह्नित्वादिविशिष्टावच्छिन्नतदाश्रयजलादिमन्निष्ठप्रतियोगिताकत्वात् । अतस्तदवच्छेदकतामादाय दोषवारणाय सामानाधिकरण्येनेति । 'संयोगी द्रव्यत्वात्' 'वह्निमान् धूमाद्' इत्यादौ संयोगत्ववह्नित्वाद्यवच्छिन्नसंयोगवह्न्याद्यभावप्रतियोगितायाः गुणत्वह्रदत्वाद्यवच्छिन्नसंयोगिपर्वतभेदौ संयोगवह्न्याद्यवच्छिन्नघटादिभेदौ च आदाय तथात्ववारणायावच्छिन्नान्तनिष्ठान्तयोरुपादानम् ।

[1]अथवा यादृशप्रतियोगितावच्छेदकावच्छिन्नयादृशप्रतियोगिताश्रयवृत्तिप्रतियोगितावच्छेदकताकभेदवत्त्वं हेतुमतः तदनवच्छेदकत्वं विवक्षणीयम् । वह्नित्वावच्छिन्नघटाभावप्रतियोगिताप्येतादृशी तादृशप्रतियोगितावच्छेदकवह्नित्वाद्यवच्छिन्नतादृशप्रतियोगितासमानाधिकरणप्रतियोगितावच्छेदकताकस्य वह्नित्वेन घटवान्नेति प्रतीतिविषयभेदस्य हेतुमति सत्वाद् व्यधिकरणधर्मस्यात्यन्ताभावप्रतयोगितावच्छेदकत्ववद् [2]अन्योन्याभावप्रतियोगितावच्छेदकतायामप्यवच्छेदकत्वात् । अत एव 'समवायितया वाच्यत्ववद्भेदोऽपि द्रष्टव्यः' इति मिश्रैरभिहितम् । इत्थं च तादृशप्रतियोगितावारणाय सामानाधिकरण्येनेति । हेतुमतो वह्नित्वेन घटवद्भेदवत्त्वं घटत्वेन वह्निमद्भेदवत्त्वं चादाय वह्नित्वावच्छिन्नवह्निनिष्ठप्रतियोगितायाः तादृशत्ववारणाय प्रकृत-

[1] वह्नित्वं पर्वतांशे विशेषणं कृत्वा वह्नित्वेन पर्वतभेदमादाय तद्दोषतादवस्थ्यवारणाय विशिष्टेति; तथा च वह्न्यादिना पर्वतभेदो न पर्वते; तथा च स्वावच्छेदकावच्छिन्नत्वेन प्रतियोगितां निवेश्य भेदोक्तिः न संभवति, परंतु ताद्रूप्येणावच्छेदकतानिवेशः संभवत्येव तथैव आह––अथवेति––रा.

[2] भेद––अ.

प्रतियोगितासमानाधिकरणत्वतदवच्छेदकावच्छिन्नत्वयोर्भेदप्रति-योगितावच्छेदकतायां निवेशनम्। 'महाकालो घटवान् कालपरिमाणाद्' इत्यादौ महाकालान्यत्वविशिष्टघटाद्यभावीयप्रतियोगितामादायैव लक्षणसमन्वयः न तु गगनत्वपटत्वादिना घटाद्यभावीयप्रतियोगिताम्[1]। गगनत्वपटत्वाद्यवच्छिन्नघटवृत्तिप्रतियोगितावच्छेदकताकभेदस्य हेत्वधिकरणमहाकाले संभवेऽपि सामानाधिकरण्येन तदवच्छेदकस्या[2]प्रसिद्धेः।

अथवा तादृशप्रतियोगितासामान्ये तद्धर्मसामानाधिकरण्यविशिष्टयद्धर्मावच्छेद्यत्वाभावः तद्धर्मविशिष्टसामानाधिकरण्यं व्याप्तिरित्येव विवक्षणीयम्। इत्थं च व्यधिकरणधर्मावच्छिन्नाभावमादायापि लक्षणसमन्वयस्तत्र संभवति इत्यवधेयम्।

वह्नित्वेन वह्नि[3]धूमोभयं नास्तीत्येतादृशप्रतीतिविषयाभावस्य 'वह्निमान् वह्नित्वेन वह्निधूमोभयवान्न' इति प्रतीति-

[1] तस्या गगनपटाद्यवच्छिन्नकालभेदं, गगनत्वपटत्वाद्यवच्छिन्नावच्छेदकताकभेदं चादाय अनवच्छेदकपूर्वप्रतीकार्थलाभेऽपि अधिकपाठः––अ.

[2] अत्र सामानाधिकरण्येनावच्छेदकत्वघटितलक्षणे व्यधिकरणधर्मावच्छिन्नाभावस्य न लक्षणघटकतयोपयोगिता; अपि तु सामानाधिकरण्यव्यावर्तनीयाव्याप्तिसंपादकतयेति––रा.

[3] अत्र यद्यपि वह्न्यभावप्रतियोगिता धर्तुम् शक्या। वह्नित्वेन वह्निधूमोभयवद्भेदं वा आदाय प्रतियोगिव्यधिकरणत्वस्य सूपपादत्वात्। हेतुसमानाधिकरणाभावीयत्वेन तस्या विशेषणे तु उक्तरीत्या संयोगसाध्यके दोषः अभावे प्रतियोगिवैयधिकरण्यविशेषणे आत्माश्रयः। निरवच्छिन्नवृत्तिकत्वविवक्षणे स एव संयोगसाध्यके दोषः। अवच्छिन्नवृत्तिकान्यत्वविवक्षणे तत्साध्यके व्यभिचारिणि अतिव्याप्तिः। एवं हेत्वधिकरणेऽनवच्छिन्नवृत्तिकत्वविवक्षणे तादृशाभावप्रतियोगितानवच्छेदकत्वेनैव सामञ्जस्याद् इतरांशस्यानतिप्रयोजनकत्वम्। तथापि यादृशप्रतियोगिताश्रयमात्रवृत्तित्वस्यावच्छेदकतायां विवक्षणे न दोषः। अतोऽभावान्तरानुसरणम्––रा.

सिद्धभेदमादाय प्रतियोगिव्याधिकरणत्वेऽपि तस्य प्रतियोगितावच्छेदकत्वं न वह्नित्वमात्रे पर्याप्तम् । तथा सति वह्नित्वरूपप्रतियोगितावच्छेदकविशिष्टवह्निरूपप्रतियोगिमत्यपि[1] तादृशाभावाप्रत्ययप्रसंगात् । किं तु वह्नित्वतदुभयत्वयोरेव तत्पर्याप्तिः । अतः तादृशप्रतियोगितायां समानाधिकरणतया अवच्छेदकत्वेऽपि वह्नित्वस्य न क्षतिः ।

यदि च तादृशाभावप्रतियोगितावच्छेदकं वह्नित्वादिकमेव, न तु प्रतियोगिविशेषणतापन्नमुभयत्वम्, प्रतियोगिविशेषणतानापन्ने प्रतियोगितावच्छेदकत्वावगाहिप्रतीत्या तद्विशेषणतापन्ने तदनवगाहनात्, अन्यथा वह्नित्वेन घटो नास्तीत्यादावपि घटत्ववह्नित्वाद्युभयावच्छेदकत्व[2]पर्याप्त्यवगाहनौ[3]चित्यात् सामानाधिकरण्येनेत्यस्य वैयर्थ्यापत्तेः, वह्नित्वेनोभयाभावप्रतियोगिता च व्यासज्यवृत्तिः, अतो न तादृशाभावस्य केवलान्वयित्वानुपपत्तिरिति मन्यते, तदा सामानाधिकरण्येनेत्यस्य प्रतियोगिता[4]पर्याप्त्यधिकरणवृत्तित्वेनेत्यर्थ इत्याहुः ।

तदुभयमपि न युक्तम् । एवं सति घटत्वादिना साध्याभावप्रतियोगिताया अपि निरुक्तप्रतियोगिवैयधिकरण्यनिरूपकत्वसंभवेन प्रथमलक्षणे प्रतियोगिवैयधिकरण्या[5]नभिधानस्य निर्बीजतया सन्दर्भविरोधापत्तेः ।

1 अपिशब्दो नास्ति--अ. 2 पर्याप्त्यनवगाहने अनौचित्यात्--अ.

3 तादृशाभावस्य केवलान्वयित्वात्--रा.

4 प्रतियोगितापर्याप्त्यधिकरणवृत्तित्वेनावच्छेदकत्वाभावः साध्यतावच्छेदकस्येत्यर्थः--रा.

5 प्रतियोगिव्यधिकरणस्य इत्यनभिधानस्य--अ.

## कृष्णंभट्टीयम्

'स्वावच्छेदकेति'। कालिकसंबन्धावच्छिन्नाकाशत्वाभावाभावसाध्यके हेतुमत आत्मन आकाशत्वाभावप्रतियोगितावच्छेदकेन आकाशत्वत्वेन आकाशत्ववद्भिन्नतया अव्याप्तिरतः प्रतियोगितैक्यम्। वह्नित्वं पर्वतांशे विशेषणं कृत्वा वह्नित्वेन पर्वतभेदमादाय तद्दोषतादवस्थ्यवारणाय विशिष्टेति। तथा च वह्न्यादिना पर्वतभेदो न पर्वते। वह्निं वह्न्यंशे विशेषणं कृत्वा वह्निना वह्निभेदमादाय तद्दोषतादवस्थ्यवारणाय स्वाश्रयवदिति। तथा च वह्नित्वेन वह्निमद्भेदो न पर्वते। तथा च स्वावच्छेदकावच्छिन्नत्वेन स्वाश्रयनिष्ठत्वेन वा प्रतियोगितां विशिष्य भेदोक्तिर्न संभवति, परंतु ताद्रूप्येण अवच्छेदकतानिवेशः संभवतीति। तथैव वक्ष्यति।

अथवेति। वह्न्यवच्छिन्नविषयितया वह्निमज्ज्ञानभेदवारणाय साध्यतावच्छेदकसंवन्धेन स्वाश्रयवत्त्वम्। स्वावच्छेदकवैशिष्ट्यं स्वावच्छेदकताघटकसंवन्धावच्छिन्नम्। प्रयोजनं तु ऊह्यम्। अवच्छिन्नेत्यत्र अवच्छेदकत्वं प्रतियोगिताघटकसंवन्धेन। तेन समवायादिना वह्न्यवच्छिन्नवह्निसंयोगिभेदव्युदासः। एवमुत्तरत्रापि।

अथैतत्कल्पे विरुद्धवह्निजलाभ्यां प्रमेयभेदमादायाव्याप्तिः। प्रतियोगितावच्छेदकतापर्याप्त्युपादानेऽपि महानसावृत्तिमद्भेदमादायाव्याप्तिः। महानसावृत्तिवह्नेः वह्निसामान्याभावप्रतियोगितावच्छेदकवह्नित्वविशिष्टत्वात्। प्रतियोगितावच्छेदकतायां स्वावच्छेदकावच्छिन्नत्वसहिततत्सामानाधिकरण्यस्य विशिष्टनिष्ठपदार्थत्वे महानसीयवह्निमान् तद्धूमादित्यादौ एकमहानसे घटो वर्तते अपरमहानसे नास्ति तत्र महानसीयघटे न तन्महानसभेदमादायाव्याप्तिः। महानसीयत्वस्य नानात्वेऽपि सामानाधिकरण्यसंबन्धेन महानसत्वस्यैव साध्यतावच्छेदकस्थले दोष इति स्वावच्छेदकतापर्याप्त्यधिकरणं स्वावच्छेदकपदेनोपादेयम्। महानसीयवह्न्यभावप्रतियोगितावच्छेदकतापर्याप्तिश्च न महानसीयघटत्वे इत्यदोषः। एवं च वह्नि-

त्वह्लदत्वाभ्यां वह्न्यभावप्रतियोगितावच्छेदकतदुभयविशिष्टाप्रसिद्ध्या न तत्र पर्याप्तिनिवेशप्रयोजनसंभव इति चेत्––तत्प्रयोजनस्य व्याप्यवृत्तित्वलक्षणाभिप्रायकत्वात् ।

अत्र स्वावच्छेदकतावच्छेदकधर्मावच्छिन्नत्वस्वसमानाधिकरणवृत्तित्वोभयसंबन्धेन हेतुमन्निष्ठभेदप्रतियोगिताविशिष्टायाः प्रतियोगितायाः सामानाधिकरण्येनानवच्छेदकत्वमर्थः । [1]अत्र अवच्छेदकत्वावच्छिन्नभेदोक्तौ तादृशावच्छेदकत्वेन गगनादिभेदमादायातिव्याप्तिरतः सामानाधिकरण्येनेत्येतदापतेत् । अतः व्यधिकरणधर्मावच्छिन्नभेदानुपगमो वाच्यः । तथा च न दर्शितरीतिसंभवः । एवं दर्शितरीतौ वह्नित्वह्लदत्वाभ्यां वह्न्यभावमादाय पर्याप्तिनिवेशस्यापि न व्यावृत्तिरित्यत आह––अथवेति । दर्शिताकाशत्वाभावाभावसाध्यके गगनत्वेन साध्यवद्भेदस्य तादृशाकाशत्वाभावाभावत्वेन आकाशत्ववद्भेदस्य च वारणाय यादृशपदद्वयम् । दर्शिताकाशाभावाभावसाध्यके आकाशत्वेन साध्यवद्भेदवारकतया प्रथमयादृशपदनिवेशेऽपि साध्यतावच्छेदकरूपेण आकाशवद्भेदाप्रसिद्धेः न तत्र [2]द्वितीयं यादृशपदप्रयोजनमिति तु बोध्यम् ।

यदि च आकाशत्वाभावाभावसाध्यकेऽपि न द्वितीयतत्पदप्रयोजनम्, दर्शितभेदप्रतियोगितावच्छेदकतायाः साध्यतावच्छेदकसंबन्धावच्छिन्नत्वात्, तदा आकाशत्वप्रमाविषयत्वाभावाभावस्य कालिकसंबन्धावच्छिन्नाका[3]शान्यत्वप्रकारकप्रमाविषयत्वाभावाभावस्य च साध्यत्वे उक्तरीत्या प्रयोजनं [4]वाच्यम् । [[5]स्वरूपसंबन्धावच्छिन्नतादृशप्रमाविषयत्वाभावस्य साध्यप्रतियोगितया] साध्यतावच्छेदकरूपेण तद्वद्भेदस्य निष्प्रत्यूहत्वात् ।

[1] अत्र च––अ. [2] द्वितीययादृशपदप्रयोजनमिति––अ.

[3] आकाशान्यत्वाभावाभावस्य च इत्येव––अ.

[4] वाच्यमिति नास्ति––अ.

[5] [ ] एतदन्तर्गतपाठस्थाने आकाशान्यत्वस्य स्वरूपसंबन्धावच्छिन्नतदभावरूपसाध्याभावप्रतियोगितया इत्येतादृशपाठः वर्तते––अ.

ननु वह्नित्वघटत्वाभ्यां वह्निमद्भेदं वह्नित्वेन वह्निघटोभयवद्भेदं चादायाव्याप्तिः। मैवम्——स्वावच्छेदकपर्याप्तावच्छेदकताकत्वस्य प्रतियोगिताश्रयपर्याप्तत्वस्य चोक्तत्वात्।

यत्तु——वह्नित्वेन तार्णातार्णदहनोभयवद्भेदमादायाव्याप्तिवारणाय स्वपर्याप्त्यनधिकरणवृत्तिधर्मानवच्छिन्नत्वं प्रतियोगितावच्छेदकतायां निवेश्यमिति; तन्न——तादृशभेदस्य निराकृतत्वात्।

ननु दण्डिमान् दण्डिसंयोगादित्यादौ कल्पद्वयेऽपि दण्डिसमानान्याभावप्रतियोगितायां तद्दण्डिमद्भेदवद्वेत्वधिकरणकत्वसत्त्वेनाव्याप्तिः; मैवम्——तत्र दण्डत्वस्यैव साध्यतावच्छेदकत्वात्। अत्रापि स्वाश्रयवृत्तित्वस्वावच्छेदकावच्छिन्नत्वोभयसंवन्धेन हेतुभिन्निष्ठभेदप्रतियोगितावच्छेदकताविशिष्टप्रतियोगिताया इत्याद्यर्थः।

महाकाले महाकालान्यत्वविशिष्टघटाङ्गीकारे त्वाह——अथवेति यद्धर्मेति। यद्धर्मपर्याप्तनिरूपकताकावच्छेद्यत्वमर्थः। तेन वह्नित्वह्रदत्वाभ्यां वह्न्यभावमादाय नाव्याप्तिः। एतच्च साध्यतावच्छेदकसंवन्धेन प्रतियोगिवैयधिकरण्यपक्षे। प्रतियोगितावच्छेदकसंवन्धेन तन्निवेशे साध्यतावच्छेदकसंवन्धावच्छिन्नत्वनिरुक्तावच्छेद्यत्वोभयाभावस्य वाच्यत्वे गौरवात्। अत्र प्रतियोगितावच्छेदकसंवन्धेन तन्निवेशेऽपि साध्यतावच्छेदकसंवन्धावच्छिन्नतादृशप्रतियोगितासामानाधिकरण्यावच्छेदकत्वोभयाभावनिवेशोऽपि सम्यक्। व्यधिकरणधर्मावच्छिन्नाभावमादायैव लक्षणसङ्गतेरिति[1]। सामानाधिकरण्येन व्यधिकरणधर्मेणानवच्छेदकत्वमिति जगदीशोक्तिस्त्वसङ्गतैव। अवच्छेदकत्वस्य प्रतियोगिविशेषणतया तत्पर्याप्तिविवक्षावैयर्थ्यात्। समानाधिकरणवृत्तित्वेन व्यधिकरणेनावच्छेदकत्वाभावकल्पोऽपि तदीयप्रतियोगिताया द्वेधा निवेशेन कूटनिवेशेन च गुरुतर इति

[1] इतिशब्दो नास्ति---अ.

बोध्यम् । प्रतियोगितापर्याप्तीति । प्रतियोगितापर्याप्त्यवच्छेदकावच्छिन्न-पर्याप्तत्वेनेत्यर्थः ।

निरुक्तेति । यादृशप्रतियोगितावच्छेदकविशिष्टसाध्यवृत्तियादृश-प्रतियोगिताश्रयोभयानधिकरणत्वं प्रथममते । न चैतद्रूपादिसाध्यके घट-त्वादिना एतद्रूपाभावस्य नेदृशप्रतियोगिवैयधिकरण्यसंभवः तथापि घटत्वेन रूपाभावस्य प्रतियोगिव्यधिकरणसाध्याभावतया संदर्भविरोधस्य दुर्वार-त्वात् । स्वावच्छेदकविशिष्टावच्छिन्नसाध्यवन्निष्ठप्रतियोगिताकभेदः स्वा-वच्छेदकावच्छिन्नसाध्यवृत्तिप्रतियोगितावच्छेदकताकभेदो वा द्वितीयमते । समानाधिकरणवृत्तित्वेनावच्छेदकत्वस्याभावं निवेशयितुः जगदीशस्य मते-ऽपि[1] संदर्भविरोधो बोध्यः ।

## गादाधरी

(४५) स्वमतेन सामानाधिकरण्येनेत्यस्य सार्थक्यम् ।

**वस्तुतो यादृशप्रतियोगितासंबन्धावच्छिन्नप्रकारतावच्छे-दकर्यत्किंचिद्धर्मावच्छिन्नानधिकरणत्वं हेतुमतः, तदनवच्छेदकत्वं साध्यतावच्छेदकस्य विवक्षणीयम्, कपिसंयोगत्वाद्यवच्छिन्नकपि-संयोगादिनिष्ठप्रतियोगितासंसर्गावच्छिन्नप्रकारतावच्छेदकं कपि-संयोगत्वादिकमेव, तदवच्छिन्नानधिकरणत्वं च न हेतुमत इति न 'कपिसंयोगी एतद्वृक्षत्वाद्' इत्यादावव्याप्तिः घटत्वावच्छिन्न-प्रतियोगिताकत्वसंबन्धेनैव प्रमेयत्वादिना प्रतियोगिनो घटत्वेन प्रमेयं नास्तीत्यादिज्ञाने भानात् प्रमेयत्वाद्यवच्छिन्नानधिकरणत्वस्य हेतुमत्यसंभवाद् घटत्वाद्यवच्छिन्नप्रतियोगिताया यादृशप्रतियोगि-तेत्यनेनोपादानासंभवात् तथाविधप्रतियोगिताया अप्रसिद्धेः, अतो**

[1] अपिशब्दो नास्ति—अ.

यत्किंचिदित्युक्तम् । 'दण्डिमान् दण्डिसंयोगाद्' इत्यादौ तत्तद्दण्डावच्छिन्नानधिकरणत्वमादाय दण्डसामान्याभावस्य प्रतियोगिवैयधिकरण्येऽपि न क्षतिः, तत्तद्दण्डावच्छिन्नात्यन्ताभावप्रतियोगितावच्छेदकत्वमादाय दोषवारणाय तत्र परंपरासंबन्धेन दण्डत्वादेः साध्यतावच्छेदकत्वस्वीकारस्यावशयकत्वात् । तत्संयोगत्वतद्वह्नित्वादिविशिष्टप्रतियोगिविषयकाभावभाने संयोगत्ववह्नित्वादिरूपसामान्यधर्मावच्छिन्नप्रतियोगितायाः संसर्गतया भाने मानाभावात्, तत्संयोगत्वतद्वह्नित्वाद्यवच्छिन्नानधिकरणत्वेऽपि हेतुमतो न क्षतिः । संयोगत्ववह्नित्वावच्छिन्नप्रतियोगितायाः घटत्वावच्छिन्नत्वेन घटो नास्तीत्यभावबुद्धौ संसर्गतया भानोपगमे भ्रमानिरूपितत्वेन प्रकारता [1]निवेशनीया ।

'[2]विशिष्टसत्तावान् जातेः' इत्यादौ विशिष्टसत्तात्वावद्यवच्छिन्नप्रतियोगितासंबन्धावच्छिन्नप्रकारतावच्छेदकविशिष्टसत्तात्वाद्यवच्छिन्नानधिकरणत्वस्य हेतुमति सत्त्वान्नातिव्याप्तिः, वह्नित्वाद्यवच्छिन्नघटादिनिष्ठव्यधिकरणधर्मावच्छिन्नाभावीयप्रतियोगितासंबन्धाद्यवच्छिन्नप्रकारतावच्छेदकघटत्वाद्यवच्छिन्नानधिकरणत्वस्य हेतुमति सत्वात् सामानाधिकरण्येन इत्यस्य सार्थकता ।

एकमात्रवृत्तिसाध्यकस्थले साध्यनिष्ठप्रतियोगितासंसर्गावच्छिन्नप्रकारतावच्छेदकावच्छिन्नानधिकरणत्वं न हेतुमत इति, साध्यवृत्तितथाविधप्रतियोगिताया अप्रसिद्ध्या न पूर्वोक्तलक्षणे

[1] विशेषणीया--अ.

[2] प्रकारताश्रमानधिकरणत्वनिवेशे तु आह--रा.

**प्रतियोगिव्यधिकरणत्वं निवेशितम् । वह्नित्वादिना [1]उभयाभावमादाय दोषस्तु पूर्ववदेव वारणीय इति ।**

कृष्णंभट्टीयम्

'यादृशेति'। येन संबन्धेन प्रकारतावच्छेदकत्वं तेन संवन्धेन धर्मावच्छिन्नत्वं बोध्यम् । अन्यथा तादृशप्रकारतावच्छेदकधूमत्वादेः कालिकसंबन्धेन वह्नौ सत्त्वाद् असमानकालीनप्रकारतावच्छेदकमादाय नातिप्रसङ्गः । परंपरेति । यादृशप्रतियोगितासंसर्गावच्छिन्नप्रकारतावच्छेदकतापर्याप्त्यवच्छेदकीभूतयत्किंचिद्धर्मविशिष्टानधिकरणत्वं हेतुमत इत्युक्तौ एकोक्तिभेदभयेनेत्थमभिधानम् । प्रमेयं नास्तीत्यादौ अनायत्त्या घटत्वावच्छिन्नप्रतियोगितायाः प्रमेयत्वावच्छिन्नत्वेन भानोपगमेऽपि सर्वत्र तथा भाने मानाभाव इत्याशयेनोपगम इति । यद्रूपावच्छिन्नप्रतियोगितात्वेन च नेह निवेशः तद्रूपावच्छिन्नप्रतियोगितात्वेन निवेशापत्तेः, वैयर्थ्याच्च ।

न च प्रतियोगितयोरभेदमात्रार्थत्वे यत्प्रतियोगितेत्येवाभिधानीयमिति वाच्यम् । प्रतियोगिभेदेन प्रतियोगिताभेदमते महानसीयवह्न्याद्यात्मकप्रतियोगितामादाय वह्नित्वे तत्प्रतियोगितावच्छेदकत्वापत्तिवारणाय प्रतियोगितावच्छेदकादिभेदभिन्नप्रतियोगितेति मतप्रवेशसूचकत्वात्। यादृशप्रतियोगितात्वेनाभानेन न निवेशः यादृशप्रतियोगितावृत्तिप्रतियोगितात्वविशिष्टसंसर्गावच्छिन्नत्वोक्त्या दोषवारणादेतद्विवक्षणावश्यकत्वाद् इति, वह्नित्वेन तद्वह्न्यभावा[2]सत्त्वादेव नाव्याप्तिः ।

साध्यवृत्तीति । अथैतद्रूपवतस्तादृशैतद्रूपत्वावच्छिन्नाधिकरणत्वेऽपि घटत्वेन तद्रूपाभावीयप्रतियोगितासंसर्गावच्छिन्नप्रकारतावच्छेदकघटत्वावच्छिन्नानधिकरणत्वात् नाप्रसिद्धिरिति चेत्, न, रूपत्ववत्त्वेन रूपं नास्तीति

[1] वह्निघटोभयाभावम्––अ.

[2] वह्न्यभावाद्यसत्त्वादेव––अ.

प्रतीतिनिरूपिता या रूपत्वावच्छिन्नरूपनिष्ठप्रतियोगितासंसर्गावच्छिन्ना-रूपत्वनिष्ठाप्रकारता तदवच्छेदकरूपत्वत्वावच्छिन्नानधिकरणत्वाद् हेतुमतो रूपवान् पृथिवीत्वादित्यादावव्याप्तिरतः प्रकारतायां प्रतियोगिनिष्ठत्व-स्यावश्यकतया प्रकृते तादृशप्रतियोगितायाः दुर्लभत्वात् । न च घटत्वेन एतद्रूपतद्रूपोभयाभावीयप्रतियोगितासंवन्धावच्छिन्नप्रकारतावच्छेदकतद्रूप - त्वावच्छिन्नानधिकरणत्वस्य हेतुमति सत्त्वान्न दोष इति वाच्यम् । महान-सीयवह्निमान् महानसीयतृणादिमत्पर्वतमहानसान्यतरत्वादित्यादावतिव्या-प्तिवारणाय प्रकारतावच्छेदकतापर्याप्त्यधिकरणत्वस्यावश्यकतया तद्रूपत्व-स्यातादृशत्वात्

अथैवं एतद्रूपतद्रूपान्यतरतद्रसोभयाभावकपालत्वरूपसामान्योभया-भावीयसाध्यनिष्ठप्रतियोगितामादायैव नाप्रसिद्धिरिति चेत्, न, उभया-भावस्य द्वित्वाभावरूपताया एतल्लक्षणकृत्संमततया प्रतियोगितायाः साध्य-निष्ठत्वाभावात् । वह्नित्वेन महानसीयवह्निघटान्यतराभावमादायाव्याप्तेः साध्यमात्रनिष्ठताया आवश्यकत्वाच्च ।

केचित्तु—घटत्वेन प्रमेयं नास्तीति प्रतीतौ या प्रमेयमात्रवृत्तिप्रति-योगिता सैव घटो नास्तीत्यादौ भासते, स्नेहत्वेन गुणो नास्ति जन्यस्नेहत्वेन जन्यगुणो नास्तीत्यादौ या गुणमात्रवृत्तिप्रतियोगिता सैव स्नेहो नास्ति जन्यस्नेहो नास्तीत्यादौ प्रतीयते, [1]इत्येकमात्रवृत्तिसाध्यनिष्ठतादृशप्रतियो-गितासंवन्धावच्छिन्नप्रकारतावच्छेदकयत्किंचिद्घटत्वस्नेहत्वावच्छिन्नान-धिकरणत्वमेतद्रसाधिकरणस्य संभवत्येव । साध्यमात्रत्वं तु न देयम् । सामान्याभावाप्रसिद्ध्या अतिव्याप्तेः । वह्नित्वेन महानसीयवह्निघटान्य-तराभावसत्त्वे तत्प्रतियोगितावच्छेदकता तादृशान्यतरत्वेऽपि उपेया अन्यथा अतिप्रसक्तधर्मानवच्छिन्नप्रतियोगितैवोपादेयेत्याहुः ।

[1] इत्येतन्मात्रवृत्ति—अ.

तन्न––घटमात्रवृत्तिप्रतियोगिताया एव उक्तप्रतीत्या प्रमेयवृत्तित्वेन भानं स्वीकृत्य कृत्स्नप्रमेयवृत्तिप्रतियोगिताया दूषितत्वात् । तथा चाप्रसिद्धिर्दुर्वारैव । एवं स्नेहत्वेन गुणो नास्ति जन्यस्नेहत्वेन जन्यगुणो नास्तीत्यादावपि स्नेहो नास्ति जन्यस्नेहो नास्तीत्यादौ प्रतीता स्नेहमात्रवृत्तिप्रतियोगितैव गुणत्वादिसामानाधिकरण्येन प्रतीयते । गुणमात्रवृत्तिप्रतियोगितायां मानाभावादिति न दोषः ।

## गादाधरी

(४६) अन्येषां मतेन सामानाधिकरण्येनेत्यस्य सार्थक्यम् ।

**अन्ये तु––यदि, 'घटत्वेन वह्निर्नास्ति' 'वह्नित्वेन घटो नास्ति' इत्यादौ वह्नित्वघटत्वादिरूपसमानाधिकरणधर्मस्यापि प्रतियोगितावच्छेदकत्वं भासते, अन्यथा तादृशप्रतीतेः प्रतियोगिनिष्ठ[1]तत्तद्धर्माणाम् उपलक्षणतया [2]भाने तद्विशिष्टवैशिष्ट्यानवगाहितया तन्निर्विकल्पकानन्तरम् उत्पत्त्यापत्तेः । न च वह्नित्वघटत्वादेः प्रतियोगितावच्छेदकत्वानवगाहने तन्निर्विकल्पकानन्तरं तादृशाभावबुद्धिरिष्टैव, प्रतियोगितावच्छेदकतया यदवभासते तन्निर्विकल्पकानन्त[3]रमभावप्रतीत्यनुपगमादिति वाच्यम् । वह्नित्वादिर्निर्विकल्पकानन्तरं तथाविधप्रत्ययोपगमे विशेषाभावेन तदुत्तरं वह्नित्वाद्यंशे प्रतियोगितावच्छेदकत्वानवगाहि वह्निर्नास्तीत्याकारकसमानाधिकरणधर्मावच्छिन्नाभावप्रत्ययस्यापि स्वीका-**

[1] प्रतियोगिनि तत्तद्धर्माणाम्––अ.

[2] भानेन––अ.

[3] अनन्तरमेव––अ.

**रापत्तेः,[1] इत्युच्यते, तदा व्याप्यवृत्तितानिवेशपक्षे वह्नित्वादेः व्याप्यवृत्तिघटत्वाद्यवच्छिन्नवह्न्याद्यभावप्रतियोगितावच्छेदकत्व-मादायासंभवप्रसक्तिरित्यालोच्य प्रतियोगिवैयधिकरण्यमनुससार। तदर्थः प्रतियोगितावच्छेदकविशिष्टानधिकरणवृत्तित्वमेव; तथा सत्यपि हेतुमतो घटत्वादिविशिष्टानधिकरणतया वह्नित्वादिना घटाद्यभावमादाय दोषप्रसक्त्या सामानाधिकरण्येनेत्यस्य सार्थक्य-संभवात् ।**

**न च प्रतियोगितावच्छेदविशिष्टानधिकरणत्वं प्रतियोगिता-वच्छेदकावच्छिन्नप्रतियोगितावच्छेदकताकभेदवत्त्वम् । तथा च संयोगत्वाद्यवच्छिन्नघटादिमद्भेदमादाय संयोगात्यन्ताभावस्य प्रतियोगिवैयधिकरण्यापत्तिः। भेदप्रतियोगितावच्छेदकतायां प्रकृ-तप्रतियोगितासामानाधिकरण्यनिवेशने[2] च[3] 'परेतु' इत्यादिना**

[1] एवं स्वातन्त्र्येण प्रतियोगितावच्छेदकत्वविषयकाभावबुद्धौ प्रतियोगिप्रका-रस्योपलक्षणतया भानोपगमे वह्निमति वह्नित्वेन द्रव्यं नास्तीति प्रतीत्यापत्तेः। यत्तु प्रतियोगिप्रकारविरुद्ध धर्मे एव स्वातन्त्र्येण प्रतियोगितावच्छेदकत्वं भासत इति नियमात् न तदापत्तिरिति; तन्न; तथा सति ह्रदादौ वह्नित्वेन किमपि द्रव्यं नास्तीति प्रतीत्यनुपपत्तेः। न च प्रतियोगित्वे प्रतियोगिप्रकारीभूतधर्मान्यून-वृत्तित्वभाननियमात् पर्वतादिवृत्ति वह्नित्वाद्यवच्छिन्नाभावप्रतियोगिताया द्रव्यत्वाद्य-व्यापकत्वात् नोक्तापत्तिरिति वाच्यम् । वह्नित्वेन द्रव्यं नास्तीत्यादिशाब्दबोधे प्रति-योगिताया द्रव्यत्वान्यूनवृत्तित्वभ। नाभावात् । न च संसर्गतया भासमाने वह्नित्वा-वच्छिन्नप्रतियोगित्वे द्रव्यत्वान्यूनवृत्तित्वस्य संसर्गतावच्छेदकतया (भास) मान-माकाङ्क्षाबलात् एव संभवतीति वाच्यम् । अन्यूनवृत्तित्वस्य नानापदार्थघटिततया भाने मानान्तरविरहेण स्वरूपसंबन्धरूपावच्छिन्नत्वभानोपगमस्यैवोचितत्वाद् इत्युच्यते अधिकः पाठः––अ.

[2] घटत्वाद्यवच्छिन्नवह्न्यादिमद्भेदमादाय अधिकपाठः––अ.

[3] अव्याप्तिरिति वाच्यम् इति––क, अ.

अभिहितद्वितीयकल्प एव पर्यवसानमिति घटत्वादिना वह्न्याद्यभावस्यापि[1] प्रतियोगिवैयधिकरण्यापत्त्या वह्नित्वादेः तत्प्रतियोगितायां सामानाधिकरण्येनावच्छेदकतया अव्याप्ते[2]रिति वाच्यम्। व्यधिकरणधर्मावच्छिन्नप्रतियोगितावच्छेदकभेदानभ्युपगमेनैव उक्तापत्त्यसंभावात् । घटत्वेन पटवान्नेत्यादौ घटत्वाद्यवच्छिन्नपटात्यन्ताभावस्यैव विषयत्वोपगमात् ।

प्रतियोगितावच्छेदकं सामानाधिकरण्येन यत्रावच्छेदकं तादृशप्रतियोगितावच्छेदकताक एव वा भेदो निवेश्यः[3] ।

अथैवमपि घटत्वाद्यवच्छिन्नवह्न्याद्यभावस्य घटत्वाद्यवच्छिन्नघटादिव्यधिकरणस्य प्रतियोगितावच्छेदकत्वमादायाव्याप्तिर्दुवारैवेति चेत्, न, सामानाधिकरण्येन प्रतियोगितायामवच्छेदकं यत् तदवच्छिन्नतत्समानाधिकरणप्रतियोगितावच्छेदकताकभेदस्यैव निवेशनीयत्वात् ।

अथ वह्नित्वादिना घटाद्यभावस्य यदि घटत्वादिकं प्रतियोगितावच्छेदकं, तदा घटादिमति [4]तादृशाभावाप्रसंगइति वह्नि-

[1] निवेशनेन सामञ्जस्यात्––क.

[2] न चेत्यारम्भः––(क). [ ] न च घटत्वादिना वह्न्याद्यभावस्यापि घटत्वाद्यवच्छिन्नवह्न्यादिमद्भेदमादाय प्रतियोगिवैयधिकरण्यं दुर्वारम् । तादृशभेदीयवह्न्यादिनिष्ठप्रतियोगितावच्छेदकतायां घटत्वाद्यवच्छिन्नवह्न्यभावीयवह्न्यादिनिष्ठप्रतियोगिताव्यधिकरणघटत्वादेरिव तत्समानाधिकरणवह्नित्वादेरपि सामानाधिकरण्येनावच्छेदकतायास्तादृशात्यन्ताभावप्रतियोगितावच्छेदकवदप्रत्याख्येयत्वात् । प्रकृतप्रतियोगितासमानाधिकरणधर्मावच्छिन्नत्वस्य भेदवारणासंभावाद् इति वह्नित्वादेस्तत्प्रतियोगितायां सामानाधिकरण्येनावच्छेदकतया अव्याप्तिरिति वाच्यम् । पाठान्तरम्––क.

[3] स्वसमानाधिकरणधर्मावच्छिन्नावच्छेदकताकभेदः इत्यर्थः––रा.

[4] न तादृशाभावप्रसंग––अ.

त्वघटत्वाद्योरेवावच्छेदकतापर्याप्तिरुपगन्तव्या । तथा चानवच्छेदकपदस्यावच्छेदकतापर्याप्त्यनधिकरणपरतया व्याख्येयतयैव[1] तादृशाभावप्रतियोगितामादाय दोषाप्रसक्तेः सामानाधिकरण्येनेत्यस्य वैयर्थ्यमशक्यवारणमेवेति चेत्, न, प्रतियोगिविशेषणतापन्नतदनापन्नयोरवच्छेदकतावैलक्षण्येन प्रत्येकमेवावच्छेदकतापर्याप्तेः पर्याप्तिविवक्षामात्रेण [2]प्रतीकारासंभवात् सामानाधिकरण्येनेत्यस्य सार्थक्यम् । तदपि प्रतियोगिविशेषणतापन्नस्य यादृशं विलक्षणमवच्छेदकत्वं तत्पर्याप्त्यनधिकरणत्वलाभायैव । व्यधिकरणधर्मानवच्छिन्नप्रतियोगिताकाभावस्यैव तत्प्रतियोगितावच्छेदकविशिष्टविरोधित्वोपगमेनो[3]क्ताभावस्य घटादिमति वृत्तौ बाधकाभावात् ।

अस्तु वा विलक्षणावच्छेदकतात्वेन प्रत्येकं पर्याप्तयोरप्यवच्छेदकत्वयोः तत्तत्प्रतियोगितावच्छेदकतात्वेनानुगतयोः समानाधिकरणधर्मव्यधिकरणधर्मद्वये पर्याप्त्यन्तरम् । तादृशानुगतरूपावच्छिन्नपर्याप्त्यधिकरणधर्मावच्छिन्नस्यैवाभावविरोधितेति नानुपपत्तिः । [4]एवं च ह्रदत्ववह्नित्वोभयावच्छिन्नवह्न्यभावमादाय पर्याप्तिनिवेशनव्यावृत्तिप्रदर्शनं समानाधिकरणधर्मस्य व्यधिकरणधर्मावच्छिन्नप्रतियोगिताकाभावप्रतियोगितानवच्छेदकत्वपक्षीयव्याप्यवृत्तित्वघटितलक्षणाभिप्रायेणेति वदन्ति ।

[1] एवकारो भिन्नक्रमः, अनधिकरणपरतयैवेत्यर्थः--रा.

[2] अव्याप्तिवारणासंभवात्--रा.

[3] वह्नित्वे सामानाधिकरण्येनावच्छेदकत्वपर्याप्तेः पर्याप्तिनिवेशे प्रतीकारात्; इदमुपलक्षणम्; समानाधिकरणवह्नित्वावच्छिन्नवह्निनिष्ठावच्छेदकताकभेदस्य पर्वताद्यवृत्तेः तादृशाभावस्य प्रतियोगिवैयधिकरण्यानुपपत्तिश्च--रा.

[4] वह्नित्वादिना घटाभावस्य--रा.

## कृष्णंभट्टीयम्

प्रतियोगितेति । स्वप्रतियोगितेत्यर्थः । तेन वह्नित्वादेरभावान्तरप्रतियोगितावच्छेदकत्वेऽपि न नियमभङ्गः । यदवभासते इति । तेजस्त्वादिनिर्विकल्पकानन्तरमन्धकारादेरिदमिति प्रतीतिनिर्वाहाय फलीभूतप्रतीताविति बोध्यम् । द्रव्याद्यभावे घटत्वावच्छिन्नप्रतियोगिताकत्वसंवन्धेन घटावगाहिनो घटो नास्तीति प्रत्ययस्य घटत्वनिर्विकल्पकानन्तरं वारणार्थं यदवगाहत इत्यनुधावनम् । तदुत्तरमिति । वह्नित्वादौ प्रतियोगितावच्छेदकतासत्त्वेऽपि केवलप्रतियोगितासंवन्धेन विशेष्ये विशेषणमिति रीत्येत्यर्थः । प्रतियोगिविशेषिताभावभानं त्विति नियमस्तु इदानीमप्रयोजक इति भावः । महानसीयवह्निमद्भेदमादाय वह्निसामान्याभावप्रतियोगितासंग्रहवारणाय प्रतियोगितावच्छेदकतायां प्रतियोगितावच्छेदकावच्छिन्नत्वोपादानम् ।

अथैवमपीति । ननु घटत्वेन वह्न्यभावप्रतियोगितायां [1]वह्नित्वस्यावच्छेदकतया सामान्यतो यादृशप्रतियोगितावच्छेदकावच्छिन्नानधिकरणत्वं न हेतुमत इति कथं तदभावस्य लक्षणघटकतेति चेत्, न, यादृशप्रतियोगितावच्छेदका[2]वच्छिन्नयत्किंचिद्धर्मावच्छिन्नानधिकरणत्वस्य विवक्षितत्वात् । अन्यथा घटत्वेन प्रमेयं नास्तीति प्रतीत्या घटसामान्याभावीयप्रतियोगितायां प्रमेयत्वस्यापि अवच्छेदकत्वेन सामान्यतो घटसामान्या-भावप्रतियोगितावच्छेदकावच्छिन्नानधिकरणाप्रसिद्ध्या तादृशाभावस्यापि लक्षणघटकत्वापत्तः । व्याख्ययतयैव इत्येवकारो भिन्नक्रमे । अनधिकरणपरतयैवेत्यर्थः ।

नन्वेवं सामानाधिकरण्येनेत्येतद्वैयर्थ्यमित्यत आह––तदपीति । एवं च प्रतियोगिवैयधिकरण्यशरीरे सामानाधिकरण्यनिवेशस्य अवच्छेदकतावैलक्षण्यस्य च तदवतारकत्वं बोध्यम् । प्रतियोगितेति । तद्धर्मावच्छि-

[1] वह्नित्वस्यापि––अ.

[2] अवच्छिन्नेति नास्ति––अ.

न्नव्यधिकरणधर्मानवच्छिन्नप्रतियोगिताकाभावस्य तद्धर्मावच्छिन्नविरोधित्वमर्थः। प्रतियोगितावच्छेदकावच्छिन्नप्रतियोगिमत्ताया अभावविरोधशरीरप्रतियोगिनिवेशवैयर्थ्यात् तत्प्रतियोगितावच्छेदकावच्छिन्नस्य तत्प्रतियोगिताकाभावविरोधनियममपि उपपादयति——अस्तु वेति। व्यधिकरणधर्मावच्छिन्नाभावाविरोधोपपादनाय सामान्यतोऽवच्छेदकतात्वस्य तन रूपेण पर्याप्तेश्चाश्रयणम्। विलक्षणावच्छेदकतापर्याप्त्यवलम्वः लक्षणनिर्वाहार्थः।

नन्वेवं वह्नित्वस्यैव ह्रदत्ववह्नित्वोभयरूपेण वह्न्यभावप्रतियोगितासमानाधिकरणत्वेन तदवच्छिन्नतत्समानाधिकरणावच्छेदकताकप्रतियोगिताकभेदस्य धूमवत्यसत्त्वात् न तादृशाभावस्य प्रतियोगिवैयधिकरण्यसंभव इत्यत आह——एवमिति। पक्षीयेति। तल्लक्षणे घटत्वेन वह्न्यभावमादाय दोषवारणाय तन्मात्राश्रयणात्। वह्नित्वह्रदत्वाभ्यां वह्निर्नास्तीत्यादौ वह्नित्वस्य स्वातन्त्र्येणापि भानाद् उभयम[1]तसाधारणी एकैवावच्छेदकतेति लक्षणे व्यावृत्तिसङ्गतिरिति भावः।

इदं चोपलक्षणम्——स्वमतेऽपि एतदभावस्याद्यद्वयलक्षणाभिप्रायकत्वमेवेति द्रष्टव्यम्।

अत्रेदमस्वरसबीजम्——अवच्छेदकतात्वेन व्यासज्यवृत्तित्वाङ्गीकारे सामानाधिकरण्येनेत्यस्य वैयर्थ्यं दुर्वारम्। तदनुपादानेऽपि वह्नित्वेन घटाभावप्रतियोगितावच्छेदकतात्वेन तद्भेदस्य वह्नित्वे सत्त्वात्। न च तादृशावच्छेदकत्वानि यावन्ति तत्तद्व्यक्त्यवच्छिन्नप्रतियोगिताकभेदकूटं प्रवेश्यैव सार्थक्यमानेयमिति वाच्यम्। तथा सति महानसीयवह्न्यभावमादायाव्याप्तेः। एवं महानसीयवह्न्यभावप्रतियोगिताया अपि तत्तदवच्छेदकतात्वेन प्रत्येकं पर्याप्तत्वाद् अव्याप्तिरतः तत्तत्प्रतियोगितावच्छेदक-

[1] मतेति नास्ति——अ.

तात्वन पर्याप्तिनिवेशावश्यकतया अवच्छेदकतावैलक्षण्यस्य निष्प्रयोजनत्वाद् वैयर्थ्यमिति ।

## न्यायरत्नम्

प्रतियोगितावच्छेदकतयेति । स्वप्रतियोगितावच्छेदकतयेत्यर्थः । तेन वह्नित्वादेः अभावान्तरप्रतियोगितावच्छेदकत्वेऽपि न नियमभङ्गः । तेजस्त्वादिनिर्विकल्पकानन्तरमन्धकारादेः इदमिति प्रतीतिनिर्वाहायाभावे प्रतियोगिविशेषितेति विशेषणं देयम् । प्रत्ययस्यापीति । शुद्धप्रतियोगितासंबन्धेन विशेष्ये विशेषणमिति रीत्या वह्निर्नास्तीति प्रत्ययस्येत्यर्थः । सामानाधिकरण्येनावच्छेदकतयाव्याप्तिरिति[1] । अत्रासंभव एव संभवति न च गुरुधर्मस्यानवच्छेदकत्वे तदवच्छिन्नसाध्यके लक्षणसमन्वय इति वाच्यम् । तन्मते पारिभाषिकावच्छेदकत्वस्यैव निवेश्यत्वादिति ध्येयम् । नन्वेवं सामानाधिकरण्येनेत्यस्य वैयर्थ्यमत आह तदपीति । नन्वेवं प्रतियोग्यवृत्तिश्चेत्यादि ग्रन्थावतारकत्वानुपपत्तिरिति चेत्, न, व्यधिकरणधर्मावच्छिन्नाभावास्वीकारे प्रतियोगितावच्छेदकतावैलक्षण्यस्य प्रतियोगिवैयधिकरण्ये सामानाधिकरण्यांशस्य व्यर्थतायामेव तद्ग्रन्थतात्पर्यात् ।

## गादाधरी

(४७) व्याप्तेरव्यभिचारिसंबन्धरूपत्वोपपदानम् ।

अव्यभिचारिसंबन्धरूपता––अवयवशक्त्या अव्यभिचारिसंबन्धपदप्रतिपाद्यता । तथा च पूर्ववत् नैव [2]तत्पदस्य पारिभाषिकतेति भावः । ननु साध्यतावच्छेदकावच्छिन्नसाध्याभाववद्वृत्तित्वरूपस्य व्यभिचारपदार्थस्य तच्छरीरेऽ[3]निवेशात् कथमेव-

1 अव्याप्तिरिति पाठमनुसृत्य; अव्याप्तेरित्यपि पाठो वर्तते । –स्व.

2 एतत्पदस्य––अ.

3 अप्रवेशात्––अ.

मित्यत आह––हेताविति। यथा हेत्वन्वयिसाध्यतावच्छेदकावच्छिन्नसाध्याभाववद्वृत्तित्वं व्यभिचारः, तथा साध्यतावच्छेदकान्वयिनो हेतुसमानाधिकरणाभावप्रतियोगितायाः सामानाधिकरण्येनावच्छेदकत्वस्यापि तथात्वादित्यर्थः।

वह्निः धूमस्य व्यभिचारीत्यत्राभाववद्वृत्तित्वं व्यभिचारपदार्थः। तदेकदेशे चाभावे षष्ठ्यर्थप्रतियोगितायाः निरूपकत्वसंबन्धेनान्वयः। प्रतियोगितायामाधेयतासंबन्धेन धूमस्य अवच्छिन्नत्वसंबन्धेन धूमविशेषणतापन्नधूमत्वस्यान्वय इति धूमत्वावच्छिन्नधूमाभाववद्वृत्तित्वलाभः। साध्यतावच्छेदकावच्छिन्नसाध्यान्तर्भावेन न व्यभिचारपदार्थता। शक्त्यानन्त्यप्रसंगात्, साध्यवाचकपदवैयर्थ्यापाताच्च। एवं समानाधिकरणभावप्रतियोगितायां सामानाधिकरण्येनावच्छेदकत्वं व्यभिचारपदार्थः। सामानाधिकरण्ये च व्युत्पत्तिवैचित्र्यात् प्रथमान्तपदोपस्थाप्यस्यापि वह्नेः निरूपकत्वेनान्वयः। [1]वह्न्याद्यन्तर्भावेनैव वा शक्तिः। धूमपदं लक्षणया धूमत्वपरम्। आधेयत्वं षष्ठ्यर्थः। अन्वयश्चास्यावच्छेदकत्वे। निरूपकमिनिप्रत्ययार्थः। तथा च धूमत्वनिष्ठस्वसमानाधिकरणाभावप्रतियोगितावच्छेदकतानिरूपको वह्निरित्यन्वयबोधः।

यद्यपि लाघवरूपविनिगमकसत्त्वाद् अभाववद्वृत्तित्व एव व्यभिचारपदशक्तिकल्पनमुचितम्; तथापि ज्ञेयत्वं वाच्यत्वस्याव्यभिचारीति प्रामाणिकव्यवहारानुरोधादुपदर्शितगुरुरूपस्यापि

1 आवृत्तिगौरवादाह; ––रा.

**व्यभिचारपदार्थत्वमावश्यकम् । तत्र वाच्यत्वाभावाप्रसिद्ध्या तदभाववद्वृत्तित्वाभावबोधासंभवात् । उक्तरूपस्य व्यभिचारपदार्थत्वे व्यभिचारस्याभावोऽव्यभिचारम् इत्यव्ययीभावाश्रयणात् ज्ञेयत्वसमानाधिकरणाभावप्रतियोगितानवच्छेदकत्वमव्यभिचारपदार्थः । इनिप्रत्ययार्थो निरूपकत्वम् । वाच्यत्वपदं वाच्यत्वत्वपरम् । षष्ठ्यर्थश्चाधेयत्वम् । तथा च वाच्यत्वत्वनिष्ठस्वसमानाधिकरणाभावप्रतियोगितानवच्छेदकतानिरूपकं ज्ञेयत्वमित्यन्वयबोधः ।**

कृष्णंभट्टीयम्

साध्येति सामानाधिकरण्येनेति च ज्ञेयत्वं वाच्यत्वव्यभिचारीति व्यवहारवारणाय । मूले अप्रसिद्धिव्यधिकरणधर्मावच्छिन्नाभावखण्डनयोः उभयोरपि दूषणत्वलाभायोभयोर्व्यभिचारपदार्थत्वव्यवस्थापनम् । निरूपकताया असंसर्गत्वात् प्रथमान्तस्य भेदसंबन्धेन विशेषणताया अप्रामाणिकत्वाच्चाह––वह्न्यादीति । लाघवेति । प्रतियोगित्वाद्यप्रवेशात् ।

अव्ययीभावेति । यद्यपि कृष्णसर्पवद्बिलमित्यादि प्रयुज्यते, न तु नीलघटवद्गृहमित्यादि, अतो न कर्मधारयान्मत्वर्थीयो बहुव्रीहिश्चेत्तदर्थप्रतिपत्तिकर इति व्युत्पत्तिरुपे[1]या, तत्र वृत्तिद्वयाकल्पनलाघवानुरोधात् कर्मधारयपदं बहु[2]व्रीहीतरसमासपरम्, अत एव साध्याभाववदवृत्तित्वलक्षणे वृत्तेरभावोऽवृत्तमित्यव्ययीभावोत्तरं मत्त्वर्थीयो मथुरानाथेन निराकृतः,

[1] न कर्मधारयान्मत्त्वर्थीय इत्येतावन्मात्रोक्तौ कृष्णसर्पवद्बिलमिति प्रयोगस्य साधुत्वानुपपत्तिः । कृष्णसर्पेति विग्रहस्य नित्यसमासतया तदुत्तरं मतुप्प्रत्ययेऽनुशासनविरोधादतो बहुव्रीहिश्चेत्तदर्थप्रतिपत्तिकर इति व्युत्पत्तिरुपेया––स्व.

[2] तथा च बहुव्रीहीतरसमासान्मत्वर्थीयो न भवति बहुव्रीहिसमासेन तदर्थलाभश्चेदित्यर्थः––स्व.

एवमेव [1]अगुणवत्त्वमिति गुणसाधर्म्यव्याख्यानेऽपि गुणाभाववत्त्वमुपेक्ष्य गुणवद्भिन्नत्वलाभो बोध्यः। तथापि व्यभिचारस्याभावो यत्रेति न व्यधिकरणपदबहुव्रीहिः। अनुशासनासत्त्वात्। नापि नास्ति व्यभिचारो यस्येति बहुव्रीहिः नञ्पदलक्षणापत्तेः। तथा चाव्ययीभावाश्रयणे व्युत्पत्तिभङ्गो नास्तीत्याशयः।

वस्तुतस्तु——राजपुरुषवद् गृहमिति प्रयोगात् कर्मधारयपदं यथाश्रुतार्थकमेव। गुणसाधर्म्यवाक्यस्य गुणाभाववत्त्वरूपार्थेन तात्पर्यमिति व्याप्तेः। एवं च साध्याभाववदवृत्तित्वलक्षणे वृत्तपदेन समासे क्षत्यभावेऽपि समसनलाघवेन वृत्तिपदसमास एवोचितः। नञ्समासान्यत्वं व्युत्पत्तौ निवेश्यमिति। पर्युदासार्थकनञैव नञ्तत्पुरुषनियमादव्ययीभावाश्रयणं वादिनामविवाद इत्यादौ न नञ्तत्पुरुषः किन्तु नञ्समानार्थकमपदमेवेति शब्दालोकटिप्पण्यां स्वयम[2]भिधास्यते।

## न्यायरत्नम्

**अव्ययीभावेति। यद्यपि अव्ययीभावोत्तरं मत्त्वर्थीय इनिप्रत्ययो न भवति न कर्मधारयान्मत्त्वर्थीय इत्यनुशासनविरोधात्। तथापि व्यभिचारस्याभावो यत्रेति व्यधिकरणबहुव्रीहौ अनुशासनाभावेन नास्ति व्यभिचारो यत्रेति बहुव्रीहौ नञ्पदलाक्षणिकत्वापत्त्या तादृशानुशासने बहुव्रीहिपदं यथाश्रुतमेव। प्रकृतप्रयोगवशाच्च नञ्समासान्यसमासपरं वेत्यभिप्रायः।**

[1] अगुणवत्त्वमित्यत्र न गुणोऽगुणः स यत्रास्तीत्यगुणवान् गुणस्याभावोऽगुणं तद्यत्रास्तीत्यगुणवानिति वा विग्रहनिराकरणेन गुणोऽस्यास्तीति गुणवान् न गुणवानगुणवानिति विग्रहस्य प्रकाशरहस्यादौ दर्शनेन कर्मधारयपदस्य बहुव्रीहीतरसमासपरत्वं स्पष्टम्——स्व.

[2] अभिधास्यते इति शिवम्——अ.

## गादाधरी

(४८) अव्यभिचारिसंबन्धपदेन चक्रवर्त्युक्तव्याप्तेः लाभप्रकारोपपादनम्।

अथैवमपि अव्यभिचारिसंबन्धपदेनोक्तव्याप्तेः कथं लाभः? न चाव्यभिचारिपदं तादृशप्रतियोगितानवच्छेदकत्वाश्रयपरम्, संबन्धश्च तदाश्रयसामानाधिकरण्यमिति तल्लाभ इति वाच्यम्। वह्नित्वं धूमाव्यभिचारीति प्रयोगाभावाद् उक्तधर्मबोधकाव्यभिचारपदसमभिव्याहृतमत्वर्थीयस्य आश्रयत्वाबोधकत्वात्। अव्यभिचारिपदार्थान्वयितावच्छेदकं यद्रूपं तदवच्छिन्नसमानाधिकरणाभावप्रतियोगितानवच्छेदकत्वबोधकताया व्युत्पत्तिसिद्धत्वात्। साध्यतावच्छेदकस्याव्यभिचारिपदार्थत्वे हेतुसमानाधिकरणेत्यादिव्याप्तिबोधस्याशक्यत्वाच्चेति चेत्, न, अव्यभिचारिसंबन्ध इत्यस्याव्यभिचारिहेतुनिष्ठसा[1]ध्यसामानाधिकरण्यमित्यर्थः। एवं च साध्यतावच्छेदकनिष्ठस्वसमानाधिकरणाभावप्रतियोगितानवच्छेदकतानिरूपकहेतुनिष्ठसाध्यसामानाधिकरण्यमिति पर्यवसितम्। उक्तलक्षणस्यापि अत्रैवार्थे तात्पर्यम्, न तु यथाश्रुतविशेष्यविशेषणभावे। तदापन्नस्याव्यभिचारिसंबन्धपदेन बोधयितुमशक्यतया पारिभाषिकताया दुर्वारत्वात्। न च यद्रूपावच्छिन्नस्य यस्य व्याप्तित्वं तदन्यरूपेण तस्याव्यभिचारिसंबन्धपदार्थत्वेऽपि न क्षतिरिति वाच्यम्। एवं सति साध्याभाववद्वृत्तित्वमात्रस्य व्यभिचारपदार्थत्वेऽपि व्यतिरेकिसाध्यकोक्तव्याप्तेरव्यभिचारिसंबन्धरूपतोपपत्तेः उक्तधर्मस्य व्यभिचारपदार्थ-

1 'साध्य' पदं नास्ति--अ.

**त्वव्यवस्थापनाया अनुपयु[1]क्तत्वात्। उ[2]क्तलक्षणेऽपि साध्यसामानाधिकरण्यमन्तर्भाव्याव्यभिचारिसंबन्धरूपताया व्यवस्थापयितुं शक्यत्वात्। साध्यसामानाधिकरण्यानन्तर्भावेऽपि प्रतियोगिसमानाधिकरण[3]स्वसमानाधिकरणतादृशयादवभावकत्वरूपपर्यवसितपूर्वलक्षणार्थस्याव्यभिचारिसंबन्धरूपतासंभवात्।**

कृष्णंभट्टीयम्

अव्यभिचारिसंबन्ध इत्यस्य अव्यभिचारिणः संबन्ध इत्यर्थमभिप्रेत्य शङ्कते––न चेति। अव्यभिचारीति। अव्यभिचारनिरूपकत्वरूपतत्पदार्थान्वयस्थल एवोक्तनियमः। अन्यत्र तु वस्तुतो हेतुसमानेत्यादिक्रमेणैवेत्युक्तौ[4] वह्नित्वमित्यादिदोष एव निर्भरः।

अव्यभिचारिणि हेतौ संबन्ध इत्यर्थमभिप्रेत्य समाधत्ते––नेति। पारिभाषिकताया इति। येन रूपेण व्याप्तित्वं तेनैव रूपेणाव्यभिचारिसंबन्धपदार्थत्वे तत्पदस्य न पारिभाषिकत्वम्, अत्र तु न तथेति भावः।

व्याप्तितानवच्छेदकरूपेण तत्पदार्थत्वेऽपि न पारिभाषिकत्वमित्याशङ्कते––न चेति। यद्रूपं प्रकृतहेतुव्यापकसामानाधिकरण्यत्वं तदन्यद् अव्यभिचारिनिष्ठसाध्यसामानाधिकरण्यत्वम्। केवलान्वयिनि साध्यसामान्याभावाप्रसिद्धेराह––व्यतिरेकीति। अव्यभिचारिसंबन्धरूपतोपपत्तेरिति। साध्याभाववदवृत्तित्वविशिष्टसाध्यसामानाधिकरण्यत्वेन तत्पदप्रतिपाद्यतासंभवादित्यर्थः।

[1] साध्याभाववदवृत्तित्वविशिष्टसाध्यसामानाधिकरण्यत्वेन तत्पदप्रतिपाद्यतासंभवात्––रा.

[2] यत्समानाधिकरणा इत्यादिलक्षणेऽपि––रा.

[3] निरुक्तयावदभाव––अ.

[4] उक्तौ तु––अ.

ननु व्याप्तित्वं साध्यतावच्छेदकादिभेदेन नानैव। एवं च व्यतिरेकिसाध्यके अभाववद्वृत्तित्वघटितरूपेण तत्पदप्रतिपाद्यत्वसत्त्वेन तत्र व्यतिरेकिसाध्यतावच्छेदकघटितरूपान्तरेण व्याप्तित्वसंभवेऽपि केवलान्वयिस्थलीयव्याप्तेः केनापि रूपेण तत्पदप्रतिपाद्यत्वं न संभवतीति व्यभिचारपदार्थान्तरव्यवस्थापनमा[1]वश्यकमित्यत आह––उक्तेति। ननु साध्यसामानाधिकरण्यान्तर्भावे तत्पदस्य पारिभाषिकता नोच्यते; परंतु निष्प्रयोजनकतदन्तर्भाव एव नेति तदुक्तिसङ्गतिरित्यत आह––[2]तदनन्तरिति। पूर्वपदार्थविधेयकबोधजनकबहुव्रीहिणा व्याप्तेर्विशिष्टार्थतां प्रदर्शयन्नेव रूपान्तरेण तत्पदप्रतिपाद्यतामाह––प्रतियोगीति। यावद[3]भावकत्वस्य हेतुनिष्ठाधेयतारूपस्योक्तरीत्या तद्रूपता। स्ववृत्तित्वस्वविशिष्टहेत्वधिकरणावच्छिन्नत्वस्वप्रतियोगिनिरूपितत्वैतत्त्रितयसंबन्धेन अभावविशिष्टं यत्सामानाधिकरण्यं तद्व्याप्यं यत्साध्यव्यापकतावच्छेदकप्रतियोगिताकत्वादिविशिष्टसामानाधिकरण्यं निरूपकतासंबन्धेन तद्वत्त्वस्य तादृशप्रतियोगिताकत्वनिष्ठव्याप्यताया अवच्छेदकाधेयतानिरूपकाधिकरणीयहेतुतावच्छेदकधर्मावच्छिन्नाधेयतारूपत्वात्।

## न्यायरत्नम्

**अव्यभिचारिसंबन्ध इत्यत्राव्यभिचारिणः संबन्ध इति व्युत्पत्तिमभिप्रेत्य शङ्कते न चेति। अव्यभिचारीति। न चाव्यभिचारनिरूपकार्थकतत्पदान्वयस्थल एवायं नियमोऽन्यत्र तु हेतुसमानाधिकरणेत्यादिक्रमेणैवेति नायं दोष इति वाच्यम्। प्रथमदोष एव निर्भरात्।**

[1] आवश्यकमिति चेन्न; यावद्व्याप्तेः अव्यभिचारिसंबन्धरूपतेत्यनियमात्। अत एव वा आह––उक्तेति––अ.

[2] तदनन्तरिति पाठो गादाधर्यां न वर्तते। अपि तु साध्यसामानाधिकरण्याभावानन्तर्भावेऽपीति पाठो वर्तते––स्व.

[3] [ ] एतदन्तर्गतपाठस्थाने यावदभावकत्वं हेतुनिष्ठाधेयतारूपम् इति पाठः––अ.

अव्यभिचारिणि संबन्ध इति व्युत्पत्तिमभिप्रेत्याथेति पूर्वपक्षं समाधत्ते नेति । न च यद्रूपावच्छिन्नस्येति यद्रूपं हेतुव्यापकसाध्यसामानाधिकरण्यत्वं तदन्यद्रूपमव्यभिचारिहेतुनिष्ठसाध्यसामानाधिकरण्यत्वम् । अव्यभिचारिसंबन्धरूपतोपपत्तेरिति । साध्याभाववदवृत्तित्वविशिष्टसाध्यसामानाधिकरण्यत्वेन तत्पदप्रतिपाद्यतासंभवादित्यर्थः । उक्तलक्षणेऽपीति । यत्समानाधिकरणा इत्यादिदीधितिकारीयलक्षणेऽपीत्यर्थः । प्रतियोगीति । यावदभावकत्वस्य हेतुनिष्ठाधेयत्वरूपत्वात् तस्योक्तरीत्या अव्यभिचारसंबन्धरूपता । स्वविशिष्टहेत्वधिकरणावच्छिन्नत्वस्वप्रतियोगिनिरूपितत्वोभयसंबन्धेनाभावविशिष्टसामानाधिकरण्यव्याप्यं यत् साध्यव्यापकतावच्छेदकप्रतियोगिताकत्वविशिष्टसामानाधिकरण्यं निरूपकतासंबन्धेन तद्वत्त्वस्य तादृशलक्षणवाक्यपर्यवसितार्थरूपस्योक्तरीत्या अव्यभिचारिसंबन्धरूपतासंभवाच्च । तथा च पारिभाषिकमेवाव्यभिचरितत्वमित्यनेन तस्य पारिभाषिकत्वप्रतिपादनासंगतिरिति भावः ।

## गादाधरी

(४६) अवच्छेदकत्वपरिष्कारः ।

**अवच्छेदकत्वमिति । [1]अनवच्छेदकमित्यत्र यदवच्छेदकपदं तत्तात्पर्यविषयावच्छेदकत्वमित्यर्थः । तत्पर्याप्त्यधिकरणत्वम् पर्याप्तिसंबन्धेनावच्छेदकतावत्त्वम्, तथा च पर्याप्तिसंबन्धेनावच्छेदकत्वावच्छिन्नस्य भेदोऽनवच्छेदकपदेन विवक्षित इति भावः । विशिष्टवह्न्यभावस्य प्रतियोगितावच्छेदकत्वेऽपि वह्नि-**

[1] अवच्छेदकमित्यत्र––घ.

कृष्णम्भट्टीये अवच्छेदकमित्यत्रेति प्रतीकधारणम् । न्यायरत्ने तु अनवच्छेदकमित्यत्रेति प्रतीकधारणम् ।

त्वस्येत्यन्वयः। महानसीयत्वादिविशिष्टवह्न्यभावप्रतियोगितायां महानसीयत्वसहितस्य वह्नित्वस्यावच्छेदकत्वेऽपि आश्रयत्वसंबन्धेनावच्छेदकतावदन्यत्वस्य वह्नित्वे दुर्लभत्वादिति भावः।

प्रतियोगिविशेषणतापन्नधर्मान्तरसहितवह्नित्वावच्छिन्नाभावमादाय दोषं दर्शयित्वा प्रतियोगिविशेषणतापन्नधर्मस्यैव प्रतियोगितावच्छेदकत्वं प्रतीयत इति नियमानभ्युपगन्तुर्व्यधिकरण-धर्मावच्छिन्नाभाववादिनः प्रतियोग्यवृत्तिधर्मसहितप्रतियोगिवृत्तिधर्मपर्याप्तप्रतियोगितावच्छेदकताको[1]ऽभावोऽस्तीति व्युत्पादनाय तादृशाभावमादायापि दूषणं दर्शयति--ह्रदत्वेति। उभयावच्छिन्नाभावप्रतियोगितावच्छेदकोभयघटकप्रत्येकस्यावच्छेदकताया [2]अव्याहतत्वादिति भावः। न क्षतिरिति। अवच्छेद्याश्रयविशेषणभावापन्नेषु तदनापन्नेषु च[3] नानाधर्मेषु पर्याप्तं यदवच्छेदकत्वं पर्याप्तिसंबन्धेन तदवच्छिन्नभेदस्य तत्पर्याप्त्यनवच्छेदकप्रत्येकधर्ममात्रवृत्तिधर्मावच्छेदेन सत्वाद् वह्नित्वादेः तादृशप्रतियोगितानवच्छेदकत्वस्य पटत्वाद्यवच्छिन्ने घटपटोभयत्वाद्यवच्छिन्नभेदवत् निष्प्रत्यूहत्वादिति भावः।

न च वह्निनिष्ठह्रदत्ववह्नित्वोभयावच्छिन्नप्रतियोगितायाः सामानाधिकरण्येन यदवच्छेदकत्वं तद्वह्नित्वमात्रे पर्याप्तम्, ह्रदत्वस्य व्यधिकरणतयैवावच्छेदकत्वादिति कथं वह्नित्वस्य तादृशावच्छेदकत्वावच्छिन्नान्यत्वनिर्वाह इति वाच्यम्। यतः

1 अवच्छेदकताकोऽपि—अ.

2 अक्षतत्वादिति—अ.

3 चकारस्थाने वाकारः—अ.

**सामानाधिकरण्येनानवच्छेदकमित्यस्य तत्प्रतियोगितासमानाधिकरणवृत्ति यत् प्रतियोगितावच्छेदकत्वं तदवच्छिन्नभेदकूटवत्त्वमर्थः ।**

**इत्थं च ह्रदत्ववह्नित्वोभयावच्छिन्नप्रतियोगितायाः समानाधिकरणवृत्त्यपि एकमेवावच्छेदकत्वमुभयपर्याप्तम्, तदवच्छिन्नभेदो वह्नित्वेऽव्याहत एवेति ।**

कृष्णंभट्टीयम्

अवच्छेदकत्वं [1]पर्याप्त्यधिकरणत्वमित्यत्रानन्वयः । अवच्छेदकत्वमवच्छेदकपदार्थ इत्यपि न । तत्पदासत्त्वात् । नापि अवच्छेदकपदार्थः । पर्याप्तिघटितधर्मस्य तत्पदार्थत्वाभावात्; तद्भेदनिवेशासंभवाच्च । अवच्छेदकताया व्यासज्यवृत्तित्वेऽपि तत्पर्याप्तेरतथात्वाद् इत्यतो व्याचष्टे–– [2]अवच्छेदकमित्यत्रेति । तात्पर्यविषयावच्छेदकत्वं; तात्पर्यविषयावच्छेदकपदार्थतावच्छेदकम्; तादृशावच्छेदकवृत्तिधर्मो वा । उभयपर्याप्तेः प्रत्येकपर्याप्तिं विना दौर्लभ्यादाह––पर्याप्तीति ।

प्रतियोग्यवृत्तीति । विरुद्धघटत्वपटत्वाभ्यां प्रमेयसामान्याभावोपदर्शनेनैव तादृशह्रदत्ववह्नित्वाभ्यां प्रमेयसामान्याभावप्रदर्शनसिद्धेः वह्निवृत्तित्वविशेषिततत्प्रतियोगिताकाभावपर्यन्तानुधावनमफलमित्याशङ्कावारणाय । एवं च सार्वभौमादिसिद्धोऽवच्छेदकैक्य इति नियमोऽप्यप्रामाणिक इति बोध्यम् ।

[1] तत्पर्याप्त्यधिकरणेत्यादि––अ.

[2] अनवच्छेदकमित्यत्रेति––अ. न्यायरत्ने अनवच्छेदकमित्यत्रेति प्रतीकधारणम् ––स्व.

व्युत्पादनायेति । अयमभिप्रायः——[1]सामान्यतः प्रतियोगिविशेषणस्यैव प्रतियोगितावच्छेदकत्वं प्रतीयत इति [[2]नियमानङ्गीकारे] वह्निसामान्याभावादेरपि वह्नित्वेन नास्तीति [[3]प्रत्ययापत्तिः] [4]प्रतियोग्यवृत्तिधर्मस्य प्रतियोगिविशेषणस्यैव [[5]प्रतियोगितावच्छेदकत्वमिति तु न नियमः] [[6]तादृशस्य प्रतियोग्यविशेषणस्यापि] प्रतियोगितावच्छेदकत्वात् । किन्तु प्रतियोगिवृत्तेः धर्मस्य प्रतियोगिविशेषणस्यैव [[7]प्रतियोगितावच्छेदकत्वमिति नियमः] । [8]एवं च वह्नित्वह्रदत्वाभ्यां वह्न्यभावासिद्धिप्रसङ्गः । प्रतियोगिवृत्तेः प्रतियोगितावच्छेदकवह्नित्वस्य प्रतियोग्यविशेषणतया नियमविरोधात् । न च तस्य प्रतियोगिविशेषणत्वमपि अव्याहतमिति वाच्यम् । प्रतियोगिविशेषणस्यैवेत्यस्य स्वतन्त्रविशेषणतानापन्नस्येत्यर्थात् । स्वातन्त्र्यं च प्रतियोगिविषयत्वानिरूपितत्वम् । अतः प्रतियोगिवृत्तिमात्रस्येति विवक्षणीयम् । उक्तस्थलीयावच्छेदकत्वं च प्रतियोगिवृत्तिवृत्तित्वे सति तदवृत्तिवृत्तीति न नियमभङ्गः । [[9]इति सूचनाय व्युत्पादनपदमिति ।]

तत्र[10] दीधितिकृतामेतादृशाभावान्तरप्रदर्शनं किमर्थम्; महानसीयवह्न्यभावमादायैव पर्याप्तिव्यावृत्तिसंभवाद् इत्याशङ्कायामीदृशाभाव-

1 यदि सामान्यतः——अ.

2 [ ] एतदन्तर्गतपाठो नास्ति तत्स्थाने न नियमः तर्हि इति——अ.

3 [ ] एतदन्तर्गतपाठो नास्ति । न कुतः प्रत्ययः इति पाठो वर्तते——अ.

4 पूर्वम् अतएव इत्यधिकपाठः——अ.

5 [ ] एतदन्तर्गतपाठस्थाने प्रतियोगितावच्छेदकत्वं प्रतीयते इत्यपि न । इति पाठः——अ.

6 तादृशप्रतियोगिविशेषणस्यापि इति पाठः । [ ] एतदन्तर्गपाठो नास्ति–अ.

7 एतदन्तर्गतपाठस्थाने प्रतियोगितावच्छेदकत्वं प्रतीयत इत्येवेति पाठः——अ.

8 एवं च स्थाने अत्रापि इति——अ.

9 [ ] एतदन्तर्गतपाठस्थाने तद्विरोधाच्च न वह्नित्वह्रदत्वाभ्यां प्रमेयाभाव इति । एतादृशपाठः——अ.

10 अत्र——अ.

सत्त्वेऽवच्छेदकताभेदः तत्पर्याप्तिभेदश्चावश्यक इति द्वितीयलक्षणातिव्याप्तिमाशङ्कते––न चेति। तृतीयलक्षणे नेयं शङ्का एतदभावस्य तदघटकत्वात्। नापि प्रथमलक्षणे। सामानाधिकरण्येनेत्येतदसत्त्वात्। तत्प्रतियोगितावच्छेदकत्वत्वेनावच्छेदकताद्वयपर्याप्तिसंभवात् स्वपर्याप्त्यवच्छेदकीभूतयद्रूपावच्छिन्ने प्रतियोगितासामानाधिकरण्यं तद्रूपविशिष्टावच्छेदकत्वनिवेशे तत्र तादृशावच्छेदकत्वाप्रसिद्धया न तस्य लक्षणघटकता। एवं प्रतियोगितासमानाधिकरणवृत्तितावच्छेदकं यत् तादृशप्रतियोगितावच्छेदकतात्वं तद्वत्पर्याप्त्यनधिकरणत्वनिवेशे तस्य लक्षणघटकतापीति। परंतु उदक्षरतावारणायावच्छेदकत्वे समानाधिकरणवृत्तित्वमात्रं निवेशयति–– यत इति।

[1]तत्तदिति। द्वितीये हेतुसमानाधिकरणाभावप्रतियोगितावच्छेदकत्वे सति तादृशाभावप्रतियोगितासामानाधिकरण्यस्य वह्नित्वादौ सत्त्वादसंभव इति यस्याः प्रतियोगितायाः अवच्छेदकत्वं तस्याः सामानाधिकरण्यमिति निवेशावश्यकत्वेन कूटनिवेशः। प्रथमे द्वितीये च परिचायकशरीरनिविष्टप्रतियोगित्वाभेदनिवेशादपि तन्निवेशः। द्रव्यं गुणादित्यादौ गुरुधर्मावच्छिन्नहेतुके हेतुसमानाधिकरणाभावप्रतियोगितावच्छेदकं यद्यत् तद्भेदकूटोक्तौ घटवृत्तित्वविशिष्टद्रव्यत्वाभावप्रतियोगितावच्छेदकतादृशद्रव्यत्वत्वभेदासत्त्वेऽपि तादृशाभावीया या [2]या प्रतियोगिता [3]तत्तदवच्छेदकत्वावच्छिन्नभेदकूटोक्तेः नाव्याप्तिः। तृतीयलक्षणे तु यादृशप्रतियोगितेत्यादेः हेतुमन्निष्ठभेदप्रतियोगितायां स्वावच्छिन्नप्रकारतावच्छेदकयत्किंचिद्धर्मावच्छिन्नवत्तासंबन्धेनावच्छेदको यः प्रतियोगितात्मकः संबन्धः स्वनिरूपितत्वस्वसमानाधिकरणवृत्तित्वोभयसंबन्धेन तद्विशिष्टावच्छेदकत्वत्वेनानु[4]गतावच्छेद-

[1] अत्र पठभेदाः गादाधर्यां दर्शिताः––स्व.

[2] या नास्ति––अ.

[3] एवं तत्पदं नास्ति––अ.

[4] एतन्मध्यगतपाठः नास्ति––अ.

कत्वावच्छिन्नभेदनिवेशोऽपि संभवति । घटाभावमहानसीयवह्न्यभावप्रति-योगिता[1]वच्छेदकतात्वेनावच्छेदकत्वीयैकपर्याप्त्यभावेऽपि नानापर्याप्त्यनुगतपर्याप्तित्वेन पर्याप्तिसंबन्धावच्छिन्नतादृशावच्छेदकतात्वेन प्रतियोगितावच्छेदकताकभेदनिवेशस्य सिद्धान्तलक्षणादौ स्वहस्तितत्वात् । वस्तुतोऽवच्छेदकप्रतीतौ अवच्छेदकत्वस्य स्वरूपतो भानाद् अवच्छेदकतावृत्त्यनवच्छिन्नप्रतियोगितावच्छेदकताकभेदकूटनिवेशनं सम्यगेवेति ।

एकमिति । दर्शिताभावे प्रतियोगितावच्छेदकताभेदो न संभवति; [[2]उक्तयुक्तेः, प्रतियोगित्वाद्यभेदाच्च] । एवं महानसीयवह्न्यभावादावपि । प्रतियोगितायाः प्रतियोगिविषयताया वा भेदो हि अवच्छेदकताभेदनियामकः । परेतुमते च विलक्षणावच्छेदकतानिवेशोऽवच्छेदकताभेदमङ्गीकृत्योक्त इति न तद्विरोधः । न च संबन्धभेदोऽवच्छेदकताभेदनियामकः । प्रकृते संबन्धैक्येनावच्छेदकतैक्यादेकमित्युक्तमिति वाच्यम् । तन्मते महानसीयवह्न्यभावप्रतियोगितावच्छेदकतावद् वह्नित्वह्रदत्वप्रकारकप्रमाविशेष्यत्वोभयरूपेण वह्न्यभावप्रतियोगितावच्छेदकतायाः भेदादव्याप्तेर्वारणाय समानाधिकरणवृत्तिसाध्यतावच्छेदकसंबन्धावच्छिन्नावच्छेदकतानिष्ठतादृशावच्छेदकतात्वेनोभयपर्याप्तावच्छेदकतायाः साध्यतावच्छेदकताघटकसंबन्धावच्छिन्नावच्छेदकतानिरूपकप्रतियोगितासमानाधिकरणवृत्तिप्रतियोगितावच्छेदकतात्वेन वा तादृशा[3]वच्छेदकतापर्याप्तिनिवेशापातात् । इहैव तदवच्छेदकताभेदसिद्धौ सिद्धान्तलक्षणे तत्कथनस्य पुनरुक्तिग्रस्तत्वाच्च । परंतु महानसीयवह्न्यभावप्रतियोगितावच्छेदकतायां संबन्धद्वयावच्छिन्नत्वम् अंशतोऽवच्छिन्नत्वतदभावोभयं च स्वीकार्यमिति । अत्र प्रतियोगिविशेषणस्य प्रतियोगितानवच्छेदकत्वाद् वह्नित्वेन घटाभावादिवारणाय सामानाधिकरण्येनेति सार्थकं कृतम् ।

[1] अनुगतावच्छेदकतात्वेन—अ.
[2] [ ] एतदन्तर्गतपाठः नास्ति—अ.
[3] अवच्छेदकतायाः—अ.

## न्यायरत्नम्

अवच्छेदकत्वमित्यस्यावच्छेदकत्वपदार्थ इति नार्थः, अवच्छेदकत्वपदाभावादतो व्याचष्टे--[1]अनवच्छेदकमित्यत्रेति। अवच्छेदकपदस्य पर्याप्तिसंबन्धेनावच्छेदकताविशिष्टतात्पर्यकत्वात् पर्याप्तिसंबन्धेनावच्छेदकत्वं तात्पर्यविषयतावच्छेदकमिति भावः।

## गादाधरी

(५०) संयोगी सत्त्वादित्यत्रातिव्याप्तिवारणप्रकारः।

ननु संयोगादिसाध्यकसद्धेतौ अव्याप्तिवारणाय तदभावव्यावर्तकव्याप्यवृत्तित्वादिविशेषणोपादाने तत्साध्यकसत्त्वादिरूपव्यभिचारिहेतौ अतिव्याप्तिप्रसंगः, अभावान्तरस्यैव लक्षणघटकत्वादित्याशङ्कां व्यभिचारिहेतुकस्थले संयोगाद्यभावस्य लक्षणघटकत्वप्रदर्शनेन परिहरति--सत्त्ववतीति। व्याप्यवृत्तिरित्युपलक्षणम्; प्रतियोगिव्यधिकरणश्चेत्यपि बोध्यम्।

अयं भावः--व्याप्यवृत्तित्वमत्र नावच्छिन्नवृत्तिकान्यत्वम्, न वा स्वसमानाधिकरणाभावप्रतियोगित्वसामान्याभावः। प्रतियोगिव्यधिकरणत्वं च न प्रतियोग्यधिकरणावृत्तित्वं, किन्तु अनवच्छिन्नवृत्तिकत्वम्। स्वाधिकरणयत्किंचि द्व्यक्तिनिष्ठाभावप्रतियोगित्वं वा व्याप्यवृत्तित्वम्। प्रतियोग्यनधिकरणवृत्तित्वंच प्रतियोगिवैयधिकरण्यं [2]संयोगाद्यभावसाधारणम्। हेत्वधिकरणे

[1] अवच्छेदकमित्यत्रेति क्वचित् पाठः; कृष्णंभट्टीये अवच्छेदमित्यत्रेति प्रतीकधारणात्--स्व.

[2] 'तच्च संयोगाद्यभावसाधारणम्'--अ.

तथात्वस्य विवक्षितत्वात्; सद्धेतुस्थले न तादृशाभावस्य लक्षणघटकता। तत्र गुणादेर्हेत्वनधिकरणत्वात्; सत्त्वादिहेतुकस्थले तु तस्य हेत्वधिकरणतया तत्र व्याप्यवृत्तिः प्रतियोगिव्यधिकरणश्च साध्याभावो लक्षणघटक एवेति।

## गादाधरी

(५१) पारिभाषिकावच्छेदकत्वनिवेशनेन परिष्कारः।

वक्ष्यमाणमिति। 'सिद्धान्तलक्षण' इत्यादिः। तदवच्छेदकत्वम्––प्रतियोगितावच्छेदकत्वम्। इहापि––एतल्लक्षणेऽपि। बोध्यम्––विवक्षणीयम्। अन्यथा लघुरूपसमनियतगुरुधर्मावच्छिन्नसाध्यकव्यभिचारिणि अतिव्याप्तेरिति भावः। तथा च संयोगादिरूपसाध्याभावस्य [1]व्याप्यवृत्तित्वादिरूपविशेषणेन व्यावर्तनेऽपि न क्षतिः। व्याप्यवृत्त्यभावान्तरप्रतियोगितावच्छेदकानतिरिक्तवृत्तित्वस्य संयोगत्वादौ सत्त्वेन तदवच्छिन्नसाध्यकव्यभिचारिण्यतिव्याप्त्यप्रसक्तेरिति यथाश्रुताशयोऽवगम्यते। स च न संगच्छते। सत्तावान जातेरित्यादौ (सत्तात्वस्य) हेतुसमानाधिकरणाभावप्रतियोगितावच्छेदकविशिष्टसत्तत्वाद्यनतिरिक्तवृत्तितायाः सत्तात्वसाधारणतया अव्याप्तेर्वारणाय स्वविशिष्टसंबन्धिनिष्ठाभावप्रतियोगितानवच्छेदकतत्कत्वरूपतदनतिरिक्त - वृत्तित्वस्यैव विवक्षणीयतया तद्घटकाभावे व्याप्यवृत्तित्वनिवेशे प्रयोजनविरहेण संयोगादिसाध्यकसद्धेतौ हेतुसमानाधिकरणाभावप्रतियोगितावच्छेदकसंयोगत्वादेः निरुक्तानतिरिक्तवृत्तित्वस्य

[1] व्याप्यवृत्तित्वमिहावच्छिन्नवृत्तिकान्यत्वम्––रा.

संयोगत्वादिसाधारण्यविरहेणाव्याप्त्यनवकाशेन हेतुसमानाधिकरणाभावे व्याप्यवृत्तित्वनिवेशनवैयर्थ्ययात् । न च स्वविशिष्टसंबन्धिनिष्ठाभावे व्याप्यवृत्तित्वविशेषणादाने संयोगेन द्रव्यस्याव्याप्यवृत्तितापक्षे संयोगेन साध्यतायां हेतुसमानाधिकरणसाध्यतावच्छेदकसंबन्धावच्छिन्नाभावप्रतियोगितावच्छेदकं यद्विशिष्टसंबन्धिनिष्ठाभावीयसाध्यतावच्छेदकसंबन्धावच्छिन्नप्रतियोगितानवच्छेदकं तादृशधर्माप्रसिद्धिः तादृशाभावप्रतियोगितावच्छेदकीभूतसकलधर्मावच्छिन्नानामेव संयोगेनाभावानां केवलान्वयित्वादिति स्वविशिष्टसंबन्धिनिष्ठाभावे व्याप्यवृत्तित्वविशेषणस्य आवश्यकतेति वाच्यम् । संयोगाद्यभावव्यावर्तकस्यावच्छिन्नवृत्तिकान्यत्वरूपव्याप्यवृत्तित्वस्य निवेशने संयोगेन साध्यतायां हेतुसमानाधिकरणसाध्यतावच्छेवकसंबन्धावच्छिन्नाभावो गुणादीनामेव व्याप्यवृत्तिः, न तु द्रव्यस्येति तादृशाभावप्रतियोगितावच्छेदकं यद्विशिष्टसंबन्धिनिष्ठतादृशाभावप्रतियोगितानवच्छेदकं तादृशधर्माप्रसिद्धितादवस्थ्यात्, प्रतियोगितायाः साध्यतावच्छेदकसंबन्धावच्छिन्नत्वं परित्यज्यैकसंबन्धावच्छिन्नत्वस्य विशेषणताविशेषावच्छिन्नत्वस्य वा विशेषणत्वपक्षस्यैवावलम्बनीयतया व्याप्यवृत्तित्वविशेषणवैयर्थ्यस्य दुरुद्धरत्वात् । तस्मात् वक्ष्यमाणं [1]वेति ग्रन्थस्याभावे व्याप्यवृत्तित्वविशेषणं न देयमेव । तददानेऽपि संयोगत्वादौ द्रव्यत्वसमानाधिकरणाभावप्रतियोगित्वीयपारिभाषिकावच्छेदकत्वविरहेणाव्याप्त्यप्रसक्तेरित्याशयः[2] ।

[1] चेति—अ.

[2] वस्तुतस्तु हेतुसमानाधिकरणव्याप्यवृत्त्यभावप्रतियोगितायाः सामानाधिकरण्येनावच्छेदकं स्वावच्छिन्नासंबन्धि यद्धर्मावच्छिन्नवन्निष्ठाभावप्रतियोगितावच्छदकभिन्न-

**तत्र च पारिभाषिकावच्छेदकत्वशरीरनिविष्टस्वविशिष्टसंबन्धिनिष्ठाभावे व्याप्यवृत्तित्वविशेषणमावश्यकम्, अन्यथा तुल्ययुक्त्या सत्तादिहेतुकेऽपि [1]संयोगत्वादौ[2] पारिभाषिकावच्छेदकत्वानिर्वाहादिति, हेतुमन्निष्ठाभावेऽपि तद्विशेषणमावश्यकम्, अन्यथा अव्याप्तेरित्याशङ्कां सत्तादिहेतुकस्थले गुणत्वावच्छिन्नाभावप्रतियोगितायाः पारिभाषिकावच्छेदकत्वं संयोगत्वादौप्रदर्श्य**

त्वे सति स्वावच्छिन्नभिन्नावृत्ति यद्धर्मकं तत्त्वम्, प्रथमस्वपदं भेदप्रतियोगिपरं द्वितीयस्वपदं सामानाधिकरण्येना वच्छेदकपरं व्यधिकरणधर्मावच्छिन्नाभावमादायाप्रसिद्धिवारणाय स्वावच्छिन्नासंबन्धीति; अत एव व्याप्यवृत्तेरित्यस्यापि न वैयर्थ्यम्; 'वह्निमान् धूमाद्' इत्यादौ वह्निजलोभयत्वस्य तादृशसामानाधिकरण्येनानवच्छेदकस्य स्वावच्छिन्नसंबन्धिनोऽप्रसिद्धा स्वपदेन तादृशोभयत्वस्योपादातुमशक्यतया स्वावच्छिन्नासंबन्धिवह्नित्वावच्छिन्नवह्निनिष्ठाभावप्रतियोगितावच्छेदकभिन्नत्वाद् अव्याप्तिवारणाय विशेष्यदलं, विशिष्टसत्तात्ववारणाय विशेषणदलम् । अत एव प्रथमलक्षणे इन्धनत्वेन वह्न्यभावमादाय वह्नित्वस्य पारिभाषिकावच्छेदकतापत्तिरपि निरस्ता, इन्धनत्वस्य स्वावच्छिन्नभिन्नावृत्तिवह्नित्वकत्वाभावाद् धूमाभावस्य व्याप्यवृत्तित्वविरहेऽपि अयोगोलकभेदधूमान्यतराभावमादाय धूमत्वस्य पारिभाषिकावच्छेदकावच्छेदकत्वं प्रतियोगितायां तयोः एकसंबन्धावच्छिन्नत्वानिवेशात्; वस्तुतस्तु व्यधिकरणधर्मावच्छिन्नाभावमादायाप्रसिद्धिः पारिभाषिकावच्छेदकत्वशरीरनिष्ठावच्छेदकतायां सामानाधिकरण्यप्रत्यासत्त्यवच्छिन्नत्वं निवेश्य वारणीया; अतो व्याप्यवृत्तित्वं न निवेशनीयम्, स्वावच्छिन्नासंबन्धित्वरूपविशेषणानुपादानादेव विशेष्यद्रलमपि नोपादेयं, वह्निजलोभयत्वस्य वह्निमन्निष्ठाभावप्रतियोगितावच्छेदकत्वेन वह्निजलोभयाभावमादाय दोषाप्रसक्तेः । इन्धनत्वेन वह्न्यभावमादाय दोषस्तु स्वविशिष्टेत्यत्र स्वपदार्थे स्वसामानाधिकरण्यं देयम् । अत्र स्वपदं घटकावच्छेदकधर्मपरमिति रीत्या । यदि वह्नित्वेन वह्निघटोभयाभावप्रतियोगितावच्छेदकत्वम् उभयत्वान्तर्भावेन पर्याप्तं तदा पर्याप्तिनिवेशादेव तादृशाभावमादाय दोषो वारणीयः । अन्यथा तदर्थमपि विशेषणदानमिति ध्येयम् । अधिकपाठः—अ.

[1] कपिसंयोगत्वादौ—अ.

[2] पारिभाषिकत्वानिर्वाहादिति—अ.

**वारयति--भवति चेति। गुणत्वाद्यवच्छिन्नाभावानां व्याप्यवृत्तित्वाभिधानं तु गुणत्वादीनां संयोगत्वविशिष्टसंबन्धिनिष्ठाभावप्रतियोगितानवच्छेदकत्वसूचनाय। जन्यद्रव्येऽपि उत्पत्तिकालावच्छेदेन गुणत्वावच्छिन्नाभावस्य नवीनैः उपगमात् तन्मते गुणत्वस्य संयोगत्वविशिष्टसंबन्धिनिष्ठाभावीयप्रतियोगितानवच्छेदकत्वं न संभवतीति गुणावृत्तित्वानुधावनम्। संयोगी गुणान्यत्वे सति सत्त्वाद् इत्यादौ गुणावृत्तित्वं न विशिष्टहेतुसमानाधिकरणाभावप्रतियोगितावच्छेदकम्, अतः संयोगसाध्यकव्यभिचारिमात्रे यादृशप्रतियोगितावच्छेदकमुपादाय संयोगत्वस्य पारिभाषिकावच्छेदकत्वं संभवति तादृशं धर्ममाह--द्रव्यमात्रसमवेतत्वेति।**

## कृष्णंभट्टीयम्

स्वविशिष्टेति। हेतुसमानाधिकरणाभावप्रतियोगितायाः स्वविशिष्टसंवन्धिनिष्ठाभावप्रतियोगितायाश्च सामानाधिकरण्येनावच्छेदकत्वं निवेश्यम्। तेन वह्नित्वेन घटाद्यभावप्रतियोगितावच्छेदकस्य स्वविशिष्टसंवन्धिनिष्ठाभावप्रतियोगितानवच्छेदकत्वेऽपि नासंभवः। न वा घटकावच्छेदकरूपेण व्यधिकरणधर्मावच्छिन्नाभावमादाय पारिभाषिकावच्छेदकाप्रसिद्धिः।

अथ साध्याभावघटितलक्षणस्य नायं निष्कर्षः। साध्याभावपदवैयर्थ्यात्। किन्तु हेतुसमानाधिकरणसाध्याभावप्रतियोगितावच्छेदकं यद्धर्मविशिष्टसंवन्धिनिष्ठाभावप्रतियोगितानवच्छेदकमित्येव। तत्र च इन्धनत्वेन वह्न्यभावमादायाव्याप्तिरिति चेत्, न, साध्याभावप्रतियोगितावच्छेदकस्य स्वसमानाधिकरणत्वेन विशेषणीयत्वात्। स्वं--पारिभाषिकावच्छेदकत्वेनाभिमतम्। वह्नित्वेन वह्नीन्धनोभयाभावमादाय दोषस्तु प्रतियोगि-

विशेषणेन्धनत्वेऽपि प्रतियोगितावच्छेदकतासत्त्वेन वारणीयः । अन्यथा साध्याभावप्रतियोगितायां स्वपर्याप्त्यधिकरणपर्याप्तत्वमपि निवेश्यम् । स्वं––पारिभाषिकावच्छेदकम् । [1]तादृशविलक्षणलाभायैव साध्याभावपदम् । वह्नित्वेन घटाभावमादायाव्याप्त्यभावात् । वह्नित्वेन तद्वह्नीन्धनान्यतराभाववारणाय वा साध्यमात्रप्रतियोगिकाभावार्थकं साध्याभावपदम् । यद्वा स्वपर्याप्तिसजातीयपर्याप्तिप्रतियोगित्वं प्रतियोगिताविशेषणमिति वह्नित्वेन घटाभाववारणाय साध्यपदम् । एकत्वावच्छिन्नपर्याप्तित्वैकत्वानवच्छिन्नपर्याप्तित्वान्यतररूपेण न साजात्यं वह्निधूमोभयादिसाध्यके वह्निधूमोभयत्वेन वह्निधूमेन्धनत्रयाभाववारणात् । किन्तु एकत्वद्वित्वाद्यवच्छिन्नपर्याप्तित्वान्यतमरूपेणैव । एवं च वह्नित्वेन तद्वह्नीन्धनाद्यन्तराभावासत्त्वेऽपि न क्षतिः । साध्यमात्रप्रतियोगिकत्वं च नावश्यकमेवेति ।

आशय इति । वस्तुतस्तु––एकसंबन्धावच्छिन्नत्वस्य विशेषणताविशेषावच्छिन्नत्वस्य वा निवेशेऽपि वह्निमान् धूमादित्यादौ सर्वस्यापि हेतुसमानाधिकरणाभावप्रतियोगितावच्छेदकस्य यद्विशिष्टसंबन्धिनिष्ठव्यधिकरणधर्मावच्छिन्नाभावीयप्रतियोगितावच्छेदकतया पारिभाषिकावच्छेदकाप्रसिद्धिरतो हेतुसमानाधिकरणव्याप्यवृत्त्यभावप्रतियोगितायाः सामानाधिकरण्येन अवच्छेदकं स्वावच्छिन्नसंबन्धियद्धर्मावच्छिन्नवन्निष्ठाभावप्रतियोगितावच्छेदक[2]भिन्नत्वे सति स्वावच्छिन्नभिन्नावृत्तितद्धर्मकं तत्त्वम् । प्रथमं स्वपदं भेदप्रतियोग्यवच्छेदकपरम्; द्वितीयं[3] स्वपदं सामानाधिकरण्येनावच्छेदकपरम् । व्यधिकरणधर्मावच्छिन्नाभावमादायाप्रसिद्धिवारणाय स्वावच्छिन्नासंबन्धीति । अत एव व्याप्यवृत्तित्वस्यापि न वैयर्थ्यम् । विशिष्टसत्तात्ववारणाय विशेषणदलम् । वह्निमान् धूमादित्यादौ वह्निजलोभयत्वस्य तादृशसामानाधिकरण्येनावच्छेदकस्य स्वावच्छिन्नसंबन्धिनो-

[1] ईदृश––अ.

[2] भिन्नत्वे सतीति पाठस्थाने भिन्नत्वेनेति पाठः––अ.

[3] द्वितीयस्वपदमिति––अ.

ऽप्रसिद्ध्या स्वपदेनोपादातुमशक्यतया स्वावच्छिन्नासंबन्धिवह्नित्वावच्छिन्नवह्निनिष्ठाभावप्रतियोगितावच्छेदकान्यत्वादव्याप्तिरतो विशेष्यदलम् । अत एव प्रथमलक्षणे इन्धनत्वेन वह्न्यभावमादाय न वह्नित्वस्य पारिभाषिकावच्छेदकत्वापत्तिः । इन्धनत्वस्य स्वावच्छिन्नभिन्नावृत्तिवह्नित्वकत्वाभावात् । धूमाभावस्य व्याप्यवृत्तित्वविरहेऽपि अयोगोलकभेदधूमान्यतराभावमादाय धूमत्वस्य पारिभाषिकावच्छेदकत्वं, प्रतियोगितयोरेकसंबन्धावच्छिन्नत्वस्यानिवेशात् । आद्ययोरयोगोलकावृत्त्यभावमादाय वा ।

वस्तुतस्तु—स्वविशिष्टेत्यत्र स्वपदार्थे स्वसामानाधिकरण्यं देयम्; स्वपदं घटकावच्छेदकपरम् । तेनेन्धनत्वेन वह्न्यभावमादाय न दोषः । वह्नित्वेन वह्निघटोभयाभावप्रतियोगितावच्छेदकताया उभयत्वान्तर्भावेन पर्याप्तत्वमते पर्याप्तिनिवेशादेव न दोषः । अन्यथा प्रतियोगितायां स्वावच्छिन्नभिन्नावृत्तित्वं प्रथमे साध्यमात्रवृत्तित्वमेव वा निवेश्यम् । स्वविशिष्टत्वमग्रिमरीत्या निवेश्यम् । संबन्धित्वं साध्यतावच्छेदकसंबन्धेनेति नासंभव इति यथाश्रुताशयनिर्वाहप्रकारः ।

अत्र च हेतुमन्निष्ठभेदप्रतियोगितावच्छेदकतायाः सामानाधिकरण्येनानवच्छेदकं यत्साध्यतावच्छेदकमिति क्रमेण निष्कर्षसंभवात् शेषवैयर्थ्यम् । तथा सति व्यधिकरणधर्मावच्छिन्नाभावस्य लक्षणाघटकत्वात् प्रतियोग्यवृत्तीति ग्रन्थावतारानुपपत्तिः । न च तद्ग्रन्थस्य प्रतियोगितावच्छेदकावृत्तिधर्मो न तत्त्वावच्छेदक इत्यस्योपलक्षणताया आवश्यकत्वात् न दोषः । एवमपि समवायित्वेन वाच्यत्वाभावस्य मणिकारैरङ्गीकारापत्तेः । एवं हेतुसमानाधिकरणाभावप्रतियोगितावच्छेदकत्वस्य व्यभिचारपदार्थत्वव्यवस्थापनं व्यधिकरणधर्मावच्छिन्नाभावस्फूर्त्ताविव साध्याभावादिघटितलक्षणं च तदस्फूर्तावपि तद्घटितद्वितीयस्वलक्षणसंभवात् । एवं व्यधिकरणधर्मावच्छिन्नाभावे निराकृते स्वलक्षणस्यैवासामञ्जस्यं । चक्रवर्त्तिनां तु विशेषणवैयर्थ्यमात्रमिति अस्वरसबीजम् ।

## न्यायरत्नम्

स्वविशिष्टसंबन्धीति। अत्र हेतुसमानाधिकरणाभावीयप्रतियोगितायाः स्वविशिष्टसंबन्धिनिष्ठाभावीयप्रतियोगितायाश्च सामानाधिकरण्येनावच्छेदकत्वं निवेश्यम्। तेन स्वविशिष्टसंबन्धिनिष्ठाभावप्रतियोगितानवच्छेदकवह्नित्वादेः हेतुसमानाधिकरणवह्नित्वेन घटाभावप्रतियोगितावच्छेदकत्वेऽपि नाव्याप्तिः। न वा अवच्छेदकतयाभिमतस्य स्वविशिष्टसंबन्धिनिष्ठव्याधिकरणधर्मावच्छिन्नाभावप्रतियोगितावच्छेदकत्वेऽपि पारिभाषिकावच्छेदकाप्रसिद्धिः। एवं सति वह्नित्वेन घटाभावमादाय प्रथमलक्षणे साध्याभावपदसार्थक्यासंभवेऽपि वह्नित्वेन वह्निघटान्यतराभावमादायाव्याप्तिवारणाय साध्यतावच्छेदकव्याप्यप्रतियोगिताकाभावपरतत्पदसार्थक्यमवसेयमिति दिक्।

इति चतुर्दशलक्षण्यां चक्रवर्तिलक्षणम्

---

## प्रगल्भलक्षणम्

### दीधितिः

साध्यतावच्छेदकविशिष्टसाध्यसामानाधिकरण्यावच्छेदक-स्वसमानाधिकरणसाध्याभावत्वकत्वं, यत्समानाधिकरणसाध्याभावप्रमायां साध्यवत्ताज्ञानप्रतिबन्धकत्वं नास्ति तत्त्वं वा, व्याप्तिरिति तु न युक्तं सर्वत्र साध्याभावपदवैयर्थ्यात् ।

### गादाधरी

(५२) प्रथमलक्षणम् ।

**प्रगल्भस्य लक्षणद्वयम् एकदोषेण दूषयितुमुपन्यस्यति—साध्यतावच्छेदकविशिष्टेत्यादि । विशिष्टाभावो विशेष्यविशेषणसंबन्धाभावरूपः, उभयाभावस्तु परंपरासंबन्धेन द्वित्वाभाव इति मतेनेदं लक्षणम्, । [1]अन्यथा व्यधिकरणधर्मावच्छिन्नाभावं विनापि[2] लक्षणसमन्वयसंभवे प्रतियोग्यवृत्तिश्चेति ग्रन्थानुत्थितिरिति[3] बोध्यम् ।**

[1] एवमपि वह्निमान् धूमादित्यादौ तत्तद्व्यक्तित्वावच्छिन्नाभावमादाय लक्षणसङ्गमनेऽपि द्रव्यत्वादिसाध्यकसद्धेतौ व्यधिकरणधर्मावच्छिन्नाभावस्यैव लक्षणघटकत्वं बोध्यम्—रा.

[2] विनापीति । विशिष्टाभावमुभयाभावं चादायेति शेषः ।

[3] अत्र कल्पे विशिष्टसत्ताभावमादाय दोषप्रदर्शनं संदर्भविरुद्धम्—रा.

अथवा साध्याभावपदं साध्यतावच्छेदकसंबन्धावच्छिन्न-साध्यतावच्छेदकावच्छिन्नव्यापकतावच्छेदकरूपावच्छिन्नप्रतियो-गिताकाभावपरमिति ।

अवच्छेदकत्वमिहानतिरिक्तवृत्तित्वं, न तु स्वरूपसंबन्ध-विशेषः । [1]यथोक्तधर्मयोः तादृशावच्छेद्यावच्छेदकभावे [2]माना-भावात् । स्वपदं हेतुतावच्छेदकावच्छिन्नपरम् । तथा च साध्यता-वच्छेदकविशिष्टसाध्यसामानाधिकरण्यानतिरिक्तवृत्ति यद्धर्म-विशिष्टसमानाधिकरणसाध्याभावत्वं तद्धर्मवत्त्वं व्याप्तिरिति समुदितार्थः । सद्धेतौ साध्यसमानाधिकरणस्यसाध्यतावच्छेदका-वच्छिन्नसाध्याभावस्य हेत्वसमानाधिकरणत्वनियमात् तादृश-साध्याभावत्वं साध्यसामानाधिकरण्यानतिरिक्तवृत्तीति लक्षण-समन्वयः । व्यभिचारिणि तादृशसाध्याभावस्यापि हेतुसमानाधि-करणतया तदतिरिक्तवृत्त्येव तदिति ना[3]तिव्याप्तिः[4] ।

[1] यथोक्तधर्मयेरिति । हेतुसमानाधिकरणसाध्याभावत्वसाध्यसामानाधिकरण्य-योरित्यर्थः ।

[2] गदाधरमते वृत्तितायाः किञ्चिद्धर्मावच्छिन्नत्वादितिभावः, यद्वा धूमवान् वह्नेः इत्यादौ अतिव्याप्तिः व्यधिकरणधर्मावच्छिन्नसाध्याभावत्वे स्वरूपसंबन्धरूपा-वच्छेदकत्वसत्वात्, अनतिरिक्तवृत्तिस्वरूपसंबन्धरूपावच्छेदकत्वे मानाभावादिति भावः—रा.

[3] न लक्षणसमन्वयः—अ.

[4] अत्र प्रथमकल्पे गुणनिरूपितस्वरूपसंबन्धावच्छिन्नवृत्तित्वाभावावच्छिन्नस्व-रूपसंबन्धावच्छिन्नप्रतियोगिताकाभावो लक्षणघटकः । प्रतियोगितायां साध्यतावच्छे-दकसंबन्धावच्छिन्नत्वनिवेशे संयोगेन द्रव्यस्याव्याप्यवृत्तितानये धूमवान् वह्ने-रित्यत्रातिव्याप्त्यापत्त्या स्वरूपसंबन्धावच्छिन्नत्वस्यैव निवेश्यत्वात् । तन्निवेशे चायो-गोलकनिरूपितस्वरूपसंबन्धावच्छिन्नवृत्तित्वाभावावच्छिन्नप्रतियोगिताकाभावस्य सा-ध्यसमानाधिकरणत्वेनातिव्याप्तिविरहादिति चिरमालोचनीयम्—रा.

गुणान्यत्वविशिष्टसत्तावान् जातेरित्यादौ अतिव्याप्तेर्वारणाय साध्यतावच्छेदकविशिष्टेति । साध्याधिकरणत्वं साध्यतावच्छेदकसंबन्धेन बोध्यम् । तेन संयोगादिना धूमादेरभावस्य समवायादिना धुमादिमति स्वावयवे वृत्तावपि नातिव्याप्तिः ।

द्रव्यं विशिष्टसत्त्वादित्यादावव्याप्तिवारणाय हेतुतावच्छेकविशिष्टत्वोपादानम् । तद्विशिष्टाधिकरणत्वं हेतुतावच्छेवकसंबन्धेन बोध्यम् । तेन धूमादिसमवायिनिष्ठवह्नित्वाद्यवच्छिन्नवह्न्याद्यभावस्य वह्न्यादिसामानाधिकरण्यविरहेऽपि न [1]क्षतिः ।

साध्यहेतुसामानाधिकरण्यघटकवृत्तिद्वयं [2]दैशिकविशेषणतासंबन्धेन बोध्यम् । तेन [3]द्रव्यं सत्वादित्यादौ दैशिकविशेषणतया हेतुसमानाधिकरणस्य द्रव्यत्वत्वावच्छिन्नद्रव्यत्वाद्यभावस्य कालिकसंबन्धेन साध्यवन्महाकालादि[4]वृत्तित्वेऽपि न क्षतिः ।

यद्यपि हेतुसमानाधिकरणसाध्याभावत्वघटकम् अभावत्वरूपं विशेष्यं व्यतिरेकिसाध्यके साध्यासमानाधिकरणाभावसाधारणमिति[5] विशिष्टसाध्यसामानाधिकरण्यशून्यावृत्तित्वरूपं

[1] अव्याप्तिः––अ.

[2] एकसंबन्धेनेति पाठान्तरम्, युक्तं चैतत्; एकप्रयोजनस्यैव लिखितत्वादिति ––रा. न्यायरत्ने एकसंबन्धेनेति प्रतीकधारणम्––स्व.

[3] एवम् दैशिकविशेषणतया वह्न्याद्यसमानाधिकरणस्य वह्नित्वावच्छिन्नाभावस्य धूमाधिकरणे कालिकादिसंबन्धेन वृत्तावपि इति च बोध्यम्––रा.

[4] एवञ्च कालिकसंबन्धावच्छिन्नप्रतियोगिता आकाशाभावाभावे साध्ये प्रमेयत्वहेतौ नित्यवृत्तित्वावच्छिन्नाभावं नित्यत्वसामान्याभावं वादाय दोषवारणम्––रा.

[5] विशिष्टे विशिष्टसाध्य इत्यादि––अ.

**तदनतिरिक्तवृत्तित्वं दुर्वचम्,[1] तथापि [2]यावन्तः स्वसमानाधिकरणसाध्याभावः विशिष्टसाध्यसमानाधिकरणा इत्यर्थस्य विवक्षणीयत्वान्न दोषः[3] ।**

## कृष्णंभट्टीयम्

मिश्रलक्षण एव साध्याभावस्य दीधितिकारैः द्वितीयरीत्या अभिधानाद् इदानीं साध्यप्रतियोगिकाभाव एव निविष्ट इत्याशयनाह—विशिष्टेति । उभयाभावस्त्विति । वह्निधूमोभयादिसाध्यके घटत्वेन वह्न्याद्यभाव एव लक्षणघटकः । ग्रन्थेति । वह्निमान् धूमादित्यादौ [4]तद्व्यक्तित्वावच्छिन्नाभावमादाय लक्षणसमन्वयेऽपि द्रव्यं पृथिवीत्वादित्यादौ व्यधिकरणधर्मावच्छिन्नाभाव [5]एव गतिः ।

नन्वेवं विशिष्टसत्तावान् जातेरित्यादौ व्यधिकरणधर्मावच्छिन्नाभावमादायातिव्याप्तिः । समानाधिकरणधर्मावच्छिन्नाभावस्य लक्षणाघटकत्वात् । न च विशिष्टसत्तायां गुणावृत्तित्वमङ्गीकृत्य गुणावृत्त्यभाव एव लक्षणघटकः तस्य साध्यासमानाधिकरणतया नातिव्याप्तिरिति वाच्यम् । विशिष्टसत्त्वस्य गुणावृत्तित्वाभावात् । अन्यथा वाच्यत्वादिसाध्यके घटवृत्तित्वविशिष्टवाच्यत्वादेः तुल्यरीत्या पटाद्यवृत्तितया तदवच्छिन्नाभाव-

[1] दुर्वचमिति । विशेष्यवृत्तिधर्मप्रतियोगिकविशिष्टानुयोगिकाभावानङ्गीकारादिति भावः ।

[2] हेतुसमानाधिकरणाभाववन्तस्साध्याभावाः—अ.

[3] अव्याप्यवृत्तिसाध्यके व्यभिचारिण्यतिव्याप्तिः, साध्याभावस्य साध्यवत्यपि वृत्तेः इति न शङ्क्यम्; व्यभिचारनिरूपकाधिकरणं यद्विशेषणताविशेषेण तदवृत्तित्वावच्छिन्नस्य यः तेन संबन्धेनाभावः तस्यापि साध्याभावतया तस्य च साध्यवति अवृत्तेः । अधिकपाठः—अ.

[4] तत्तद्व्यक्तित्वावच्छिन्नेति—अ.

[5] एवकारो नास्ति—अ.

मादाय एतद्रूपादिसाध्यके च साध्यस्य एतत्क्षणवृत्तित्वविशिष्टस्यान्यक्षणावृत्तित्वमङ्गीकृत्य तदवच्छिन्नाभावमादाय विनापि व्यधिकरणधर्मावच्छिन्नाभावं लक्षणसमन्वयादवतारकत्वानुपपत्तेः । यत्तु––साध्यनिरूपितसाध्यतावच्छेदकसंवन्धेन साध्याभावो निवेश्यः । सत्ता च तेन संबन्धेन गुणावृत्तिरित्याशङ्क्य समवायेन कपिसंयोगसाध्यकसत्तायामतिव्याप्तिः तेन संवन्धेन गुणावृत्त्यभावस्यापि साध्यसमानाधिकरणत्वादिति समाधानम् । तदुभयमपि न सत्––विशेषरूपेण संसर्गतानुपगमात् । एतेन शुद्धसाध्यतावच्छेदकसंवन्धावच्छिन्नाभावनिवेशे संयोगनिरूपितसमवायेन संयोगसाध्यकसत्त्वादावतिव्याप्तिरिति प्रत्युक्तम् । न च साध्यतावच्छेदकसंवन्धावच्छिन्नाभावो न निवेश्यः । किन्तु विशेषणतासवन्धावच्छिन्नाभावः । तथा च व्यभिचारस्थलावृत्त्यभावमादाय नातिव्याप्तिरिति वाच्यम् । कालिकसंवन्धेन महाकालभेदस्य साध्यत्वे गगनघटसंयोगादौ स्वरूपसंवन्धेन साध्याभावस्य हेतुसमानाधिकरणतया व्यधिकरणधर्मावच्छिन्नाभावमादायातिव्याप्तेः । ननु साध्यतावच्छेदकसंवन्धविशेषणतासंवन्धान्यतरावच्छिन्नाभावः प्रवेश्यः; तत्र च कालिकसंवन्धेन साध्याभावमादाय न दोषः । न च तस्य महाकालभेदानधिकरणदेशावच्छेदेन साध्यसामानाधिकरण्यं दुर्वारमिति वाच्यम् । एवमपि साध्याधिकरणे निरवच्छिन्नवृत्तित्वस्य वाच्यत्वात् । निरवच्छिन्नत्वाप्रवशेऽपि कालिकसंवन्धावच्छिन्नप्रमेयाद्यभावमादायानतिप्रसङ्गात् । मवम्––घटवृत्तित्वविशिष्टवाच्यत्ववान् मेयत्वादित्यादौ साध्यसामानाधिकरण्यस्य साध्यतावच्छेदकसंबन्धावच्छिन्नाभावस्वरूपसंवन्धावच्छिन्नाभावोभयत्वव्यापकत्वेनातिव्याप्तेः । साध्यवन्निरूपितविशेषणतासंवन्धस्तु न प्रवेश्यः । विशेषरूपेण संसर्गतानुपगमादिति चेत्, न––प्रतियोग्यवृत्तिश्चेति ग्रन्थावतारार्थं साध्यतावच्छेदकसंबन्धेनैवाभावस्य निवेशनीयत्वात् । विशिष्टसत्तादिसाध्यके द्रव्यत्वत्वेन सत्ताद्रव्यत्वान्यतराभाव एवातिव्याप्तिवारकः । एवं द्रव्यत्वत्वेन प्रमेयाभावोऽपि प्रतियोगिताया निखिलप्रमेयवृत्तित्वमते बोध्यः । द्रव्यत्वमात्रवृत्तित्वमते च

नैतल्लक्षणमिति । एवं वाच्यं प्रमेयादित्यादौ तादात्म्येन साध्यतायां घटादिभेदो बोध्यः । तस्य प्रमेयमात्रप्रतियोगिकत्वात् । एवं च स्वरूपसंबन्धेन वाच्यत्वादेः साध्यत्वे घटत्वेन प्रमेयाभावस्यापि यत्किञ्चित्प्रतियोग्यवृत्तिधर्मावच्छिन्नप्रतियोगिताकतया सिद्धान्तिभिः तदनङ्गीकारेण प्रतियोग्यवृत्तीति मूलसङ्गतिः । व्यधिकरणसंबन्धावच्छिन्नवाच्यत्वाद्यभावस्य वाच्यत्वेन प्रमेयाभावतया साध्यतावच्छेदकसंबन्धावच्छिन्नत्वानुपादानमपि साधु सङ्गच्छते । निरवच्छिन्नसाध्यवद्वृत्तित्वपर्यन्तानुपादानेऽपि धूमवान् वह्नेरित्यादौ समवायेन धूमाभावस्य धूमवद्वृत्तित्वेऽपि समवायेनायोगोलकावृत्त्यभावमादायापि अनतिप्रसङ्गात् । यदि चायोगोलकेऽपि कालिकसंबन्धेन धूमोऽस्ति तदापि यदयोगोलके न धूमः तदयोगोलकावृत्त्यभावमादायैवानतिप्रसङ्गात् । एवं च वक्ष्यमाणस्य साध्यतावच्छेदकविशिष्टपदव्यावृत्तिदानस्यापि सङ्गतिरिति ।

मानाभावादिति । घटत्वेन धूमाभावत्वस्यावच्छेदकतया अतिव्याप्तिरित्यर्थः । साध्यसाधनसामानाधिकरण्ययोरभेदेन उपहितानुपहितभेदासंभवेन चेत्यादिर्वा । व्यभिचारिणीति । संयोगी सत्त्वादित्यादौ गुणवृत्त्यभावादिर्बोध्यः ।

तेन धूमादीति । ननु वह्न्याद्यभावस्य संयोगेन द्रव्यस्याव्याप्यवृत्तित्वात् कालिकाव्याप्यवृत्तित्वाद्वा साध्यवद्वृत्तित्वात् नाव्याप्तिः । किन्तु धूमवान् वह्नेरित्यादौ अतिव्याप्तिः । समवायावच्छिन्नायोगोलकावृत्त्यभावादेः साध्यतावच्छेदकसंबन्धानवच्छिन्नत्वात् । द्वितीयरीत्या व्यापकताघटकसंबन्धावच्छिन्नसाध्याभावस्य वा निवेशे तु द्रव्यत्वाभावमादायाव्याप्तिर्भवेदिति चेत्, न, अयमात्मा ज्ञानादित्यादौ अव्याप्तिवारणायैव तदुपादानात् । वस्तुतस्तु––द्वितीयरीत्या साध्याभावनिवेशे प्रयोजनाभावात् साध्यवति निरवच्छिन्नवृत्तित्वनिवेशेनातिव्याप्तिव्युदासात् यथाश्रुतमेव सम्यक् ।

वृत्तिद्वयमिति । सत्तावान् द्रव्यत्वादित्यादौ सत्ताभावस्य कालिकसंवन्धेन हेतुसमानाधिकरणत्वादव्याप्तिरतः प्रथमतस्तन्निवशः । द्रव्यमिति । येनेत्युक्तावयमेव दोषः । येन येनेत्युक्तौ तद्घटकदैशिकविशेषणतामात्रादेव दोषवारणात् शेषवैयर्थ्यम् । एवं च कालिकसंवन्धावच्छिन्नप्रतियोगिताकाकाशाभावाभाववान् मयत्वादित्यादौ [1]नित्यत्वाभावं जन्यावृत्त्यभावं वा आदाय नातिव्याप्तिः । प्रतियोगिमत्ताग्रहविरोधितानियामकसंवन्धेन साध्यसामानाधिकरण्योक्तौ वृत्तिद्वयमित्यस्यासङ्गतेरिति ।

केवलान्वयि[2]न्यभावे साध्यासमानाधिकरणाभावाप्रसिद्धेराह व्यतिरेकीति ।

## गादाधरी

(५३) प्रगल्भद्वितीयलक्षणम् ।

**यत्समानाधिकरणेति यद्रूपविशिष्टसमानाधिकरणेत्यर्थः । तेन द्रव्यं गुणकर्मान्यत्वे सति सत्त्वाद् इत्यादौ सत्तासमानाधिकरणद्रव्यत्वत्वावच्छिन्नद्रव्यत्वाभावप्रमायां साध्यवत्ताज्ञानप्रतिबन्धकत्वेऽपि न क्षतिः ।**

**यद्धर्मावच्छिन्नसामानाधिकरण्यशरीरे च हेतुतावच्छेदकसंबन्धेन यद्धधर्मावच्छिन्नाधिकरणत्वं निवेशनीयम् । तत्प्रयोजनं [3]च स्फुटमेव ।**

**[4]अधिकरणवृत्तित्वं च निरवच्छिन्नं ग्राह्यम् । तेन कपिसंयोगी एतद्वृक्षत्वादित्यादौ हेतुसमानाधिकरणकपिसंयोगाभावादि-**

[1] नित्यत्वाभावं वा आदाय नातिव्याप्तिरित्येव पाठः—अ.

[2] केवलान्वयिनि भावे—अ.

[3] तत्प्रयोजनं स्फुटमेव इति प्रतीकधारणम्—स्व.

[4] स्वाधिकरणवृत्तित्वमिति न्यायरत्ने प्रतीकधारणम् ।

विषयकप्रमाया अव्याप्यवृत्तित्वज्ञानविरहकालिकायाः साध्यवत्ताज्ञानप्रतिबन्धकत्वेऽपि न क्षतिः ।

प्रमायाम्––प्रमासामान्ये । तेन व्यभिचारिणि नातिव्याप्तिः । समानाधिकरणधर्मावच्छिन्नाभावत्वेन व्यधिकरणधर्मावच्छिन्नसाध्याभाववत्ताज्ञानस्यापि साध्यवत्ताज्ञानविरोधित्वात् सद्धेतावपि लक्षणगमनासंभव इत्यतो ज्ञानसामानान्यमुपेक्ष्य प्रमासामान्यनिवेशनम् । प्रमापदं च यावद्भ्रमभिन्नज्ञानपरम्[1] । अत उक्तभ्रमात्मकज्ञानस्या[2]भावत्वांशे प्रमात्वेऽपि न क्षतिः ।

साध्यवत्ताज्ञानपदमपि तत्सामान्यपरम् । अतो व्यधिकरणधर्मावच्छिन्नसाध्याभाववत्ताज्ञानस्य [3]तद्धर्मवत्त्वेन साध्यवत्ताज्ञानविरोधित्वेऽपि न क्षतिः । एवं च साध्यपदं साध्यतावच्छेदकविशिष्टपरम् । ज्ञानं च स्वसमानधर्मितावच्छेदकत्वेन स्वविषयीभूताभावप्रतियोगितावच्छेदकसंबन्धसंसर्गकत्वेन च विशेषणीयम् । अतो धूमत्वाद्यवच्छिन्नसंयोगसंबन्धावच्छिन्नप्रतियोगिताकधूमाद्यभाववत्ताज्ञानस्य साध्यवत्ताज्ञानसामान्यान्तर्गतं द्रव्यत्वादिना धूमादिप्रकारकं भिन्नधर्मावच्छिन्नविशेष्यकधूमत्वावच्छिन्नप्रकारकं समवायादिसंबन्धेन धूमत्वाद्यवच्छिन्नप्रकारकं च ज्ञानं प्रत्यप्रतिबन्धकत्वात्, कामिनीजिज्ञासादेरेव तादृशज्ञानसामान्ये विरोधित्वादतिव्याप्तेर्नावकाशः ।

[1] स्वप्रतियोगिवृत्तित्व-स्वानुयोगिनिष्ठविशेष्यतानिरूपितत्व-स्वावच्छिन्नत्व-एतत्त्रितयसंबन्धेन संबन्धविशिष्टप्रकारतान्यप्रकारतानिरूपकत्वावच्छिन्नभेदवदित्यर्थः; स्वपदं संबन्धपरम्––रा.

[2] अभावत्वाद्यंशे––अ.

[3] इन्धनत्वेन वह्निमत्ताज्ञानम्––रा.

## कृष्णंभट्टीयम्

[1]यत्समानाधिकरणेति । नन्वत्र विशिष्टाभावोभयाभावयोरनङ्गीकार एव वाच्यः; उक्तयुक्तेः । तथा च विशिष्टसत्तादिसाध्यकेऽतिव्याप्तिः । उपदर्शितसाध्याभावप्रमायाः साध्यवत्ताज्ञानसामान्याविरोधित्वादिति चेत्, न । वाधव्यभिचारयोरसिद्धिवारणाय विशिष्टसत्त्वादेः साध्यत्वं नोपेयते, तस्य [2]उपलक्षितसत्त्वादिरूपत्वात्, किन्तु वैशिष्टयस्यैव, इत्युत्तरलक्षणेऽप्यदोषात् । पूर्वलक्षणे च विशिष्टसत्तायाः साध्यत्वेऽपि उपपत्तिसंभवात् तदनुरोधेन साध्यतावच्छेदकविशिष्टनिवे[3]शासङ्गतिविरहादिति ।

निरवच्छिन्नमिति । अत्रेदमवधेयम्––कालिकसंवन्धावच्छिन्नप्रतियोगिताके घटत्वाभावाभावे साध्ये [4]मेयत्वादावतिव्याप्तिः । साध्यसामान्याभावस्य घटान्यदेशावच्छेदेनैव कालिकसंवन्धेन हेत्वधिकरणकालवृत्तितया स्वाधिकरणे निरवच्छिन्नवृत्तिकत्वाभावात् । दैशिकविशेषणतया निरवच्छिन्नवृत्तिकत्वेऽपि, तत्संवन्धावगाहिज्ञानस्याप्रतिवन्धकत्वात् । न च स्वाधिकरणे निरवच्छिन्नवृत्तिर्यः साध्याभावस्तत्प्रमासामान्य इति विवक्षणीयम् । [5]तथा च कालिकसंवन्धेन जन्यविशेष्यकघटत्वाभावप्रमायां विशेषणतया साध्यवत्ताज्ञान[6]प्रतिवन्धकत्वमावश्यकम् । घटत्वाभावस्य दैशिकविशेषणतया निरवच्छिन्नहेत्वधिकरणवृत्तित्वाद् विवक्षितहेतुसामानाधिकरण्यमिति वाच्यम् । एवं सति तत्साध्यकगगनत्वादौ उक्तरीत्या अव्याप्तिप्रसङ्गात् । एतेन येन संवन्धेन स्वप्रकारकं ज्ञानं प्रतियोगितावच्छेदकविशिष्टसाध्य-

1 यत्समानाधिकरणेतीति––अ.

2 उपलक्षितसत्तादिरूपत्वात्––अ.

3 निवेशसङ्गतेः––अ.

4 मेयत्वादौ प्रलये व्यभिचारिणि अतिव्याप्तिः––अ.

5 तथा चेति नास्ति––अ.

6 प्रतिबन्धकत्वान्नातिव्याप्तिः––अ.

वत्ताज्ञानविरोधि तेन संबन्धेन स्वप्रकारकप्रमानिवेशेऽपि न निस्तारः। प्रकारतावच्छेदकसंबन्धनिवेशवैयर्थ्याच्च।

अत्रेदं विभावनीयम्—विशेषणतया निरवच्छिन्नवृत्तित्वविशिष्टसाध्याभावस्य स्वप्रतियोगितावच्छेदकविशिष्टसाध्यवत्ताग्रहविरोधितानियामकसंबन्धेन हेतुमद्वृत्तित्वं प्रकारत्वं च निवेश्यमित्यदोषः। येन येन संबन्धेन निरवच्छिन्नवृत्तित्वं स्वस्य तेन तेन संबन्धेन तत्प्रमानिवेशे तु [1]तादृशघटत्वाभावाभावसाध्यके दैशिकविशेषणतामात्रोपग्रहाद् अतिव्याप्तिः। परं तु तादृशघटत्वाभावाभावरूपसाध्यस्य घटत्वाभावरूपप्रतियोग्यनधिकरणघटावच्छेदेन जन्ये सत्त्वेन घटासमानकालीनचरमक्रियाप्रलयाद्यन्तर्भाविनैव व्याभिचारितया तदन्तर्भाविनैव साध्याभावस्य कालिकसंबन्धेन हेत्वधिकरणे निरवच्छिन्नवृत्तित्वसत्त्वात् कथमतिव्याप्तिः। न च तत्र स्वाधिकरणदेशस्यावच्छेदकत्वं युज्यते। एकत्र वृत्तावेवावच्छेदकापेक्षणात्। न च कालिकसंबन्धावच्छिन्नप्रतियोगिताके गगनत्वाभावाभावे साध्ये मेयत्वादावतिव्याप्तिरिति वाच्यम्। गगनावच्छेदेन प्रलयेऽपि साध्यसत्त्वेन तस्य सद्धेतुत्वात्। नन्वत्र निरवच्छिन्नविशेषणतासंबन्धेन संयोगाभावस्य साध्यत्वे वाच्यत्वादावतिव्याप्तिः। तत्र साध्याभावस्य संयोगरूपस्य निरवच्छिन्नहेतुमद्वृत्तित्वाभावेन व्यधिकरणधर्मावच्छिन्नाभावसंभवादिति चेत्, न। विशेषरूपेण संबन्धत्वाङ्गीकारे तस्य संयोगवत्त्वप्रकारकप्रमाविशेष्यत्वादिरूपत्वेनादोषात्। पूर्वलक्षणे निरवच्छिन्नविशेषणतासंबन्धावच्छिन्नद्रव्यवृत्तित्वाभावावच्छिन्नाभावसंभवाच्च।

यावदिति। स्वव्यधिकरणप्रकारावच्छिन्ना या या विषयता तत्तदनिरूपकत्वमर्थः। अनुगतभ्रमत्वस्य कथंचित् सुवचत्वेऽपि प्रमापदस्य यथार्थपदपर्यायतया याथार्थ्यनिवेश आदृतः। यथाश्रुत एव वा अर्थः।

[1] तादृशेति कालिकसंबन्धावच्छिन्नप्रतियोगिताकेत्यर्थः—स्व.

[1]प्राञ्चस्तु प्रमापदं भ्रमसामान्यभिन्नपरम् । तेनाव्याप्यवृत्त्यभावस्य व्याप्यवृत्तिताभ्रमदशायां व्यधिकरणधर्मावच्छिन्नसाध्याभावे समानाधिकरणधर्मावच्छिन्नत्वभ्रमदशायां च साध्यवत्ताज्ञानविरोधित्वेऽपि न क्षतिः । साध्यवत्ताज्ञानविरोधित्वं च हेत्वधिकरणमात्रवृत्ति ।

यद्धर्मितावच्छेदकं तदवच्छेदेन यत्साध्यवत्ताज्ञानं तद्विरोधित्वम् । तेन वह्निमान् धूमादित्यादौ उत्पत्तिकालावच्छेदेन धूमसमानाधिकरणसाध्याभावस्य ह्रदादौ प्रमायाः साध्यवत्ताज्ञानविरोधित्वेऽपि न क्षतिरित्याहुः । तेषामयमाशयः––व्याप्यवृत्तित्वविशिष्टसंयोगाभाववत्ताज्ञानत्वेनैव संयोगवत्ताज्ञानप्रतिबन्धकत्वमिति ।

तत्सामान्यपरमिति । यत्किंचित्साध्यवत्ताज्ञानोक्तौ तु अतिव्याप्तिः । साध्यपदमित्यादि । ननु धूमत्वेन धूमो नास्तीत्यादिप्रत्यये द्रव्यत्वेन धूमवानिति ज्ञानं जायते; धूमवानिति ज्ञानं तु न जायते; इत्यनुभवाद् धूमत्वावच्छिन्नधूमप्रतियोगिताकत्वेनाभाववत्ताज्ञानस्य धूमत्वान्यप्रतियोगिविशेषणतानापन्नधर्मानवच्छिन्नधूमत्वावच्छिन्नप्रकारताशाल्यनाहार्यबुद्धित्वमेव प्रतिबध्यतावच्छेदकमुपेयम् । द्रव्यत्वेन धूमो नास्तीति द्रव्यत्वावच्छिन्नधूमप्रतियोगिताकत्वेनाभाववत्ताज्ञानस्य द्रव्यत्वावच्छिन्नधूमप्रकारताशालिबुद्धित्वमिति धूमवान् वह्नेरित्यादौ अतिव्याप्तिः । घटत्वेन द्रव्यत्वेन वा धूमवानिति ज्ञानस्य सामान्यान्तर्गतस्य धूमो नास्तीति निश्चयाप्रतिबध्यत्वात् कामिनीजिज्ञासाप्रतिबध्यताया एवोपादानात् । उक्तज्ञाने घटत्वद्रव्यत्वादेः धूमांशे प्रकारत्वमावश्यकम् । अन्यथा समूहालम्बनत्वापत्तेः । अत एव घटत्वविशिष्टवह्निमानिति चक्रवर्त्तिलक्षणे स्वयमप्युक्तम् । मैवम्––घटत्वादिविशिष्टधूमवत्ताज्ञानस्य धूमो नास्तीत्यादिबुद्धिप्रतिबध्यतायाः सकलमतसिद्धत्वाद् उक्तानुभवासङ्गतेः ।

[1] प्राञ्चः इत्येव––आ.

अत्र साध्यतावच्छेदकेतरानवच्छिन्नप्रकारताकत्वं विवक्षितम् । अथ वह्नित्वादेः संयोगेनावृत्तितया वह्नित्वेन संयोगेन वह्न्यभावज्ञानप्रतिवध्यताया वह्नित्वेन वह्निमानिति ज्ञानसाधारणतया अव्याप्तिरिति चेत्, साध्यतावच्छेदकनिष्टसाध्यतावच्छेदकताघटकसंबन्धावच्छिन्नावच्छेदकताभिन्नावच्छेदकत्वानिरूपकत्वस्य वाच्यत्वात् । न चैवं सामान्यपदं व्यर्थम् । इष्टत्वात् । परंतु अवच्छेदकधर्मदर्शनव्यावृत्तं प्रतिवन्धकत्वं वक्ष्यमाणरीत्या दोषवारणाय निवेश्यमिति स्वरूपसंवन्धरूपावच्छेद्यतानिवेशप्रकारः ।

ननु सधर्मि[1]तावच्छेदकयद्धर्मावच्छिन्नसमानाधिकरणसाध्याभावप्रमासामान्यं स्वसमान[2]धर्मितावच्छेदकविशिष्टसाध्यवत्ताज्ञानसामान्यविरोधि तद्धर्मवत्त्वमर्थः । निर्धर्मितावच्छेदककसाध्याभावप्रमायाः स्वसमानधर्मितावच्छेदककसाध्यवत्ताज्ञानाप्रसिद्धिरतः [3]सधर्मितावच्छेदकेति । अत्र किं तादृशप्रमासामान्यं स्वपदार्थः; किं तत्तत्प्रमा । आद्ये एकस्यामपि प्रतिवध्यतायां साध्यतावच्छेदक[4]विशिष्टज्ञानसामान्यवृत्तित्वाभावात् कामिनीजिज्ञासाप्रतिवध्यतामादयातिव्याप्तिः । अन्त्ये[5] पर्वतो घटत्वेन वह्न्यभाववान् ह्रदश्च वह्न्यभाववानिति प्रमायाः ह्रदत्वावच्छिन्नविशेष्यकसाध्यवत्ताज्ञानसामान्यविरोधित्वाद् अव्याप्तिः । अयोगोलकं ह्रदश्च धूमाभाववदिति प्रमासङ्ग्रहाय यत्किंचिद्विशेष्यतावच्छेदकनिवेशात् ।

मैवम्—स्वविताशेष्यवच्छेदकावच्छिन्नविशेष्यतानिरूपितस्वविषयीभूताभावप्रतियोगितावच्छेदकसंवन्धावच्छिन्नसाध्यतावच्छेदकावच्छिन्नानाहार्यप्रकारत्वव्यापकतावच्छेदकीभूतयत्किंचिद्धर्माश्रयप्रतिवध्यतानिरूपितप्रतिवन्धकत्वाभावस्य विवक्षितत्वात् । स्वं—प्रमासामान्यम् ।

[1] सधर्मितावच्छेदकक—अ.

[2] धर्मितावच्छेदककसाध्यतावच्छेदकविशिष्टेत्यादि—अ.

[3] सधर्मितावच्छेदककेति—अ.

[4] विशिष्टसाध्यवत्ताज्ञान—अ.

[5] तादृशप्रतिवन्धकत्वान्यतमाभावनिवेशो जातः—अ.

यद्वा स्वीयतादृशसाध्याभावप्रकारतानिरूपितविशेष्यतावच्छेदकी-भूतयत्किंचिद्धर्मावच्छिन्नविशिष्यतेत्यादिक्रमेण तादृशप्रकारत्वव्यापकप्रति-बध्यतानिरूपित[1]प्रतिबन्धकत्वाभाववत्त्वे तादृशप्रमासामान्यवृत्तित्वस्योक्तेः न दोषः। स्वं—तत्तत्प्रमा। घटत्वेन वह्निमानिति ज्ञानसाधारणप्रतिबध्यत्वस्य व्यापकतावच्छेदकत्वाद् अव्याप्तिरिति प्रथमे यत्किंचिद्धर्मनिवेशः। स च साध्यतावच्छेदकमात्रावच्छिन्नप्रकारत्वावच्छिन्नप्रतिबध्यतात्वम्। द्वितीये भेदगर्भे[2]व्यापकतामात्रं, न तु तदवच्छेदकत्वमिति, न यत्किंचिद्धर्मनिवेशः।

वस्तुतस्तु—यत्समानाधिकरणसाध्याभावनिष्ठप्रमानिरूपितप्रकार-तासामान्ये स्वनिरूपितविशेष्यतावच्छेदकावच्छिन्नविशेष्यतानिरूपितस्वा-श्रयीभूताभावप्रतियोगितावच्छेदकसंबन्धावच्छिन्नसाध्यतावच्छेदकावच्छि-न्नप्रकारताशाल्यनाहार्यज्ञानत्वव्यापकप्रतिबध्यतानिरूपितप्रतिबन्धकता-वच्छेदकत्वाभावः तद्वत्त्वमर्थः। स्वं—तत्तत्प्रकारता। व्यापकत्वं च भेदघटितम्। तेन ह्रदो घटत्वेन वह्न्यभाववान् वह्निसामान्याभाववांश्चेति ज्ञानमादाय न दोषः।

ननु व्यधिकरणधर्मावच्छिन्नाभाववान् समानाधिकरणधर्मावच्छिन्ना-भाववान् अयं च व्यधिकरणधर्मावच्छिन्नाभाववानित्यादि ज्ञानस्य साध्य-वत्ताज्ञानसामान्यविरोधित्वादव्याप्तिरिति चेत्, न। अवच्छेदकग्रहाद्युत्तर-तद्वत्ताज्ञानम् अवच्छेदकधर्मदर्शनादेः ज्ञानवैशिष्ट्यानवच्छिन्नप्रतिबन्धकत्व-मिति नये तदनुत्तरसाध्यवत्ताज्ञानस्य।प्रतिबध्यत्वात्। एतन्नये सिद्धान्तमता-पेक्षया दोषसत्त्वेऽपि एतल्लक्षणकर्तुः तादृशाभिप्राये बाधकाभावात्। एवं च [3]सामान्यपदमनिवेश्य साध्यतावच्छेदकेतरानवच्छिन्नप्रकारताकत्वं निवेश्य ज्ञानवैशिष्ट्यानवच्छिन्नत्वनिवेशायासो नोपादेयः।

[1] प्रतिबन्धकत्वान्यतमाभाववत्त्वे—अ.

[2] व्यापकत्वमात्रम्—अ.

[3] सिद्धान्तमतानुरोधिनामिति शेषः—अ.

यद्वा साध्यतावच्छेदकेतरानवच्छिन्नप्रकारताकत्वप्रवेशे यत्र विषयविशेषे साध्ये व्यधिकरणधर्मैरेव साध्यबुद्धिः घटत्वेन तदङ्कुरवान् पटत्वेन तदङ्कुरवानित्याद्याकारा तत्राव्याप्तिरतस्तदनुरोधेन सामान्यपदनिवेशः। तादृशसकलबुद्धीनामेव साध्यसामान्याभावबुद्धिनिवर्त्यत्वान्न तत्साध्यातिव्याप्तिः। एवं च यत्किंचित्साध्यवत्ताज्ञानाविरोधित्वमेव निवेश्यम्। सद्धतौ च साध्यतावच्छेदकरूपेण साध्यवत्ताज्ञानमेव यत्किंचिदिति लक्षणसमन्वयः। व्यभिचारिणि न किमपि साध्यज्ञानं धर्त्तुं शक्यमिति नातिव्याप्तिरित्यप्यनुपादेयम्। उक्तस्थले यत्किंचित्साध्यवत्ताज्ञानस्यालाभेनाव्याप्तेः। एवं चोक्तदोषवारणाय ज्ञानवैशिष्ट्यानवच्छिन्नप्रतिबन्धकता निवेश्येति।

ननु सामान्यपदोपादानेऽपि सिद्धान्तिमतेऽवच्छेदकधर्मदर्शनादिव्यावृत्तप्रतिबन्धकताया निवेशावश्यंभावे निरवच्छिन्नं वृत्तित्वमिति ग्रन्थासङ्गतिः। अव्याप्यवृत्तित्वज्ञानाभावविशिष्टसंयोगाभाववत्ताज्ञानस्य प्रतिबन्धकतायाः वैशिष्ट्यावच्छिन्नत्वात् प्रयोजनाभावेन वैशिष्ट्यज्ञानीयत्वानिवेशात्। मैवम्——एतन्मते निरवच्छिन्नविशेषणतासंबन्धेन संयोगाभाववत्ताज्ञानस्य प्रतिबन्धकत्वान्तरं नोपेयते। तदनुपगमेऽपि संयोगि द्रव्यत्वादित्यादौ सद्धेतौ संयोगाभावविशिष्टपक्षस्याभासतावारणसंभवात्। तथा च संयोगि सत्त्वादित्यादौ अतिव्याप्तिः। कामिनीजिज्ञासाया एव साध्यवत्ताज्ञानत्वव्यापकप्रतिबध्यतानिरूपितवैशिष्ट्यानवच्छिन्नप्रतिबन्धकत्वात् तथा च वैशिष्ट्ये ज्ञानीयत्वनिवेश आवश्यकः। निरवच्छिन्नविशेषणतासंबन्धेन साध्याभाववत्ताज्ञानस्य प्रतिबन्धकता पक्षेऽप्रामाण्याग्रहाभावादिवैशिष्ट्यमादाय न ज्ञानीयत्वनिवेशः सुवचः। तस्य सामानाधिकरण्यानात्मकत्वात्।

अथैतत्पक्षे कपिसंयोगी [1]एतद्वृक्षत्वादित्यादौ गुणादिधर्मिकहेतुसमानाधिकरणसंयोगाभावादिप्रमायास्तद्धर्मिकसाध्यवत्ताज्ञानविरोधितया

[1] एतत्त्वादिति——अ.

निरवच्छिन्नत्वसार्थक्यसंभवाद् अव्याप्यवृत्तित्वज्ञानविरहकालीनाया इत्यनुधावनमफलमिति चेत्, न । हेतुमन्मात्रवृत्तिधर्मावच्छिन्नविशेष्यकत्वनिवेशे तद्दोषवारणसंभवात् । तथापि दोषप्रदर्शनाय तदुक्तेः ।

अथ हेतुमन्मात्रवृत्तिधर्मावच्छिन्नविशेष्यकत्वमेव सम्यक् । कालिकसंबन्धावच्छिन्नघटत्वाभावाभावे साध्ये कालिकसंबन्धेन जन्यविशेष्यकघटत्वाभावप्रमाया हेतुमन्मात्रवृत्तिधर्मावच्छिन्नाविशेष्यकत्वात्, नित्यविशेष्यकतादृशज्ञानस्याप्रमात्वादित्यव्याप्त्यसत्त्वेन प्रतियोगितावच्छेदकविशिष्टसाध्यवत्ताग्रहविरोधितानियामकसंबन्धावच्छिन्नानिवेशेन लाघवादिति चेत्, न । केवलान्वयिहेतुसङ्ग्रहाय हेतुमत्त्वं यद्धर्मव्यापकमिति रीत्या निवेशे गौरवात् । प्रकारान्तरेण हेतुमद्वृत्तित्वनिवेशस्योक्तत्वाच्च ।

## न्यायरत्नम्

**विशिष्टाभाव इत्यादि । द्वित्वावच्छिन्नसाध्यके व्याभिचारिणि[1] व्यभिचारनिरूपकाधिकरणावृत्तित्वावच्छिन्नाभावमादायातिव्याप्ते-र्निरासः ।**

**अथैवं विशिष्टसत्तावान् जातेः इत्यादौ विशिष्टसत्ताभावस्य साध्यप्रतियोगिकत्वविरहेण सत्ताभावस्य साध्यप्रतियोगिकत्वेऽपि हेतुसामानाधिकरण्यविरहेण व्यधिकरणधर्मावच्छिन्नाभावमादायातिव्याप्तिः । न च गुणावृत्तित्वावच्छिन्नाभावस्य साध्यप्रतियोगिकत्वेन तमादायातिव्याप्तिवारणं शङ्क्यम् । विशेष्ये सतो गुणवृत्तित्वस्य विशिष्टेऽभावानुपगमात् । अन्यथा घटवृत्तित्वविशिष्टवाच्यत्वे पटावृत्तित्वसत्वेन तदवच्छिन्नाभावस्यापि साध्यप्रतियोगिकत्वेन तमादाय वाच्यं ज्ञेयत्वादित्यादौ लक्षणसमन्वयसंभवेन व्यधिकरणधर्मावच्छिन्नाभावस्यानावश्यकत्वप्रसंगात् । मैवम्—द्रव्यत्वत्वेन द्रव्यत्वसत्तान्यतराभावमादायैव विशिष्टसत्तासाध्यकेऽति-**

[1] व्यभिचारिणीति । वह्निधूमोभयवान् वह्नेः इत्यादावित्यर्थः ।

व्याप्तेर्वारणात्। न च तादृशाभावस्य द्रव्यत्वाभावसमनियतत्वेन द्रव्यत्वप्रतियोगिकत्वमेव स्वीक्रियत इति वाच्यम्। सत्ताया अपि तादृशप्रतीतावुल्लेखात् तत्प्रतियोगिकत्वावश्यकत्वमित्यभिप्रायात्।

अथैवमपि एतद्रूपान्यत्वविशिष्टसत्तावान् जातेरित्यादावतिव्याप्तिः कथं, वार्यते विशिष्टाभावस्य लक्षणघटकत्वाभावात्; द्रव्यत्वत्वेन द्रव्यत्वसत्तान्यतराभावादेः साध्यसामानाधिकरण्यात्। न चैतद्रूपभेदत्वेन एतद्रूपभेदसत्तान्यतराभावस्य साध्यप्रतियोगिकस्य साध्यसामानाधिकरण्यविरहेणैव तत्रातिव्याप्तिवारणमिति वाच्यम्। तादृशान्यतराभावस्य समवायसंबन्धावच्छिन्नप्रतियोगिताकस्य हेतुसमानाधिकरणस्य साध्यसामानाधिकरण्यात् स्वरूपसंबन्धावच्छिन्नप्रतियोगिताकस्य तस्य सर्वत्र व्यधिकरणसंबन्धावच्छिन्नप्रतियोगिताकसाध्याभावमादाय लक्षणसमन्वयाद् व्यधिकरणधर्मावच्छिन्नाभावस्यानावश्यकत्ववारणाय विवक्षणीयसाध्यतावच्छेदकसंबन्धावच्छिन्नप्रतियोगिताकत्वविरहात्। न च व्यधिकरणसंबन्धावच्छिन्नाभाववारणाय प्रतियोगितायां साध्यतावच्छेदकसंबन्धावच्छिन्नत्वं विहायावच्छिन्नत्व-प्रतियोगिवृत्तित्वोभयसंबन्धेन संसर्गविशिष्टत्वस्यैव निवेशेन व्यधिकरणसंबन्धावच्छिन्नाभाववारणस्य निरुक्तान्यतराभावस्य च संग्रहः संभवतीति वाच्यम्। एवमपि वाच्यत्वस्य कालिकसंबन्धेनाभावमादाय लक्षणसमन्वयात् व्यधिकरणधर्मावच्छिन्नाभावानावश्यकत्वस्य दुर्वारत्वादिति चेत्, न। विशिष्टसाध्यके वैशिष्ट्यस्यैव परंपरासंबन्धेन साध्यत्वमित्यभिप्रायेण प्रथमकल्पकरणात्। न चैवं विशिष्टसत्तासाध्यके साध्यतावच्छेदकविशिष्टत्वनिवेशव्यावृत्त्यसंगतिरिति वाच्यम्; अथवेतीत्यादि द्वितीयकल्पाभिप्रायेण तत्संगतेः।

## गादाधरी

(५४) प्रगल्भलक्षणद्वयदूषणम्।

**साध्याभावपदवैयर्थ्यादिति । अत्र च साध्यतावच्छेदकविशिष्टसामानाधिकरण्यावच्छेदकत्वं [1]स्वव्यापकतादृशसामानाधिकरण्यकत्वम्, । तथा च साध्यतावच्छेदकविशिष्टसामानाधिकरण्यत्वं यत्समानाधिकरणसाध्याभावत्वव्यापकतावच्छेदकं तत्त्वं व्याप्तिरित्येतादृशार्थकत्वे प्रथमलक्षणे न साध्याभावपदवैयर्थ्यम्, । यत्समानाधिकरणनिष्ठाभावप्रतियोगितावच्छेदकत्वाभावरूपयत्सामानाधिकरण्यव्यापकतावच्छेदकत्वाद् यत्समानाधिकरणसाध्याभावनिष्ठाभावप्रतियोगितावच्छेदकत्वाभावरूपस्य यत्समानाधिकरणसाध्याभावत्वव्यापकतावच्छेदकत्वस्यातिरिक्ततया तद्घटितलक्षणेयत्सामानाधिकरण्यव्यापकतावच्छेदकत्वस्यानिवेशात्, तदघटितलक्षणसंभवे प्रकृतलक्षणवैयर्थ्यानवकाशात् ।**

**एवं यत्समानाधिकरणसाध्याभावप्रमात्वव्यापकः साध्यवत्ताज्ञानप्रतिबन्धकत्वाभावः तत्त्वम् इत्येतादृशार्थकत्वे द्वितीयलक्षणे न तद्वैयर्थ्यम् । यत्समानाधिकरणप्रमात्वव्यापकताघटकाभावाद् यत्समानाधिकरणसाध्याभावप्रमात्वव्यापकतायामभावान्तरस्यैव निवेशादित्यवधेयम् ।।**

कृष्णंभट्टीयम्

दीधितौ वैयर्थ्यादिति । ननु सिषाधयिषाविरहकालीनायां यत्समानाधिकरणप्रमाणप्रमासामान्यान्तर्गतसिद्ध्यात्मकप्रमायां साध्यवत्ताज्ञानविरोधित्वादव्याप्तिरतः साध्याभावपदम् । न च सिद्धिभिन्नत्वेन प्रमाया विशेषणीयतया तद्वैयर्थ्याभिधानसङ्गतिरिति वाच्यम् । तदुपादानेऽपि

1 स्वपदं हेतुसमानाधिकरणसाध्याभावत्वपरम् ।

अभाववान् मेयत्वादित्यादौ घटत्वेन अभावाभाववत्ताज्ञानस्य च सिद्धि-भिन्नत्वाभावाद् अव्याप्तिरिति चेत्, न। सिद्धिविधया विरोधित्वान्यत्वस्य निवेश्यत्वात्। अन्यथा साध्याभावपदोपादानेऽपि व्यधिकरणधर्मावच्छिन्ना-भावाभाववत्ताज्ञानस्य सिद्धिविधया विरोधितया अव्याप्तेर्दुर्वारत्वाद् इति।

नन्वत्र साध्याभावपदानुपादानेऽपि प्रतियोग्यवृत्तिश्चेति ग्रन्थोत्थि-तिरेव। व्यापकतायाः सामानाधिकरण्येनावच्छेदकत्वघटितत्वादिति चेत्, न। दत्तोत्तरत्वात्। एवं च विरोधितासामान्याभावो विरोधिभेदो वा निवेश्यः। साध्यतावच्छेदकसंबन्धावच्छिन्नप्रतियोगिताकत्वनिवेशाच्च न तद्ग्रन्थोत्थितिरिति।

एतद्दूषणं स्वयमुद्धरति––अत्र चेति। यदिति। घटाद्यभाव-प्रतियोगितावच्छेदकत्व[1]प्रतियोगिकात् [2]तदप्रतियोगिकोऽतिरिक्त इत्यर्थः। एवमग्रेऽपि।

### न्यायरत्नम्

**यथोक्तधर्मयोरिति। यत्समानाधिकरणसाध्याभावत्वसाध्यसामाना-धिकरण्ययोरित्यर्थः। तादृशेति। स्वरूपसंबन्धरूपेत्यर्थः। मानाभावादिति भूतले प्रमेयमित्यादौ प्रमेयत्वादौ भूतलाधेयतावच्छेदकत्वावगाहिप्रत्ययो-ऽतिप्रसक्तप्रमेयत्वादौ स्वरूपसंबन्धरूपावच्छेदकत्वं विषयीकरोति। अति-प्रसक्तसाधारणतादृशावच्छेदकत्वनिवेशे सत्ताभावाभावो द्रव्यत्ववतीति प्रतीतिसिद्धतादृशावच्छेदकत्वमादाय सत्ताभावद्रव्यत्वोभयवान् द्रव्यत्वादि-त्यादावतिव्याप्तिः, अतोऽतिप्रसक्तव्यावृत्ततादृशावच्छेदकत्वमेव निवेश्यम्। तथा च तादृशावच्छेदकत्वावगाहियत्समानाधिकरणसाध्याभावः साध्य-वतीत्यादिप्रत्ययाभावादसंभव इति भावः। व्यभिचारिणीति। संयोगी सत्त्वादित्यादौ गुणावृत्त्यभावमादायातिव्याप्तिवारणं बोध्यम्। वह्न्यादि-**

[1] प्रतियोगिकत्वात्––अ.

[2] तदप्रतियोगिकत्वकोऽतिरिक्तः––अ.

सामानाधिकरण्यविरहेऽपीति । संयोगेन द्रव्यस्याव्याप्यवृत्तित्वमते तदावश्यकत्वेऽपि विषयतया ज्ञानाधिकरणे वर्तमानात्मत्वसामान्याभावस्य साध्यसामानाधिकरण्यविरहाद् आत्मा ज्ञानादित्यादावव्याप्तिवारणं तत्प्रयोजनं बोध्यम् ।

वृत्तिद्वयम्——साध्यसामानाधिकरण्यघटकं हेतुसामानाधिकरण्यघटकं चेत्यर्थः । [1]एकसंबन्धेन । दैशिकविशेषणतारूपैकसंबन्धावच्छिन्नम् । प्रथमे प्रयोजनमाह तेनेति । द्वितीये सत्तावान् द्रव्यत्वादित्यादौ कालिकसंबन्धेन हेतुसमानाधिकरणस्य सत्ताभावस्य दैशिकविशेषणतया साध्यसामानाधिकरण्यविरहाद् अव्याप्तिवारणं प्रयोजनं बोध्यम् ।

तत्प्रयो[2]जनं स्फुटमेवेति । धूमसमवायिनिष्ठवह्न्यभावविषयकप्रमायां साध्यवत्ताज्ञानप्रतिबन्धकत्वाभावासत्वादव्याप्तिवारणरूपमित्यर्थः ।

स्वाधिकरणवृत्तित्वं निरवच्छिन्नं ग्राह्यमिति । अथैवं विवक्षणे वह्निमान् धूमात् सत्तावान् जातेः इत्यादौ कालिकविषयित्वादिसंबन्धेन हेतुसमानाधिकरणसाध्याभावप्रमायां साध्यवत्ताज्ञानप्रतिबन्धकत्वाभावासत्वादव्याप्तिवारणाय हेतुमद्वृत्तित्वांशे स्वप्रतियोगितावच्छेदकत्वविशिष्टसाध्यवत्ताग्रहविरोधितानियामकसंबन्धस्यैव विवक्षणीयतया कालिकसंबन्धावच्छिन्नप्रतियोगिताके घटत्वाभावाभावे साध्ये घटासमानकालीनक्रियादौ व्यभिचारिणि प्रमेयत्वादौ साध्याभावस्य व्यतिरेकिमात्रस्य कालिकेनाव्याप्यवृत्तित्वप्रवादानुरोधाद् इह इदानीं घटत्वाभाव इति प्रत्ययाच्च घटान्यदेशावच्छेदेनैव कालवृत्तितया हेत्वधिकरणकाले निरवच्छिन्नवृत्तिकत्वविरहेण व्यधिकरणधर्मावच्छिन्नाभावमादायातिव्याप्तिः । न च हेत्वधिकरणवृत्तित्वं दैशिकविशेषणतयैव निवेशनीयं, भावाभावसाधारणी

[1] दैशिकविशेषणतासंबन्धेनेति प्रायशः पाठो दृश्यते; एकसंबन्धेनेति पाठान्तरमपि वर्तते——स्व.

[2] तत्प्रयोजनं च स्फुटमेवेति गादाधर्यां पाठः——स्व.

दैशिकविशेषणता स्वीक्रियत इति नाभावसाध्यके व्यभिचारिण्यतिव्याप्तिः। प्रकृतस्थले तेन संबन्धेन घटत्वाभावाभावादेः दैशिकविशेषणतया निरवच्छिन्नवृत्तिकतया कालिकसंबन्धेन तद्वत्ताज्ञानस्य तादृशसाध्यवत्ताज्ञानविरोधित्वान्नातिव्याप्तिरिति वाच्यम्। एवं सति तत्साध्यके आत्मत्वहेतावव्याप्तेः घटत्वाभावरूपस्य साध्याभावस्य दैशिकविशेषणतया तेन संबन्धेनात्मवृत्तेः। मैवम्। स्वप्रतियोगितावच्छेदकविशिष्टसाध्यवत्ताग्रहविरोधितानियामकसंबन्धेनैव हेत्वधिकरणवृत्तित्वं विवक्षितम्। अभाववत्ताग्रहेऽभावाभाववत्ताज्ञानस्य दैशिकविशेषणतयापि विरोधित्वमिति कूटघटिते ग्रन्थकृद्दर्शनीयमतस्यैवावलम्बनात्। उक्तस्थले दैशिकविशेषणतासंबन्धमादायातिव्याप्तिवारणम्। एवं च भावाभावसाधारणदैशिकविशेषणताया अस्वीकारेऽपि न क्षतिः। अभावसाध्यके व्यभिचारिणि समवायादेरपि तथात्वात्। दर्शितसाध्यके आत्मत्वादिहेतुकेऽव्याप्तिवारणं तु तादृशसंबन्धेन हेतुमद्वृत्तितावच्छेदकसाध्याभावत्वविशिष्टविषयकप्रमासामान्य इति विवक्षया कर्तव्यम्।

वस्तुतस्तु——कालिकसंबन्धावच्छिन्नप्रतियोगिताकघटत्वाभावाभावरूपसाध्याभावस्य घटत्वाभावरूपस्य घटासमानकालीनक्रियादौ व्याप्यवृत्तित्वमेव। न च तत्र साध्यात्मकप्रतियोग्यनधिकरणस्य देशस्यावच्छेदकत्वं युज्यते। प्रतियोग्यभावयोः एकत्रवृत्तौ विरोधभञ्जनार्थमेवावच्छेदकापेक्षणात्। व्यतिरेकिमात्रस्य कालिकेनाव्याप्यवृत्तित्वप्रवादस्य इह इदानीं घटत्वाभाव इति प्रत्ययस्य च महाकाले तस्याव्याप्यवृत्तित्वेनैवोपपत्तेरिति ध्येयमिति दिक्।

तत्सामान्यपरमिति। ननु साध्यतावच्छेदकपर्याप्तावच्छेदकताकप्रकारतानिरूपितप्रकारित्वावच्छिन्नप्रतिबद्धचतानिवेशादेवोपपत्तौ सामान्यपदं व्यर्थमिति चेत्, न। विशिष्टसाध्यतावच्छेदकस्थले तादृशप्रकारकत्वावच्छिन्नप्रतिबद्धचताया अप्रसिद्धेः। प्रतिबद्धचताया भ्रमसाधारण्याय

निरूप्यनिरूपकभावापन्नप्रकारकत्वस्यैव तदवच्छेदकत्वस्य वक्तव्यतया विशिष्टसाध्यतावच्छेदकपर्याप्तावच्छेदकताकप्रकारकत्वस्यातथात्वात् तादृशप्रकारकत्वविशिष्टज्ञानत्वव्यापकप्रतिबद्धचताया निवेशनावश्यकत्वेन व्यापकत्वतात्पर्यकतत्पदावश्यकत्वात् ।

ज्ञानं चेति । ननु सधर्मितावच्छेदककयद्धर्मावच्छिन्नसमानाधिकरणसाध्याभावविषयकप्रमासामान्ये स्वसमानधर्मितावच्छेदककसाध्यवत्ताज्ञानसामान्यविरोधित्वाभाववत्त्वं पर्यवसन्नम् । निर्धर्मितावच्छेदककसाध्याभावप्रमायाः स्वसमानधर्मितावच्छेदककसाध्यवत्ताज्ञानाप्रसिद्धिरतः सधर्मितावच्छेदककत्वस्य तादृशप्रमायां निवेशः ।

तत्र स्वपदं प्रमासामान्यपरं, तत्प्रमापरं वा । आद्ये तादृशप्रमासमानधर्मितावच्छेदककसाध्यवत्ताज्ञानत्वव्यापकप्रतिबद्धचतायाः कामिनीजिज्ञासानिरूपिताया एव प्रसिद्धेरतिव्याप्तिः । अन्त्ये घटत्वेन वह्न्यभाववान् ह्रदश्च वह्न्यभाववान् इति प्रमाया स्वसमानधर्मितावच्छेदकह्रदत्वावच्छिन्नविशेष्यकवह्निमत्ताज्ञानसामान्यविरोधित्वादव्याप्तिरिति चेत्, न । हेतुसमानाधिकरणसाध्याभावांशे सधर्मितावच्छेदकिका या या प्रमा प्रत्येकं स्वीयहेतुसमानाधिकरणसाध्याभावनिष्ठप्रकारतानिरूपितविशेष्यतावच्छेदकावच्छिन्नविशेष्यतानिरूपिता या स्वविषयीभूताभावीयप्रतियोगितावच्छेदकसंबन्धावच्छिन्नसाध्यतावच्छेदकावच्छिन्नप्रकारता तच्छाल्यनाहार्यज्ञानत्वव्यापकप्रतिबद्धचतानिरूपितप्रतिबन्धकत्वाभावः तत्वमित्यस्य विवक्षितत्वान्न दोषः ।

एवं यत्समानाधिकरणसाध्याभावप्रमात्वव्यापकः साध्यवत्ताज्ञानप्रतिबन्धकत्वाभावः तत्वमित्येतादृशार्थकत्व इति । अत्रेदं चिन्त्यम् पूर्वोक्तयुक्त्या लक्षणपरिष्कारावश्यकतया तादृशप्रमात्वव्यापकत्वघटितपरिष्कारोऽसंभवदुक्तिक इति ।

इति चतुर्दशलक्षण्यां प्रगल्भलक्षणम् ।

-----

## विशारदलक्षणम्

### दीधितिः

यत्तु साध्याभाववति यद्वृत्तौ प्रकृतानुमितिविरोधित्वं नास्ति तत्त्वं व्याप्तिरिति––तन्न । अनुमित्यविरोधित्वज्ञानस्यानुमितिहेतुत्वे साध्याभाववद्वृत्तित्वज्ञानस्यानुमित्त्यविरोधितया व्यभिचारिण्यतिप्रसङ्गात् ।

### गादाधरी

(५५) लक्षणसमन्वयप्रदर्शनं यन्निष्ठत्वप्रयोजनकथनं च ।

**साध्याभाववतीति यन्निष्ठसाध्याभाववद्वृत्तित्वत्वविशिष्टनिरूपितविषयितासामान्ये प्रकृतानुमितिप्रतिबन्धकतावच्छेदकत्वाभावः तत्त्वमित्यर्थः। वह्निमान् धूमाद् इत्यादौ हेतुनिष्ठसाध्याभाववद्वृत्तित्वत्वविशिष्टनिरूपितविषयिता व्यधिकरणधर्मावच्छिन्नाभाववद्वृत्तित्व[1]विषयितैव। सा च न वह्न्यनुमितिं प्रति प्रतिबन्धकतावच्छेदिका। तच्छालिज्ञानस्यानुमित्यप्रतिबन्धकत्वात्। व्यभिचारिणि साध्यतावच्छेदकावच्छिन्नसाध्याभाववद्वृत्तित्व[2]विषयितापि तादृशी। तद्वतो ज्ञानस्य च व्यभिचारज्ञानविधया अनुमितिप्रतिबन्धकत्वात् तादृशविषयिताया अनुमितिप्रतिबन्धकतावच्छेदकत्वान्नातिव्याप्तिः।**

[1] विषयितानिरूपितविषयितैव––अ.

[2] विशिष्टनिरूपिता विषयितापि––अ.

**यन्निष्ठत्वानुपादाने धूमाद्यंशे वह्नित्वावच्छिन्नवह्न्यभाववद्वृत्तित्वावगाहिभ्रमनिष्ठवह्नित्वेन वह्न्यभाववद्वृत्तित्वत्वविशिष्टनिरूपितविषयिताया अप्यनुमितिप्रतिबन्धकतावच्छेदक - त्वाद् वह्निमान् धूमादित्यादावव्याप्तिः अतस्तदुपादानम्; तथा च भ्रमविषयवह्न्यभाववद्वृत्तित्वस्य हेतुनिष्ठत्वाभावान्न दोषः ।**

कृष्णंभट्टीयम्

साध्याभावपदं सार्थकीकृत्य तस्यैव लक्षणान्तरं प्रकारान्तरेण दूषयितुमुपन्यस्यति दीधितौ––यत्त्विति ।

गादाधर्याम्––यन्निष्ठेति । कपिसंयोगादिसाध्यके साध्याभाववद्वृत्तित्वविशिष्टहेतुविषयिता न प्रतिवन्धकतावच्छेदिका निरवच्छिन्नसाध्याभाववत्त्वस्यैव व्यभिचारघटकत्वादिति न तत्राव्याप्तिः ।

यन्निष्ठत्वेति । [1]यद्विशेष्यकत्वस्य यद्धेतुकानुमितेर्वा निवेशाद् व्याप्तेर्हेतुनिष्टता ।

द्रव्यं विशिष्टसत्त्वादित्यस्य सद्धेतुत्वे यन्निष्ठत्वं यद्धर्मावच्छिन्नाधिकरणतानिरूपिताधेयतावच्छेदकत्वं वाच्यम् । यद्धर्मवृत्तिसाध्याभाववद्वृत्तितावच्छेदकत्वस्य यद्धर्मावच्छिन्नत्वविशिष्टसाध्याभाववद्वृत्तित्वस्य वा विषयिता वा विवक्षणीया । [2]यन्निष्ठेत्यनुक्तौ द्रव्यं धूमादित्यादौ द्रव्यत्वमवृत्तीतिज्ञानीयविषयितामादाय दोषवारणाय [3]साध्याभाववद्वृत्तित्वविषयितापर्यन्तनिवेश इति न युक्तम् ।

[1] यद्विशेष्यकत्वनिवेशपक्षे यद्विशेष्यकत्वावच्छिन्नायां साध्याभाववद्वृत्तित्वनिरूपितविषयितायां प्रकृतानुमितिप्रतिबन्धकत्वं नास्ति तत्त्वं लक्षणम् । यद्धेतुकानुमितिनिवेशपक्षे साध्याभाववद्वृत्तित्वविषयितायां यद्धेतुकानुमितिप्रतिबन्धकत्वं नास्ति तत्त्वं लक्षणमिति भावः ।

[2] यन्निष्ठत्वानुक्तौ––अ.

[3] विषयितायां साध्याभाववद्वृत्तित्वनिवेशः इति न युक्तम्––अ.

## न्यायरत्नम्

यन्निष्ठत्वानुपादान इति । यल्लिङ्गकत्वस्यानुमितिविशेषणत्वे व्याप्तेर्हेतुनिष्ठत्वलाभः ।

## गादाधरी

(५६) विषयितायां साध्याभाववद्वृत्तित्वत्वविशिष्टनिरूपितत्वस्य प्रयोजनकथनम् ।

यन्निष्ठपदार्थनिरूपितविषयितासामान्ये यन्निष्ठसाध्याभाववद्वृत्तित्वविषयितासामान्ये इति वा यद्युच्यते, तदा व्यधिकरणधर्मावच्छिन्नसाध्याभाववद्वृत्तित्वमेव यत्र समानाधिकरणधर्मावच्छिन्नसाध्याभाववदवृत्तित्वत्वेन भातम्, तादृशज्ञानीयहेतुनिष्ठतथाविधसाध्याभाववद्वृत्तित्वविषयिताया अप्यनुमितिप्रतिबन्धकतावच्छेदकत्वादसंभवः [1]अव्याप्तिर्वेति साध्याभाववद्वृत्तित्वत्वविशिष्टनिरूपितत्वं विषयिताविशेषणम् । तादृशभ्रमविषयिता च न साध्याभाववद्वृत्तित्वत्वविशिष्टनिरूपिता । तादृशविषयितानिरूपकस्य व्यधिकरणधर्मावच्छिन्नसाध्याभाववद्वृत्तित्वस्य विशेषणीभूतं यत्समानाधिकरणधर्मावच्छिन्नसाध्याभाववद्वृत्तित्वत्वं तद्विशिष्टत्वाभावात् ।

न च तद्विशिष्टानिरूपितत्वं यदि तदवच्छिन्ननिरूपकताकत्वम्, तदा समानाधिकरणधर्मावच्छिन्नसाध्याभाववद्वृत्तित्वत्वस्य तद्भ्रमविषयवृ[2]त्तावसत्त्वेऽपि तन्निष्ठविषयितानिरूपकत्वे

[1] यत्र विषयविशेषे भ्रमो न जातः तत्रैव लक्षणसमन्वयसंभवाद् अव्याप्तिर्वा बोध्या—रा.

[2] व्यधिकरणधर्मावच्छिन्नसाध्याभाववद्वृत्तित्वे इत्यर्थः—रा.

**व्यधिकरणीभूयावच्छेदकत्वाद् भ्रमविषयितायाः तद्विशिष्टनि-रूपितत्वमक्षतमेव। यदि च वस्तुगत्या यत्र तद्वैशिष्ट्यं तन्निरूपितत्वमेव विशिष्टनिरूपितत्वम्, तदा व्यधिकरणधर्मावच्छिन्नसाध्याभाववद्वृत्तित्वत्वविशिष्टनिरूपितत्वमेवोक्तभ्रम-विषयिताया अक्षतमिति कथं तद्व्यावृत्तिरिति वाच्यम्। [1]विशेषणीभूतधर्मान्तरविशिष्टेन व्यावर्त्यमानस्य विशे[2]ष्यस्य भाने विशेषणांशे प्रकारीभवत्यां व्यक्तौ [[3]विशेष्यसंबन्धितावच्छेदकताया [4]भानात्] साध्याभाववद्वृत्तित्वत्वरूपविशेषणविशिष्टविषयेण निरूपकीभूय विषयिताव्यावर्तने व्यावर्तकविष[5]यस्य आश्रयतया [6]व्यावर्तकं यत्साध्याभाववद्वृत्तितात्वं तस्यापि निरूपकतावच्छेदकीभूय विषयिताव्यावर्तकत्वाद् उक्तभ्रमविषयिताव्यावृत्तिः। तद्व्यावर्तकविषयाव्यावर्तकस्य तन्निष्ठसाध्याभाववद्वृत्तितात्वस्य तादृशविषयितानिरूपकतानवच्छेदकत्वादिति तादृशविषयिताया लक्षणाघटकत्वात्। एवं चोक्तभ्रमविषयिताव्यावर्तकतयैव साध्याभाववत्पदसार्थक्यम्। तादृशविषयिताया**

1 विशेषणीयस्येत्यर्थः। तदवच्छिन्न-तदाश्रयनिष्ठनिरूपकताकविषयिताया एव तथात्वात् तथाहीत्यादिना पूरणीयम्——रा.

2 लक्षणवाक्याद् बोधे विषयितारूपविशेष्यांशे विशेषणं यद्वृत्तित्वं तदंशे विशेषणं तादृशवृत्तितात्वम्——रा.

3 [ ] विशेष्यसंबन्धितावच्छेदकत्वस्य विशिष्टवैशिष्ट्यबोधे भनात्——अ. न्यायरत्ने विशेष्यसंबन्धितावच्छेदकत्वभानादिति प्रतीकधारणम्——स्व.

4 विशिष्टवैशिष्ट्यबोधे भानात्——अ.

5 विषयित्वांशे विशेषणीभूतस्य साध्याभाववद्वृत्तित्वस्य——रा.

6 आश्रयतासंबन्धेन विशेषणम्——रा.

**उक्तक्रमेण हेतुनिष्ठसाध्याभाववद्वृत्तित्वत्वविशिष्टानिरूपितत्वेऽपि हेतुनिष्ठाधेयतात्वविशिष्टनिरूपितत्वानपायात् ।**

कृष्णंभट्टीयम्

यन्निष्ठत्वमुपादाय तदनिवेशस्यैव सम्यक्त्वादित्युक्तौ वा आह––यन्निष्ठेति । यत्र विषयविशेषे भ्रमो न कस्यापि जातः तत्रैव लक्षणसत्त्वादाह––अव्याप्तिर्वेति ।

उक्ताशङ्कावारणाय साध्याभाववद्वृत्तित्वविषयिताशब्दाद् बुध्यमाने विषयितारूपविशेष्ये यद्विशेषणतावच्छेदकं तादृशवृत्तितात्वं तत्र तन्निरूपकतावच्छेदकत्वलाभमाह––विशेषणीभूतेत्यादिना । अन्तरपदं विशेषणविशेषणत्वस्फोरकम् । [1]लाभादित्यन्तः निरूपक[2]तावच्छेदकीभूयविषयिताव्यावर्तनहेतुः । अन्यथा विषयितायां वक्ष्यमाणसंवन्धेन व्यधिकरणधर्मावच्छिन्नसाध्याभाववद्वृत्तित्वा[3]सिद्ध्या व्यावर्तनासंभवात् । घटवद् भूतलमिति वाक्यजन्यबोधो दृष्टान्तः । तस्य विशिष्टवैशिष्ट्यावगाहित्वेन विशेषणतावच्छेदकीभूतघटत्वस्य स्वावच्छिन्ननिरूपितत्वसंवन्धेन भानाद् भूतलसंवन्धितावच्छेदकत्वं स्वावच्छिन्ननिरूपितत्वं स्वावच्छिन्नाधेयतानिरूपिताधिकरणत्वम् । एवमग्रेऽपि । प्रकृते निरूपितत्वसंवन्धावच्छिन्नस्वावच्छिन्न[4]संवन्धितानिरूपितसंवन्धित्वमित्यर्थः । साध्याभाववद्वृत्तितात्वं तद्विशिष्टेन व्यावर्त्यमानस्य विशेषणीयस्य कृतविशेषणस्य विशेष्यस्य विषयितारूपस्य भाने सान्ध्याभाववद्वृत्तित्वविषयिताशब्दाधीनबोधे विशेष्यांशे विषयितांशे प्रकारः यत्साध्याभाववद्वृत्तित्वं तदंशे [[5]प्रकारीभूतायां व्यक्तौ साध्य-

[1] मानादि इति पाठः गादाधर्यम्––स्व.

[2] निरूपकतावच्छेदकीभूतविषयिताव्यावर्तनहेतुः––अ.

[3] अप्रसिद्ध्या––अ.

[4] संवन्धतानिरूपितसंबान्धित्वमित्यर्थ––अ.

[5] [ ] एतदन्तर्गतपाठो नास्ति––अ.

ाभाववद्वृत्तितात्वे विशेष्यसंवन्धितावच्छेदकत्वलाभः । एवं च] एतादृश-भ्रमविषयिता धर्तुं न शक्यते । तद्विषयीभूतसमानाधिकरणधर्मावच्छिन्न-साध्याभाववद्वृत्तित्वत्वभिन्नं यद्वयधिकरणधर्मावच्छिन्नसाध्याभाववद्-वृत्तित्वत्वं तद्विशिष्टविषयितायाः तस्याः सत्त्वेऽपि तत्र तादृशविशेष्यभूत-विषयितासंवन्धितावच्छेदकत्वाभानात् । विषयेण निरूपकीभूय निरूपक-तासंबन्धेन विषतिता व्यावर्तने ।

एतेन साध्याभाववद्वृत्तित्वरूपविषयस्य निरूपकतासंवन्धेन विशे-षणत्वम् । प्रकृतविषयितापदार्थस्य विषयानिरूपितविषयितान्यत्व[1]साधको विषय इति रीत्या व्यावर्तकत्वरूपम् [2]एवं सर्वत्रेति सूचितम् । व्यावर्तक-विषयस्य [3]विषयिताविशेषणीभूतसाध्याभाववद्वृत्तित्वस्य आश्रयतया आ-श्रयतासंवन्धेन व्यावर्तक विशेषणम् । निरूपकतावच्छेदकीभूय विषयिता-व्यावर्तकत्वात् । स्वावच्छिन्ननिरूपकताकत्वसंवन्धेन विषयिताविशेषण-त्वात् । तथा च तच्छब्दाधीनबोधस्य विशिष्टवैशिष्ट्यावगाहित्वेन विशेषण-तावच्छेदकीभूतसाध्याभाववद्वृत्तित्वस्य विषयितांशे उक्तसंवन्धेन भानात् तत्संबन्धघटकतया तादृशसंबन्धितावच्छेदकत्वलाभ इति भावः ।

अत्र व्यावर्तकविषयस्येत्यादिना साध्याभाववद्वृत्तित्वत्वस्य स्वाश्रये विषयिताविशेषणे विशेषणत्वं प्रदर्श्य तस्यापीत्यादिना तस्यैव विषययिता-विशेषणत्वप्रदर्शनात् साध्याभाववद्वृत्तित्वत्वावच्छिन्नतद्वन्निष्ठनिरूपकता-कविषयिता निष्टङ्कितार्थः । तथा चेहोक्तभ्रमविषयिताव्यावृत्तिरिति; विषयिताव्यावर्तकव्यावर्तकं यत् तस्यैव विषयितानिरूपकतावच्छेदकत्वमपे-क्षितम् । भ्रमीयविषयितानिरूपकतावच्छेदकत्वं च तद्व्यावर्तकव्यावर्तकस्य नास्तीति तद्व्यावृत्तिरिति भावः । तदेतत् स्फुटयति––तद्व्यावर्तकेति ।

[1] व्याप्यः इत्यधिकपाठः––अ.

[2] एवमिति नास्ति––अ.

[3] विषयितांशे विशेषणीभूतेति––अ.

विषयिताव्यावर्तकं व्यधिकरणधर्मावच्छिन्नसाध्याभाववद्वृत्तित्वं तद्व्यावर्तकं यत्तत्त्वं तस्येत्यर्थः । तन्निष्ठेति । व्यधिकरणधर्मावच्छिन्नसाध्याभाववद्वृत्तित्वनिष्ठतादृशवृत्तित्वत्वस्येत्यर्थः ।

## न्यायरत्नम्

**असंभवोऽव्याप्तिर्वेति । साध्यतावच्छेदकसंबन्धावच्छिन्नसाध्यतावच्छेदकावच्छिन्नप्रतियोगिताकत्वसंबन्धेनाभावांशे साध्यप्रकारकव्यभिचारज्ञानस्यैव प्रतिबन्धकतया संसर्गतावच्छेदककोटौ भ्रमत्वाङ्गीकारे केवलान्वयिन्यपि तादृशज्ञानप्रसिद्ध्या असंभवः । तदस्वीकारेऽव्याप्तिः ।**

**वस्तुगत्येति । तत्समानाधिकरणविषयतानिरूपितत्वमेव वस्तुगत्या तद्विशिष्टनिरूपितत्वमित्यर्थः । यन्निष्ठसाध्याभाववद्वृत्तित्वत्वविशिष्टविषयितेत्यत्र तादृशवृत्तित्वत्वस्य तादृशवृत्तित्वोपलक्षणत्वविवक्षायां गुणकर्मान्यत्वोपलक्षितसत्ताया गुणादेरिव समानाधिकरणधर्मावच्छिन्नसाध्याभाववद्वृत्तित्वत्वेन पदार्थान्तरेण वा तादृशवृत्तित्वावगाहिज्ञानीयविषयिताया व्यावृत्तिर्न संभवति । यतो गुणाद्यन्यत्वस्योपलक्षणत्वविवक्षायां सत्ताया गुणे समवायेन विशेषणत्वं सत्तायां च गुणान्यत्वस्य सामानाधिकरण्यसंबन्धेनेतिवत् तादृशवृत्तित्वत्वस्योपलक्षणत्वविवक्षायां विषयित्वांशे तादृशवृत्तित्वस्य निरूपितत्वसंबन्धेन विशेषणत्वं तादृशवृत्तित्वत्वं च तादृशवृत्तित्वे आश्रयतासंबन्धेन विशेषणमित्यस्यैव वक्तव्यत्वेन तादृशज्ञानीयविषयित्वे निरूपितत्वसंबन्धेन तादृशवृत्तित्वस्य तादृशवृत्तित्वे आश्रयतासंबन्धेन तादृशवृत्तित्वस्य च बाधात् । गुणाद्यन्यत्वस्य विशेषणत्वविवक्षायां तस्य स्वावच्छिन्ननिरूपितत्वसंबन्धेन धर्मिपारतन्त्र्येणान्वयात् तेन संबन्धेन तस्य गुणादौ बाधात् । तद्विशिष्टसत्ताया गुणादेरिव यन्निष्ठसाध्याभाववद्वृत्तित्वत्वस्य तादृशवृत्तित्वे विशेषणत्वविवक्षणे तस्य स्वावच्छिन्नसंबन्धिताकत्वसंबन्धेन धर्मिपारतन्त्र्येणान्वयेन वृत्तित्वस्यापि निरूपितत्वसंबन्धेनान्वयेन तादृशवृत्तित्वत्वावच्छिन्नसंबन्धिताकविषयितैव यन्निष्ठसा-**

ध्याभाववद्वृत्तित्वत्वविशिष्टविषयितेति शब्दाद् बोध्यते । उक्तभ्रमविषयितायां च स्वावच्छिन्नसबन्धिताकत्वसंबन्धेन यन्निष्ठसाध्याभाववद्वृत्तित्वत्वस्य बाधात् तद्व्यावृत्तिः । तादृशवृत्तित्वत्वावच्छिन्नसंबन्धिता च तादृशवृत्तित्वत्वावच्छिन्नतादृशवृत्तित्वनिष्ठनिरूपकतैवेत्यभिप्रायेणाह--विशेषणीभूतेति । विशेषणान्तरमित्यनेन विशेषणविशेषणमपि धर्मिपारतन्त्र्येणान्वेतीति सूचितम् । व्यावर्त्यमानस्य विशेषितस्य । [1]विशेष्यसंबन्धितावच्छेदकत्वभानाद् विशेष्यांशे स्वावच्छिन्नसंबन्धिताकत्वसंबन्धेन विशेषणांशे प्रकारीभूतव्यक्तिभाननियमात् । निरूपकीभूयविषयिताव्यावर्तने--निरूपितत्वसंबन्धेन तादृशवृत्तित्वत्वविशिष्टस्य विषयिताविशेषणत्वे । आश्रयतया--आश्रयतासंबन्धेन । व्यावर्तकम्--विशेषणम् । तस्यापि--तादृशवृत्तित्वस्यापि । निरूपकतावच्छेदकीभूय विषयिताव्यावर्तकत्वात्--स्वावच्छिन्नस्वसमानाधिकरणनिरूपकताकत्वसंबन्धेन विषयिताविवशेषणत्वादित्यर्थः ।

वृत्तिविशेषणे [2]तन्निरूपकाधिकरण इति--पर्वतादाविति शेषः । वारणसंभवादिति--तादृशविषयितामधिकरणनिरूपितत्वयन्निष्ठत्वाधेयतात्वैतत्त्रितयनिरूपितत्वाक्षतेरिति भावः ।

## गादाधरी

(५७)　साध्याभावपदप्रयोजनकथनम् ।

**साध्याभावमनु[3]पादायाधिकरणवृत्तितात्वविशिष्टविषयितानिवेशे वृत्तौ समानाधिकरणधर्मावच्छिन्नाभावाधिकरणीयत्व-**

[1] विशेष्यसंबन्धितावच्छेदकत्वभानाद् इत्यपि पाठो विद्यत इति गम्यते । गादाधर्यां विशेष्यसम्बन्धितावच्छेदकताया भानाद् इति पाठः ।

[2] तन्निरूपकेऽधिकरणे इत्येव मूलपाठो दृश्यते--स्व.

[3] साध्याभावपदमनुपादाय--अ.

भ्रमविषयितावारणेऽपि वृत्तिविशेषणे तन्निरूपके[1]ऽधिकरणे समानाधिकरणधर्मावच्छिन्नाभावभ्रमविषयितावारणासंभवात् साध्याभावांशनिवेशस्यापि सार्थक्यात् ।

न च तावत्पर्यन्तनिवेशेऽपि वह्नित्वावच्छिन्नवह्निप्रतियोगिताकत्वेन व्यधिकरणधर्मावच्छिन्नप्रतियोगिताकवह्न्यभावमवगाह्य तादृशाभाववद्वृत्तित्वावगाहि यज्ज्ञानं तदीयतादृशसाध्याभाववद्वृत्तित्वविषयितापि साध्याभाववद्वृत्तित्वत्वविशिष्टनिरूपितैव, [2]व्यधिकरणधर्मावच्छिन्नप्रतियोगिताको यः साध्याभावः तद्वद्वृत्तित्वत्वस्यैव तद्विशेषणतया भानात् तद्विशिष्टत्वस्य च तादृशज्ञाननिष्ठविषयितानिरूपकसाध्याभाववद्वृत्तित्वे सत्त्वादिति तद्दोषतादवस्थ्यमिति वाच्यम् । अभावांशे साध्यतावच्छेदकावच्छिन्नप्रतियोगिताकत्वसंबन्धेन साध्यप्रकारकं व्यभिचारज्ञानमेवानुमितिविरोधि । तथा च यत्र च व्यधिकरणधर्मावच्छिन्नप्रतियोगिताकाभावे साध्यतावच्छेदकावच्छिन्नप्रतियोगिताकत्वसंबन्धेन साध्यं प्रकारः; तादृशज्ञानविषयघटकस्य साध्यतावच्छेदकावच्छिन्नप्रतियोगिताकत्वसंबन्धेन साध्यविशिष्टस्य व्यधिकरणधर्मावच्छिन्नाभावस्य अप्रसिद्ध्या तादृशज्ञानविषयितायाः विशिष्टनिरूपितत्वासंभवात् । साध्याभाववद्वृत्तित्वरूपविषयस्य प्रतिबन्धकतावच्छेदककोटचप्रवेशादतिव्याप्तिः । अतो विषयितापर्यन्तानुधावनम् ।

[1] तन्निरूपकाधिकरणे इति न्यायरत्ने प्रतीकधारणम् ।--स्व.

[2] वह्न्यभावत्वेन विशेषितो व्यधिकरणेत्यादि--अ.

कृष्णंभट्टीयम्

साध्योपलक्षिताभावनिवेशमभिप्रेत्याशङ्कते––न चेति। तत्राभावे साध्यं विशेषणमेव। एवं च साध्यवन्निष्ठा साध्यावच्छिन्ना या विषयिता तन्निरूपिताभाववन्निष्ठाभावावच्छिन्ना या विषयिता इति क्रमेण साध्यविशिष्टाभावविशिष्टाधिकरणविशिष्टवृत्तित्वत्वविशिष्टनिष्ठविशेष्यविशेषणभावापन्नसाध्यादिवृत्तित्वान्तपदार्थनिष्ठावच्छेदकताकनिरूपकताकविषयिताया वा निवेशेन समाधास्यन् व्यधिकरणधर्मावच्छिन्नसाध्याभाववद्वृत्तित्वज्ञानस्य साध्यविशिष्टाभाववद्वृत्तित्वत्वरूपव्यभिचारत्वविशिष्टविषयकतया प्रतिवन्धकत्वापत्तिरित्याशङ्कां परिहर्तुं व्यभिचारस्यान्यादृशतां दर्शयति––अभावांशेति।

न च व्यधिकरणधर्मावच्छिन्नसाध्याभावसमानाधिकरणधर्मावच्छिन्नसाध्याभावद्वयवद्वृत्तित्वभाने तदुभयविषयिताया: उक्तरूपाक्रान्ततया प्रतिवन्धकतावच्छेदकत्वादव्याप्ति:, प्रतिवन्धकतावच्छेदकतापर्याप्त्यभावप्रवेशे च साध्यतावच्छेदकाद्यन्तर्भावेन पर्याप्त्यसत्त्वादतिव्याप्तिरिति वाच्यम्। साक्षात्परंपरया वा हेतुसंबन्धितानवच्छेदकावच्छिन्ननिरूपितविषयिताया एव निवेश्यत्वात्। न चातिगौरवम्। विशिष्टविषयितायास्तदतिरिक्ताया एव कल्पनीयतया [1]तद्विशेषणस्य गुरुत्वासंपादकत्वात्। भ्रमविषयिताभिन्नाया एव विशिष्टविषययितात्वात्।

यद्यपि इदानीमेव एतादृशविवक्षोपगमेऽग्रिमाया न चेत्याशङ्काया एवानवताराद् हेतुसामानाधिकरण्यविशिष्टसाध्याभावत्वविशिष्टविषयिताविवक्षणं व्यर्थम्; तथापि परंपरया हेतुसंबन्धितावच्छेदकताया: परंपरानेकत्वेन दुर्वचतया विशिष्टविषयितानिवेशवैयर्थ्येन च तन्निवेशासंभव-

[1] एतद्विशेषणस्य––अ.

मभिप्रेत्य तथाविधशंकादिकमवतार्यमिति । हेतुनिष्ठसाध्याभाववद्वृत्तितात्वनिष्ठनिरूपकतावच्छेदकताकविषयिता तु न लक्षणार्थ इति बोध्यम् ।

कोटचप्रवेशादिति । साध्याभाववद्वृत्तित्वत्वेन घटादिज्ञानस्यापि प्रतिवन्धकत्वाद् विषयितायाः वृत्त्यनियामकतया तत्संवन्धेनावच्छेदकत्वासंभवाच्च ।

एतेन साध्याभाववद्वृत्तित्वत्वावच्छिन्नविषयतावत्त्वेन प्रतिवन्धकतावच्छेतकत्वोपगमेऽपि न निस्तारः ।

किंच समानाधिकरणधर्मावच्छिन्नसाध्याभाववद्[1]वृत्तित्वत्वावच्छिन्ने प्रतिवन्धकतावच्छेदकतापर्याप्त्यभावसत्त्वाद[2]तिव्याप्तेः, पर्याप्त्यनिवेशे च तादृशविषयतावत्त्वेन व्यधिकरणधर्मावच्छिन्नसाध्याभाववद्वृत्तित्वे प्रतिवन्धकतावच्छेदकतासत्त्वाद[3]व्याप्तेरिति ।

## न्यायरत्नम्

**साध्यतावच्छेदकावच्छिन्नप्रतियोगिताकत्वसंबन्धेन साध्यविशिष्टस्य व्यधिकरणधर्मावच्छिन्नाभावस्याप्रसिद्धचेति । ननु वह्नित्वावच्छिन्नवह्निनिष्ठप्रतियोगिताकत्वेन वह्नित्वेन वह्निघटोभयाभावावगाहिभ्रमविषयस्य तादृशसाध्याभावस्य प्रसिद्धचा तादृशभ्रमीयविषयितामादायाव्याप्तिर्दुर्वारैवेति चेत्, न। तादृशाभाववद्वृत्तिधूम इति ज्ञानस्य अनुमितिप्रतिबन्धकत्वाभावेन प्रतिबन्धकत्वस्य तद्वचावृत्त्यर्थं तादृशाभावीयप्रतियोगितावच्छेदकत्वस्योभयत्वसाधारण्यमङ्गीकृत्य साध्यतावच्छेदकमात्रावच्छिन्नसाध्यनिष्ठप्रतियोगिताकत्वसंबन्धेन साध्यतावच्छेदकावच्छिन्नसाध्यमात्रनिष्ठप्रतियोगिताकत्वसंबन्धन वा अभावांशे साध्यप्रकारकव्यभिचारज्ञानस्यैव**

[1] वृत्तित्वत्वावच्छिन्नविषयत्वावच्छिन्ने––अ.

[2] अतिव्याप्तिः––अ.

[3] अव्याप्तिरिति––अ.

प्रतिबन्धकत्वोपगमस्यावश्यकतया तेन संबन्धेन साध्यविशिष्टस्य तादृश-भ्रमविषयसाध्याभावस्याप्रसिद्धत्वादव्याप्त्यनवकाशात् । वह्नित्वादिना उभयाभावस्तादृशोभयत्वाभाव एवेति तस्य साध्यप्रतियोगिकत्वमेव नास्तीति केचित् । प्रतिबन्धकतावच्छेदककोटचप्रवेशादिति—-साध्याभाव-वद्वृत्तित्वनिष्ठविषयताकत्वेन प्रतिबन्धकत्व एव विषयताविशेषणतया तादृशवृत्तित्वस्यावच्छेदकत्वं संभवति । तदेव न, प्रतिबन्धकत्वस्य तादृश-वृत्तित्वत्वेन घटावगाहिज्ञानसाधारण्याय तादृशवृत्तित्वनिष्ठत्वं विहाय साध्याभाववद्वृत्तित्वत्वावच्छिन्नविषयताकत्वेन प्रतिबन्धकताया वक्तव्य-त्वात् तदवच्छेदककोटौ तादृशवृत्तित्वस्याप्रवेशादिति भावः ।

विषयितापर्याप्त्यभावविवक्षण इति—-अनुमितिप्रतिबन्धकतावच्छे-दिकाया समानाधिकरणधर्मावच्छिन्नसाध्याभाववद्वृत्तित्वत्वेन हेतुनिष्ठ-साध्याभाववद्वृत्तित्वावगाहिज्ञानीयविषयिताया हेतुनिष्ठसाध्याभाववद्-वृत्तित्वत्वविशिष्टे सत्त्वादव्याप्तिरतः पर्याप्तिनिवेशः । तथा च प्रति-बन्धकतावच्छेदकविषयितायाः समानाधिकरणधर्मावच्छिन्नसाध्याभाव-वद्वृत्तित्वत्वहेतुनिष्ठसाध्याभाववद्वृत्तित्वत्वोभयस्मिन् पर्याप्ततया नाव्याप्तिः । न च समानाधिकरणधर्मावच्छिन्नसाध्याभाववद्वृत्तित्वत्वे प्रतिबन्धकतावच्छेदिका यादृशभ्रमीयविषयता तदवच्छेदकत्वमेवेति पर्या-प्तिविवक्षणेऽपि तद्दोषतादवस्थ्यमिति वाच्यम् । विशिष्टविषयकज्ञाने विशिष्टघटकपदार्थेषु विशेषणविशेष्यभावापन्नेषु सर्वेषु तज्ज्ञानीयविषय-तात्वेन विषयतापर्याप्तिरस्तीति मतानुसरणात् । न च तस्य निर्युक्तिकत्वं शङ्कयम् । उपलक्षितवत्ताज्ञानविशिष्टवत्ताज्ञानयोः वैलक्षण्याय उपलक्षित-वत्ताज्ञानीयप्रकारतायाः केवलविशेष्यपर्याप्तत्वस्य विशिष्टवत्ताज्ञानीय-प्रकारताया विशेषणविशेष्योभयपर्याप्तत्वस्यावश्यं वक्तव्यत्वात् ।

## गादाधरी

(५८) हेतुनिष्ठसाध्याभाववद्वृत्तित्वत्वविशिष्टे प्रतिबन्धकतावच्छेदकविष-यितापर्याप्त्यभावनिवेशोपेक्षायां बीजकथनम् ।

**हेतुनिष्ठसाध्याभाववद्वृत्तितात्वविशिष्टे प्रतिबन्धकतावच्छेदकविषयितापर्याप्त्यभावविवक्षणे साध्यप्रतियोगिकाभावमात्रनिवेशे व्यभिचारिण्यतिव्याप्तिः। प्रतियोगितायां साध्यतावच्छेदकावच्छिन्नत्वावगाहिन एव ज्ञानस्यानुमितिप्रतिवन्धकतया तदघटितविषये प्रतिबन्धकतावच्छेदकविषयिताया अपर्याप्तेः। साध्यतावच्छेदकावच्छिन्नसाध्याभावनिवेशश्च न संभवतीति तदुपेक्षितम्।**

कृष्णंभट्टीयम्

पर्याप्त्यभाव इति। समानाधिकरणधर्मावच्छिन्नसाध्याभाववद्वृत्तित्वत्वेन धूमनिष्ठव्यधिकरणधर्मावच्छिन्नसाध्याभाववद्वृत्तित्वभ्रमे या प्रतिवन्धकतावच्छेदकविषयता तद्वत्त्वस्य धूमनिष्ठतादृशवृत्तित्वे सत्त्वादव्याप्तिरतः पर्याप्तिनिवेशः। वह्निसामान्याभाववद्वृत्तित्वत्वव्यधिकरणधर्मावच्छिन्नसाध्याभाववद्[1]वृत्तित्वत्वे तदुभयत्रैव तत्पर्याप्तिः न त्वेकत्रेति नाव्याप्तिः।

न चैवमपि व्याधिकरणधर्मावच्छिन्नाभाववद्वृत्तित्वे या प्रतिबन्धकतावच्छेदकविषयता तदवच्छेदकत्वमेव समानाधिकरणधर्मावच्छिन्नाभाववद्वृत्तितात्वस्येति कथं तदुभयान्तर्भावेन तत्पर्याप्तिरित्यव्याप्तितादवस्थ्यमिति वाच्यम्। उभयत्रापि तादृशविषयतात्वेन पर्याप्तिस्वीकारात्। [2]विषयितावच्छेदकान्तर्भावेन तत्पर्याप्त्यनङ्गीकारे यन्निष्ठवृत्तित्वरूपविशेष्यमात्रस्यैव तत्पर्याप्त्यधिकरणतया विशिष्टसाध्याभाववन्निरूपितत्वान्तर्भावेन तदभावसत्त्वादतिव्याप्तेः। यथा च पर्याप्त्यधिकरणं यच्छुद्ध-

[1] वृत्तित्वे—अ.

[2] विषयतावच्छेदकान्तर्भावेन—अ.

वृत्तित्वं तद्विशेषणीभूतसाध्याभाववन्निरूपितत्वान्तर्भावेन पर्याप्तिः तथेहापीति भावः ।

तत्र धूमसामान्याभाववद्वृत्तित्वत्वावच्छिन्नप्रकारतारूपप्रतिबन्धकतावच्छेदकविषयताश्रयत्वसत्त्वेऽपि धूमत्वावच्छिन्नत्वाघटितरूपावच्छेदेन तत्पर्याप्त्यभावादतिव्याप्तिमाह––साध्येति । विशिष्ट[1]विषयितायां प्रतिबन्धकतावच्छेदकत्वाभावनिवेशे धूमप्रतियोगिकाभाववद्वृत्तित्वविषयिताया धूमसामान्याभाववद्वृत्तित्वविषयितात्वेन प्रतिबन्धकतावच्छेदकत्वान्न तत्रातिव्याप्तिः । प्रयोजनाभावेन अतिव्यापकत्वेन च तत्पर्याप्त्यनिवेशादिति भावः । तदघटितेति । साध्यतावच्छेदकावच्छिन्नत्वाघटितेत्यर्थः ।

अनुमितिसामान्यपरमिति ।

## गादाधरी

(५९) प्रकृतानुमितिसामान्यविवक्षायाः प्रयोजनम् ।

**व्यधिकरणधर्मावच्छिन्नसाध्याभाववद्वृत्तित्वविषयितायां प्रतिबन्धकतावच्छेदकत्वाभावादतिव्याप्तिः अतः सामान्ये इत्युक्तम् ।**

**प्रकृतानुमितिपदं प्रकृतानुमितिसामान्यपरम् । अन्यथा व्यधिकरणधर्मावच्छिन्नसाध्याभावावद्वृत्तित्वाभावविषयकसमूहालम्बनात्मकप्रकृतानुमितिप्रतिबन्धकतावच्छेदकत्वस्य हेतुनिष्ठतादृशसाध्याभाववद्वृत्तित्वविषयितायामपि सत्वात् सद्धेतावऽपि लक्षणगमनासंभवात् । एवं च प्रकृतेत्यनुपादाने कामिनीजिज्ञासादौ प्रसिद्धा या अनुमितिसामान्यप्रतिबन्धकता तदवच्छेदकत्वाभावो**

[1] विषयतायाम्––अ.

**धूमाभाववद्वृत्तित्वादिविषयितायामक्षत एव, तद्विषयकज्ञानस्यापि अन्यलिङ्गकान्यसाध्यकान्यसंसर्गकानुमित्यप्रतिबन्धकत्वात्, अतः प्रकृतेति तत्साध्यकतद्धेतुकतत्संसर्गकपरम्। सद्धेतुनिष्ठव्यधिकरण-धर्मावच्छिन्नसाध्याभाववद्वृत्तित्वविषयिताया अनुमितिप्रतिबन्ध-कस्वरूपासिद्ध्याादिज्ञानवृत्तित्वादसंभवः स्यात्, अतोयन्निष्ठसा-ध्याभाववद्वृत्तित्वविषयकज्ञानसामान्यस्यानुमितिप्रतिबन्धकत्व -मुपेक्ष्य निरुक्तविषयितासामान्येऽनुमितिप्रतिबन्धकतावच्छेदकत्वा-भावपर्यन्तानुधावनम्।**

कृष्णंभट्टीयम्

उच्छृङ्खलास्तु——स्वरूपसंवन्धरूपावच्छेदकत्वघटितप्रकृतानुमिति - त्वावच्छिन्नप्रतिवध्यताप्रवेशे तद्धेतौ तत्संसर्गघटिततत्साध्यव्यभिचारग्रहानु-त्तरानुमितित्वस्यैव तादृशप्रतिवध्यतावच्छेदकतया तत्र विषयित्वानिवेशाद-सङ्गतिः, अतः तथाविधानुमितित्वावच्छिन्नप्रतिवध्यतानिवेशपरमेवेदमुक्त-मित्याहुः। तदसत्——एतन्मते वह्निर्धूमव्यभिचारीति ज्ञानोत्तरवह्निर्धूम-व्यभिचारीति ज्ञानस्थलेऽपि व्यभिचारज्ञाननाशोत्तरमेवानुमितिरुपेयते। अन्यथा तत्रैव व्यभिचारज्ञानप्रतिवन्धकता भज्येतेति तादृशानुत्तरत्वघटित-रूपस्य प्रतिवध्यतानवच्छेदकत्वात्। एवं च स्वरूपसंवन्धरूपावच्छिन्नत्व-घटिततत्साध्यकतद्धेतुकतत्संसर्गकानुमितित्वावच्छिन्नप्रतिवध्यताप्रवेशे इन्धनत्वादिना वह्न्यभाववद्वृत्तित्वज्ञानदशायामिन्धनवह्न्यनुमितेरनुद-यादव्याप्तिः। साध्यतावच्छेदके विधेयतावच्छेदकतापर्याप्तिनिवेशेऽपि न निस्तारः। वाधनिश्चयादेस्तद्वत्तानुमितित्वस्य प्रतिवध्यतावच्छेदकत्व-वादिमते तादृशविषयिताया व्यावर्तकधर्मदर्शनमुद्रया प्रतिवन्धकतावच्छेद-कत्वाद् अतः अनुमितिपदमनुमितिसामान्यपरं कृतम्।

मम तु भाति——व्यावर्तकधर्मदर्शनमुद्रया प्रतिवन्धकताप्रयुक्तप्रति-वध्यतायाः पर्वतादौ वह्न्याद्यनुमित्यवृत्तित्वेऽपि यत्र विषयविशेषे हेतुभिन्न-

विशेष्यकतत्साध्याद्यनुमित्याद्यप्रसिद्धिः, तत्र तस्या तद्वत्ताज्ञानसामान्यवृत्तितया अनुमितिपदस्य तत्सामान्यपरत्वेऽपि न निर्वाह इति ज्ञानवैशिष्ट्यानवच्छिन्नप्रतिबन्धकता उपेया । एवं च स्वरूपसंबन्धरूपावच्छेदकताप्रवेशे तद्धेतुकानुमितित्वनिवेशे प्रयोजनाभावात् साध्यतावच्छेदकावच्छिन्नविषयित्वावच्छिन्नप्रतिवध्यताप्रवेशे व्यधिकरणधर्मावच्छिन्नसाध्याभाववद्वृत्तित्वाभावात्मकसाध्यतावच्छेदकावच्छिन्नवत्ताज्ञानं तादृशाभावत्त्वेन भासमानसाध्यतावच्छेदकावच्छिन्नविषयिताकज्ञानं चादायासंभव इति तस्य तत्सामान्यपरत्वमावश्यकमेवेति । तत्साध्यकत्वं––तत्साध्यतावच्छेदकपर्याप्त[1]विधेयतावच्छेदकत्वम् । तेन घटत्वविशिष्टधूमवानित्यादेः धूमव्यभिचारनिश्चयाप्रतिवध्यत्वेऽपि नातिव्याप्तिः ।

वस्तुतस्तु धूमव्यभिचारस्य धूमत्वावच्छिन्नविधेयताविरहप्रयोजकविषयताशालितया तस्य प्रतिवध्यत्वं दुर्वारम् ।

तद्धेतुकेति । न चैवमपि धूमव्यभिचारिवह्निमान् धूमव्यभिचारितद्वह्निमांश्च पर्वत इति ज्ञानजन्यानुमितेः वह्निहेतुकत्वाद् अतिव्याप्तिः, साध्यव्याप्तिविशिष्टहेतुमत्ताज्ञानजन्यत्वोक्तौ तु आत्माश्रय इति वाच्यम् । प्रकृतहेतुतावच्छेदकावच्छिन्न[2]विषयिताघटितधर्मावच्छिन्नजन्यत्वस्य तदर्थत्वात् । व्याप्यत्वानवच्छिन्नवह्निविषयतायाश्च जनकतानवच्छेदकत्वात् । धूमव्याप्यार्द्रेन्धनजवह्निधूमभिचारि[3]वह्निज्ञानवारणं तु पर्याप्ति प्रवेश्यैव । अनुमितिपदस्य तज्जनकपरत्वे तु तत्साध्यक तत्संसर्गकानुमितिजनकतावच्छेदकीभूतप्रकृतहेतुतावच्छेदकावच्छिन्नविषयिताघटितधर्मव्यापकत्वं प्रतिवध्यतायां प्रवेश्यम् । समानासमानाधिकरणधर्मावच्छिन्नसाध्याभावद्वयवदवृत्तित्वज्ञानस्यापि जनकतया असंभवः । स्वरूपसंबन्धरूपतादृशधर्मा-

[1] विधेयतावच्छेदकताकत्वम्––अ.

[2] विषयता––अ.

[3] ज्ञानवारणमि इत्येव––अ.

वच्छेद्यतावत्प्रतिबन्ध्यतानिवेशे च प्राग्वत् व्यापकत्वनिवेशः। एवं च कामिनीजिज्ञासादावेवतादृशानुमिति जनकसामान्यप्रतिबन्धकतासत्त्वादति-व्याप्तिरतो घटितान्तनिवेशः।

## न्यायरत्नम्

प्रकृतानुमितिसामान्यपरमिति। नन्वनुमितौ साध्याभाववद्वृत्तित्व-विषयिताशून्यत्वविवक्षयैव उक्तसमूहालम्बनवारणात् सामान्यपदं व्यर्थम्। न च घटत्वेन वह्न्यभाववद्वृत्तिधूमकालीनपर्वतो वह्निमानित्यनुमिति-निरूपिता या तादृशपर्वतो वह्न्यभाववानिति बाधज्ञाननिष्ठप्रतिबन्धकता तदवच्छेदकत्वस्य हेतुनिष्ठसाध्याभाववद्वृत्तित्वविषयित्वे सत्त्वादव्याप्ति-रतः सामान्यपदोपादानमावश्यकमिति वाच्यम्। साध्याभाववद्वृत्तित्व-विषयत्वपूर्वोक्तविषयत्वान्यतरशून्यत्वस्यव विवक्षितत्वात्। यत्तु यादृश-स्थले तादृशान्यतरविषयताकैवानुमितिः नान्या तत्र तादृशानुमित्यप्रसिद्धेः तथानिवेशासंभव इति तन्न तादृशस्थलस्वीकारे सिद्धान्तेऽप्यव्याप्तेः दुर्वारत्वात् तादृशस्थलापलापस्यैव कर्तव्यत्वात्। अत्र केचित्––यत्र वह्नि-सामान्याभाववद्वृत्तित्वेन धूमावगाह्येवानुमितिः प्रसिद्धा तत्र तादृशान्य-तरविषयिताशून्यानुमित्यप्रसिद्ध्या त्वन्मतेऽव्याप्तिः। सिद्धान्ते हेतुनिष्ठ-साध्याभाववद्वृत्तित्वविषयितायां तादृशानुमितिप्रतिबन्धकतावच्छेदकत्वा-भावेन लक्षणसमन्वय इति विशेष इति सामान्यपदमेव ज्याय इति वदन्ति। वस्तुतस्तु––अनुमितिनिष्ठप्रतिबध्यतायां तादृशान्यतरविषयितानवच्छिन्न-त्वदानेन सकलदोषवारणे सामान्यपदं व्यर्थमिति प्रतिभाति।

## गादाधरी

(६०) स्वरूपसंबन्धरूपावच्छेदकत्वनिवेशनम्।

अवच्छेदकत्वं च स्वरूपसंबन्धविशेषः। न च धूमाभाव-वद्वृत्तित्वत्वेन घटादिविषयकज्ञानस्यानुमितिप्रतिबन्धकतया

**धूमाभाववद्वृत्तित्वत्वविशिष्टविषयताशालिज्ञानत्वेन प्रतिबन्धकताकल्पनस्यासंभवात् तादृशविषयितायां प्रतिबन्धकतानिरूपितस्वरूपसंबन्धरूपावच्छेदकत्वासत्वेनातिव्याप्तिरिति वाच्यम् । धूमाभाववद्वृत्तित्वत्वप्रकारतानिरूपितविषयिताशालिज्ञानत्वेन भ्रमसाधारणप्रतिबन्धकताकल्पनसंभवात्, तादृशविषयितात्वेन वास्तवधूमाभाववद्वृत्तित्वत्वविशिष्टनिरूपितविषयिताया अपि प्रतिबन्धकतावच्छेदकत्वस्याक्षतत्वात् ।**

**न चैवं समानाधिकरणधर्मावच्छिन्नसाध्याभावव्यधिकरणधर्मावच्छिन्नसाध्याभावद्वयविशेषिताधिकरणवृत्तित्वावगाहिनः समानाधिकरणधर्मावच्छिन्नाभावांशे भ्रमरूपज्ञानस्य विषयिताया व्यधिकरणधर्मावच्छिन्नसाध्याभाववद्वृत्तित्वत्वविशिष्टनिरूपितत्वात् समानाधिकरणधर्मावच्छिन्नसाध्याभावविषयितानिरूपिताधिकरणविषयितानिरूपिताधेयत्वविषयितात्वेन च प्रतिबन्धकतावच्छेदकत्वादव्याप्तिरिति वाच्यम् । हेतुसामानाधिकरण्यविशिष्टसाध्याभावत्वविशिष्टविषयितायां प्रतिबन्धकतावच्छेदकत्वाभावस्य विवक्षणीयत्वात् । उक्तभ्रमे च समानाधिकरणधर्मावच्छिन्नाभावविषयितायाः तादृशविशिष्टनिरूपितत्वाभावेन तस्या एव च प्रतिबन्धकतावच्छेदकत्वेनाव्याप्त्यनवकाशात् ।**

## कृष्णंभट्टीयम्

हेत्विति । हेतुनिष्ठसाध्याभाववद्वृत्तित्वस्येव हेतुसामानाधिकरण्यविशिष्टसाध्यसामान्याभावस्यापि व्यभिचारत्वान्नातिव्याप्तिः । उक्तभ्रमे च । समानासमानाधिकरणधर्मावच्छिन्नाभावौ हेतुसमानाधिकरणाविति भ्रमे च । यथोक्तनिवेशेनैव शङ्कितभ्रमनिरासात् ।

इदं तु बोध्यम्––यन्निष्ठत्वं साध्याभाववद्वृत्तित्वव्यावर्तकमेव । न तु तस्य विषयितानिरूपकतावच्छेदकत्वमपि अपेक्षितम् । प्रयोजनाभावात् । धूमव्यभिचारीयमुख्यविशेष्यताया अनवच्छेदकत्वेऽपि प्रकारितारूपविषयितायाः सामान्यान्तर्गततयैव अनतिप्रसङ्गात् । एवं साध्याभावनिष्ठे हेतुसामानाधिकरण्ये विषयितानिरूपकतावच्छेदकत्वं न देयम् । तथा च स्वनिरूपकहेतुसमानाधिकरणीभूतसाध्याभावनिष्ठसाध्यावच्छिन्ननिरूपकताकविषयितेत्यर्थ इति ।

एकेति । प्रकारताभेदे विशेष्यताभेदाददोषः । अप्रामणिकत्वादिति । प्रकारत्वादेः संसर्गताद्वयनिरूपितत्वस्य क्वापि प्रमायामदृष्टत्वात् । भ्रमत्वस्य प्रकारतावच्छेदकतत्तत्संबन्धेन तत्तत्प्रकाराभावकुटघटिततया अव्याप्तेश्च । यदि च प्रमायां तथाविधप्रकारताया असंभवेऽपि भ्रमे तादृशप्रकारतायां न बाधकं, प्रकारतावच्छेदकतत्तत्संबन्धेन प्रकाराभावसमुदायघटकाभावघटितं भ्रमलक्षणं च, तदाप्याह––[1]प्रामाणिकत्वे त्विति । संसर्गतापर्याप्त्यभावादाह––द्वयेति ।

## गादाधरी

(६१) **सद्धेतावव्याप्त्याशङ्कापरिहारौ ।**

**अथ यत्र ज्ञाने हेतुसमानाधिकरणतया भासमाने व्यधिकरणधर्मावच्छिन्नाभावे व्यधिकरणधर्मावच्छिन्नप्रतियोगिताकत्वसाध्यतावच्छेदकावच्छिन्नप्रतियोगिताकत्वोभयसंबन्धेन साध्यस्यैका प्रकारता तादृशज्ञानीयव्यधिकरणधर्मावच्छिन्नाभावीयविषयितायां साध्यतावच्छेदकावच्छिन्नप्रतियोगिताकत्वसंबन्धेन साध्यविशिष्टाभावनिरूपितत्वस्य विषयीभवदभावे साध्यतावच्छेदकावच्छिन्नप्रतियोगिताकत्वासत्वेनासंभवेऽपि व्यधिकरणधर्मावच्छिन्न**

[1] प्रमाणिकत्वे चेति पाठो गादाधर्यां वर्तते––स्व.

**प्रतियोगिताकत्वसंबन्धेन साध्यविशिष्टाभावनिरूपितत्वस्य साध्यतावच्छेदकावच्छिन्नप्रतियोगिताकत्वसंबन्धविषयितानिरूपितविषयितात्वेनानुमितिप्रतिबन्धकतावच्छेदकत्वस्याक्षतत्वादव्याप्तिर्दुर्वारैवेति चेत्, न, तादृशभ्रमस्याप्रामाणिकत्वात् । प्रामाणिकत्वे च संसर्गीयविषयिताद्वयानिरू[1]पकतया लक्षणघट[2]कत्वेनाभावविषयितायाा विशेषणीयतया सामञ्जस्यात् ।**

## कृष्णंभट्टीयम्

आवश्यकमिति । उच्छृङ्खल[3]विषयिताकसाध्याभावयोः निवेशासंभवादिति शेषः । संवन्धत्वेन संवन्धस्य लक्षणाघटकत्वादाह––स चेति । यत्किंचित्संवन्धोक्तौ व्यधिकरणधर्मावच्छिन्नप्रतियोगिताकत्वसंबन्धेन धूमविशिष्टाभावमादायातिव्याप्तेः । केनचिद्रूपेण साध्यव्यापकतावच्छेदकत्वेन इन्धनत्वेन वह्न्यभावादिर्लक्षणघटकः । सत्तावान् जातेरित्यादौ सत्तात्त्वेन सत्ताद्रव्यत्वोभयाभावः । अभानादिति । वह्निर्नास्ति इन्धनत्वेन वह्निर्नास्तीत्यादौ निर्विशेषितवह्नित्वेन्धनत्वावच्छिन्नप्रतियोगिताया एव संबन्धघटकतया व्यापकतावच्छेदकत्वविशिष्टधर्मघटितसंबन्धेनाभावांशे साध्यनिवेशासंभवात् । प्रतियोगितेति । प्रतियोगिताविषयकत्वेनाभिमतस्याभावज्ञानस्येत्यर्थः ।

प्रतियोगिमत्ताज्ञानाविरोधितयेति । अवच्छेदकेत्यादावयं हेतुः । कालिकसंवन्धेन घटत्वविशिष्टं यत् संयोगादिना तद्वत्ताज्ञानं प्रति कालिकसंबन्धावच्छिन्नघटत्वनिष्ठावच्छेदकताघटितसंबन्धेन घटविशिष्टसंयोगसंवन्धावच्छिन्नाभाववत्तानिश्चयत्वेन विरोधिता । एवं समवायादिकं निवेश्य

1 अनिरूपकत्वेन इति––क. न्यायरत्ने अनिरूपकत्वेनेति प्रतीकधारणम्––स्व.

2 लक्षणघटकाभावविषयितायाः––अ.

3 विषयताक––अ.

पृथगेव विरोधिता । अन्यथा समवायेन घटत्वविशिष्टस्य पटत्वावच्छिन्न-प्रतियोगितासंबन्धेन अभाववत्ताज्ञानस्य सकलसंबन्धेन घटत्वविशिष्टो यः तद्वत्ताज्ञानविरोधित्वापातात् । तत्संबन्धेन घटत्वविष्टो यः तद्वत्ताज्ञाने तत्संबन्धावच्छिन्नावच्छेद्यताविशिष्टप्रतियोगितासंबन्धेन घटविशिष्टाभाव-वत्ताज्ञानत्वेन तु न विरोधित्वम् । घटाभावो घटसमानाधिकरण इत्य-नाहार्यालीकज्ञानवारणाय प्रतिबन्धकविशेषस्येव अन्यधर्मावच्छिन्नस्याभावे अन्यधर्मावच्छिन्नप्रतियोगिताघटितसंबन्धेनालीकस्यापि भानस्य वारणाय प्रकारतावच्छेदकधर्मान्तर्भावेन संसर्गतायाः स्वीकर्तव्यतया प्रतियोगिता-विशेषत्वेनैव संसर्गावगाहितासिद्धेः । तथा च तत्संबन्धावच्छिन्नावच्छेद्य-तावत्प्रतियोगितात्वरूपसामान्यरूपेण तस्याः संसर्गतायाः अप्रामाणिकत्वे सुतरामेव शुद्धप्रतियोगितात्वादिना तस्या अप्रामाणिकतया अवच्छिन्नत्वा-विशेषितप्रतियोगितासंबन्धेन साध्यविशिष्टाभावनिवेशो न संभवतीति भावः ।

ननु स्वरूपसत्त्या वस्तुगत्या अवच्छेदकावच्छिन्नत्ववत्प्रतियोगिताया एव प्रतियोगिसंसर्गता । अभावज्ञानं च विशेष्ये विशेषणमिति रीत्या । तच्च अवच्छेदकविशिष्टप्रकारकत्वेन प्रतिबन्धकम् । निर्विकल्पकोत्तरं घटो नास्तीति प्रत्यये इष्टापत्तिरतस्तत्रानुभवविरोधमाह––तज्ज्ञानविरो-धिन इति ।

तज्ज्ञानाविरोधिन इति पाठे [1]तु अवच्छेदकावच्छिन्नत्वविशेषितप्रति-योगितासंसर्गकं [2]प्रतियोगिमत्ताज्ञानं विरोधि । परं तु तदविशेषितप्रतियोगि-तासंसर्गकं लक्षणघटकमिति शङ्काभासं दूषयतीत्यवतार्यम् ।

परं तु प्रथमतोऽनुभवविरुद्धस्य तादृशज्ञानस्य प्रतियोगिमत्ताज्ञाना-विरोधित्वव्युत्पादनादसङ्गतिरतः घटाभावादिज्ञानस्य घटत्वाद्यवच्छिन्न-

[1] तुकारो नास्ति––अ.
[2] प्रतियोगिमत्ताज्ञानविरोधि––अ.

त्वाविशेषितप्रतियोगित्वसंसर्गावगाहित्वे घटत्वाद्यवच्छिन्नज्ञानाविरोधित्वापत्तिः प्रथमत उक्ता । तत्र [1]इष्टापत्तेर्वारणायानुभवविरुद्धत्वोत्कीर्तनमिति बोध्यम् ।

येन संबन्धेन प्रमेयत्वादिकमवृत्ति तत्संबन्धावच्छिन्नप्रतियोगितावच्छेदकताकाभावसत्त्वादाह––एवमिति । अनुमितिविरोधितया । हेतुसामानाधिकरण्यविशिष्टसाध्यतावच्छेदकविशिष्टाभाव[2]विषयितात्वविशिष्टवत्त्वेनेत्यादिः । ननु उक्तसंबन्धेन साध्यतावच्छेदकमात्रविशेषिताभावनिवेशान्न दोषः । स्वावच्छिन्नप्रतियोगिताकत्वसंबन्धेनाभावांशे वह्नित्वभाने प्रतियोगितांशे बाधितवह्निनिष्ठत्वभाने अभावस्य वह्निवह्नित्वोभयविशेषितत्वनियमाद् वह्नित्वमात्रविशेषितत्वाभावादित्याह––एवमिति ।

न संभवतीति । प्रतियोगितावच्छेदकमात्रविशेषिताभावप्रत्ययस्यैवालीकतया लक्षणवाक्यार्थबोधस्यालीकत्वापत्तरिति भावः ।

## न्यायरत्नम्

**स्वरूपासिद्ध्यादीति । अथ धूमाभाववान् पर्वत इत्यादि स्वरूपासिद्धिज्ञाननिष्ठप्रतिबन्धकतानिरूपितप्रतिबद्ध्यतायास्तल्लिङ्गकतत्साध्यकतत्संसर्गकमनुमितित्वव्यापकत्वं न संभवति । तादृशानुमितित्वस्य द्रव्यं वह्निमत् प्रमेयं वह्निमदित्याद्यनुमितिसाधारण्यात्, तत्र च निरुक्तस्वरूपासिद्धिज्ञानप्रतिबद्ध्यताया अभावात् । न च तल्लिङ्गकत्वं प्रकृतपक्षतावच्छेदकावच्छिन्नविशेष्यकपरामर्शविशिष्टत्वमिति वाच्यम् । साध्यव्याप्यहेतुविषयकपरामर्शत्वस्य व्यभिचारज्ञानप्रतिबध्यतावच्छेदकत्वेनैवोपपत्तौ लक्षणे तन्निवेशे प्रयोजनाभावात् । धूमाभाववान् पर्वत इति**

[1] इष्टापत्तिवारणाय––अ.

[2] विषयतात्व––अ.

ज्ञानानन्तरमपि वह्निव्याप्यधूमवद्द्रव्यमित्यादिपरामर्शाद् द्रव्यं वह्निमदित्याद्यनुमित्युत्पत्त्या तादृशपरामर्शत्वस्य स्वरूपासिद्धिज्ञानप्रतिबध्यतावच्छेदकत्वाभावादिति चेत्---अत्र केचित्---स्वरूपासिद्धिज्ञानस्य लाघवेन धर्मितावच्छेदकप्रत्यासत्त्यैव प्रतिबन्धकत्वकल्पनात् । तत्प्रतिबध्यतावच्छेदककोटौ तल्लिङ्गकत्वमात्रस्य निवेशेन प्रतिबद्ध्यताया व्यापकत्वभङ्गविरहात् । न च व्यभिचारज्ञानप्रतिबद्ध्यतावच्छेदकस्य हेत्वाभासप्रथमलक्षणोक्तरीत्या हेतुधर्मिकव्यभिचारज्ञानविशिष्टान्यत्वरूपस्यैव वक्तव्यत्वेन स्वरूपासिद्धिज्ञानप्रतिबद्ध्यतावच्छेदकस्य ततोऽन्यत्वेन च व्यापकत्वभङ्गो दुर्वार इति वाच्यम् । केवलान्वयिनि व्यभिचारस्याप्रसिद्ध्या प्रकृतलक्षणे तल्लिङ्गविषयकपरामर्शविशिष्टत्वरूपस्यैव तल्लिङ्गकत्वस्य निवेशनीयत्वात्, तन्मात्रविषयकत्वस्यैव तदर्थत्वाच्च, न व्यभिचारज्ञानानन्तरलिङ्गद्वयावगाहिपरामर्शजन्यानुमितौ व्यापकत्वभङ्गः । इत्थं च धूमाभाववान् पर्वत इति स्वरूपासिद्धिज्ञानानन्तरं धूममात्रलिङ्गकानुमित्यनुत्पत्त्या तल्लिङ्गकानुमितित्वव्यापकत्वस्य स्वरूपासिद्धिज्ञानप्रतिबन्धकतायां सत्त्वादसंभव इति ग्रन्थकृदभिप्राय इत्याहुः ।

भ्रमस्याप्रामाणिकत्वादिति---द्वित्वेन संसर्गतानभ्युपगमात् तादृशज्ञानस्याननुभूतत्वाद्वा प्रत्येकरूपेण भाने प्रकारताभेदादिति भावः । तदभ्युपगमे त्वाह---संसर्गीयविषयिताद्वयानिरूपकत्वे[1]नेति---स्वनिरूपकत्वस्वनिरूपकतावच्छेदकप्रकारतात्वावच्छिन्ननिरूपकताकस्वभिन्नसंसर्गतानिरूपकत्वैतदुभयसंबन्धेन यत्किंचित्संसर्गताविशिष्टान्यत्वं तादृशविषयताद्वयानिरूपकत्वम् ।

## गादाधरी

(६२) साध्यतावच्छेदकविशेषितस्याभावस्य निवेशो न संभवतीत्याक्षेपः ।

[1] अनिरूपकतयेत्यापिमूलपाठः---स्व.

अथ साध्यरूपविशेषणविशिष्ट[1]स्याभावस्य विषयितानिरूपकतया लक्षणघटकत्वे साध्याभावयोः संबन्धस्य [2]संबन्धविधया लक्षणघटकत्वमावश्यकम्। स च संबन्धः साध्यतावच्छेदकावच्छिन्नप्रतियोगिताकत्वरूपो व्यधिकरणधर्मावच्छिन्नप्रतियोगिताकत्वरूपश्चाननुगत इति प्रथमस्य निवेशे केवलान्वयिनि साध्यविशेषिताभावस्यैवाप्रसिद्धिः। व्यतिरेकिसाध्यकसद्धेतौ च तादृशहेतुसमानाधिकरणाभावाप्रसिद्धिरित्यसंभवः। चरमस्य निवेशे च सर्वत्र व्यभिचारिण्यतिव्याप्तिः। प्रतियोगितावच्छेदकधर्माणां [3]चो[4]पलक्षणीभूतेन केनचिद्रूपेणा [5]नुगमय्य [6]निवेशो न संभवति। प्रतियोगितावच्छेदकोपलक्षणस्य संबन्धघटकतया अभानात्।

न चावच्छेदकावच्छिन्नत्वाविशेषितप्रतियोगितायाः[7] संबन्धतया निवेशात् नाननुगमनिबन्धनो दोष इति वाच्यम्। अवच्छेदकावच्छिन्नत्वाविशेषितप्रतियोगिताविषयकाभावज्ञानस्य प्रतियोगिमत्ताज्ञानाविरोधितया तज्ज्ञानाविरोधिनः प्रतियोगिविशेषिताभावज्ञानस्य [8]चानुभवविरुद्धतया अवच्छेदकावाच्छिन्नत्वाविशेषितप्रतियोगितायाः संसर्गतया अभानात्।

1 विशिष्टाभावस्य––अ. 2 संबन्धतया––अ. 3 एव––अ.

4 साध्यतावच्छेदकावच्छिन्नव्यापकतावच्छेदकरूपधर्मोपलक्षितः––रा.

5 अनुगमेऽपि तेन रूपेण तेषाम्––अ.

6 साध्यतावच्छेदकावच्छिन्नव्यापकतावच्छेदकरूपावच्छिन्नप्रतियोगिताकत्वसंबन्धेन––रा.

7 प्रतियोगितायाः एव––अ.

8 चकारो नास्ति––अ.

**न च स्वावच्छिन्नप्रतियोगिताकत्वसंबन्धेन साध्यतावच्छेदकविशेषित एवाभावो निवेश्यः, न तु साध्यविशेषितः, वह्नित्वादिना घटाद्यभाव एव वह्न्यादिसाध्यकधूमादिहेतुकस्थले लक्षणघटक इति वाच्यम् । प्रमेयत्वाद्यवच्छिन्नसाध्यकस्थले तादृशाभावाप्रसिद्धेः । एवं स्वावच्छिन्नप्रतियोगिताकत्वसंबन्धेन वह्नित्वादिविशेषिते वह्नित्वादिना घटादेरभावे भासमाने यत्र संबन्धघटकप्रतियोगितायां बाधितस्य वह्न्यादिनिष्ठत्वस्य भानं तादृशज्ञानीयाभावविषयिताया उक्तसंबन्धेन साध्यतावच्छेदकविशिष्टाभावनिरूपिततया अनुमितिविरोधितया चानुपपत्तेर्दुवारत्वात् । स्वावच्छिन्नसाध्यवृत्तित्वविशिष्टप्रतियोगितानिवेशे च सर्वत्र सद्धेतावप्रसिद्धिः । एवं प्रतियोगिविशेष्यतापन्न एवाभावे प्रतियोगिपारतन्त्र्येण समानाधिकरणधर्मस्य स्वातन्त्र्येण व्यधिकरणधर्मस्य स्वावच्छिन्नप्रतियोगिताकत्वसंबन्धेन प्रकारत्वं प्रामाणिकं, न तु प्रतियोगिविशेष्यतानापन्ने । वह्निर्नास्ति वह्नित्वेन घटो नास्तीत्येव प्रतीतेः, न तु वह्नित्वेन नास्तीति । तथा च विशिष्य प्रतियोग्यविशेषितस्योक्तसंबन्धेन साध्यतावच्छेदकविशेषितस्याभावस्य विषयित्वनिरूपकतया निवेशो न संभवत्येवेति चेत् ।**

कृष्णंभट्टीयम्

स्वं——विषयिता; तन्निरूपको योऽभावः तन्निष्ठो यः संवन्धः तद्धर्मावच्छिन्नप्रतियोगिताकत्वादिः तत्प्रतियोगि यत्साध्यं तन्निष्ठा निरूपकतावच्छेदकता यस्याः तत्त्वेनेत्यर्थः । वह्निमान् धूमादित्यादौ घटत्वावच्छिन्नवह्न्यभावविषयितैव तादृशं स्वं तन्निरूपकाभावे घटत्वावच्छिन्नप्रतियोगिताकत्वसंवन्धेन वह्नेर्वर्तमानत्वात्[1] लक्षणसमन्वयः ।

[1] वर्तमानत्वाद् अत्र लक्षणसमन्वयः——अ.

अत्र सर्वत्र हेतुसामानाधिकरण्य[1]प्रकारतानिरूपितवह्नित्वावच्छिन्नावच्छेदकतानिरूपितवह्नित्वावच्छिन्नवह्निनिष्ठप्रतियोगिताकत्वीयसांसर्गिकविषयितानिरूपिताभावविषयितात्वेन [2]प्रतिबन्धकत्वावच्छेदकत्वम् । एवं च घटत्वेन वह्न्यभावादौ संबन्धद्वयेन वह्निभाननिबन्धनदोषवारणाय सांसर्गिकविषयिताद्वयानिरूपकत्वं बोध्यम् । एवमुत्तरत्रापि ।

## न्यायरत्नम्

**उपलक्षणीभूतेन केनचिदिति––अवच्छेदकत्वप्रमेयत्वादिनेत्यर्थः । अत्र यद्यपि समानाधिकरणधर्मावच्छिन्नप्रतियोगिताकत्वव्यधिकरणधर्मावच्छिन्नप्रतियोगिताकत्वान्यतरसंबन्धेन साध्यवैशिष्टयनिवेशशङ्का संभवति, तथापि समानाधिकरणधर्माबच्छिन्नप्रतियोताकत्वस्य व्यधिकरणधर्मावच्छिन्नप्रतियोगिताकत्वस्य चैकस्यानुगतस्याभावाद् यावन्तः स्वसमानासमानाधिकरणधर्मावच्छिन्नप्रतियोगिताकाभावास्तावदन्यतमत्वेनैव संबन्धविवक्षणं कर्तव्यम् । तत्र च वक्ष्यमाणस्वनिरूपकहेतुसमानाधिकरणेत्यादिविवक्षापेक्षया अथ च साध्यप्रतियोगिको हेतुसमानाधिकरणाभावानुयोगिक इत्यादिविवक्षापेक्षया गौरवमिति तत्याग इति ध्येयम् । निवेशो न संभवतीति–– हेतुसमानाधिकरणसाध्यतावच्छेदकविशिष्टनिरूपितविषययितायामनुमितिप्रतिबन्धकतावच्छेदकत्वाभावस्यैव व्याप्तितया तज्ज्ञानस्य च प्रतियोग्यविषयकसाध्यतावच्छेदकविशिष्टाभावविषयकतया प्रतियोग्यविषयकप्रतियोगितावच्छेदकविषयकाभावबुद्धेरप्रसिद्धेः तादृशव्याप्तिज्ञानं न संभवतीतीति भावः ।**

## गादाधरी

(६३) उक्ताक्षेपसमाधानम् ।

[1] प्रकारिता––अ.

[2] प्रतिबन्धकतावच्छेदकत्वम्––अ.

मैवम्; प्रतियोग्यादिविशेषिताभावीयत्वेन विशिष्टनिरूपितविषयिता लक्षणे न निवेश्यते। अपि तु स्वनिरूपकहेतुसमानाधिकरणाभावनिष्ठो यः संबन्धः तत्प्रतियोगिसाध्यनिष्ठतत्संबन्धावच्छिन्ननिरूपकतावच्छेदकताकत्वेन। यत्र हेतुसमानाधिकरणघटत्वावच्छिन्नवह्न्याद्यभावे वह्नित्वाद्यवच्छिन्नप्रतियोगिताकत्वसंबन्धेन वह्न्यादेः साध्यस्य प्रकारता तादृशज्ञानविषयितानिरूपकाभावनिष्ठो न निरुक्ततन्निरूपकतावच्छेदकतावच्छेदकः संबन्ध इति तद्विषयिताव्युदासः। यत्र वह्नित्वावच्छिन्नघटाद्यभावे तन्निष्ठवह्नित्वावच्छिन्नप्रतियोगिताकत्वमेव वह्नेः संबन्धतया भासते, तत्र तत्संबन्धप्रतियोगी न वह्निः, अपि तु घट एवेति साध्ये वास्तवतत्संबन्धप्रतियोगित्वनिवेशात् तादृशज्ञानीयाभावविषयिताव्युदासः। साध्यनिवेशाद् यत्र वह्नित्वेन घट एव वह्नित्वावच्छिन्नप्रतियोगिताकत्वसंबन्धेन तत्संबन्धानुयोगिनि वह्नित्वावच्छिन्नप्रतियोगिताकघटाभावे प्रकारः तादृशज्ञानीयाभावविषयितायाः तत्संबन्धप्रतियोग्यवच्छिन्ननिरूपकताकत्वेऽपि अनुमितिविरोधित्वेऽपि च न दोषः। यत्र घटत्वावच्छिन्नवह्न्यभावे घटत्वावच्छिन्नप्रतियोगिताकत्वमेव वह्नित्वावच्छिन्नप्रतियोगिताकत्वत्वेन वह्नेः संसर्गतया भासते तादृशज्ञानस्य प्रमाणिकत्वे साध्यप्रतियोगिको हेतुसमानाधिकरणाभावानुयोगिको [1]यद्धर्मावच्छिन्नप्रतियोगिताकत्वत्वविशिष्टसंबन्धः तद्धर्मावच्छिन्नप्रतियोगिताकत्वत्वविशिष्टसंबन्धावच्छिन्नसाध्यनिष्ठनिरूपकतावच्छेदकताकत्वं विवक्षणीयमिति दिक्।

[1] यद्धर्मावच्छिन्नप्रतियोगिताकत्वम् संबन्धः—अ.

कृष्णंभट्टीयम्

तादृशाभावप्रतियोगिसाध्यनिष्ठनिरूपकतावच्छेदकताकत्वेन तादृशाभावनिष्ठसंवन्धप्रतियोगिसाध्यनिष्ठयत्किचित्संवन्धावच्छिन्ननिरूपकतावच्छेदकताकत्वेन वा विषयितानिवेशे दोषमाह यत्रेति। ननु वह्नित्वावच्छिन्नप्रतियोगिताकत्वरूपसंवन्धस्य समानकालीनत्वादिसंवन्धेन हेतुसमानाधिकरणाभावनिष्ठत्वादव्याप्तिः। तत्संसर्गतायाः अप्रामाणिकत्वेऽपि अभावत्वानिवेशे धूमसमानाधिकरणतृणादौ कालिकसंवन्धेन वह्नित्वावच्छिन्नप्रतियोगिताकत्वसत्त्वादव्याप्तिः। अभावत्वनिवेशे च घटत्वाभावादिसाध्यकव्यभिचारिण्यतिव्यप्तिरिति चेत्, न, अनुयोगितापर्यवसन्नः संवन्धः येन संवन्धेनाभावेऽस्ति तत्संवन्धेन तन्निष्ठत्वोपादानात्।

तत्प्रतियोगिपदानुपादाने दोषमाह––यत्रेति। प्रतियोगित्वेन भासमानत्वनिवेशभ्रमं निराकरोति––वास्तवेति वह्नित्वावच्छिन्नप्रतियोगिताकात्वसंबन्धेन वह्नित्वावच्छिन्नप्रकारताकज्ञानविषयाभावस्यैव व्यभिचारघटकतया विरोधितारक्षणार्थं वह्नित्वेनेति। तथा च तदंशे भ्रम एव।

दिगिति। दिगर्थस्तु––ननु हेतुसमानाधिकरणो यः वह्नित्वह्रदत्वाभ्यां वह्न्यभावः तदनुयोगिकसाध्यप्रतियोगिको वह्नित्वावच्छिन्नप्रतियोगिताकत्वसंबन्धः तज्ज्ञानस्योक्ताभावांशे तेन संवन्धेन वह्निप्रकारत्वेन प्रतिवन्धकत्वादव्याप्तिरिति चेत्, न; यद्धर्मपर्याप्तनिरूपकताकावच्छेद्यतावत्प्रतियोगिताकत्वं संबन्ध इति विवक्षणात्। नन्वेवमपि वह्नित्वेन वह्निधूमोभयाभावस्य वह्नित्वपर्याप्तावच्छेदकताकप्रतियोगिताकत्वविशिष्टः संवन्ध इत्यव्याप्तिरिति चेत्, न, साध्यमात्रप्रतियोगिकत्वविवक्षणात्। वह्नित्वेन तार्णातार्णदहनोभयाभावसत्त्वे तु साध्यतावच्छेदकविशिष्टमात्रप्रतियोगिक इत्यर्थः। प्रतियोगिविशेषणविशिष्टवैशिष्ट्यानवगाहित्वे तु तादृशाभावानुपगम एव गतिः। न तु साध्यतावच्छेदकविशिष्टप्रकारता-

निरूपितसंसर्गताश्रयत्वमपि संवन्धविशेषणम् । उक्ताभावे वह्निसामान्याभावत्वभ्रममादायाव्याप्तेः । अत्र स्वनिरूपकत्वं त्यक्तम्; वैयर्थ्यात् ।

## न्यायरत्नम्

**स्वनिरूपकहेतुसमानाधिकरणेति। स्वप्रतियोगिसाध्यनिष्ठस्वावच्छिन्नावच्छेदकतानिरूपितत्वस्वानुयोगिहेतुसमानाधिकरणाभावनिष्ठत्वैतदुभयसंबन्धेन साध्यनिष्ठप्रतियोगिताकत्वविशिष्टविषयतानिरूपितत्वेनानुगमो बोध्यः । अग्रिमपरिष्कारे यत्किंचिद्धर्मावच्छिन्नप्रतियोगिताकत्वत्वविशिष्टसाध्यप्रतियोगिकसंबन्धवद्विषयतानिरूपितत्वेन । तादृशसंबन्धवत्त्वं च स्वप्रतियोगिनिष्ठावच्छेदकताकत्वस्वानुयोगिहेतुसमानाधिकरणाभावनिष्ठत्वोभयसंबन्धेन । तेन वह्नित्वावच्छिन्नप्रतियोगिताकत्वत्वस्य वह्नित्वावच्छिन्नघटवह्निनिष्ठप्रतियोगिताकत्वसाधारण्यात् तद्विशिष्टे साध्यप्रतियोगिकत्वहेतुसमानाधिकरणाभावानुयोगिकत्वयोः सत्त्वेन वह्नित्वावच्छिन्नप्रतियोगिताकत्वत्वविशिष्टस्य तादृशतया तेन संबन्धेन हेतुसमानाधिकरणाभावांशे साध्यस्य भ्रममादायाव्याप्तिरिति शङ्कानिरासः । साध्यप्रतियोगिकतादृशसंबन्धव्यक्त्योः भेदाद् निरुक्तभ्रमविषयितायां निरुक्तोभयसंबन्धेन तादृशसंबन्धवद्वितयनिरूपितत्वविरहात् ।**

**[1]एतन्मते निरुक्तविषयित्वनिष्ठानुमितिप्रतिबन्धकतावच्छेदकत्वाभावघटितस्यैवानुमितिजनकज्ञानविषयत्वादिति । अयं चाभ्युपगमवादः ।**

## गादाधरी

(६४) **व्यभिचारिण्यतिव्याप्तिशङ्कासमाधानम् ।**

[1] अत्र पाठभेदाः गादाधर्यां दर्शिताः; एतादृशपाठोऽपि क्वचित् तिष्ठतीति ज्ञायते—स्व.

न च व्यभिचारज्ञानस्यानुमितिकारणव्याप्तिज्ञानं प्रत्येव प्रतिबन्धकत्वादनुमित्यप्रतिबन्धकत्वमिति व्यभिचारिण्यतिव्याप्तिरिति वाच्यम् । तज्जनकज्ञानप्रतिबन्धकतावच्छेदकत्वाभावस्यैव विवक्षितत्वात् ।

## गादाधरी

(६५) विशारदलक्षणदूषणम् ।

अनुमित्यविरोधित्वज्ञानस्येति । अनुमितिप्रतिबन्धकतावच्छेदकत्वाभावप्रकारकज्ञानस्यैवेत्यर्थः । अनुमितिहेतुत्व इति । एतन्मते निरु[1]क्तविषयितानिष्ठतादृशावच्छेदकत्वाभावघटितस्यैवानुमितिकारणीभूतज्ञानविषयत्वादिति भावः । अनुमित्यविरोधितया अनुमितिजनकज्ञानाप्रतिबन्धकतया; साध्याभाववद्वृत्तित्वज्ञानस्यानुमितिजनकत्वाभावादिति भावः ।

अतिप्रसङ्गादिति । हेतुनिष्ठसाध्यतावच्छेदकावच्छिन्नप्रतियोगिताकाभाववद्वृत्तित्वविषयितासामान्ये अनुमितिजनकज्ञानप्रतिबन्धकतावच्छेदकत्वाभावस्याक्षतत्वादिति भावः ।

न च हेतुनिष्ठसाध्याभाववद्वृत्तित्वविषयिता अनुमितिप्रतिबन्धकतावच्छेदिका इत्येतादृशज्ञानीयहेतुनिष्ठसाध्याभाववद्वृत्तित्वविषयिताया अपि तादृशविषयितासामान्यान्तर्गततया तत्र

1 निरुक्तविषयितानिष्ठविरोधितावच्छेदकत्वाभावघटितस्यैवानुमितिकारणीभूतज्ञानविषयव्याप्तिस्वरूपत्वादिति भावः । —अ.

निरुक्तविषयितानिष्ठतादृशावच्छेदकत्वाभावस्यैवानुमितिकारणीभूतज्ञानविषयत्वादिति भावः । —क.

**च प्रकृतव्याप्तिज्ञानप्रतिबन्धकतावच्छेदकत्वस्यापि सत्त्वेनातिव्याप्त्यनवकाश इति वाच्यम् । एवं सति सद्धेतावपि हेतुनिष्ठव्यधिकरणधर्मावच्छिन्नाभाववद्वृत्तित्वविषयित्वे अनुमितिप्रतिबन्धकतावच्छेदकत्वभ्रमनिष्ठतादृशसाध्याभाववद्वृत्तित्वविषयितायामनुमितिप्रतिबन्धकातावच्छेदकत्वसत्त्वेन लक्षणगमनासंभवात् । इतराविशेषणत्वेन तादृशविषयिताया एव लक्षणे निवेश्यतया विषयिताविशेषणत्वेन साध्याभाववद्वृत्तित्वविषयितायाः प्रतिबन्धकतावच्छेदकत्वेनातिव्याप्तिवारणासंभवादिति ध्येयम् ॥**

## कृष्णंभट्टीयम्

निरुक्तेति । अनुमितिप्रतिबन्धकतानवच्छेदकस्वनिष्ठसाध्याभाववद्वृत्तित्व[1]विषयिताकत्वेर्थः । अत्रानुमितित्वेनैव निवेशः, न तु तज्जनकत्वेन । जनकतानवस्थापत्तेः । एवं चास्य व्याप्त्यनात्मकत्वं बोध्यम् । पूरितैवकारव्यवच्छेद्यं स्फुटयति——साध्याभावेति । केवलान्वयिनि अव्याप्तेरिति शेषः ।

न च हेतुनिष्ठेति । हेतुनिष्ठसाध्याभाववद्वृत्तित्वविषयिता अनुमितिप्रतिबन्धकतानवच्छेदिकेति अनुमितिहेतुभूतज्ञानं प्रति निरूपितत्वसंवन्धेन साध्याभाववद्वृत्तित्वविशिष्टविषयिता अनुमितिप्रतिबन्धकतावच्छेदिकेति समानप्रकारकज्ञानं प्रतिबन्धकम् । तदीयधर्मितावच्छेदकीभूतवृत्तित्वविषयिताया अपि सामान्यान्तर्गतत्वात् तत्रावच्छेदकत्वसत्त्वेनातिव्याप्तिरित्यर्थः । वृत्तित्वविषयित्वे इति सप्तम्यर्थो भ्रमान्वयि [2]विशेष्यत्वम् ।

[1] विषयिताकत्वस्येत्यर्थः——अ.

[2] विशेष्यकत्वम्——अ.

इतरेति । न च भ्रमान्यवृत्तितादृशविषयितानिवेशेन न दोष इति वाच्यम् । तथा सति साध्याभाववद्वृत्तित्वपर्यन्तवैयर्थ्यात् ।

## न्यायरत्नम्

**वस्तुतस्तु—अनुमित्यविरोधित्वज्ञानस्यानुमितिहेतुत्वमेव न संभवति । तथा हि—अनुमित्यविरोधित्वं तल्लिङ्गकतत्साध्यकतत्संसर्गकानुमित्यविरोधित्वं तादृशानुमितिजनकज्ञानविरोधित्वं वा । तत्र तल्लिङ्गकत्वं न तावद्व्याप्तिपक्षधर्मताविशिष्टतल्लिङ्गविषयकज्ञानजन्यत्वं क्रमिकाभ्यां भिन्नलिङ्गपरामर्शाभ्यां यत्रैकस्य साध्यस्यानुमितिः तत्र तल्लिङ्गकतत्साध्यकानुमितिसामान्यविरोधित्वस्य तादृशानुमितिजनकज्ञानसामान्यविरोधित्वस्य वा कस्मिन्नपि व्यभिचारेऽसत्त्वेन व्यभिचारिण्यतिव्याप्तिः । अथ तल्लिङ्गधर्मिकपक्षधर्मताज्ञानाव्यवहितोत्तरत्वविशिष्टतत्साध्यकतत्संसर्गकानुमितित्वावच्छिन्नजन्यतानिरूपितजनकताश्रयज्ञानसामान्यविरोधित्वं वक्तव्यं, तादृशजनकताश्रयत्वं च न लिङ्गान्तरमात्रपरामर्शस्येति चेत् तर्हि आत्माश्रयप्रसंगः, यतः तादृशी जनकता व्याप्तिनिश्चयत्वावच्छिन्नैवेति तादृशजनकताज्ञानार्थं जनकतावच्छेदकघटकव्याप्तिज्ञानमपेक्षितम् । व्याप्तिश्चेत् निरुक्तरूपा तदा तादृशव्याप्तिज्ञाने तादृशज्ञानमपेक्षितमिति विभावनीयं सुधीभिः ।**

**इति चतुर्दशलक्षण्यां विशारदलक्षणम् ।**

———

## मिश्रलक्षणम्

### दीधितिः

केचित्तु——यावन्तः साध्याभावाः प्रत्येकं तत्तत्सजातीया ये तत्तदधिकरणवृत्तित्वाभावाः तद्वत्त्वं तत्त्वम् ।

साजात्यं च समानासमानाधिकरणधर्मावच्छिन्नप्रतियोगिताकत्वान्यतररूपेण, साध्याभावश्च पूर्वोक्तद्वितीयरीत्या प्रत्येतव्यः ।

व्याप्यवृत्तिश्च प्रतियोगितावच्छेदकावच्छिन्नप्रतियोगिव्यधिकरणो वा ।

तेन तत्तत्साध्यव्यक्तेरव्याप्यवृत्तेर्वा साध्यस्याभाववति वृत्तावपि हेतोर्नाव्याप्तिः ।

तद्वद्वृत्तित्वाभावस्तु तत्तत्साध्याभाववद्वृत्तित्वत्वव्यापकव्यासज्यवृत्तिधर्मानवच्छिन्नप्रतियोगिताको बोध्यः । तेन तत्तत्साध्याभाववद्व्यक्तिविशेषवृत्तित्वस्य पार्थिवत्वादिविशेषितस्य द्वित्वाद्यवच्छिन्नस्य वा साध्याभाववद्वृत्तित्वस्याभावमादाय नातिप्रसङ्गः ।

अत्र च हेतुतावच्छेदकसम्बन्धेन साध्याभाववद्वृत्तित्वं, बोध्यम् । तेन वह्न्यभाववति स्वावयवे धूमस्य वृत्तावपि न क्षतिः ।

इत्थं च साध्याभावोऽपि हेतुतावच्छेदकसंबन्धेन कस्यचिदधिकरणे वर्तमानो ग्राह्यः । तेन जातिमान् सत्त्वादित्यादौ

हेतुतावच्छेदकसंबन्धेन साध्याभाववद्वृत्तित्वस्याप्रसिद्धावपि न क्षतिः।

यद्वा यावन्तस्तादृशाः साध्याभावाः प्रत्येकं तेषां सजातीयस्य व्यापकीभूतस्य व्याप्यवृत्तेरभावस्य प्रतियोगितावच्छेदकेन धर्मेण यद्रूपावच्छिन्नं प्रति व्यापकत्वमवच्छिद्यते तद्रूपवत्त्वं तत्त्वम्।

साधनस्य तादृशव्यापकाभावप्रतियोगित्वं, तदवच्छेदकत्वं वा साधनतावच्छेदकस्य इति तु न वाच्यम्। द्रव्यं सत्त्वादित्यादौ सत्त्वादेः तादृशाभावव्यापकगुणकर्मान्यत्वविशिष्टसत्तात्वाद्यवच्छिन्नप्रतियोगिताकाभावप्रतियोगित्वादतिव्याप्तेः। ज्ञेयं प्रमेयत्वादित्यादौ प्रमेयत्वादेस्तादृशप्रतियोगितानवच्छेदकत्वाद् अव्याप्तेश्च; प्रमेयत्वव्यधिकरणप्रतियोगित्वाप्रसिद्धेः।

यद्वा, यावन्तस्तादृशाः साध्याभावाः प्रत्येकं तत्प्रतियोगितावच्छेदकेन यद्रूपावच्छिन्नं प्रति व्यापकत्वमवच्छिद्यते तद्रूपवत्त्वं तत्त्वमित्याहुः॥

## गादाधरी

(६६) मिश्रोक्तप्रथमलक्षणस्य समन्वयादिप्रदर्शनम्।

**मिश्ररीत्या साजात्यघटनेन साध्याभाववद्वृत्तित्वरूपामेव व्याप्तिं परिष्कृत्योपन्यस्यति--केचित्त्विति।**

**धूमवान् वह्नेरित्यादौ व्यधिकरणधर्मावच्छिन्नाभावसजातीयस्य घटत्वादिना तदधिकरणवृत्तित्वाभावस्य हेतौ सत्वादतिव्याप्तिः अतो यावन्त इति। तथा च यावदन्तर्गतसमानाधिकरण-**

धर्मावच्छिन्नाभावसजातीयस्य तदधिकरणवृत्तित्वाभावस्य हेताव-सत्त्वान्नातिव्याप्तिः। तत्रैव समानाधिकरणधर्मावच्छिन्नसाध्या-भावाधिकरणवृत्तित्वस्य व्यधिकरणधर्मावच्छिन्नाभावमादायाति-व्याप्तिवारणाय [1]प्रत्येकं तत्तत्सजातीया इति। तथा च वक्ष्यमाण-रूपेण व्यधिकरणधर्मावच्छिन्नसाध्याभाववद्वृत्तित्वाभावस्य समा-नाधिकरणधर्मावच्छिन्नसाध्याभावसजातीयत्वाभावान्न दोषः। यावत्साध्याभावत्वेन साध्याभावानां निरूपकतया साजात्येऽन्वये व्यतिरेकिसाध्यके वह्निमान् धूमाद् इत्यादौ यावत्साध्याभाव-निरूपितत्वस्य क्वचिदपि[2] साजात्येऽसत्वाद् यावत्त्वसाध्याभावसा-जात्याप्रसिद्ध्या अव्याप्तिः, अतः तत्तद्व्यक्तित्वेन [3]तेषां साजा-त्येऽन्वयलाभाय तत्तदिति। तत्तत्सजातीया इत्यनेनोपस्थितानां समानाधिकरणव्यधिकरणधर्मावच्छिन्नाभावसजातीयानामेक-स्मिन्नधिकरणवृत्तित्वाभावे एकत्र द्वयमिति रीत्या अभेदान्वये पुनर्व्यतिरेकिसाध्यकेऽव्याप्तिः, एकत्रोभयसाजात्याभावात्, अत एकैकाभावे एकैकाभावसजातीयाभेदान्वय उपगन्तव्यः; एतदर्थ-तात्पर्यग्राहकं प्रत्येकमिति प्रथमाबहुवचनान्तं तत्तदधिकरणवृत्ति-त्वाभावा इत्यस्य विशेषणम्; यावत्साध्याभावत्वेन सध्याभावा-नामधिकरणेऽन्वये वह्निमान् धूमाद् इत्यादौ तत्तद्ध्रदावृत्तित्वा-

[1] एकत्र द्वयमिति रीत्या सजातीयानामन्वयेनाप्रसिद्ध्या नातिव्याप्तिरिति भ्रमनिराकरणायेदम्। तथा च प्रत्येकपदस्य विद्यमानत्वात् नाप्रसिद्धिः परन्तु साजात्या-भावादेव नातिव्याप्तिरित्याह तथा चेति--रा.

[2] वक्ष्यमाणसाजात्ये---अ.

[3] विशिष्टसाध्याभावानाम्---अ.

**वच्छिन्नसाध्याभावघटित[1]समुदायधिकरणतायाः क्वचिदप्यसत्त्वेनाव्याप्तिः स्यात्; अतः तत्तद्व्यक्तित्वेन साध्याभावानामधिकरणेऽन्वयलाभाय चरमं तत्तदिति । तत्त्वमिति । अव्यभिचरितत्वमित्यर्थः ।**

कृष्णंभट्टीयम्

मिश्रलक्षणमेव परिष्कृत्य दर्शयतीति जगदीशीयावतारणासङ्गतिमाविष्करोति––मिश्रेति ।

अप्रसिद्धयेति । अन्यतरत्वेन साजात्यनिवेशे धूमवान् वह्नेरित्यादौ घटत्वेन निर्धूमवृत्तित्वाभावस्य धूमसामान्याभाववृत्तितावच्छेदकीभूता[2]न्यतराश्रयसाजात्यवत्तया अतिव्याप्तिः, अतोऽन्यतरत्र साध्याभावनिष्ठत्वनिवेशः ।

ये तु यावन्तः साध्याभावास्तेषां प्रत्येकमपि सजातीयत्वमेकस्मिन्नभावे नास्तीत्यत उक्तम् तत्तत्सजातीया इति वदन्ति, तेषां प्रत्येकमित्यस्य एकस्मिन्नभावे इति नार्थः । तथा सति वीप्साव्ययीभावासाधुतापत्तेः । किन्तु प्रथमाबहुवचनान्तं साध्याभावविशेषणम् । तथा च साध्याभावनिष्ठप्रातिस्विकरूपावच्छिन्ननिरूपितं यत्तेषां सर्वेषां साजात्यं समानाधिकरणधर्मावच्छिन्नाभावत्वव्यधिकरणधर्मावच्छिन्नाभावत्वोभयरूपं तद्वदभावाप्रसिद्धिरिति तत्तत्पदोपादानम् । तथा च यत्तत्तन्निरूपितसाजात्यं तद्वत्त्वेनैकैकाभावलाभात् न दोष इत्याशयसंभवेऽपि साध्याभावे प्रत्येकविशेषणवैयर्थ्यम् । न च ते च ते सजातीयाश्चेति समासेन साजात्यानुयोगिना-

[1] 'कूटाधिकरणतायाः' इत्यपि पाठान्तरं विद्यत इति ज्ञायते न्यायरत्नपर्यालोचनायाम्––स्व.

[2] अन्यतरत्वाश्रय––अ.

मेव विशिष्य निवेशः, [1]तेषामित्यसङ्गतेः। तत्तद्व्यक्तित्वादेरनुयोगितावच्छेदकत्वेन प्रत्यायनासंभवाच्चेत्यत आह––प्रथमाबहुवचनान्तमित्यादि। तथा च यावन्तः साध्याभावाः [2]तद्व्यक्तित्वावच्छिन्नप्रतियोगिताकसाजात्यवत्तत्तदधिकरणवृत्तित्वाभावकत्वमर्थः। [3]यावत्त्वं[4]साध्याभावसमनियतं बोध्यम्।

### न्यायरत्नम्

**दीधितौ––यावन्तः साध्याभावाः प्रत्येकं तत्तत्सजातीया इति।**

अत्र प्राञ्च एवं व्याचक्रुः––प्रत्येकमिति षष्ठीबहुवचनान्तम्। तथा चैकैकेषां साध्याभावानामित्यर्थः। निपातोत्तरमेव भेदार्थकविभक्तेरकल्पनात्। तेन तत्तदभावानां प्रातिस्विकरूपेण साजात्यनिरूपकत्वलाभः। तत्तत्सजातीया इत्यत्र ते च ते सजातीया इति कर्मधारयाश्रयणात् तदधिकरणवृत्तित्वाभावानां प्रातिस्विकरूपेण साजात्यानुयोगिकत्वलाभ इति। तन्न–तत्पदस्य पूर्वतनयत्पदोपस्थापितार्थबोधकतायाः स्वरससिद्धाया भङ्गप्रसङ्ग इति पूर्वतनपदोपस्थापितसाध्याभावार्थकवीप्सिततच्छब्देन सजातीयपदस्य षष्ठीतत्पुरुषाश्रयणेन साध्याभावानां प्रातिस्विकरूपेण साजात्ये प्रतियोगितया अन्वय एव युक्तः। न चैवमपि साध्याभावानां यच्छब्दोपस्थापितत्वाभावेनोक्तस्वरसभङ्गस्तुल्य इति वाच्यम्। यावन्त इत्यत्र ये ये इति शब्दकल्पनया तद्भङ्गाभावात्। पूर्वोपस्थितबोधकत्वस्वारस्यभङ्गाभावाच्च। प्रत्येकमिति प्रथमाबहुवचनान्तं तत्तदधिकरणवृत्तित्वाभावा इत्यस्य विशेषणम् अतः तेषां प्रातिस्विकरूपेण साजात्यानुयोगितालाभः। न च प्रत्येकमित्यव्ययीभावसमासस्याव्ययतया तदुत्तरं प्रथमै-

[1] तेषामित्यस्यासङ्गतेः––अ.

[2] तत्तद्व्यक्तित्वावच्छिन्न––अ.

[3] यावत्त्वं च––अ.

[4] साध्याभाववत्त्वसमनियतम्––अ.

कवचनमेव साधुत्वार्थं प्रयोगार्हमिति कथं तदुत्तरं बहुवचनमिति वाच्यम् । नामार्थयोरभेदान्वये समानवचनत्वस्य तन्त्रत्वानुरोधेनैव बहुवचनकल्पनादित्यभिप्रायेण तथैव व्याचष्टे गादाधर्यां यावत्साध्याभावत्वेनेत्यादिना विशेषणमित्यन्तेन ।

[1]कूटाधिकरणतायाः क्वचिदप्यसत्त्वेनेति । नन्वस्मिन् लक्षणे साध्यतावच्छेदकसंबन्धावच्छिन्नप्रतियोगिताकस्यैव साध्याभावस्य निवेशनीयतया वह्निसाध्यके तादृशसंयोगसंबन्धावच्छिन्नतत्तद्ह्रदावृत्तित्वावच्छिन्नप्रतियोगिताकाभावकूटाधिकरणताया गुणादावेव प्रसिद्धिः संभवति । तत्र हेतुतावच्छेदकसंयोगसंबन्धेन वृत्तेरप्रसिद्ध्या अव्याप्तिसत्वेऽपि कूटाधिकरणाप्रसिद्धिकथनं निरभिप्रायमेवेति चेत्; अत्र केचित्––वह्निपदस्य वह्निमत्त्वप्रकारकप्रमाविषयत्वपरत्वेन स्वरूपसंबन्धावच्छिन्नप्रतियोगिताकतादृशकूटाधिकरणाप्रसिद्धावेव तात्पर्यमिति वदन्ति ।

## गादाधरी

(६७) सजातीयत्वपरिष्कारः ।

ननु तत्तत्सजातीयत्वं तत्तद्वृत्तिधर्मवत्त्वम्, तथा च समानाधिकरणधर्मावच्छिन्नाभाववृत्त्यभावत्वादिधर्मवत्त्वं व्यधिकरणधर्मावच्छिन्नाभावेऽपि वर्तत इति तस्यापि तत्सजातीयत्वात् व्यभिचारिण्यतिव्याप्तिरत आह––साजात्यं चेति । समानासमानाधिकरणेति समानाधिकरणधर्मावच्छिन्नप्रतियोगिताकत्व-व्यधिकरणधर्मावच्छिन्नप्रतियोगिताकत्वान्यतररूपेणेत्यर्थः । तृतीयार्थश्चाभेदः, तस्य च साजात्येऽन्वयः । विवक्षणीयमिति शेषः, तथा च तत्तत्सजातीया इत्यस्य तत्तदभाववृत्तितादृशान्यतररूपवन्त इत्यर्थः ।

[1] समुदायाधिकरणतायाः इति पाठो गादाधर्यां दृश्यते––स्व.

यद्यपि वह्नित्वाद्यवच्छिन्नवह्न्यभावनिष्ठस्वसमानाधिकरणधर्मावच्छिन्नप्रतियोगिताकत्वं स्वसमानाधिकरणवह्नित्वाद्यवच्छिन्नप्रतियोगिताकत्वरूपम्, तच्च तदधिकरणवृत्तित्वाभावेऽसंभावितमेव, तथापि स्वासमानाधिकरणधर्मावच्छिन्ना या या प्रतियोगिता तत्तदनिरूपकत्वं स्वसमानाधिकरणधर्मावच्छिन्नप्रतियोगिताकत्वं, स्वसमानाधिकरणधर्मावच्छिन्ना या या प्रतियोगिता तत्तदनिरूपकत्वमेव च व्यधिकरणधर्मावच्छिन्नप्रतियोगिताकत्वमिह विवक्षणीयम्। तच्च तत्तत्साध्याभावतद्वद्वृत्तित्वाभावोभयसाधारणमेव। समनियताभावैक्यमते च स्वाधिकरणावृत्तिधर्मावच्छिन्ना या प्रतियोगिता तन्निरूपकत्वरूपो व्यधिकरणधर्मावच्छिन्नप्रतियोगिताकत्वेत्यस्य यथाश्रुतार्थ एवादरणीयः। तन्मते व्यधिकरणधर्मावच्छिन्नसाध्याभावतथाविधतद्वृत्तित्वाभावयोरैक्यात् तादृशसाध्याभावस्य यादृशप्रतियोगितानिरूपकत्वं तादृशप्रतियोगितानिरूपकत्वस्य तथाविधतद्वद्वृत्तित्वाभावेऽपि सत्त्वात्।

एतेन समनियताभावैक्यमते व्यधिकरणधर्मावच्छिन्नाभावस्य समवायादिसंबन्धावच्छिन्नगगनत्वाद्यवच्छिन्नगगनाद्यभावाभिन्नतया तस्य समानाधिगकरणधर्मावच्छिन्नगगनादिनिष्ठप्रतियोगितानिरूपकतया व्यधिकरणधर्मावच्छिन्नाभावस्य निरुक्तरूपवत्त्वानुपपत्त्या समानाधिकरणधर्मावच्छिन्नसमानाधिकरणसंबन्धावच्छिन्नप्रतियोगिताकत्वपर्यन्तनिवेशनायासो नोपादेयः। समनियताभावैक्यमते गगनाभावत्वगगनाभावभिन्नत्वान्यतररूपेणापि साजात्यविवक्षणं संभवतीति ध्येयम्।

## कृष्णंभट्टीयम्

समनियतेति । एतन्मते धर्मः साध्यव्यापकतावच्छेदको ग्राह्यः । तेन गगनाभावभिन्नं मेयत्वादित्यादौ गगनाभावभेदाभावस्याभावाधिकरणकत्वेन गगनाभावात्मकस्याधिकरणवृत्तित्वाभावस्य [1]व्यधिकरणधर्मावच्छिन्नाभावस्य [2]सत्त्वेन नातिव्याप्तिः । न चैवमपि गगनाभावरूपसाध्यसामान्याभावस्य गगनाभावभेदत्वेन घटाभावात्मकतयां अतिव्याप्तिर्दुर्वारैवेति वाच्यम् । साध्यव्यापकतावच्छेदकरूपावच्छिन्नयद्यत्प्रतियोगिताका यावन्तोऽभावाः तत्तत्प्रतियोगितावृत्तिसमानासमानाधिकरणधर्मावच्छिन्नत्वान्यतरवत्प्रतियोगिताश्रयत्वेन तत्तदधिकरणवृत्तित्वाभावविशेषणात् । समानाधिकरणधर्मावच्छिन्नत्वं चासमानाधिकरणधर्मावच्छिन्नप्रतियोगिता[3]कूटभेदवत्त्वं गगनाभावत्वादिना साजात्यपङ्क्तिस्तु चिन्त्यैवेति कृतबुद्धयो विदांकुर्वन्तु ।

नोपादेय इति । तन्मते उक्ता[4]नुगमापेक्षणात् ।

## न्यायरत्नम्

**तथापीति । यद्यपि निरुक्तकूटरूपं व्यधिकरणधर्मावच्छिन्नप्रतियोगिताकत्वं न संभवदुक्तिकं, सर्वस्यैव व्यधिकरणधर्मावच्छिन्नाभावस्य किंचिद्विशिष्टस्वाभावत्वरूपसमानाधिकरणधर्मावच्छिन्नप्रतियोगिताकत्वेन तदन्यत्वस्य कस्मिन्नपि व्यधिकरणधर्मावच्छिन्नाभावेऽसंभवात्; तथापि चक्रवर्तिलक्षणोक्तरीत्या विशिष्टाभावो विशिष्टाधिकरणत्वाभावरूप एवेति मतानुरोधेनेयमुक्तिरिति ध्येयम् ।**

[1] व्याधिकरणधर्मावच्छिन्नस्य––अ.

[2] सत्त्वेऽपि––अ.

[3] भेदकूटवत्त्वम्––अ.

[4] अनुगमोपेक्षणात्––अ.

वस्तुतस्तु साध्यव्यापकतावच्छेदकरूपावच्छिन्ना यावत्यः प्रतियोगिताः प्रत्येकं तत्तत्सजातीयानां तत्तन्निरूपकीभूताभावाधिकरणवृत्तित्वनिष्ठतत्तत्प्रतियोगितानां निरूपकीभूता येऽभावास्तद्वत्त्वं व्याप्तिः। तत्र साजात्यघटकसमानाधिकरणधर्मावच्छिन्नत्वं स्वासमानाधिकरणधर्मावच्छिन्ना या या प्रतियोगिता तत्तदन्यत्वं, व्यधिकरणधर्मावच्छिन्नत्वं तु स्वसमानाधिकरणधर्माविच्छन्ना या या प्रतियोगिता तत्तदन्यत्वरूपं वक्तव्यमिति तात्पर्यम्। समनियताभावानामैक्यमते समवायितया प्रमेयत्ववद्भेदस्य निरुक्तव्यधिकरणभधर्मावच्छिन्नप्रतियोगिताकत्वविरहेऽपि व्यधिकरणधर्मावच्छिन्नप्रतियोगिताकत्वशरीरनिविष्टसमानाधिकरणधर्मावच्छिन्नेत्यस्य व्यधिकरणधर्मानवच्छिन्नस्वसमानाधिकरणधर्मनिष्ठावच्छेदकताकेत्यर्थविवक्षया तन्निर्वाहो ज्ञेयः।

नोपादेय इति। एकैकमतसाधारणस्य तद्विशेषणाघटितलक्षणस्य संभवेऽपि मतद्वयसाधारण्येन तन्निवेशनं भवानन्दानां सम्यगेवेति केचित्।

धूमाभावीयप्रतियोगितायाः प्रमेयमात्रवृत्तित्वे न्यूनवृत्तिधर्मानवच्छिन्ना व्यधिकरणधर्मावच्छिन्नाभावीयप्रतियोगितैवेति तादृशाभावमादायातिव्याप्तेराह—अतिरिक्तवृत्तीति। विरुद्धव्यावृत्तमिति। सामानाधिकरण्यघटितमित्यर्थः।

## गादाधरी

(६८) साध्याभावपरिष्कारः।

**ननु यावत्साध्याभावान्तर्गतानां तत्तत्साध्यव्यक्त्यभावादीनामधिकरणे हेतोर्वृत्तित्वाद् वह्निमान् धूमाद् इत्यादावव्याप्तिरत आह—साध्याभावश्चेति। [1]द्वितीयरीत्येति। यत्समानाधिकरणा-**

[1] पूर्वोक्तद्वितीयरीत्येति—अ.

नामित्यादिद्वितीयलक्षणरीत्येत्यर्थः । साध्यतावच्छेदकावच्छिन्न-व्यापकतावच्छेदकरूपावच्छिन्नप्रतियोगिताकाभाव एव साध्याभावपदेन [1]विवक्षित इति भावः । साध्यतावच्छेदकावच्छिन्नव्यापकतावच्छेदकप्रतियोगिताकाभावविवक्षणे तथाविधवह्निघटोभयाभावमादाय तद्दोषतादवस्थ्यम्, अतः प्रथमरीत्येति नोक्तम् ।

साध्यतावच्छेदकावच्छिन्नप्रतियोगिताकाभावविवक्षणे वाच्यत्वादिसाध्यकस्थले वाच्यत्वत्वादिना घटाद्यभावमादाय लक्षणसमन्वयेऽपि स्वरूपसंबन्धेन [2]तादात्म्यसंबन्धेन वा प्रमेयमात्रसाध्यकस्थले तथाविधाभावाप्रसिद्ध्या अव्याप्तिः; अतः व्यापकतावच्छेदकपर्यन्तानुधावनम् । तथा च ज्ञेयत्वत्वादिना वाच्यत्वाभाव एव तथेति न दोषः । साध्यतावच्छेदकसमनियतप्रतियोगिताकाभावनिवेशे च वह्न्यादिसाध्यके तार्णतार्णोभयाभावादिकमादाय दोषस्य व्यासज्यवृत्तिधर्मावच्छिन्नत्वं प्रतियोगितायां निवेश्य वारणेऽपि सत्तादिसाध्यकस्थले [3]विशिष्टसत्ताद्यभावमादाय दोष इति तादृशाभावो न निवेशितः । व्यापकतावच्छेदकावच्छिन्नप्रतियोगिता न्यूनवृत्तिधर्मावच्छिन्ना अतिरिक्तवृत्तिधर्मावच्छिन्ना वा या या प्रतियोगिता तत्तदन्यत्वेन विशेषणीया । तेन वह्न्यादिसाध्यकस्थले वह्नित्वादिना [4]महानसीयवह्निघटान्यतराभाव-

1 विवक्षणीय--अ.

2 तादात्म्यसंबन्धेन वा इति नास्ति--अ.

3 वैशिष्ट्यानवच्छिन्नत्वमपि कुतो न निवेशितमिति चिन्त्यम्--रा.

4 वह्नित्वेन वह्निघटान्यतराभावस्य ह्रदादावेव सत्वेन लक्षणसमन्वयादाह; सामान्यरूपेण विशेषाभावाभावादाह्--घटेति--रा.

मादाय न दोषः । न्यूनवृत्तित्वमतिरिक्तवृत्तित्वं च विरुद्धव्यावृत्तं निर्वाच्यम्, नातो व्यधिकरणधर्मावच्छिन्नाभावासंग्रहः ।

व्यापकता च साध्यतावच्छेदकसंबन्धावच्छिन्ना ग्राह्या । तेन संयोगादिना वह्न्यादिसाध्यके समवायादिना वह्न्याद्यभावमादायासंभववारणाय साध्यतावच्छेदकसंबन्धावच्छिन्नत्वेन प्रतियोगिताया विशेषणीयतया [1]समवायादिना द्रव्यत्वादिसाध्यके विषयितासंबन्धेन साध्यव्यापकस्य ज्ञानादेः समवायादिना अभावमादाय दोषस्य नावकाशः । तादात्म्यसंबन्धेन प्रमेयसाध्यकस्थले समवायित्वरूपव्यधिकरणधर्मावच्छिन्नप्रतियोगितावच्छेदकताकभेद एव लक्षणघटकः । समनियताभावैक्यमते तादृशभेदस्य व्यधिकरणधर्मावच्छिन्नप्रतियोगिताकात्यन्ताभावाभिन्नतया व्यधिकरणधर्मावच्छिन्नप्रतियोगिताकत्वेन [2]तत्साजात्यस्य प्रसिद्धिसंभवात् ।

यत्तु——संयोगेन प्रमेयत्ववान्नेति प्रतीतिसाक्षिकः संयोगावच्छिन्नप्रमेयत्वनिष्ठप्रतियोगितावच्छेदकताकभेद एव लक्षणघटकः, अत्यन्ताभावस्येव येन संबन्धेन तदवृत्तिर्यो धर्मः तत्संबन्धेन तदवच्छिन्नप्रतियोगितावच्छेदकताकभेदस्यापि उक्तप्रतीतिबलात् सिद्धिरिति——तन्न——'वह्निमान् धूमात्' 'गुणवान् द्रव्यत्वाद्' इत्यादौ विषयितादिसंबन्धेन वह्नित्वगुणत्वादिमतः साध्यतावच्छेदकसंबन्धावच्छिन्नाभावस्य व्यावर्तनाय व्यापकतावच्छेदकताघटकसंबन्धावच्छिन्नत्वेन प्रतियोगितावच्छेदकताया अवश्यं

[1] समवायेन द्रव्यत्वसाध्यके इति न्यायरत्ने प्रतीकधारणात् तादृशपाठोऽपि तिष्ठतीति गम्यते——स्व.

[2] साजात्यस्येति इति कृष्णंभट्टीये प्रतीकधारणम् ।

**निवेशनीयतया तादृशाभावस्य प्रामाणिकत्वेऽपि लक्षणघटकत्वा-संभवात् ।**

कृष्णंभट्टीयम्

रीत्येति । [[1]न चैवं प्रतियोगिवैयधिकरण्यघटितव्यापकतानिवेशेऽग्रे साध्याभावे व्याप्यवृत्तित्वादिनिवेशवैयर्थ्यमिति वाच्यम् । अव्याप्यवृत्ति-साध्यके व्यापकतायाः तद्घटितत्वात् ।]

प्रमेयमात्रेति । न च संयोगेन प्रमेयत्वेन घटाद्यभाव एव प्रसिद्धः । विषयितया द्रव्यत्वत्वविशिष्टज्ञानाद्यभाववारणाय साध्यतावच्छेदकताघट-कसंबन्धावच्छिन्नाया वक्ष्यमाणसंवन्धेन वा प्रतियोगितावच्छेदकताया निवेशात् । व्यासज्येति । समुदायपर्याप्त्यवच्छिन्नाधिकरणताकत्वं व्या-सज्यवृत्तित्वम् । वह्निधूमोभयवान् वह्नेरित्यादौ च वह्निभिन्नत्वेन वह्नि-धूमान्यतराभावः, न तु स्वन्यूनवृत्तित्वं तत् । तदुभयान्यतराभावस्यैव लक्षणघटकतया अतिव्याप्तेः ।

ननु साध्यतावच्छेदकातिरिक्तव्यासज्यवृत्तिधर्मानवच्छिन्नतादृश-प्रतियोगिताकत्वमस्तु । मैवम् । व्यासज्यवृत्तित्वसाध्यतावच्छेदकसम-नैयत्ययोः वैयर्थ्यात् ।

ननु साध्यतावच्छेदकातिरिक्तसमानाधिकरणधर्मानवच्छिन्नप्रति-योगिताकत्वं धर्मे सामानाधिकरण्यघटितं तदघटितं वा अस्तु । मैवम् । गुरुधर्मावच्छिन्नसाध्यके व्यधिकरणधर्मेण गगनेन वा साध्याद्यभावसंभवेऽपि तत्साध्यकव्यभिचारिण्यतिव्याप्तेः ।

[1] [ ] एतदन्तर्गतपाठो नास्ति । तत्स्थाने व्यापकता च व्याप्यवृत्तिसाध्यके प्रतियोगिवैयधिकरण्याघटिताः अव्याप्यवृत्तिसाध्यके च तद्घटितेत्यग्रे स्फुटम् इति पाठः —अ.

विशिष्टेति । वैशिष्टयानवच्छिन्नत्वं तु नोक्तम् । सत्ताभावस्य लक्षणाघटकत्वेन विशिष्टसत्तासाध्यकातिव्याप्तेः । स्वसमानाधिकरणत्वे सति स्वसमानाधिकरणभेदप्रतियोगितावच्छेदकत्वं न्यूनवृत्तित्वम् । धूमाभावप्रतियोगितायाः प्रमेयमात्रवृत्तित्वमतेऽतिव्याप्तेराह––अतिरिक्तेति । स्वसमानाधिकरणत्वे सति स्वानाश्रयवृत्तित्वमतिरिक्तवृत्तित्वम् । विशेषणीयेति । एतद्विशेषणाभावे विषयितया वह्निव्यापकस्य ज्ञानादेः समवायादिना अभावमादाय वह्न्यादिसाध्यकेऽपि असंभवः स्यात् । एतद्विशेषणे तु संयोगावच्छिन्नज्ञानाद्यभावस्य व्यधिकरणधर्मावच्छिन्नाभावतया तत्सजातीयाभावसौलभ्यमित्यव्याप्तिरेव द्रव्यत्वादिसाध्यकस्थले इति विशेषव्युत्पादनाय तदुक्तम् । न चैवं कालिकसंवन्धेन वह्निव्यापकस्य जलादेः [1]संयोगसंवन्धावच्छिन्नाभावमादाय तत्साध्यकेऽपि दोषो दुर्वारः । जन्यमात्रस्य कालोपाधित्वानुपगमात् ज्ञानादिसाध्यकसद्धेतौ लक्षणसंगतेश्च ।

साजात्यस्येति । समानाधिकरणनिष्ठस्वव्यधिकरण[2]धर्मावच्छिन्नावच्छेदकताक[3]प्रतियोगिताकत्वेन वा साजात्यम् ।

वह्निमानिति । समवायेन साध्यत्वे वह्न्यवयववृत्तिजनकतासंवन्धेन हेतुतायाम् । संयोगेन साध्यतायां च साध्यतावच्छेदकसंयोगसंवन्धेन ज्ञानाभावस्य केवलान्वयितया व्यधिकरणधर्मावच्छिन्नाभावस्यैव तत्सजातीयतया अव्याप्त्यलग्नतापातात् ।

ननु जनकताविशेषसंवन्धेन चेत् हेतुतोपगम्यते, तदा तुल्यन्यायेन साध्यतापि स्यात् । तथा च जनकतासंवन्धस्य वृत्त्यनियामकतया तदवच्छिन्नसाध्याभावाप्रसिद्धिरतः तत्संबन्धत्वमप्रामाणिकं वाच्यमित्यत आह––गुणवानिति । समनियताभावभेदपक्षे द्रव्यसाध्यकेऽव्याप्तिमुक्त्वा गुणसाध्यके

[1] संयोगसंवन्धनाभावमादाय––अ.

[2] धर्मानवच्छिन्न––अ.

[3] प्रतियोगिताकान्यत्वेन––अ.

तामाह गुणवानितीति केचित् । प्रकृते विषयितासंबन्धेन प्रमेयत्ववज्ज्ञान-भेदव्यावृत्तिरपि द्रष्टव्या ।

व्यापकतेति । ननु साध्यतावच्छेदकताघटकसंबन्धावच्छिन्नत्वोक्तौ एतद्दोषनिरासो भवति । मैवम्––विषयितया वह्नित्ववज्ज्ञानाभावस्य साध्यसमानाधिकरणतया वह्नित्वादेर्व्यापकतावच्छेदकत्वासिद्धिरित्यतस्तेनैव संबन्धेन व्यापकतावच्छेदकत्वं निवेश्यम् । एवं च वह्नित्वप्रतियोगिकत्वविशिष्टसमवायेन वह्नित्वस्य साध्यतावच्छेदकत्वे व्यापकतावच्छेदकत्वाप्रसिद्धिः ।

वस्तुतस्तु––पार्थिवत्वादिविशेषितस्येति दीधित्यनुरोधात् कपालत्ववान् घटादित्यादौ समवेतत्वादिसंबन्धस्य साध्यतावच्छेदकताघटकतया ज्ञेयत्वादेरपि तेन संबन्धेन साध्यव्यापकतावच्छेदकत्वासंभवाच्चेत्थमभिधानम् ।

लक्षणघटकत्वासंभवादिति । ननु साध्यव्यापकतावच्छेदकत्वं साध्यतावच्छेदकावच्छिन्नसमानाधिकरणाभावीयसाध्यतावच्छेदकसंबन्धावच्छिन्नप्रतियोगितायाः सामानाधिकरण्येनानवच्छेदकत्वं । तादात्म्यसंबन्धेन साध्यस्य सर्वस्यापि व्याप्यवृत्तितया, व्यापकतायां प्रतियोगिवैयधिकरण्यस्य, साध्याभावे व्याप्यवृत्तित्वादेश्च, प्रयोजनाभावेन अनिवेशात् । तथा च संयोगेन प्रमेयत्ववतोऽप्रसिद्धया व्यापकतावच्छेदकताघटकसंबन्धतायाः संयोगे सत्त्वात् कथं तदभावव्यावृत्तिः । तेन संबन्धेन वृत्तिमत्त्वं तु न प्रवेश्यं, प्रयोजनाभावादिति चेत्, न । विषयितासंबन्धेन सर्वस्य साध्यत्वे नित्यज्ञानत्वरूपहेतावव्याप्तिरतः साध्यवन्निष्ठाभावप्रतियोगितायाः यद्धर्मसामानाधिकरण्यविशिष्टयद्धर्मावच्छेद्यत्वसाध्यतावच्छेदकसंबन्धावच्छिन्नत्वोभयाभावः तत्त्वं साध्यव्यापकतावच्छेदकत्वम् । यद्धर्मवत्त्वं चावच्छेदकताघटकसंबन्धेन । तेन वह्नित्वादिना घटाद्यभावप्रतियोगितायाः कालिकसंबन्धेन वह्नित्वसमानाधिकरणत्वेऽपि न क्षतिः । एतदभिप्रायेणैव भट्टाचार्यैः

तथाभिधानात्। व्यापकतायां प्रतियोगिवैयधिकरण्याप्रवेशस्थले तादृशप्रतियोगितावच्छेदकतायां, यद्धर्मनिष्ठावच्छेदकतायां च, स्वव्यधिकरणधर्मानवच्छिन्नत्वं देयम्। तेन तादात्म्येन प्रमेयसाध्यकस्थले द्रव्यत्वेन प्रमेयत्वावच्छिन्नभेदस्य साध्यसमानाधिकरणत्वेऽपि न अभावाप्रसिद्धिः। न चाव्याप्यवृत्तिसाध्यकस्थलीयलक्षणे प्रतियोग्यनधिकरणसाध्याधिकरणप्रवेशे कालो घटवान् कालपरिमाणादित्यादौ अव्याप्तिरिति वाच्यम्। साध्यतावच्छेदकसंबन्धसामान्ये यादृशप्रतियोगितावच्छेदकविशिष्टप्रतियोगिकत्वसाध्यवद्यत्किंचिद्व्यक्त्यनुयोगिकत्वोभयाभावरूपप्रतियोगिवैयधिकरण्यनिवेशात्। गगनादेः कालवृत्तित्वमते प्रतियोगितावच्छेदकसंबन्धेन प्रतियोग्यनधिकरणसाध्यवन्निष्ठाभावप्रतियोगितायां साध्यतावच्छेदकसंबन्धावच्छिन्नत्वयद्ध[1]र्मावच्छिन्नत्वोभयाभावः तत्त्वस्य व्यापकतावच्छेदकत्वरूपत्वात्।

## न्यायरत्नम्

**व्यापकता चेत्यर्थः। साध्यवन्निष्ठाभावीयप्रतियोगितेत्यर्थः। [2]समवायेन द्रव्यत्वसाध्यक इति। वह्निसाध्यके विषयतया तद्व्यापकस्य ज्ञानस्य साध्यतावच्छेदकसंयोगेनाभावस्य केवलान्वयितया समनियताभावैक्यमते गगनाभावत्वेन तत्सजातीयं तदधिकरणवृत्तित्वस्य व्यधिकरणधर्मावच्छिन्नाभावमादाय लक्षणसमन्वयः संभवतीति तत्साध्यकस्थलत्यागः।**

**वह्निमानिति। तत्राप्युक्तयुक्तेरेव गुणसाध्यकस्थलान्तरानुसरणम्। व्यापकतावच्छेदकताघटकसंबन्धावच्छिन्नेति। यद्यपि साध्यतावच्छेदकताघटकसंबन्धावच्छिन्नत्वस्य प्रतियोगितावच्छेदकतायां निवेशेऽपि दर्शिताभावव्यावर्तनं संभवति; तथापि पार्थिवत्वादिविशेषितस्येति दीधित्यनुरोधात्तत्यागः। तन्निवेशेऽयोगोलकावृत्तित्वावच्छिन्नाभावस्य लक्षणाघट-**

[1] यद्धर्मावच्छेद्यत्वोभयाभावः——अ.

[2] समवायादिना द्रव्यत्वादिसाध्यके इत्येव पाठो गादाधर्यां दृश्यते——स्व.

कत्वात् साध्याभाववद्वचक्तिविशेषवृत्तित्वाभावमादायैवातिव्याप्तेः प्रतियोगितायां वृत्तित्वत्वव्यापकत्वनिवेशप्रयोजनसंपत्तौ पार्थिवत्वादिविशेषितनिर्धूमवृत्तित्वाभावानुसरणस्य निर्बीजत्वापत्तेः ।

तादृशाभावस्य प्रामाणिकत्वेऽपि लक्षणघटकत्वासंभादिति । अथेदमनुपपन्नम् । प्रमेयत्वे संयोगसंबन्धघटितव्यापकतावच्छेदकत्वं साध्याधिकरणनिरूपितनिरवच्छिन्नाधेयतावदभावीयप्रतियोगिताधिकरणे संयोगेन विद्यमानं सत् यदवच्छेदकं तदन्यत्वरूपं साध्यवद्यत्किंचिद्वचक्त्यसंबद्धसंयोगेन स्वविशिष्टसामान्यकान्यत्वरूपं वा वक्तव्यम् । अन्यस्य दुर्वचत्वात् । तत्तु त्रिविधमपि प्रमेयत्वेऽक्षतम् । प्रमेयत्वं न कस्यापि प्रतियोगिताया अधिकरणेसंयोगेन विद्यमानं सदवच्छेदकं; न वा संयोगेन प्रमेयत्वविशिष्टं प्रसिद्धचतीति चेत्, न। दर्शितद्वितीयविधायां वह्निमान् धूमादित्यादौ वह्निद्रव्यत्वोभयत्वावच्छिन्नस्य संयोगेन व्यापकतापत्तिः तादृशोभयत्वविशिष्टस्य संयोगेनाधिकरणाप्रसिद्धेरिति तत्संबन्धावच्छिन्नाभावमादायाव्याप्तेर्वारणाय निरुक्ततद्भिन्नत्वे सति तत्संबन्धावच्छिन्नाधेयतावच्छेदकत्वं वक्तव्यम् । आधेयतावच्छेदकता च व्यापकतावच्छेदकताघटकसंबन्धावच्छिन्ना ग्राह्या । अन्यथा दर्शितोभयत्वस्य कालिकसंबन्धावच्छिन्नाधेयतावच्छेदकत्वेन तद्दोषतादवस्थ्यात् । तथा च संयोगेन प्रमेयत्वस्य व्यापकतावच्छेदकत्वं न संभवति । तस्य संयोगसंबन्धावच्छिन्नाधेयतावच्छेदकत्वाभावात् । न च पूर्वमते समवायितया प्रमेयत्ववद्भेदस्येव एतन्मते दर्शितद्वित्वावच्छिन्नाभावस्य समनियताभावैक्यमते गगनाभावत्वेन नाव्याप्तिरिति वाच्यम् । तदनैक्यमत एव लक्षणाघटकत्वाभिधानात् । अनैक्यमते समवायितया प्रमेयत्ववद्भेदस्य व्यधिकरणधर्मावच्छिन्नत्वस्योपपादितत्वाच्च ।

वस्तुतस्तु—दर्शितत्रिविधविधासु प्रथमविधायां साध्यवद्वृत्त्यभावीयप्रतियोगितायां साध्यतावच्छेदकसंबन्धवच्छिन्नत्वनिवेशावश्यकतया द्वितीयविधायां साध्यतावच्छेदकसंबन्धेन यद्धर्मविशिष्टानधिकरणत्वनिवेशावश्य-

कतया तृतीयविधायां साध्यतावच्छेदकसंबन्धेन साध्यवद्यत्किंचिद्व्यक्त्य-संबद्धत्वनिवेशावश्यकतया विषयितासंबन्धेन सर्वसाध्यकनित्यज्ञानत्वहेतुके विषयितासंबन्धघटितत्रिविधस्यापि व्यापकतावच्छेदकत्वस्याप्रसिद्ध्या साध्यवन्निष्ठाभावीयप्रतियोगितासामान्ये यद्धर्मसामानाधिकरण्यविशिष्ट-यद्धर्मावच्छिन्नत्वसाध्यतावच्छेदकसंयन्बन्धावच्छिन्नत्वोभयाभावः तत्स्वरूप-मेव साध्यापकतावच्छेदकत्वं वक्तव्यम् । यद्धर्मसामानाधिकरष्यघटक-यद्धर्माधिकरणत्वं व्यापकतावच्छेदकताघटकसंबन्धेन । तथा चैतादृशसं-योगसंबन्धेन व्यापकतावच्छेदकत्वं न प्रमेयत्वस्येत्यवधेयम् ।

## गादाधरी

(६९) साध्याभावे व्याप्यवृत्तित्वनिवेशप्रयोजनम् ।

ननु कपिसंयोगी एतद्वृक्षत्वाद् इत्यादौ कपिसंयोगत्वा-वच्छिन्न[1]कपिसंयोगाद्यभावस्यापि लक्षणघटकतया तदधिकरणे हेतोर्वृत्तेरव्याप्तिः । न च साध्यतावच्छेदकावच्छिन्नव्यापकता-शरीरे प्रतियोगिवैयधिकरण्यनिवेशस्य निष्फलतया कपिसंयोग-त्वादेः साध्यव्यापकतावच्छेदकत्वाभावात् तादृशाभावानां न लक्षणघटकतेति वाच्यम् । संयोगेन वह्न्यादिसाध्यकस्थले वह्नि-त्वादीनां संयोगरूपसाध्यतावच्छेदकसंबन्धघटितव्यापकतावच्छेद-कत्वसम्पत्तये व्यापकताशरीरे प्रतियोगिवैयधिकरण्यनिवेशस्या-वश्यकत्वात् । अन्यथा साध्यवत्युत्पत्तिकालावच्छेदेन वह्नित्वद्रव्य-त्वाद्यवच्छिन्नस्य संयोगसंबन्धेनाभावसत्वात् साध्यतावच्छेदकसं-बन्धघटितव्यापकतावच्छेदकत्वस्यैवाप्रसिद्धिप्रसङ्गात् । तथा च तत्तदधिकरणपदेन तत्तदभावीयव्याप्यवृत्तित्वनिरूपकाधिकरण-

[1] कपिसंयोगाभावस्येति कृष्णंभट्टीयसंमतः पाठः ।

मेव विवक्षणीयम् । व्याप्यवृत्तित्वनिरूपकत्वं निरवच्छिन्नाधेयतानिरूपकत्वम् । एवं च संयोगाद्यभावस्य तथाविधाधिकरणं गुणादिरेवेति न दोषः । इत्थं च कपिसंयोगाभाववान् कपिसंयोगाधिकरणत्वाभाववान् वा मेयत्वाद् इत्यादौ कपिसंयोगतदधिकरणत्वादिरूपाणां यावत्साध्याभावान्तःपातिनामभावानां तथाविधाधिकरणाप्रसिद्ध्या अव्याप्तिरतः साध्याभावं व्याप्यवृत्तित्वेन विशिनष्टि---व्याप्यवृत्तिश्चेति । तथा च तादृशाभावस्य तथाविधयावदन्तर्गततया तथाविधाधिकरणाप्रसिद्धावपि न क्षतिः ।

व्याप्यवृत्तित्वं च निरवच्छिन्नवृत्तिकत्वं, न त्ववच्छिन्नवृत्तिकान्यत्वम् । तथा सति संयोगेन धूमादिसाध्यकव्यभिचारिणि संयोगेन धूमत्वाद्यवच्छिन्नधूमाभावस्य महानसादौ अवच्छिन्नवृत्तिकतया अयोगोलकान्यत्वाद्यभावस्य च साध्यतावच्छेदकसंबन्धघटितव्यापकतावच्छेदकरूपावच्छिन्नप्रतियोगिताकत्वविरहेण व्यधिकरणधर्मावच्छिन्नप्रतियोगिताकाभावस्यैव लक्षणघटकतया अतिव्याप्तिः । एवं च वह्न्यभावसंयोगाभावादेरपि [1]क्वचित् निरवच्छिन्नवृत्तिकत्वेन लक्षणघटकतया तदीयाव्याप्यवृत्तितानिरूपकाधि[2]करणवृत्तित्वाभावमादाय दोषवारणायाधिकरणपदस्य व्याप्यवृत्तितानिरूपकाधिकरणपरत्वमावश्यकमित्यवधेयम् ।

## कृष्णंभट्टीयम्

कपिसंयोगाभावेति । समनियताभावैक्यमतेऽपि नास्य व्यधिकरणधर्मावच्छिन्नाभावैक्यमित्युक्तम् । न च व्यधिकरणधर्मावच्छिन्नप्रतियोगि-

[1] ह्रदादौ---रा.

[2] पर्वतद्रव्यादि---रा.

ताकत्वावच्छिन्नवृत्तिः निरवच्छिन्नैव, संयोगसामान्याभावत्वावच्छिन्ना तु द्विविधैवेति वृत्तिभेदोपगमान्न[1] दोषः। तथा सति अभावभेदविलोपापत्तेः। ननु सत्तादिसाध्यकाव्याप्तिवारकविशेषणे स्वरूपसंबन्धेन वर्तमानत्वं निवेश्यम्; अभावसाध्यकव्यभिचारिणि साध्यवत्ताप्रकारकप्रमाविषयत्वाद्य-भावमादायानतिप्रसङ्गादित्यत आह—कपीति।

तर्कालङ्कारमतं निरस्यति—न त्विति। ननु तर्कालङ्काराणां व्याप-कताघटकसंबन्धेनाभावस्य वाच्यतया तत्र ईदृशव्याप्यवृत्तित्वं सम्यक्। व्याप्यवृत्तितानिरूपकाधिकरणत्वाप्रवेशेन लघुत्वाद् अयोगोलकान्यत्वाद्य-भावमादायानतिप्रसङ्गादिति चेत्; तन्मते व्याप्यवृत्तित्ववैयर्थ्यादेः वक्ष्य-माणत्वात्।

साध्यतावच्छेदकसंबन्धघटितेति। नन्वत्र साध्यतावच्छेदकसंबन्धेन यद्रूपावच्छिन्नानधिकरणं साध्यवत् तदन्यत्वमेव [2]प्रतियोगिवैयधिकरण्य-घटित साध्यव्यापकतावच्छेदकत्वम् अयोगोलकान्यत्वत्वसाधारणम्। न चैवमपि संयोगेन द्रव्यत्वाभावस्य वारणाय तत्संबन्धेनाधेयत्वमपि निवेश्यम्। तस्य व्यधिकरणधर्मावच्छिन्नाभावत्वेनादोषादिति चेत्, न। विशेषणता-संबन्धावच्छिन्नायोगोलकान्यत्वाभावो न लक्षणघटकः तत्प्रतियोगितायाः साध्यतावच्छेदकसंबन्धानवच्छिन्नत्वादित्यर्थाद्, घटितान्तं प्रतियोगिता-विशेषणमेवेति न ग्रन्थासङ्गतिः। संयोगावच्छिन्नायोगोलकान्यत्वाभावस्य व्यधिकरणधर्मावच्छिन्नाभावतया अतिव्याप्तिसङ्गतेरिति। क्वचिदिति। हेत्वधिकरणे निरवच्छिन्नवृत्तित्वं तु न शङ्क्यम्; तथा सति वक्ष्यमाणा-धिकरणवृत्तित्वांशवैयर्थ्यात्।

**न्यायरत्नम्**

**लक्षणघटकतयेति। कपिसंयोगाभावस्य केवलान्वयित्वेऽपि न तस्य समनियताभावैक्यमते गगनाभावत्वरूपव्यधिकरणधर्मावच्छिन्नप्रतियोगि-**

[1] न दोष इति वाच्यम्—अ.

[2] प्रतियोगिवैयधिकरण्यघटिततद्घटितसाध्यव्यापकतावच्छेदकत्वम्—अ.

ताकत्वम् । प्रतियोगिवैयधिकरण्याघटितसमनैयत्यघटकव्यापत्वाक्रान्तयोरैक्यादित्यवधेयम् । सत्तासाध्यकाव्याप्तिवारणायोपात्ते हेतुतावच्छेदकसंबन्धेन कस्यचिदधिकरणे वर्तमानत्वमिति विशेषणे स्वरूपसंबन्धेन वर्तमानत्वविवक्षणे त्वाह--कपिसंयोगाधिकरणत्वाभावेति ।

## गादाधरी

(७०) साध्याभावे प्रतियोगितावच्छेदकावच्छिन्नप्रतियोगिवैयधिकरण्यनिवेशनम् ।

ननु कालिकसंबन्धावच्छिन्नप्रतियोगिताकाकाशाभावे साध्ये [1]आत्मत्वादिहेतावव्याप्तिः । व्याप्यवृत्तेः साध्याभावस्य आकाशाभावरूपस्य व्याप्यवृत्तितानिरूपकाधिकरणात्मादौ हेतोः वृत्तेः । अतः साध्याभावीयप्रतियोगितावच्छेदकावच्छिन्नवैयधिकरण्यनिरूपकाधिकरणमेव तत्तदधिकरणपदेन [2]विवक्षणीयम् । प्रतियोगितावच्छेदकावच्छिन्नत्वनिवेशाद् एतद्रूपान्यत्वविशिष्टगुणत्ववान् गुणत्वाद् इत्यादौ समवायरूपसाध्यतावच्छेदकसंबन्धघटितविशिष्टसाध्यव्यापकतावच्छेदकविशिष्टगुणत्वत्वावच्छिन्नाभावस्य प्रतियोगिवैयधिकरण्यनिरूपकताया हेतुमत्यसत्त्वेऽपि नातिव्याप्तिः । तथा च कालिकसंबन्धावच्छिन्नप्रतियोगिताका[3]काशत्वाभावाभावादिसाध्यकात्मत्वादिहेतावव्याप्तिः । तत्र व्याप्यवृत्तियावत्साध्याभावान्तःपातिनः आकाशत्वाभावादेः प्रति-

[1] आत्मत्वहेतावव्याप्तिरिति प्रतीकधारणं न्यायरत्ने--स्व.

[2] एवं च साध्यादिरूपप्रतियोगिवैयधिकरण्यनिरूपकाधिकरणतायाः काले एव सत्वात् नाव्याप्तिः--रा.

[3] आकाशत्वाभावाभावे साध्य इति प्रतीकधारणम् न्यायरत्ने--स्व.

**योगितावच्छेदकावच्छिन्नवैयधिकरण्याप्रसिद्धेः । कालेऽपि आकाशावच्छेदेन तादृशसाध्यरूपतदभावीयप्रतियोगिसत्वात् सर्वत्रैव तादृशाभावस्य प्रतियोगिसमानाधिकरणत्वात्; अतो व्याप्यवृत्तित्वमुपेक्ष्य तादृशाभावे प्रतियोगितावच्छेदकावच्छिन्नवैयधिकरण्यमेव [1]निवेशयति––प्रतियोगितावच्छेदकावच्छिन्नेति ।**

कृष्णंभट्टीयम्

[[2]विवक्षणीयमिति । तथा च साध्यादिरूपप्रतियोगिवैयधिकरण्यनिरूपकाधिकरणतायाः काल एव सत्त्वात् नाव्याप्तिरिति भावः । रूपान्यत्वविशिष्टगुणत्वादिसाध्यके रूपसमवेतजात्यभावमादायैव नातिव्याप्तिरित्यत आह––एतदिति ।] कालिकेति । न चाकाशाभावरूपसाध्याभावस्याधिकरणे व्यधिकरणधर्मावच्छिन्नवृत्तित्वाभावस्य तत्सजातीयस्य सत्त्वान्नाव्याप्तिरिति वाच्यम् । समनियताभावभेदात् । तदैक्येऽपि उक्ताभावयोः साजात्यव्यवहारात् । कालिकसंवन्धावच्छिन्नमेयत्वाद्यभावो वा साध्यः । [[3]तदधिकरणतायाः संवन्धसामान्येन दैशिकविशेषणतया वा निवेशस्य उक्तदोषग्रस्तत्वात्] चक्रवर्तिलक्षणरीत्या संबन्धो निवेश्यः । स च प्रकृते कालिकसंवन्ध इत्यव्यात्प्यभावेऽपि संबन्धनिवेशे गौरवमेवावतारकमिति[4] बोध्यम्[5]।

[1] विशेषणमाह––अ.

[2] [ ] एतदन्तर्गतपाठो नास्ति––अ.

[3] [ ] एतदन्तर्गतपाठस्थाने संबन्धसामान्येन विशेषणतया वा तदधिकरणतानिवेशस्योक्तदोषग्रस्तत्वादिति पाठः––अ.

[4] इति तु––अ.

[5] अनन्तरं विवक्षणीयमिति तथा च साध्यादिरूपप्रतियोगिवैयधिकरण्यनिरूपकाधिकरणतायाः काल एव सत्त्वान्नाव्याप्तिरिति भावः । रूपान्यत्वविशिष्टगुणत्वादिसाध्यके रूपसमवेतजात्यभावमादायैव नातिव्यप्तिरित्यत आह––एतदिति एतादृशपाठः––अ. एष पाठः एव सम्यक् । मैसूरपुस्तके तु कालिकेति प्रतीकधारणात् पूर्वं वर्तते––स्व.

आकाशत्वेति । आकाशाभावरूपप्रतियोग्यनधिकरणासत्त्वेन पूर्वं[1]साध्यस्य [2]केवलान्वयित्वाभावात् स्थलान्तरानुधावनम् । आकाशावच्छेदेनेति । आकाशत्वाभावानधिकरणेत्यादिः । न च महाकालसंबन्धाभावात् नाकाशस्यावच्छेदकत्वमिति वाच्यम् । स्वरूपसंबन्धेन गगनादेः कालवृत्तित्वात् । प्रतियोग्यनवच्छेदकतामात्रेणैव तदभावावच्छेदकत्वात् । स्वाधिकरणताया एव सार्वभौमाभिमतसाध्यवद्वृत्तित्वभावावच्छेदकतानियामकत्वेऽपि सर्वमतसिद्धायां एतादृशावच्छेदकतायां संबन्धितामात्रस्यैव तथात्वाच्च । तादृशाभाव इति । तथा च साध्यरूपप्रतियोगितावच्छेदकावच्छिन्नसमानाधिकरणत्वात् न तस्य लक्षणघटकतेति भावः । संयोगाभाववान् मेयत्वादित्यादौ संयोगात्मकाभावस्य स्वीययत्किंचित्प्रतियोगितावच्छेदकसमवेतसामान्याभाववत्त्वावच्छिन्नव्यधिकरणतया अव्याप्तिरतोऽवच्छिन्नान्तम् ।

## न्यायरत्नम्

**[3]आत्मत्वहेतावव्याप्तिरिति । साध्याभाववत्तायां दैशिकविशेषणतासंबन्धावच्छिन्नत्वनिवेशाभिप्रायेणेदम् । यदि साध्याभावत्वविशिष्टाधिकरणत्वं निवेश्यते, स्वप्रतियोगितावच्छेदकविशिष्टस्वप्रतियोगिमत्ताग्रहविरोधितानियामकसंबन्धेन वा तदधिकरणत्वं निवेश्यते, तदा नायं दोषः; रूपान्यत्वविशिष्टगुणत्वसाध्यके यावत्साध्याभावान्तःपातिरूपासमवेतत्वावच्छिन्नाभावस्य रूपे प्रतियोगिवैयधिकरण्यसंभवान्नातिव्याप्तिरत एतद्रूपान्यत्वेति । [4]आकाशत्वाभावाभावे साध्य इति । आकाशाभावस्य कालिकसंबन्धेन व्याप्यवृत्तित्वात् तेन संबन्धेन तदभावस्य काले किमवच्छेदेनाप्यसत्त्वात् न प्रतियोगिवैयधिकरण्यनिरूपकाप्रसिद्धिरिति कालिकसं-**

[1] कालिकसंबन्धावच्छिन्नप्रतियोगिताकाकाशाभावाभावस्य—स्व.

[2] न प्रतियोगिवैयधिकरण्यनिरूपकाप्रसिद्धिरिति भावः—स्व.

[3] आत्मत्वादिहेतावव्याप्तिः इति गादाधर्यां पाठः—स्व.

[4] आकाशत्वाभावाभावादिसाध्यकेत्यादि पाठः गादाधर्यां दृश्यते—स्व.

बन्धावच्छिन्नाकाशाभावाभावसाध्यकस्थलपरित्यागः। आकाशावच्छेदेनेति। आकाशस्यापि स्वरूपसंबन्धेन महाकालवृत्तित्वाद् अवच्छेद्याधिकरणसंबन्धित्वमाकाशस्याक्षतमिति ध्येयम्।

[1]जन्यज्ञानविषयत्वसाध्यक इति। यद्यपि विषयतया जन्यज्ञानसाध्यकेऽपि अव्याप्तिः संभवति; तथापि साध्यतावच्छेदकसंबन्धावच्छिन्नाभावस्यैतन्मते निवेशाद् विषयताया वृत्त्यनियामकतामते तत्संबन्धावच्छिन्नाभावाप्रसिद्धेः तेन संबन्धेन साध्यतानभ्युपगमाभिप्रायेण तत्त्यागः। एतद्रूपान्यत्वविशिष्टसत्तावानिति। अत्रापि रूपान्यत्वप्रयोजनं पूर्ववदेव।

## गादाधरी

(७१) प्रतियोगितावच्छेदकावच्छिन्नत्वस्य प्रयोजनम्।

[2]अत्र च समनियताभावैक्यमते [3]विश्वेषामेव व्यधिकरणधर्मावच्छिन्नाभावप्रतियोगितया तत्तत्प्रतियोग्य[4]नधिकरणाप्रसिद्धया तदसंग्रहः। [5]विशिष्टसाध्यव्यापकतावच्छेदकावच्छिन्नयत्किंचित्प्रतियोगिताश्रयवैयधिकरण्यनिवेशे च वाच्यत्वत्वादिना घटाद्यभावस्य घटादिवैयधिकरण्येन लक्षणघटकतानिर्वाहेऽपि

1 जन्यज्ञानविषयत्वादिसाध्यके इति गादाधर्यां पाठः––स्व.

2 प्रतियोगिवैयधिकरण्यनिवेशे दोषमाह––रा.

समनियताभावभेदमते वाच्यत्वत्वादिना घटाद्यभावस्य स्वप्रतियोगिभूतघटानधिकरणवृत्तित्वात् तत्संग्रहादाह––समनियतेति––रा.

3 विश्वस्य––अ.

4 अनधिकरणत्वाप्रसिद्धया––अ.

5 संयोगाभाववान् मेयत्वादित्यादौ स्वीययत्किञ्चित् प्रतियोगिताश्रयसमवेतसामान्याभावानधिकरणवृत्तित्वात् संयोगस्य लक्षणघटकत्वादाह––विशिष्टेति––रा.

प्रतियोगिभेदेन प्रतियोगिताभेदमते [1]जन्यज्ञानविषयत्वादिसाध्यके यत्किञ्चित्का[2]लावच्छेदेन परमाण्वादौ प्रसिद्धस्य साध्यतावच्छेदकावच्छिन्नाभावस्य यत्किञ्चित्प्रतियोग्यनधिकरणवृत्तेः प्रतियोगिवैयधिकरण्यनिरूपकाधिकरणाप्रसिद्ध्या अव्याप्तिः। [3]तत्रापि यत्किंचित्प्रतियोगितान्तर्भावेन तादृशानधिकरणत्वप्रसिद्धिसम्पादने [4]यत्किंचित्प्रतियोगिताश्रयप्रतियोगिवैयधिकरण्यनिरूपकाधिकरणे हेतोर्वृत्त्या अव्याप्तितादवस्थ्यम्। एवं वह्निमान् धूमाद् इत्यादौ द्रव्यत्वाद्यवच्छिन्नस्य संयोगेन योऽभावः तस्य द्रव्येऽपि उत्पत्तिकालावच्छेदेन [5]वर्तमानस्य गुणादौ प्रतियोगिव्यधिकरणस्य प्रतियोगिवैयाधिकरण्यनिरूपकाधिकरणगुणादौ हेतुतावच्छेदकसंबन्धेन वृत्तेरप्रसिद्ध्या अव्याप्तिवारणाय हेतुतावच्छेदकसंबन्धेन कस्यचिदधिकरणे [6]प्रतियोगिवैयधिकरण्यमभावे विशेषणं देयम्। एवञ्च [7]एतद्रूपान्यत्वविशिष्टसत्तावान् जातेः इत्यादौ समवायघटितसाध्यव्यापकतावच्छेदकविशिष्टसत्तात्वाद्यवच्छिन्नाभावस्य हेत्वधिकरणे सत्तादिरूपप्रतियोगिसमानाधिकरणतया व्यधिकरण-

[1] न्यायरत्ने जन्यज्ञानविषयत्वसाध्यक इति प्रतीकधारणम्––स्व.

[2] प्रलयावच्छेदेन––रा.

[3] अधिकरणविशेषेऽपि––रा.

[4] तत्र हेतोर्वृत्त्या इत्येव––अ.

[5] इदं च हेतुतावच्छेदकत्वैकसंबन्धेन कस्यचिदधिकरणे वर्तमानत्वरूपदीधितिकारवक्ष्यमाणविशेषणसंरक्षार्थं––रा.

[6] तथा च प्रतियोग्यनधिकरणीभूततादृशाधिकरणवृत्तित्वमित्यर्थः––रा.

[7] रूपान्यत्वविशिष्टसत्तावानिति कुतो नोक्तम्। तत्र रूपावृत्तित्वावच्छिन्नसमवायसंबन्धावच्छिन्नाभावमादायैवातिव्याप्तिवारणसंभवादत एतदिति। अत्र च एतद्रूपावृत्तित्वं न समवायघटितविशिष्टव्यापकतावच्छेदकम् एतद्रूपान्यतद्रूपे विशिष्टसाध्यवति एतद्रूपावृत्तेः समवायेनासत्वात्––रा.

**धर्मावच्छिन्नाभावस्यैव [1]लक्षणघटकतया अतिव्याप्तिः, अतः प्रतियोगितावच्छेदकावच्छिन्नत्वोपादानम् ।**

कृष्णंभट्टीयम्

यत्किंचित्कालः––महाप्रलयः । खण्डप्रलये ब्रह्माण्डान्तरे शरीरिसत्त्वोपगमे एकस्य सर्वमिति ज्ञानोत्तरमपरस्य तादृशज्ञानं नास्तीत्यस्य दुर्वचत्वात् । अत एव सृष्टेरप्युपेक्षा । तत्रापि । अधिकरणविशेषणेऽपि । समनियताभावभेदमतेऽपि आह––एवमिति । द्रव्येऽपीति । हेतुतावच्छेदकसंबन्धेन कस्यचिदधिकरणे वृत्तित्वार्थम् । हेतुतेति । प्रतियोग्यनधिकरणतादृशाधिकरणवृत्तित्वमर्थः । एवं चेति । एकत्र द्वयमिति रीत्या अभावे विशेषणद्वयोक्तौ हेतुताघटकसंबन्धेनाधिकरणमित्यनुक्तौ च विशिष्टसत्ताभावमादायैव नातिव्याप्तिरित्युपष्टम्भसङ्गतिः । एतत्पदप्रयोजनं [2]प्राग्वत् । विशिष्टसत्तासाध्यके द्रव्यत्वाभावसत्त्वात्तदुपेक्षा ।

## गादाधरी

(७२) **केवलान्वयिसाध्यकस्थले प्रतियोगितावच्छेदकावच्छिन्नवैयधिकरण्यं दुर्घटमित्याक्षेपः ।**

**अथ केवलान्वयिस्थले लक्षणघटकानां वाच्यत्वत्वाद्यवच्छिन्नघटाद्यभावानां सर्वेषामेव प्रतियोगितावच्छेदकवाच्यत्वत्वावच्छिन्नानधिकरणाप्रसिद्धिः । न च यत्किञ्चित्प्रतियोगितावच्छेदकावच्छिन्नानधिकरणवृत्तित्वमेव निवेशनीयम्, तथा च समनियताभावानामैक्योपगमेन व्यतिरेकितावच्छेदकधर्मस्यापि उक्ताभावप्रतियोगितावच्छेदकतया तदवच्छिन्नानधिकरणत्वस्य**

[1] लक्षणघटकता स्यादिति––अ.

[2] एतदद्रूपान्यत्वविशिष्टगुणत्ववान् गुणत्वादिति ग्रन्थव्याख्यानोक्तरीत्येत्यर्थः.

**प्रसिद्ध्या तेषां लक्षणघटकतेति वाच्यम् । तथा सति [1]संयोगाभावादिसाध्यकस्थले संयोगाद्यात्मकाभावस्य यत्किञ्चित्प्रतियोगितावच्छेदकसमवेतसामान्याभावत्वावच्छिन्नानधिकरणवृत्तित्वात् तद्व्यावर्तनासंभवात् । विशिष्टसाध्यव्यापकतावच्छेदकत्वेन प्रतियोगितावच्छेदकविशेषणे [2]उक्तस्थले तादृशप्रतियोगितावच्छेदकावच्छिन्नानधिकरणाप्रसिद्धेः दुर्वारत्वात् । प्रतियोगितावच्छेदकावच्छिन्नप्रतियोग्यनधिकरणवृत्तित्वनिवेशे च व्यधिकरणधर्मावच्छिन्नाभावस्य प्रतियोगितावच्छेदकावच्छिन्नप्रतियोग्यप्रसिद्ध्या तादृशप्रतियोगिवैयधिकरण्यं दुर्घटमिति ।**

कृष्णंभट्टीयम्

समवेतेति । समवेतसामान्याभावाभावः सत्तैवेति मते गुणसामान्याभावो द्रष्टव्यः । उक्तस्थले । केवलान्वयिस्थले । व्यधिकरणधर्मावच्छिन्नाभावस्तु न संयोगाभावरूपः इत्युक्तम् । प्रतियोगितावच्छेदकावच्छिन्नप्रतियोग्यप्रसिद्ध्येति । यद्यपि वाच्यत्वत्वेन ज्ञेयत्वाभावस्य ज्ञयत्वत्वेन वाच्यत्वाभावतया प्रतियोगितावच्छेदकावच्छिन्नवाच्यत्वरूपप्रतियोगिप्रसिद्धिः । परंतु तदनधिकरणाप्रसिद्धिः । एवं वह्नित्वेन घटाभावादेः घटत्वेन वह्न्यभावैक्यात् प्रतियोगितावच्छेदकीभूतवह्नित्वावच्छिन्नवह्न्यात्मकप्रतियोग्यनधिकरणवृत्तित्वं प्रसिद्धमेव; तथापि एकप्रतियोगिताघटितस्यैव यादृशप्रतियोगितावच्छेदको यो धर्मः तद्विशिष्टतादृशप्रतियोगिताश्रयेति रीत्या प्रतियोगितावच्छेदकविशिष्टप्रतियोगि[3]पदार्थव्युत्पादनात् न तदसङ्गतिः । अत एव अग्रिममतयोः प्रतियोगितैक्योपादानप्रयोजनं सङ्गच्छते ।

1 संयोगाभावसाध्यकस्थले--अ.

2 केवलान्वयिस्थले--रा.

3 पदार्थत्व--अ.

## न्यायरत्नम्

प्रतियोग्यप्रसिद्ध्येति । यद्यपि समनियताभावैक्यमते तत्प्रसिद्धिः संभवति; तथापि तदनधिकरणाप्रसिद्धिर्दुर्वारा । अथवा यादृशप्रतियोगितेति विवक्षणावश्यकत्वान्नासंगतिः ।

## गादाधरी

(७३) तस्य केषांचिन्मतेन परिहारः ।

अत्र केचित्——स्वप्रतियोगितावच्छेदकावच्छिन्नस्वप्रतियोगिसमानाधिकरणा ये ये तदन्यत्वं व्यधिकरणान्तार्थः । न तु प्रतियोगितावच्छेदकावच्छिन्नप्रतियोग्यनधिकरणवृत्तित्वम्; [[1]व्यधिकरणधर्मावच्छिन्नाभावस्य तादृशप्रतियोग्यप्रसिद्ध्या असंग्रहात्] । न चैवं सति धूमवान् वह्नेः इत्यादौ साध्यतावच्छेदकीभूतसंयोगसंबन्धघटितव्यापकतावच्छेदकधूमत्वाद्यवच्छिन्नसंयोगसंबन्धावच्छिन्नप्रतियोगिताकानां धूमाद्यभावानामुत्पत्तिकालावच्छेदेन धूमादिमति वृत्तेः व्यधिकरणधर्मावच्छिन्नाभावस्यैव प्रतियोगितावच्छेदकावच्छिन्नप्रतियोगिव्यधिकरणतया अतिव्याप्तिरिति वाच्यम् । साध्यतावच्छेदकसंबन्धेन व्यापकतामनिवेश्य येन संबन्धेन व्यापकता तत्संबन्धावच्छिन्नव्यापकतावच्छेदकावच्छिन्नाभावं निवेश्य विषयितासंबन्धेन साध्यव्यापकज्ञानस्य समवायसंबन्धावच्छिन्नाभावमादायोक्तदोषस्य वारणीयतया अयोगोलकभेदादेरभावमादायातिव्याप्तिवारणसंभवात् ।

[1] [ ] अतो न व्यधिकरणधर्मावच्छिन्नाभावस्य विशिष्टप्रतियोग्यप्रसिद्ध्या असंग्रहः—अ.

[1]यादृशप्रतियोगितावच्छेदको यो धर्मः तद्विशिष्टतादृशप्रतियोगिताश्रयसामानाधिकरण्यं विवक्षणीयम् । तेन समनियताभावैक्यमते तादृशवाच्यत्वत्वादिना घटाद्यभावस्यापि घटत्वादिना वाच्यत्वाभावाभिन्नतया वाच्यत्वादिप्रतियोगिकत्वेन प्रतियोगितावच्छेदकवाच्यत्वत्वादिविशिष्टवाच्यत्वादिरूपप्रतियोगिसमानाधिकरणत्वेऽपि न क्षतिः । न चैवमपि वाच्यत्वादिसाध्यकस्थले सर्वेषामभावानां पूर्वक्षणादिवृत्तित्वविशिष्टस्वाभावरूपप्रतियोगिसमानाधिकरणतया प्रतियोग्यसमानाधिकरणाभावाप्रसिद्धिरिति वाच्यम्। स्वावच्छेदकविशिष्टस्वाश्रयाधिकरणवृत्त्यभावीयप्रतियोगिताभिन्नत्वेन व्यापकतावच्छेदकावच्छिन्नप्रतियोगिता विशेषणीयेत्यत्रैव प्रतियोगितावच्छेदकेत्यादेः तात्पर्यात्, वाच्यत्वत्वावच्छिन्नघटादिनिष्ठप्रतियोगितायाः स्वावच्छेदकविशिष्टस्वाश्रयाप्रसिद्ध्या निरुक्तप्रतियोगिताभिन्नत्वेन तन्निरूपकाभावमादाय वाच्यत्वादिसाध्यके लक्षणसमन्वयसंभवात् । न च तथापि एतदभावभिन्नं मेयत्वाद् इत्यादौ साध्यव्यापकतावच्छेदकसमानाधिकरणधर्मावच्छिन्नप्रतियोगिताकाभावस्य एतदभावमात्रवृत्तेः अभावमात्राधिकरणतया अधिकरणस्वरूपत्वाद् एतदभावभेदादिरूपप्रतियोगिसमानाधिकरणतया निरुक्तप्रतियोगिताभिन्नव्यापकतावच्छेदकावच्छिन्नप्रतियोगिताकोऽभावः व्यधिकरणधर्मावच्छिन्नाभाव एवेत्यतिव्याप्तिरिति वाच्यम् । [2]स्वावच्छेदकविशिष्टस्वाश्रयाधि-

[1] स्वावच्छेदकावच्छिन्नस्वाश्रयनिष्ठाधेयतानिरूपकवृत्तित्वम् ; स्वपदद्वयमेकप्रतियोगितापरम्——रा.

[2] स्वावच्छेदकविशिष्टस्वाश्रयाधिकरणनिरूपितवृत्तितावच्छेदकानुयोगितानिरूपितप्रतियोगिताभिन्नत्वेनेत्यर्थः——रा.

**करणे स्वनिरूपकाभावत्वेन वर्तते योऽभावः तदीयप्रतियोगिताभिन्नत्वेन व्यापकतावच्छेदकावच्छिन्नप्रतियोगिताया विशेषणीयतया एतदभावाधिकरणे एतदभावभिन्ने एतदभावत्वेन एतदभावरूपैतदभावभेदाभावस्य वृत्तावपि तादृशाधिकरणे एतदभावभेदो नास्तीत्यप्रतीत्या एतदभावभेदत्वावच्छिन्नप्रतियोगिताकाभावत्वेन तस्यावृत्तित्वात्, एतदभावभेदत्वावच्छिन्नप्रतियोगितायां निरुक्तप्रतियोगिताभेदस्याक्षतत्वादित्याहुः ।**

कृष्णंभट्टीयम्

स्वेति। स्वपदद्वयमव्याप्यवृत्तिसंयोगाद्यभावपरम् । स्वावच्छेदकेति । वृत्तित्वं च न संबन्धसामान्येन । धूमवान् वह्नेरित्यादौ अतिव्याप्तेः । अत एव न प्रतियोगिमत्ताग्रहविरोधितानियामकसंवन्धेन । धूमाभावस्य यः कालिकसंबन्धावच्छिन्नाभावः तस्यापि प्रतियोगितया कालिक[1]संवन्धासंग्रहापातात् । किन्तु स्वावच्छेदकविशिष्टस्वाश्रयवत्ताग्रहविरोधितानियामकसंवन्धेन । साध्याभाववत्तायामपि एतादृशसंवन्धनिवेश आवश्यकः । तात्पर्यादिति । तथा चाभावे स्वातन्त्र्येण प्रतियोगिवैयधिकरण्यं नास्तीति भावः ।

एतदभावभिन्नमिति । साध्यप्रतियोगिनः सप्तमपदार्थत्वलाभाय एतदिति । धूमाभावादेः अतिरिक्ततालाभायाभावमात्रेति मात्रपदम् । एतदभावभेदाधिकरणत्वाभावादेरतिव्याप्त्यवारकतास्फोरणायाभावप्रति - योगिकत्वोपेक्षा । गगनाभावभिन्नं मेयत्वादित्यादौ साध्याभावस्याभावाधिकरणकत्त्वेन गगनाभावात्मनः व्यधिकरणधर्मावच्छिन्नाधिकरणवृत्तित्वाभावमादायातिव्याप्तेः निरुक्ताभावयोः साजात्यव्यवहाराभावेन वारणे तु

[1] संबन्धसंग्रहापातात्—अ.

गगनाभावभिन्नं घटत्वादित्यादाव[1]व्याप्तिर्बोध्या । वस्तुतस्तु——स्वनिरूपकाभावत्वेनेत्यादि विवक्षणेऽपि उक्तस्थलेऽव्याप्तिवारणाय निरुक्तसाध्याभावत्वविशिष्टाधिकरणत्वं साध्याभावत्वेन हेतुतावच्छेदकसंबन्धेन [2]कस्यचिदधिकरणे वर्तमानत्वं वा विवक्षणीयम्। एवं च गगनाभावभिन्नं मेयत्वादित्यत्रातिव्याप्तेः प्रदर्शनं स्वविरूपकाभावत्वविवक्षानौपयिकमिति न कृतमिति बोध्यम् ।

## न्यायरत्नम्

**स्वप्रतियोगितावच्छेदकावच्छिन्नस्वप्रतियोगिसमानाधिकरणा इति । व्यधिकरणधर्मावच्छिन्नाभावस्य स्वप्रतियोगितावच्छेदकावच्छिन्नसमानाधिकरणत्वात् तत्संग्रहाय स्वप्रतियोगीति । तादृशसामानाधिकरण्यमव्याप्यवृत्तिसंयोगाभावादौ प्रसिद्धमिति स्वपदेन तं गृहीत्वा तदन्यत्वं लक्षणघटकाभावे उपपादनीयम् । भवानन्दोक्तदूषणमाशङ्क्य निराकुरुते——न च तथापि एतदभावभिन्नमिति । साध्यप्रतियोगिनः सप्तमपदार्थत्वस्फोरणायैतदिति केचित् ।**

## गादाधरी

(७४) **केषांचिन्मतस्य खण्डनम् ।**

**तच्चिन्त्यम्; व्यापकताघटकसंबन्धावच्छिन्नाभावनिवेशे व्यापकताशरीरे प्रतियोगिवैयधिकरण्यस्या[3]भावविशेषणत्वेऽपि**

[1] अव्याप्तिरित्यसत् । प्रतियोगिवैयधिकरण्येनाव्याप्त्युद्धारस्यातिव्याप्तेश्च संभवात् इति पाठः——अ.

[2] यस्य कस्यचिदधिकरणे——अ.

[3] व्यापकताघटकाभावे प्रतियोगिवैयधिकरण्यविशेषणस्य प्राक् वह्निमान् धूमादित्यादौ वह्नित्वादेः साध्यतावच्छेदकसंबन्धघटितव्यापकतावच्छेदकत्वसंपत्तिः प्रयोजनमित्युक्तम्; इदानीं तन्न संभवति वह्नित्वादेः व्यापकतानवच्छेदकत्वेऽपि स्वरूपसंबन्धघटितव्यापकतावच्छेदकवाच्त्ववत्वाद्यवच्छिन्नस्वरूपसंबन्धावच्छिन्नघटादिनिष्ठ-

**संयोगादिना धूमादिसाध्यकव्यभिचारिण्ययोगोलकान्यत्वाद्यभावमादायातिव्याप्तिवारणसंभवात्, तत्र तन्निवेशे प्रयोजनाभावेनाव्याप्यवृत्तिसाध्याभावमादायाव्याप्त्यनवकाशात् तदभावे व्याप्यवृत्तित्वादिविशेषणव्यावृत्त्यसंगतेः। अस्तु वा साध्यव्यापकतावच्छेदकस्यापि साध्यवन्निष्ठव्यधिकरणधर्मावच्छिन्नप्रतियोगितावच्छेदकतया तदभावव्यावर्तनाय व्यापकताशरीरे प्रतियोगिवैयधिकरण्यप्रवेशः, तथापि एतादृशप्रतियोग्यसामानाधिकरण्यविवक्षणे तस्याव्याप्तिवारणप्रयोजनकताभिधानासङ्गतिः। अभावे तदनिवेशे व्याप्यवृत्तिसाध्यकेऽपि यावत्साध्यवद्विषयकजन्यज्ञानव्यक्तिविशेषस्य [1]प्रतियोगिवैयधिकरण्यघटितसाध्यव्यापकताश्रयत्वात्, कालविशेषावच्छेदेन हेतुमति तदभाववृत्तेरसंभवस्यैव प्रसङ्गात्।**

कृष्णंभट्टीयम्

सामानाधिकरण्येनावच्छेदकत्वमेव लाघवाद् व्यापकताघटकमित्याशयेन दूषयति—तच्चिन्त्यमिति।

प्रतियोगिताकाभावमादायैव लक्षणसमन्वयसंभवात्; परंतु एतादृशरीत्या धूमवान् वह्नेरित्यादौ धूमत्वादेः संयोगसंबन्धेन साध्यं प्रति केनापि संबन्धेन घटितायां व्यापकतायामनवच्छेदकतया स्वरूपसंबन्धघटितव्यापकतावच्छेदकवाच्यत्वत्वाद्यवच्छिन्नप्रतियोगिताकाभावस्यैव लक्षणघटकतया अतिव्याप्तिः स्यात्। व्यापकताघटकाभावे प्रतियोगिवैयधिकरण्यविशेषणे धूमत्वादेः संयोगसंबन्धघटितव्यापकतावच्छेदकतया तदवच्छिन्नसंयोगसंबन्धावच्छिन्नधूमनिष्ठप्रतियोगिताकाभावमादाय नातिव्याप्तिरिति वक्तव्यम्। तदपि न संभवति। धूमाभावस्य लक्षणघटकत्वासंभवेऽपि अयोगोलकान्यत्वाभावमादाय नातिव्याप्तिः—रा.

[1] विषयतया प्रतियोगीत्यादि—अ.

अत्र साध्यवन्निष्ठाभावप्रतियोगितायाः साध्यतावच्छेदकसंवन्धावच्छिन्नायाः सामानाधिकरण्येनानवच्छेदकधर्मावच्छिन्नसाध्यतावच्छेदकसंवन्धावच्छिन्नाभावघटितमेकं लक्षणं व्यापकताघटकाभावे प्रतियोगिवैयधिकरण्याघटितम् ।

## न्यायरत्नम्

**असंभवस्यैव प्रसंगाद् इति । अत्र केचित्——वह्निमान् गगनादित्यवृत्तिहेतोः लक्ष्यत्वमताभिप्रायेण दीधितिकारीयाव्याप्त्यभिधानसंगतिमाहुः ।**

## गादाधरी

(७५) **मतान्तरेण प्रतियोगिवैयधिकरण्यपरिष्करणपूर्वकं तस्य केवलान्वयिनि सुघटत्वोपपादनम् ।**

**अत्र वदन्ति——प्रतियोगितावच्छेदकावच्छिन्नप्रतियोग्यनधिकरणवृत्तित्वमेव तदर्थः। न च व्यधिकरणधर्मावच्छिन्नाभावस्य प्रतियोगितावच्छेदकविशिष्टप्रतियोग्यप्रसिद्धेः केवलान्वयिसाध्यके प्रतियोगितावच्छेदकविशिष्टप्रतियोगिव्यधिकरणसाध्याभावाप्रसिद्धेरव्याप्तिरिति वाच्यम्। प्रतियोगितावच्छेदकावच्छिन्न[1]प्रतियोग्यनधिकरणवृत्तित्वं हि स्वप्रतियोगितावच्छेदकावच्छिन्नस्वप्रतियोगिवृत्तिप्रतियोगितावच्छेदकताकभेद[2]वद्वृत्तित्वं, ज्ञेयत्वत्वादिना वाच्यत्वाद्यभावस्य [3]तादृशभेदसमानाधिकरणतया प्रतियोगितावच्छेदकावच्छिन्नप्रतियोगिवैयधिकरण्यं सुघटमेव ।**

1 प्रतियोगिव्यधिकरणत्वम्——अ.

2 भेदवत्त्वम्——अ.

3 तादृशभेदसामानाकिरण्यरूपम्——अ.

[1]व्यधिकरणधर्मावच्छिन्नप्रतियोगितावच्छेदकताकज्ञेयत्वत्वादिना वाच्यत्ववद्भेदस्यैव तथात्वात् कपिसंयोगाभाववान् मेयत्वाद् इत्यादौ कपिसंयोगादिरूपसाध्याभावस्यापि ज्ञेयत्वत्वादिना कपिसंयोगाभावादिमद्भेदसामानाधिकरण्यसत्त्वात् तस्य च स्वप्रतियोगितावच्छेदकावच्छिन्न[2]वैयधिकरण्यनिरूपकाधिकरणप्रसिद्ध्या अव्याप्तिः, अतः प्रतियोगितावच्छेदकावच्छिन्नत्वं भेदप्रतियोगितावच्छेदकतायां विशेषणम् । तत्रैव कपिसंयोगात्मकाभावीयप्रतियोगितावच्छेदकीभूतसमवेतसामान्याभावत्वावच्छिन्नसमवेतसामान्याभाववद्भेदस्यापि निरुक्तप्रतियोगितावच्छेदकावच्छिन्नप्रतियोगिनिष्ठप्रतियोगितावच्छेदकताकत्वात् तत्सामानाधिकरण्यमादाय कपिसंयोगाद्यात्मकाभावानां प्रतियोगितावच्छेदकावच्छिन्नप्रतियोगिवैयधिकरण्यवारणाय साध्यतावच्छेदकावच्छिन्नव्यापकतावच्छेदकत्वेन प्रतियोगितावच्छेदकं विशेषणीयम् । समवेतसामान्याभावत्वादेः कपिसंयोगाभावादिव्यापकतानवच्छेदकतया न दोषः ।

न चात्र साध्यतावच्छेदकावच्छिन्नव्यापकतावच्छेदकत्वेन प्रतियोगितावच्छेदके विशेषिते तत्तत्साध्यव्यक्त्यभावादीनामी[3]दृशप्रतियोगितावच्छेदकावच्छिन्नं प्रति वैयधिकरण्यं न घटते, साध्यतावच्छेदकावच्छिन्नव्यापकतावच्छेदकीभूतस्वप्रतियोगितावच्छेदकाप्रसिद्धेः, तथा च साध्याभावश्चेत्यादिना साध्याभावपदेन

1 व्यधिकरणधर्मावच्छिन्नप्रतियोगितावच्छेदकताकस्य ज्ञेयत्वत्वादिना––अ.

2 प्रतियोगिवैयधिकरण्य––अ.

3 तादृशाभाव प्रतियोगितावच्छेदकेत्यादि––अ.

साध्यतावच्छेदकावच्छिन्नव्यापकतावच्छेदकरूपावच्छिन्नप्रतियोगिताकाभावविवक्षणासङ्गतिरिति वाच्यम्। साध्याभावश्चेत्यादिग्रन्थस्य व्याप्यवृत्तित्वनिवेशकल्पेऽभावे साध्यतावच्छदकावच्छिन्नेत्यादिविशेषणदानपरत्वात्। द्वितीयकल्पे च प्रतियोगितावच्छेदकावच्छिन्नेत्यत्र प्रतियोगितावच्छेदकस्य तादृशव्यापकतावच्छेदकत्वेन [1]विशेषणात्, तादृशरूपावच्छिन्नप्रतियोगिताक एवाभावो लक्षणघटक इत्यर्थकत्वाद् एतत्कल्पेऽभावांशे तादृशप्रतियोगिताकत्वविशेषणविरहेऽपि क्षतिविरहात्।

[2]तत्रैव कपिसंयोगाभावत्वादिना घटादिमद्भेदसामानाधिकरण्यमादाय तद्दोष[3]वारणाय स्वप्रतियोगिवृत्तित्वं भेदप्रतियोगितावच्छेदकतायां विशेषणम्। संयोगसामान्याभावादेरपि [[4]संयोगाद्यात्मकाभावप्रतियोगितया कपिसंयोगाद्यात्मकाभावस्य] प्रतियोगितावच्छेदककपिसंयोगाभावत्वादिना संयोगसामान्याभाववद्भेदसामानाधिकरण्यमादाय तद्दोषतादवस्थ्यवारणाय यादृशप्रतियोगितावच्छेदको यो धर्मः तदवच्छिन्नतादृशप्रतियोगिताश्रयवृत्तित्वमेव भेदप्रतियोगितावच्छेदकतायां निवेशनीयम्। कपिसंयोगाभावत्वं च कपिसंयोगाभावनिष्ठप्रतियोगितायाम[5]वच्छेदकम्, संयोगसामान्याभावश्च न तादृशप्रतियोगिताश्रयः इति तादृशभेदमादाय न दोषः।

1 विशेषणीयत्वात्––अ.

2 अत्रैव––अ.

3 तद्दोषतादवस्थ्यवारणाय––अ.

4 [ ] कपिसंयोगाद्यात्मकाभावप्रतियोगितया––अ.

5 एवावच्छेदकम्––अ.

भेदप्रतियोगितावच्छेदकतायां [1]स्वप्रतियोगितावच्छेदकसंबन्धवच्छिन्नत्वमपि निवेशनीयम् । तेन[2] कपिसंयोगाभावत्वाद्यवच्छिन्नकपिसंयोगाभावादिनिष्ठविषयितादिसंबन्धावच्छिन्नप्रतियोगितावच्छेदकताकभेदसामानाधिकरण्येऽपि न तद्दोषतादवस्थ्यम् ।

एवं प्रतियोगितावच्छेदकावच्छिन्नवैयधिकरण्यनिरूपकत्वं स्वनिष्ठं यत्स्वप्रतियोगितावच्छेदकावच्छिन्नस्वप्रतियोगिनिष्ठप्रतियोगितावच्छेदकताकभेदसामानाधिकरण्यं तन्निरूपकत्वम्[3] । अतो व्यधिकरणधर्मावच्छिन्नाभावस्य प्रतियोगितावच्छेदकविशिष्टप्रतियोग्यप्रसिद्धावपि न तादृशाधिकरणाप्रसिद्धिः । कपिसंयोगी एतत्वाद् इत्यादौ हेत्वधिकरणेऽपि द्रव्यत्वादिना कपिसंयोगादिमतः कपिसंयोगत्वादिना च द्रव्यत्वादिमतो भेदसत्त्वात् तस्यापि तादृशाधिकरणत्वापत्तिः, अतोऽवच्छिन्नान्तनिष्ठान्तयोरुपादानम्। पूर्वक्षणादिवृत्तित्वविशिष्टस्वाभावत्वादिरूपप्रतियोगितावच्छेदकरूपेण कपिसंयोगादिमद्भेदमादाय तद्दोषतादवस्थ्यम्, अतस्तत्प्रतियोगिताश्रयनिष्ठप्रतियोगितावच्छेदकतायां तदवच्छेदकावच्छिन्नत्वं निवेशनीयम् ।

एवं विशिष्टसाध्यव्यापकतावच्छेदकत्वेनापि प्रतियोगितावच्छेदकं विशेषणीयम् । तेन संयोगी द्रव्यत्वाद् इत्यादौ संयोगा-

[1] स्वं-लक्षण घटकोऽभावः । अतः साध्यतावच्छेदकसंबन्धावच्छिन्नत्वमिति पर्यवसितम्—रा.

[2] तेन कपिसंयोगाद्यात्मकाभावस्य—अ.

[3] तच्च तादृशभेदाधिकरण एव—रा.

**भावस्य [[1]द्रव्यवृत्तित्वविशिष्टत्वावच्छिन्नाभावत्वावच्छिन्नद्रव्य-वृत्तित्वविशिष्टत्वावच्छिन्नाभावनिष्ठप्रतियोगितावच्छेदकताक-भेदवत्त्वस्य द्रव्ये सत्त्वात्] तस्य न प्रतियोगिवैयधिकरण्यनिरूप-कत्वापत्तिः ।**

**एवं संबन्धविशेषनिवेशनमपि पूर्ववद् बोध्यम् ।**

**तथा च [2]स्वाश्रयनिष्ठभेदप्रतियोगितावच्छेदकतावच्छेदक-साध्यतावच्छेदकावच्छिन्नव्यापकतावच्छेदकरूपावच्छिन्ना यावत्यः प्रतियोगिताः तत्तदवच्छेदकावच्छिन्नतत्तदाश्रयनिष्ठप्रतियोगिता-वच्छेदकताकभेदवदधिकरणवृत्तित्वत्वव्यापकप्रतियोगिताकतत्त-त्सजातीयप्रतियोगिताकाभाववत्त्वमिति निष्कर्ष [3]इति ।**

कृष्णंभट्टीयम्

प्रतियोगिव्यधिकरणसाध्यवन्निष्ठाभावीयसाध्यतावच्छेदकसंबन्धा-वच्छिन्नप्रतियोगितानवच्छेदकधर्मावच्छिन्नसाध्यतावच्छेदकसंबन्धावच्छि-न्नप्रतियोगिताकाभावघटितं द्वितीयलक्षणम् तादृशाभावे व्याप्यवृत्तित्वेन, प्रतियोगितावच्छेदकावच्छिन्नप्रतियोगिवैयधिकरण्येन वा घटितम्, इत्यभि-प्रेत्य द्वितीयलक्षणे उक्तपूर्वपक्षं समाधत्त––अत्र वदन्तीति । स्वं लक्षण-घटकाभावः । समवेतेति । समवेतसामान्याभावत्वादेः साध्यवृत्तित्वनिवेशेन वारणेऽपि तत्तत्साध्याभाववारणाय रूपावच्छिन्नाभावप्रवेशे साध्यवृत्तित्व-

[1] द्रव्यवृत्तित्वात् तत्प्रतियोगितावच्छेदकं द्रव्यवृत्तित्वविशिष्टत्वावच्छिन्नभाव-वत्त्वं तदवच्छिन्नद्रव्यवृत्तित्वविशिष्टत्वावच्छिन्नाभावनिष्ठप्रतियोगितावच्छेदकताक भेदवत्त्वस्य द्रव्ये सत्त्वेऽपि––अ.

[2] स्वपदं लक्षणघटकीभूताभावप्रतियोगितापरम्––रा.

[3] इति संक्षेपः––अ.

निवेशाद् गौरवमिति तत्त्यागः । साध्याभावपदेनेति । प्रतियोगिवैयधिकरण्ये साध्यतावच्छेदकसंबन्धनिवेशेऽभावे तत्संबन्धावच्छिन्नप्रतियोगिताकत्वविशेषणवैयर्थ्यमपि द्रष्टव्यम् । लक्षणघटक इति । साध्यव्यापकतावच्छेदकरूपावच्छिन्नप्रतियोगितानिरूपकानुयोगितानिरूपितप्रतियोगितावच्छेदकावच्छिन्नतादृशप्रतियोगिताश्रयवृत्तिभेदप्रतियोगितावच्छेदकतानिवेशे उक्तदोषवारणं साध्यतावच्छेदकावच्छिन्नेत्यादिविशेषणदानं चेति केचित् । परं तु यादृशेत्याद्यभिधास्यमानकल्प एव पर्यवसानम् ।

अत्र तादृशभेदवत्त्वमपेक्ष्य तादृशभेदसामानाधिकरण्यनिरूपकत्वप्रवेशः शिरोवेष्टनेन नासास्पर्शसमः । एवं विशिष्टसाध्यव्यापकतावच्छेदकतत्तत्प्रतियोगितावच्छेदकावच्छिन्नतत्तत्प्रतियोगिताश्रयनिष्ठप्रतियोगितावच्छेदकताकभेदनिवेशे तत्तत्प्रतियोगितायां तादृशरूपावच्छिन्नप्रतियोगिताकयावदभावीयत्वनिवेशे गौरवम् । लाघवेन प्रतियोगिवैयधिकरण्यनिरूपकत्वघटकावच्छेदके विशिष्टसाध्यव्यापकतावच्छेदकत्वं परित्यज्यैव विशिष्टसाध्यव्यापकतावच्छेदकावच्छिन्नत्वेन तद्घटकतत्तत्प्रतियोगितानामेव निवेशौचित्यात् । तावतापि कपिसंयोग्येतत्त्वादित्यादौ अव्याप्त्युद्धारात् । एवं च प्रतियोगितायामेव यावत्त्वमतिव्याप्तिवारणाय निवेश्यम् । कपिसंयोगाभावसाध्यकसंग्रहाय स्वाश्रयवृत्तिभेदप्रतियोगितावच्छेदकतावच्छेदकत्वमात्रं रूपविशेषणम् । अभावपरित्यागे तत्पुच्छलग्नस्य स्वाश्रयवृत्तिस्वावच्छेदकावच्छिन्नावच्छेदकताकभेदसामानाधिकरण्यस्यापि हेयत्वाद् एवं चापरमपि लाघवमिति मनसिकृत्य निष्कर्षं दर्शयति––तथा चेति । उभयत्रापि निष्ठान्तावच्छिन्नान्तयोरुपादानफलं भट्टाचार्योक्तमेव । भेदप्रतियोगितावच्छेदकतयोः संवन्धनिवेश ऊह्यः । सत्तावान् जातेरित्यादि संग्राहकं हेतुतावच्छेदकसंवन्धेन [1]किंचित्पदार्थाधिकरणवृत्त्यभावनिरूपितत्त्वं बोध्यम् । घटान्यत्वविशिष्टद्रव्यत्ववान् द्रव्यत्वादित्यादौ अतिव्याप्तिवारणाय साध्यतावच्छेदकावच्छिन्नेति ।

[1] यत्किञ्चित्पदार्थ––अ.

नन्वत्र घटान्यत्वविशिष्टद्रव्यत्वत्वावच्छिन्नप्रतियोगिताया अपि लक्षणघटकत्वं दुर्वारम् । तादृशरूपपर्याप्त्यनिवेशादिति चेत्, न । महानसीयवह्नित्वावच्छिन्नप्रतियोगितामादायाव्याप्तेः पर्याप्तिनिवेशात् ।

नन्वत्र तत्तत्प्रतियोगितासाजात्यमेव तादृशवृत्तित्वत्वव्यापकव्यासज्यवृत्तिधर्मानवच्छिन्नप्रतियोगितायां निवेश्यम् । स्वासमानाधिकरणधर्मावच्छिन्ना या या प्रतियोगिता तत्तद्भेदकूटवत्त्वस्वसमानाधिकरणधर्मावच्छिन्ना या या प्रतियोगिता तत्तद्भेदकूटवत्त्वान्यतररूपेण साजात्यं वाच्यम् । मैवम्––समनियताभावैक्यमते व्यधिकरणधर्मावच्छिन्नाभावसाजात्यस्य लघुतया तदभिप्रायेण अभावसाजात्योपादानात् ।

नन्वत्र साध्यतावच्छेदकसंवन्धेनैव व्यापकत्वस्य प्रविष्टत्वाद् घटपटोभयं घटपटान्यतरत्वादित्यादावव्याप्तिः पर्याप्तिसंवन्धावच्छिन्नप्रतियोगितायाः स्वपदेनोपादेयतया तद्वन्निष्ठप्रतियोगितावच्छेदकताकस्योभयत्वत्वेन उभयत्ववद्भेदस्य प्रत्येकं हेतुमति सत्त्वेन तत्प्रतियोगिताकाभावसजातीयाभावासत्त्वासत्त्वादिति चेत्, न । तादृशभेदवत्त्वस्य निरवच्छिन्नत्वेन विशेषणात् ।

नन्वत्र तादात्म्यसंवन्धेन प्रमेयत्वावच्छिन्नसाध्यकेऽव्याप्तिः । समवायित्वेन प्रमेयत्ववद्भेदोपगन्तृभिरपि तत्प्रतियोगितावच्छेदकं यत्प्रमेयत्वं समवायित्वेन तदवच्छिन्नवद्भेदानङ्गीकारात् । न च प्रमेयत्वेन घटपटोभयभेदादिरेव लक्षणघटकः, तस्य प्रमेयत्वेन घटपटोभयवद्भेदमादाय प्रतियोगिवैयधिकरण्यादिति वाच्यम् । भट्टाचार्यमते तादृशोभयभेदस्यैवासत्त्वात् । [1]तादृशभेदवादिनामपि प्रमेयत्वेन [2]घटपटोभयभेदासत्त्वात् । अवच्छेदकत्वनिरुक्तौ तादात्म्यसंवन्धेन धूमविशिष्टधूमस्य साध्यत्वे साध्याभावप्रति-

[1] तादृशोभयभेदवादिनामपि––अ.

[2] घटप्रमेयवद्भेदासत्त्वात्––अ.

योगिताया [1]धूमत्वावच्छेद्यत्वस्य तर्कालङ्कारैः कण्ठरवेणाभिधानात् । मिश्रैरपि वाच्यत्वेन घटपटोभयभेदमुज्झित्य समवायित्वेन वाच्यत्ववद्भेदाभिधानाच्च ।

अथैतन्मतेऽपि पूर्ववद् येन संबन्धेन व्यापकता तत्संबन्धावच्छिन्नाभाव एव विवक्षितः । स च स्वरूपसंबन्ध एवेति, तत्संबन्धन साध्यव्यापकतावच्छेदकप्रमेयत्वत्वेन वाच्यत्वाभावमादाय लक्षणसङ्गतिः । अत्र धूमवान् वह्नेरित्यादौ अयोगोलकान्यत्वाभावस्य अतिव्याप्तिवारकत्वाद् व्यापकतायां प्रतियोगिवैयधिकरण्यवैयर्थ्यं तु न वाच्यम् । तस्य पूर्ववद् व्यधिकरणधर्मेणाभावमादाय व्यापकत्वाप्रसिद्धिवारणार्थत्त्वात् । अत एव तादात्म्येन घटादिसाध्यके घटभेदप्रतियोगितावच्छेदकस्य साध्यव्यापकतावच्छेदकत्वेन तादात्म्यसंबन्धावच्छिन्नायाः स्वाश्रयनिष्ठभेदप्रतियोगितावच्छेदकतायाः अनवच्छेदकत्वेऽपि नाव्याप्तिः । साध्यतावच्छेदकसंबन्धेन व्यापकतानिवेशस्तु साध्याभावे व्याप्यवृत्तित्वकल्पे एव सत्त्वे तत्कल्पे इति चेत्, न । प्रतियोगितानवच्छेदकस्वामित्वादिसंबन्धेन साध्यतायां पराभिमतसद्धेतावतिव्याप्तिः । न च पूर्वमते इवैतन्मतेऽपि तस्य लक्ष्यतया इष्टापत्तिः । तर्हि व्यधिकरणधर्मावच्छिन्नाभाववारकप्रतियोगिवैयधिकरण्यघटितनिरुक्तसंबन्धघटितव्याप्यवृत्तित्वघटितलक्षणस्य सुकरतया तदुपेक्ष्य साध्यतावच्छेदकसंबन्धघटितव्यापकत्वोक्तेः उन्मत्तप्रलपितत्त्वापत्तेः । प्रतियोगिवैयधिकरण्यघटितकल्पावतरणस्य स्वामित्वादिसंबन्धेन साध्यतास्थलीयाव्याप्त्युपलक्षणत्वानौचित्याच्च । एवं च स्वामित्वादिसंबन्धेन साध्यत्वे हेतूनामेतल्लक्षणलक्ष्यत्वे तदवृत्तेरतदात्मनश्च तद्धर्मव्यापकत्वायोगादित्यवयवपङ्क्तेः वृत्त्यनियामकतादात्म्यसंबन्धेन साध्यमात्रे सिद्धान्तलक्षणसंचारणस्य च विरोधमालोच्य इहापि तेषामलक्ष्यत्वमुपेत्य व्याप्यवृत्तित्वघटितलक्षणं साध्यतावच्छेदकसंबन्धेन व्यापकतागर्भं कृतमिति [2]वाच्यम् ।

[1] धूमत्वावच्छेद्यत्वमेव न धूमावच्छेद्यत्वमिति––अ.

[2] वक्तव्यम्––अ.

तथा च तत्रैतल्लक्षणातिव्याप्तिर्दुर्वारैव । स्वलक्षणयोस्तु स्वातन्त्र्यादेव स्वामित्वादिसंवन्धेन साध्यतास्थलीयहेतुसाधारण्येऽपि न दोषः ।

किञ्च वृत्तावपि हेतोरिति लेखनसङ्गमनावसरे व्याप्यवृत्तितानिरूपकाधिकरणपर्यन्तमप्रवेशात् साध्याभाववद्वृत्तित्वनिवन्धनैवाव्याप्यवृत्तिसाध्यकाव्याप्तिरिति कल्प्यम् । व्याप्यवृत्तिसाध्यकेऽपि क्षणविशेषवृत्तित्वविशिष्टसाध्याभावमादाय अव्याप्त्या असंभवस्यैव सत्त्वाद् अव्याप्तिपदलेखनासङ्गतिरिति दोषेण निराकृत्य व्याप्यवृत्तिसाध्यकस्थलीयसाध्याभावाधिकरणवृत्तित्वं व्याप्यवृत्तितानिरूपकाधिकरणनिवेशद्वारा अव्याप्तिमात्रसंपादकमिति वृत्तित्वान्तस्य व्याप्यवृत्तित्वविशेषणव्यावर्त्याव्याप्तिमात्रौपयिकत्वं समर्थितम् । तथा च तद्ग्रन्थविरोधः । एतन्मते व्याप्यवृत्तिसाध्यकेऽपि जगद्विषयकजन्यज्ञानव्यक्तेः प्रोक्तसंवन्धेन प्रतियोगिवैयधिकरण्यघटितसाध्यव्यापकतया तदभावनिष्ठप्रतियोगिवैयधिकरण्यनिरूपकाप्रसिद्धेः असंभवसत्त्वादव्याप्तिपदसंगमनासंभवात् । पूर्वमते तत्सङ्गत्यसत्त्वाभिधानेनैतन्मते तत्सङ्गतिव्यञ्जनात् ।

किञ्च प्रतियोगिवैयधिकरण्यघटितलक्षणे तद्घटितसाध्यतावच्छेदकसंवन्धघटितव्यापकत्वानुक्तौ तत्परिष्कारान्तरारम्भवैयर्थ्यम् । पूर्वतत्परिष्कारस्यैव सम्यक्त्वात् । अस्मन्मते च तथाविधव्यापकत्वप्रवेशे पूर्वतत्परिष्कारस्य प्रवेष्टुमशक्यतया तत्सार्थक्यात् । न चैवं वाच्यत्वादिसाध्यके तद्घटितैतल्लक्षणसंयोजनं व्यर्थं, अव्याप्यवृत्तिसाध्यके एव तदौचित्यादिति वाच्यम् । केवलान्वयिन्यभावादिति दूषणं नेश्वरेच्छाविषयत्वरूपे वाच्यत्वे, मीमांसकैः ईश्वरानङ्गीकारात् । किन्तु अव्याप्यवृत्तिजन्येच्छाविषयत्वरूपे तत्रेत्यथेत्याद्याशङ्कायाः तत्परत्वात् । ईश्वरेच्छाविषयतासाधारणे वाच्यत्वे न तत्संयोजनम् । किन्तु तद्व्यावृत्ते जन्येच्छाविषयतारूपे इत्युपगमाद्वा वाच्यत्वमव्याप्यवृत्तीति ज्ञानकाले प्रतियोगिवैयधिकरण्याघटितव्याप्तिज्ञानं न संभवतीति तत्र तद्घटितव्याप्तिसंयोजनसंभवाच्च । तादात्म्यसंबन्धेन

साध्यतायां साध्ये अव्याप्यवृत्तित्वज्ञानदशायां प्रतियोगिवैयधिकरण्यघटितसिद्धान्तव्याप्तिः गुरुधर्मस्य प्रतियोगितानवच्छेदकत्व एवेति व्यक्तीभविष्यति ।

अत्रोच्यते––साध्यतावच्छेदकसंबन्धेन प्रतियोगिवैयधिकरण्याघटितव्यापकत्वघटितं साध्यतावच्छेदकसंबन्धावच्छिन्नसाध्याभावघटितं व्याप्यवृत्तित्वाघटितं पृथक् लक्षणमुपेयम् । अत्र वदन्तीतिग्रन्थावतारणे प्रदर्शितम्, ग्रन्थकृदभिप्रेतं च तत् । तादात्म्यसंबन्धेन साध्यत्वे हेतूनां तल्लक्ष्यतामात्रं, न तु व्याप्यवृत्तित्वादिघटितलक्षणलक्ष्यतापीति तत्र तदव्याप्तिर्न दोषाय । उपदर्शितलक्षणान्तरानुपगमे संयोगेन प्रमेयत्वेन प्रमेयाभावस्य प्रामाणिकत्वेऽपि व्यापकतावच्छेदकताघटकप्रतियोगितावच्छेदकताघटकसंबन्धयोरक्यनिवेशात् लक्षणाघटकत्वमभिहितम् । तत् कुत्र लक्षणे । अथ व्यापकताघटकसंबन्धावच्छिन्नाभावघटितलक्षणे व्यापकतायाः प्रतियोगिवैयधिकरण्यघटिततया प्रकृते प्रतियोगितावच्छेदकतादात्म्यसंबन्धस्यैव भेदप्रतियोगितावच्छदकताघटकत्वापत्त्या तद्घटकत्वाप्रसक्तेः व्याप्यवृत्तित्वघटितलक्षणे इति चेत्, तर्हि तत्रापि साध्यतावच्छेदकसंबन्धेन प्रतियोगिवैयधिकरण्यस्य व्यापकताघटकत्वात् तदप्रसक्तेः ।

एतेन, यादृशप्रतियोगितावच्छेदकनिष्ठयादृशसंबन्धावच्छिन्नावच्छेदकताकतद्वन्निष्ठप्रतियोगिताघटकसंबन्धावच्छिन्न[1]प्रतियोगिताकभेदवत् साध्यवत् तादृशप्रतियोगितानवच्छेदकत्वं साध्यव्यापकतावच्छेदकत्वम् । वह्नित्वेन घटवद्भेदवारणाय तद्वन्निष्ठेति, प्रत्युक्तम् ।

किंचैवं तादृशाभावस्य कथं लक्षणाघटकत्वम्, यादृशसंबन्धपदेन संयोगोपादानसंभवात् । व्यापकतावच्छेदकधर्मे तादृशसंबन्धेन वृत्तिमत्त्वनिवेशे तादृशवृत्तिमत्त्वस्यैव लक्षणाघटकत्वबीजतया व्यापकता [2]प्रतियोगि-

[1] प्रतियोगितावच्छेदकताकभेदवत्––अ.

[2] प्रतियोगितावच्छेदकघटक––अ.

तावच्छेदकताघटकसंबन्धयोः तद्बीजत्वकथनासङ्गतेः। निष्प्रयोजनकवृत्तिमत्त्वं निवेश्य लक्षणाघटकत्ववचनाद्वरं तदप्रवेशेन तद्घटकत्वं च स्यात्।

किंचोपदर्शितव्याप्त्यन्तरानुपगमे समवायित्वेन प्रमेयत्वावच्छिन्नभेदप्रदर्शनमशुद्धमेव स्यात्। व्याप्यवृत्तित्वघटितलक्षणे प्रतियोगितावच्छेदकसंबन्धेन साध्यतावच्छेदकसंबन्धेन वा यादृशप्रतियोगितावच्छेदकावच्छिन्नानधिकरणं साध्यवत् तादृशप्रतियोगितायां साध्यतावच्छेदकधर्मसंबन्धावच्छिन्नत्वोभयाभावः तत्त्वस्य तादृशप्रतियोगितानवच्छेदकत्वस्य वा साध्यव्यापकतावच्छेदकतया तस्य लक्षणाघटकत्वात्। तादात्म्यसंबन्धेन प्रतियोग्यधिकरणस्य भेदाप्रसिद्धेः। [1]अस्मन्मते च तादृशव्याप्त्यन्तराभिप्रायेण तद्ग्रन्थलेखनं नानुपपन्नम्। तत्र [2]समनियताभावभेदमतेऽपि व्यधिकरणधर्मावच्छिन्नप्रतियोगिताकस्य संयोगेन प्रमेयत्वेन प्रमेयभेदस्य जागरूकतया समवायित्वेन वाच्यत्ववद्भेदो द्रष्टव्य इति मिश्रपङ्क्तिवैयर्थ्यमित्याशङ्क्य तादृशभेदस्य गुणवान् द्रव्यत्वादित्यादौ गुणेऽव्याप्यवृत्तित्वज्ञानशून्यतादशायां सिद्धोपयोगिजातीयव्यापकतावच्छेदकताघटकसंबन्धावच्छिन्नप्रतियोगितावच्छेदकताघटितलक्षणाघटकत्वेन मिश्रपङ्क्तिवैयर्थ्योद्धाराद् इति कृतबुद्धयो विदांकुर्वन्तु।

## न्यायरत्नम्

**तथा चेति। अथायं निष्कर्षो न संभवति; तादात्म्यसंबन्धेन प्रमेयसाध्यके लक्षणघटकत्वेनाभिमतस्य समवायित्ववाच्यत्वत्वादिना प्रमेयत्ववद्भेदस्य प्रतियोगितावच्छेदकतावच्छेदके समवायित्ववाच्यत्वत्वादौ साध्यतावच्छेदकतादात्म्यसंबन्धघटितव्यापकतावच्छेदकत्वाभावात्। अत्र ब्रूमः ——समवायित्वावच्छिन्ना या प्रमेयत्वनिष्ठावच्छेदकता तन्निरूपिता या प्रमेयत्वनिष्ठावच्छेदकता तन्निरूपितप्रतियोगिताकभेदस्यापि अभ्युपगमात्**

[1] अस्मन्मते च इति पाठो नास्ति——अ.

[2] समनियताभावभेदमतेऽपि इति नास्ति——अ.

तादृशभेदप्रतियोगितावच्छेदकतावच्छेदकप्रमेयत्वादौ साध्यव्यापकतावच्छेदकत्वसत्त्वात् तादृशभेदमादायैव लक्षणसमन्वयः। न च तादृशभेदस्वीकारे कपिसंयोगाभाववान् मेयत्वादित्यादौ घटत्वावच्छिन्ना या कपिसंयोगाभावत्वनिष्ठावच्छेदकता तन्निरूपककपिसंयोगाभावत्वनिष्ठावच्छेदकताकप्रतियोगिताकभेदमादाय द्रव्यस्यापि कपिसंयोगात्मकाभावनिष्ठप्रतियोगिवैयधिकरण्यनिरूपकतापत्त्या तत्र हेतोर्वृत्तेः अव्याप्तिरिति वाच्यम्। व्यधिकरणधर्मावच्छिन्नत्वव्यतिरेकिनिष्ठत्वोभयाभाववती या स्वाश्रयनिष्ठभेदप्रतियोगितावच्छेदकतावच्छेदकता तदाश्रयस्यैव साध्यव्यापकतावच्छेदकत्वविवक्षणात्। वह्न्यादिसाध्यके वह्नित्वादिना घटवद्भेदीयतादृशप्रतियोगितावच्छेदकतावच्छेदकतामादायैव वह्नित्वादिना घटाभावादेर्लक्षणघटकत्वमुपपादनीयम्। व्यधिकरणधर्मावच्छिन्नावच्छेदकताकभेदानभ्युपगमे तु साध्यसाधनभेदेन व्याप्तिभेदमभ्युपगम्य साध्यतावच्छेदकव्यापकधर्मावच्छिन्नप्रतियोगिताकाभावे प्रतियोगितावैयधिकरण्यघटितमेव लक्षणम्। साध्यतावच्छेदकव्यापकत्वं व्यासज्यवृत्तिधर्मव्यावृत्तं यत्किंचित्साध्यव्यक्त्यसंबद्धभिन्नत्वरूपं ग्राह्यम्। तेन न द्वित्वादिना साध्यभेदमादायाव्याप्तिः। प्रतियोगितावैयधिकरण्यं च प्रतियोगितावच्छेदकवच्छिन्नप्रतियोगिताश्रयवृत्तिप्रतियोगिताकभेदवद्वृत्तित्वरूपं ग्राह्यमिति नानुपपत्तिलेशोऽपि।

## गादाधरी

(७६) व्याप्यवृत्तित्वादिविशेषणस्य प्रयोजनकथनम्।

**अभावे यथाश्रुतसाध्यप्रतियोगिकत्वं परित्यज्य स्वप्रतियोगितावच्छेदके साध्यतावच्छेदकावच्छिन्नव्यापकतावच्छेदकत्वविशेषणस्य व्याप्यवृत्तित्वादिविशेषणस्य च व्यावृत्तिमाह— तेनेति। तत्तत्साध्यव्यक्तेरभाववति हेतोः वृत्तावपि नाव्याप्तिरिति योजना। एतद्रूपवान् एतद्रसाद् इत्यादौ प्रतियोगितावच्छेदका-**

**वच्छिन्नप्रतियोगिव्यधिकरणसाद्ध्याभाववह्निः साध्यमेव। तत्र हेतौ अवृत्तेर्लक्षणगमनसंभवान्नासंभवः।**

**अथ साध्यवति [1]तद्रूपैतद्रूपोभयत्वावच्छिन्नाभावसत्त्वेन तत्रापि लक्षणगमनाभावादसंभवः। न च नासौ प्रतियोगितावच्छेदकावच्छिन्नप्रतियोगिव्यधिकरणः प्रतियोगितावच्छेदकीभूतोभयत्वेन रूपेणोभयवद्भेदस्य उभयवतोऽसिद्धत्वेनाप्रसिद्धेरिति वाच्यम्। उभयत्वेनान्यतरवद्भेदस्य तादृशाभावप्रतियोगितावच्छेदकावच्छिन्नतत्प्रतियोगिवृत्तिप्रतियोगितावच्छेदकताकस्य [2]उभयाभाववति सत्त्वात्, तस्यापि तादृशभेदमादाय [3]तत्त्वादिति चेत्, न। व्यासज्यवृत्तिधर्मानवच्छिन्नप्रतियोगिताकस्य स्वव्यापकसाध्यतावच्छेदकप्रतियोगिताकस्य वा अभावस्य निवेशे तादृशोभयाभावादिवारणं सम्भवतीत्यभिप्रायेणाव्याप्तिलेखनात्।**

कृष्णंभट्टीयम्

तद्रूपेति। समनियताभावभेदेनेदम्। तेन तदैक्यमते तस्य व्यधिकरणधर्मावच्छिन्नाभावत्वेऽपि न क्षतिः। अन्यतरेति। वह्नित्वेन महानसीयवह्निमद्भेदवद् उभयत्वेन तद्रूपवद्भेदोऽसिद्ध एव। [4]उभयत्वेनान्यतराभावेति। स्वाश्रयनिष्ठेत्यत्र येन संबन्धेन प्रतियोगितावत्त्वं तेन संबन्धेन स्वाश्रयत्वं निवेश्यम्। अन्यथा कपिसंयोगरूपसाध्याभावस्य कपिसंयोगाभावत्वेन ध्वंसविशेषवद्भेदमादाय प्रतियोगिवैयधिकरण्यापत्तेः। एवं

[1] एतद्रूपतद्रूपेति न्यायरत्नसंमतः पाठः।

[2] उभयत्वेनान्यतराभाववति साध्यवति—अ.

[3] तत् स्यात्—अ.

[4] अत्र पाठभेदाः गादाधर्यां दर्शिताः—स्व.

चोभयत्वेनोभयाभावप्रतियोगितायाः पर्याप्तिबन्धेनैव सत्त्वाद् उभयत्वेनान्यतरवच्छेदो अकिञ्चित्कर इत्येतादृशाभावानुधावनम् । व्यासज्यवृत्तित्वं——न्यूनवृत्तित्वम् । तेन एतद्रूपभिन्नत्वेन तद्रूपैतद्रूपान्यतराभावव्युदासः । एतदस्वरसादाह——स्वव्यापकेति । धूमत्वेन प्रमेयाभावप्रतियोगिता धूममात्रवृत्तिः व्यधिकरणधर्मावच्छिन्नप्रतियोगिताश्चावच्छेदकैक्येऽपि भिन्नावाच्यत्वभिन्नत्वेन वाच्यत्वाभाव एव वा बोध्यः । उभयाभावादीत्यादिपदसत्त्वे त्रितयाद्यभावो ग्राह्यः, न तु पूर्वक्षणवृत्तित्वविशिष्टैतद्रूपाभावः । किञ्चिद्विशिष्टस्वाभावत्वेनैतद्रूपवच्छेदमादाय प्रतियोगिवैयधिकरण्यवारणार्थं तद्घटकप्रतियोगित्वे रूपावच्छिन्नप्रतियोगित्वाभेदस्य वाच्यतया पूर्वक्षणवृत्त्यै[1]तद्रूपत्वेन तद्वच्छेदस्य साध्यवत्यसत्त्वेनादोषात् । अत एव वैशिष्ट्यानवच्छिन्नत्वं नोक्तम् ।

### न्यायरत्नम्

**साध्यवति एतद्रूपतद्रूपोभयत्वावच्छिन्नाभावसत्त्वेनेति । इदं च समनियताभावानैक्याभिप्रायेण । तेन तादृशाभावस्य केवलान्वयितया गगनाभावत्वेन तत्सजातीयं तद्वद्वृत्तित्वस्य व्यधिकरणधर्मावच्छिन्नाभावमादाय लक्षणसमन्वयेऽपि न क्षतिः । व्यासज्यवृत्तीति । ननु तथापि एतद्रूपभिन्नत्वेनैतद्रूपतद्रूपान्यतराभावमादायाव्याप्तिरित्यत आह——स्वव्यापकेति ।**

## गादाधरी

**(७७) अव्याप्यवृत्तेर्वा इत्यादिदीधितिग्रन्थस्य तात्पर्यकथनम् ।**

**[2]अव्याप्यवृत्तेरिति । यद्यप्येतद्ग्रन्थस्य स्वयमुक्तस्याभावे व्याप्यवृत्तित्वादिनिवेशनस्य प्रयोजनप्रदर्शनपरत्वे साध्यपदं**

[1] एतद्रूपवत्त्वेन——अ.

[2] अव्याप्यवृत्तेर्वेति——अ.

कपिसंयोगाभावादिपरमेव वाच्यम्, न तु कपिसंयोगादिपरम् । कपिसंयोगादिसाध्यकस्थले कपिसंयोगाद्यभावस्य लक्षणघटकत्वेऽपि स्वाधिकरणपदस्य व्याप्यवृत्तित्वादिनिरूपकाधिकरणपरताया अभावे व्याप्यवृत्तित्वादिनिवेशेऽप्यावश्यकत्वात्, तदीयव्याप्यवृत्तितानिरूपकाधिकरणे गुणादौ हेतोरवृत्तेरव्याप्त्यनवकाशात्, कपिसंयोगाभावादेर्गुणादौ निरवच्छिन्नवृत्तिकत्वादिरूपव्याप्यवृत्तित्वादिसत्त्वेन तादृशविशेषणेन व्यावर्तनासंभवाच्च । तथा च कपिसंयोगाभावादिसाध्यकस्थले कपिसंयोगाद्यात्मकाभावस्य लक्षणघटकत्वेऽपि तदीयव्याप्यवृत्तितानिरूपकाधिकरणाप्रसिद्धिरेवाव्याप्तिप्रयोजिका, न तु तादृशाभावीयव्याप्यवृत्तितानिरूपकाधिकरणे हेतोर्वृत्तिरिति वृत्तावपि हेतोरिति न सङ्गच्छते । तथाप्यभावे व्याप्यवृत्तित्वविशेषणानुपादाने यावदन्तर्गतकपिसंयोगादीनां व्याप्यवृत्तितानिरूपकाधिकरणाप्रसिद्धिः स्यादिति तादृशाधिकरणपर्यन्तं न विवक्षणीयम् । तथा च सति अव्याप्यवृत्तिसाध्यकस्थले हेतोः साध्याभाववद्वृत्तित्वनिबन्धनाव्याप्तिः,[1] सा च व्याप्यवृत्तित्वाद्युपादानान्न संभवतीत्यभिप्रायः ।

अथवा कपिसंयोगादिसाध्यकहेतोः साध्याभावीयाव्याप्यवृत्तितानिरूपकाधिकरणवृत्तित्वं तत्स्थलीयाव्याप्तिवारकव्याप्यवृत्तितानिरूपकाधिकरणवृत्तित्वनिवेशौपयिकम् । अतस्तदधीना या कपिसंयोगाभावादिसाध्यकस्थले कपिसंयोगाद्यात्मकाभावीयतादृशाधिकरणाप्रसिद्धिनिबन्धनाव्याप्तिः तत्सम्पादकमपीति न तादृशग्रन्थासङ्गतिः;

[1] अव्याप्तिः स्यात्—अ.

**एतेन कपिसंयोगाभावादिसाध्यकस्थले तादृशाधिकरणाप्रसिद्धिभयेन व्याप्यवृत्तितानिरूपकाधिकरणानिवेशे व्याप्यवृत्तिसाध्यकस्थलेऽपि क्षणविशेषवृत्तित्वविशिष्टसाध्याभावस्य प्रतियोगिवैयधिकरण्यघटितसाध्यव्यापकतावच्छेदकावच्छिन्नप्रतियोगिताकस्याव्याप्यवृत्तेरधिकरणे हेतोर्वृत्त्या लक्षणगमनासंभवादसंभव एव संभवतीति अव्याप्तिरिति लेखनं न युज्यते इत्यपि निरस्तम् ।**

**[एतद्रूपादिसाध्यकस्थले स्वरूपसंबन्धेन हेतौ साध्यतावच्छेदकसंबन्धघटितव्यापकतावच्छेदकरूपावच्छिन्नाभावीयव्याप्यवृत्तितानिरूपकाधिकरणत्वस्या[1]समवायिनि प्रसिद्धेः तत्र तादृशाधिकरणाप्रसिद्धिनिबन्धनलक्षणगमनासं[2]भवादसंभवाभावात् ।]**

कृष्णंभट्टीयम्

अव्याप्यवृत्तिसाध्यकसद्धेतुत्वावच्छेदेनाव्याप्त्यन्वयासंभवाद् अव्याप्यवृत्त्यभावसाध्यकसद्धेतुत्वावच्छेदेन तदन्वयो बोध्यः[3] । न च तत्रापि कपिसंयोगाभाववान् गुणत्वादित्यादौ नाव्याप्तिरिति वाच्यम् । हेतुसमानाधिकरणाभावप्रतियोगित्वस्य अव्याप्यवृत्तित्वरूपत्वात् । तथा च तत्र दीधित्यसङ्गतिमाशङ्कते––यद्यपीति । व्याप्यवृत्तितानिरूपकत्वाप्रवेशेऽव्याप्त्यवारकतामाह––कपीति । अत्र साध्याभावे व्याप्यवृत्तित्वं निवेश्य तदधिकरणपदेन व्याप्यवृत्तितानिरूपकं निवेश्यमिति कल्पमभिप्रेत्य समाधत्ते ––तथापीति । व्याप्यवृत्तित्वादीत्यादिना तन्निरूपकाधिकरणपरिग्रहः ।

[1] समवायिनि––अ.

[ ] एतच्चिह्नान्तर्गत पाठः क्वाचित्कः.

[2] असंभवादिति असंभवाभावात् इति नास्ति––अ.

[3] वाच्यः––अ.

अव्याप्यवृत्तिसाध्यकसद्धेतुत्वावच्छेदेन तादृशवृत्तित्वनिबन्धनाव्याप्तेः साध्याभावे व्याप्यवृत्तित्वादिदानेन व्युदास इत्यसङ्गतम् । दीधितावव्याप्यवृत्तिभावसाध्यकसद्धेतौ अव्याप्तिवारकप्रोक्ततदधिकरण[1]पदार्थासत्त्वात् कथंचित् तदुभयोपादानेऽपि हेतुनिष्ठसाध्याभाववद्वृत्तित्वमात्रं न व्याप्यवृत्तित्वादिद्वयनिवेशौपयिकमित्याशङ्कानुद्धाराद् वक्ष्यमाणास्वरसाच्चाह-- अथवेति । अव्याप्तीति । व्याप्यवृत्तितानिरूपकत्वप्रवेशेनासंभवो न वार्यते किन्तु अव्याप्तिमात्रमित्यर्थः । तदधीनेति । तथा च कपिसंयोगादिसाध्यकहेतोः तादृशसाध्याभाववद्वृत्तित्वमेव परंपरया कपिसंयोगाभावादिसाध्यकाव्याप्तिप्रयोजकमिति, यथा साक्षात् तत्प्रयुक्ता कपिसंयोगादिसाध्यकाव्याप्तिः अधिकरणविशेषणाद्वार्यते, तथा परंपरया तत्प्रयुक्ता तदभावसाध्यकाव्याप्तिरपि । अभावविशेषणादिति भावः । एतत्कल्पे प्रोक्ताधिकरणपदार्थो नान्तरीयको दीधितिकृद्वचञ्जितः ।

सत्तादौ पूर्वक्षणवृत्तित्ववैशिष्टचाप्रसिद्धेराह--क्षणेति । तत्क्षणेत्यर्थः । सत्तावान् जातेरित्यादौ पूर्वक्षणवृत्तित्वविशिष्टसत्ताभावस्य उत्तरक्षणावच्छेदेन हेतुमति सत्त्वाद् अव्याप्तिः । अधिकरणविशेषणे तादृशाभावाधिकरणं सामान्यादिकमेवेति वार्यते इत्यतः अनिवेश इत्यन्तम् । तथा च हेतुमन्निष्ठसाध्याभाववद्वृत्तित्वनिबन्धनोऽसंभवः व्याप्यवृत्तित्वादिनिवेशौपयिक इत्यर्थः । निरस्तमिति । साध्याभाववद्वृत्तित्वनिबन्धनासंभवस्य व्याप्यवृत्तित्वनिरूपकत्वनिवेशौपयिकत्वेऽपि व्याप्यवृत्तित्वनिवेशानौपयिकतया तदुभयनिवेशौपयिकतया अव्याप्तिलेखनसामञ्जस्यादिति भावः ।

## न्यायरत्नम्

**अव्याप्तिरिति लेखनं न युज्यत इति । अत्रेदं चिन्त्यम्--तादात्म्यसंबन्धेन साध्यतायां लक्षणसमन्वयादव्याप्तिलेखनं युज्यत एव । न हि तत्र**

[1] पदार्थसत्त्वात्--अ.

क्षणविशेषवृत्तित्वविशिष्टसाध्यभेदस्याव्याप्यवृत्तित्वं शक्यते वक्तुम्; तथा सति साध्यव्यापकत्वादौ भेदघटितप्रतियोगिवैयधिकरण्यस्याकिञ्चित्कर-त्वापत्तेः; भेदस्य व्याप्यवृत्तित्वाभिप्रायेण दीधितिकारीयाव्याप्तिलेखनस्य संगमयितुं शक्यत्वाच्चेति ।

## गादाधरी

(७८) तद्वद्वृत्तित्वाभावपरिष्कारः ।

तत्तत्साध्याभावाधिकरणवृत्तित्वस्य हेतुवृत्तितानवच्छेदक-विशेषधर्मव्यासज्यवृत्तिधर्मावच्छिन्नाभावमादाय व्यभिचारिण्यति-व्याप्तिः तत्तत्साध्याभाववद्वृत्तित्वत्वावच्छिन्नाभावं निवेश्य चेद् वार्यते तदा व्यधिकरणधर्मावच्छिन्नसाध्याभावसजातीयस्य तादृशस्य तद्वद्वृत्तित्वत्वेन घटाद्यभावस्य प्रसिद्धिः गुरुधर्मस्य प्रतियोगितावच्छेदकत्वाङ्गीकारे एव संभवति । अन्यथा तादृशा-भाववद्वृत्तित्वत्वस्य वृत्तित्वत्वरूपलघुधर्मसमनियततया प्रति-योगितानवच्छेदकत्वेन तदवच्छिन्नाभावाप्रसिद्धेः । अन्यूनानति-प्रसक्तत्वरूपावच्छिन्नत्वनिवेशे ह्रदवृत्तित्वह्रदान्यनिर्धूमवृत्तित्वो-भयाभावादेः निर्धूमवृत्तित्वत्वादिसमनियतप्रतियोगीताकतया तद्वति धूमादिसाध्यकवह्न्यादिहेतावतिव्याप्तेः । तत्तत्साध्याभाव-वद्वृत्तित्वत्वविशिष्टव्यापकतावच्छेदकरूपावच्छिन्नाभावादि-निवेशे च निर्धूमवृत्तित्वत्वादिना ह्रदवृत्तित्वघटान्यतराभाव-मादाय तद्दोषतादवस्थ्यमित्यन्यादृशाभावं तत्तदधिकरणवृत्तित्वा-भावपदेन विवक्षयति तद्वदिति । व्यापकान्तमनवच्छिन्नान्तं च प्रतियोगिताविशेषणम् ।

प्रथमविशेषणप्रयोजनमाह––तत्तत्साध्याभाववद्व्यक्तिवि-शेषेति । यद्व्यक्तौ हेतुरपि न वर्तते तादृशह्रदादिव्यक्तीत्यर्थः; व्यभिचारनिरूपकहेत्वधिकरणमात्रवृत्तिर्योऽयोगोलकादिव्यक्ति-विशेषावृत्तित्वादिरूपसाध्यतावच्छेदकावच्छिन्नव्यापकतावच्छेद-करूपावच्छिन्नाभावः[1] तद्व्यक्तिविशेषवृत्तित्वाभावस्य हेतावसं-भवात्[2] किञ्चिद्विशिष्टस्य तादृशाभाववद्वृत्तित्वस्याभावमादा-यातिप्रसङ्गं दर्शयति––पार्थिवत्वादिविशेषितस्येति । अग्रिमेण साध्याभाववद्वृत्तित्वस्येत्यनेनान्वितम् । वह्न्यादौ पार्थिवत्वादि-विशेषणाभावात् तद्विशिष्टनिर्धूमवृत्तित्वाभावमादायेत्यर्थः ।

द्वितीयविशेषणप्रयोजनं दर्शयति––द्वित्वाद्यवच्छिन्नस्येति । [3]घटनिर्धूमवृत्तित्वोभयत्वाद्यवच्छिन्नस्येत्यर्थः । नातिप्रसङ्ग इति । ह्रदादिवृत्तित्वत्वपार्थिवत्वादिविशिष्टनिर्धूमवृत्तित्वत्वाद्यवच्छि-न्नाभावप्रतियोगिताया वह्न्यादिवृत्तिनिर्धूमवृत्तित्वाद्यवृत्तितया तत्तत्साध्याभाववद्वृत्तित्वत्वाव्यापकत्वात् । द्वित्वाद्यवच्छिन्नाभाव-

1 साध्यतावच्छेदकसंबन्धावच्छिन्नेत्यपि बोध्यम्––रा.

2 नातिव्याप्तिःसंभवतीत्यतः इति शेषः––रा.

3 वह्नित्वेन तार्णातार्णोभयाभाववन्निर्धूमवृत्तितात्वेन ह्रदवृत्तित्वनिर्धूमवृत्तित्वो-भयाभावाङ्गीकारो नास्तीति न तदुपन्यासः, तादृशवृत्तित्वाभावोऽपि व्याप्यवृत्ति-र्बोध्यः; तेन संयोगात्मकवृत्तित्वस्याभावस्याव्याप्यवृत्तेः पूर्वक्षणवृत्तित्वविशिष्ट-वृत्तित्वाभावस्योत्तरक्षणावच्छेदेन च व्यभिचारिणि सत्वेऽपि नातिव्याप्तिः; न च जलवृत्तित्वेन निर्धूमवृत्तित्वसामान्याभावस्य वह्नौ सत्वादतिव्याप्तिरिति वाच्यम्, स्वन्यूनवृत्तिसमानाधिकरणधर्मावच्छिन्ना या प्रतियोगिता तस्यां तत्तत्साध्याभाववद्-वृत्तित्वत्वव्यापकव्यासज्यवृत्तिधर्मानवच्छिन्नत्वस्य विवक्षणात्; तादृशी च प्रति-योगिता स्वन्यूनवृत्तिधर्मानवच्छिन्ना स्वव्यधिकरणधर्मावच्छिन्ना च न भवतीति नैता-दृशाभावमादाय दोषः इति प्राञ्चः––रा.

**प्रतियोगिताया द्वित्वादिवद् व्यासज्यवृत्तिताविरहेण निर्धूमवृत्तित्वादिनिष्ठभेदप्रतियोगितानवच्छेदकत्वरूपनिर्धूमवृत्तित्वत्वादिव्यापकत्वसत्त्वेऽपि व्यासज्यवृत्तिधर्मावच्छिन्नत्वात् तादृशाभावानां लक्षणाघटकत्वादिति भावः। व्यासज्यवृत्तिधर्मस्य तत्तत्साध्याभाववद्वृत्तित्वनिष्ठभेदप्रतियोगितानवच्छेदकत्वरूपव्यापकत्वविरहात् तत्तत्साध्याभाववद्वृत्तित्वत्वव्यापकधर्मावच्छिन्नाभावनिवेशे द्वित्वावच्छिन्नाभावमादायातिप्रसङ्गस्य वारणसंभवेऽपि प्रतियोगितायां व्यापकत्वविशेषणाप्रवेशे निर्धूमवृत्तित्वत्वादिना ह्रदादिवृत्तित्वघटान्यतराभावमादायातिप्रसङ्गो न शक्यते वारयितुमिति तत्र तद्विशेषणप्रवेशनस्यावश्यकत्वे[1] व्यासज्यवृत्तिधर्मावच्छिन्नाभाववारणाय तादृशधर्मानवच्छिन्नत्वमेव तत्तत्साध्याभाववद्वृत्तित्वत्वव्या[2]पकधर्मावच्छिन्नत्वापेक्षया लाघवात् निवेशयितुमुचितमिति तदेव निवेशितम्। व्यासज्यवृत्तित्वं च [3]स्वसमानाधिकरणभेदप्रतियोगितावच्छेदकत्वम्।**

कृष्णंभट्टीयम्

[[4]हेतुवृत्तितानवच्छेदकेति। हेतुनिरूपितवृत्तितानवच्छेदकेत्यर्थः।

[1] अनन्तरम् तत्तदभाववद्वृत्तित्वत्वव्यापकधर्मावच्छिन्नायाः तत्तदभाववद्वृत्तित्वत्वव्यापकप्रतियोगितायाश्च समानाधिकरणधर्मावच्छिन्नत्वनियमेन व्यधिकरणधर्मावच्छिन्नतदभावासंग्रहः। तत्तदभाववद्वृत्तित्वत्वव्यापकत्वेन विशेषितायां प्रतियोगितायां तदा भाववद्वृत्तित्वव्यापकतावच्छेदकावच्छिन्नत्वं निवेश्य वाच्यत्वत्वादिना साध्याभाववद्वृतित्वाभावसंग्रहे संभवेऽपि गौरवमिति अधिकः पाठः——अ.

[2] व्यापकतावच्छेदकधर्मावच्छिन्नत्वाद्यपेक्षया——अ.

[3] स्वप्रतियोगितावच्छेदकत्वस्वसामानाधिकरण्योभयसंबन्धेन भेदविशिष्टत्वमिति निष्कर्षः। स्वपदं भेदपरम्——रा.

[4] [ ] एतदन्तर्गतपाठो नास्ति——अ.

तादृशधर्मो ह्रदवृत्तित्वत्वमेव, न तु अयोगोलकवृत्तितात्वम् । तस्य वह्नि-निरूपितवृत्तितावच्छेदकत्वात् ।]

अन्यूनेति । तथा च वृत्तित्वत्वेन घटाभावप्रतियोगितावच्छेदकस्य जगद्वृत्तित्वत्वान्यूनवृत्तित्वात् न दोष इति भावः। निर्धूमवृत्तित्वघटोभयाभाववारणायानतिरिक्तवृत्तित्वं रूपविशेषणम् ।

ह्रदेति । ननु तत्तत्साध्याभाववद्वृत्तित्वनिष्ठभेदप्रतियोगितायाः पर्याप्तिसंबन्धेन अनवच्छेदकत्वमन्यूनवृत्तित्वम् । तच्च नैतादृशाभावप्रतियोगितावच्छेदकस्य संभवति । उभयत्वस्य व्यासज्यवृत्तित्वात् । न च, विषयितासंबन्धेन साध्याभाववद्वृत्तितात्वविशिष्टज्ञानस्य स्वरूपसंबन्धेनाभावस्य सत्त्वादतिव्याप्तिः। यदि च तस्य व्यधिकरणधर्मावच्छिन्नाभावतया साजात्याभावात् नातिव्याप्तिरित्युच्यते, तदा द्रव्यं सत्त्वादित्यादौ कालिकसंबन्धेन तादृशवृत्तितात्वविशिष्टध्वंसाद्यभावमादायातिव्याप्तिः; तद्वारणाय स्वरूपसंबन्धावच्छिन्नत्वेन प्रतियोगितावच्छेदकताया निवेशनीयतया प्रतियोगितावच्छेदकताघटकसंबन्धेन व्यापकत्व[1]निवेशात्। अन्यथा विषयितासंबन्धेन तादृशवृत्तित्वत्वविशिष्टज्ञानभेदमादायासंभवापातादिति तादृशाभावो लक्षणघटक इति, वाच्यम्। पर्याप्त्यन्यस्वरूपसंबन्धेन व्यापकत्वसंभवेऽपि तेन संबन्धेनोभयत्वविशिष्टाभावस्य हेतावसत्त्वेन तल्लेखनासङ्गतेः। तादृशवृत्तित्वासंबद्धस्वकं यद्यत् तदन्यत्वनिवेशश्चाभावसङ्गमनमात्रौपयिकतया न घटते इति चेत्, न । पर्याप्त्यन्यस्वरूपसंबन्धेन व्यापकतायाः प्रवेश्यत्वात् । स्वरूपसंबन्धावच्छिन्नप्रतियोगितावच्छेदकताकत्वेनैव लक्षण घटकता पर्याप्तिघटितस्वरूपसंबन्धश्च विरोधनिर्वाहकः । पर्याप्तिघटितस्वरूपसंबन्धेन व्यापकतां प्रवेश्य एतदभाववारणेऽपि निर्धूमवृत्तित्वत्वेन ह्रदवृत्तित्वघटान्यतराभावमादायातिव्याप्तिर्दुर्वारैव । तद्रूपभिन्नं गुणत्वादित्यादौ [2]रूपत्वविशिष्टतादृशसमवेतत्वाद्यभावमादायातिव्याप्तिरतो

1 निवेशः—अ. 2 रूपत्वनिष्ठ—अ.

व्यापकेत्यपहाय व्यापकतावच्छेदकेति । [1]एतद्रूपनिरूपिताधेयतापि एकैव इत्यभिप्रायेणेदम् । निर्धूमवृत्तित्वत्वेन ह्रदवृत्तित्वह्रदान्यनिर्धूमवृत्तित्वोभयाभावो वह्नित्वेन तार्णातार्णदहनोभयाभावानङ्गीकर्तृभिः नाङ्गीकर्तुं शक्यते इत्यतो घटान्यतरेति । पार्थिवत्वादीत्यादिना [2]शैवालत्वादिनिष्ठनिर्धूमवृत्तित्वपरिग्रहः ।

अतिप्रसङ्गस्येति । नन्वत्र तादृशवृत्तित्वनिष्ठभेदप्रतियोगितावच्छेदकतायाः स्वरूपसंबन्धावच्छिन्नत्वस्यावश्यकतया तादृशोभयत्वे तदभावात्मकव्यापकत्वमक्षतमेव । न च पर्याप्तिसंबन्धावच्छिन्नत्वं निवेश्यमिति वाच्यम् । तथापि तादृशवृत्तित्वत्वे तादृशावच्छेदकत्वाभावसत्त्वादिति चेत्, न, तादृशवृत्तितात्वव्यापकधर्मपर्याप्तावच्छेदकताकाभावस्य वाच्यत्वात् ।

निर्धूमेति । यद्यपि वृत्तित्वत्वमेव तादृशाभावप्रतियोगितावच्छेदकं भवितुमर्हतीति[3] गुरुधर्मस्य [4]प्रतियोगितानवच्छेदकत्वेन तादृशवृत्तित्वत्वरूपगुरुधर्मपुरस्कारेणाभावप्रदर्शनमनुचितम्, तथापि तद्ग्रन्थस्य गुरुधर्मस्य प्रतियोगितावच्छेदकत्वेन तात्पर्यम् । किन्तु निर्धूमवृत्तित्वत्वेन निर्वह्निवृत्तित्व[5]धूमवद्वृत्तित्वान्यतराभावमादायापि दोषसूचनार्थं तद्रूपेण तादृशाभावप्रदर्शनम् । न हि एतस्य तादृशान्यतरत्वमात्रं प्रतियोगितावच्छेदकम्; धूमावृत्तित्वप्रसङ्गात् । नापि वृत्तित्वत्वमात्रं; सामान्यरूपेण विशेषाभावानुपगमात् । वृत्तित्वसामान्यस्य प्रतियोगित्वोपगमे च संयुक्तावृत्तित्वप्रसङ्गात् । यद्वा निर्धूमवृत्तित्वत्वेन धूमवद्वृत्तित्वनिर्धूमवृत्तित्वोभयाभावमादाय प्रतियोगिताया [6]व्यासज्यवृत्तित्वमते दोषः सूच्यते । परं तु भट्टा-

[1] तत्तद्व्यक्तित्वावच्छिन्नाभाववारणाय इदम्––अ.

[2] शैवालत्वादिविशिष्ट––अ.

[3] इति शब्दो नास्ति––अ.

[4] प्रतियोगितानवच्छेदकत्वादिति––अ.

[5] धूमवृत्तित्व––अ.

[6] तेन केवलान्वयित्वम्; प्रतियोगिविशेषणस्यावच्छेदकतापक्षेऽदोषात्––अ.

चार्याणामन्यतरपदोपादानस्वरसात् प्रतियोगितायामव्यासज्यवृत्तित्वदानेन तदुद्धारोऽपि बोध्यः। निर्धूमस्य प्रतियोगितावच्छेदकाघटकत्वेऽपि कैमुतिकन्यायेन धर्मस्य व्यापकत्वोपपादकतयोपादानमिति तु ज्यायः।

ननु तत्तत्साध्याभाववद्वृत्तित्वत्वव्यापकधर्मावच्छिन्नाभावप्रवेशे व्यासज्यवृत्तिधर्मानवच्छिन्नत्वं न प्रवेश्यमित्याशङ्कायां निर्धूमवृत्तित्वत्वेन ह्रदवृत्तित्वघटान्यतराभावमादायातिव्याप्तिरिति समाधानमसङ्गतम्। स्वन्यूनवृत्तिधर्मनिष्ठावच्छेदकत्वानिरूपकतादृशवृत्तित्वत्वव्यापकर्धावच्छिन्नप्रतियोगिताया एव लाघवान्निवेशनीयतया व्यासज्यवृत्तिधर्मानवच्छिन्नत्ववैयर्थ्यात्। न च व्यधिकरणधर्मावच्छिन्नाभावसङ्ग्रहार्थं सामानाधिकरण्यघटितं न्यूनवृत्तित्वं वाच्यमिति विपरीतगौरवमिति वाच्यम्; यथोक्तविशेषणप्रवेशेऽपि तदावश्यकत्वात्। अन्यथा ह्रदवृत्तित्वत्वेन निर्धूमवृत्तित्वसामान्याभावमादायातिव्याप्तेः। न च [1]सविशेषरूपेण सामान्याभाव इति तत्प्रतियोगिता ह्रदवृत्तित्वमात्रे एवोपगम्यते इति न दोष इति वाच्यम्। [[2]एवमपि द्रव्यत्वेन रूपेण निर्धूमवृत्तित्वधूमवद्वृत्तित्वान्यतराभावमादायातिव्याप्तिरित्यतः तादृशवृत्तित्वत्वव्यापकप्रतियोगितां निवेश्य व्यासज्यवृत्तित्वं व्याचष्टे]––व्यासज्येति। न चैवं लाघवादित्यसङ्गतम्। तत्तत्साध्याभाववद्वृत्तित्वत्वव्यापकधर्मावच्छिन्नत्वप्रवेशे साध्याभावाधिकरणवृत्तित्वभिन्नत्वेन निर्धूमवृत्तित्वघटान्यतराभावस्य जलवृत्तित्वत्वेन निर्धूमवृत्तित्वाद्यभावद्वित्वाद्यवच्छिन्नाभावयोश्च वारणसंभवेऽपि स्वन्यूनवृत्तितादृश[3]धर्मावच्छिन्नत्वनिवेशे लाघवम्।

[1] विशेषरूपेण––अ.

[2] एतदन्तर्गतपाठो नास्ति; तत्स्थाने 'एवमपि द्रव्यत्वेन निर्धूमवृत्तित्वघटान्यतराभावमादायातिव्याप्तेः। न च वृत्तित्ववृत्तिधर्मावच्छिन्नत्वं प्रतियोगिताविशेषणम्; एवमपि धमवद्वृत्तित्वघटान्यतरत्वेन रूपेण निर्धूमवृत्तित्वधूमवद्वृत्तित्वान्यतराभावमादायातिव्याप्तेरित्यतः तादृशवृत्तित्वत्वव्यापकप्रतियोगितां निवेश्य व्यासज्यवृत्तित्वं व्याचष्टे' इति पाठः तिष्ठति––अ.

[3] धर्मानवच्छिन्नत्वनिवेशे––अ.

## न्यायरत्नम्

हेतुवृत्तितानवच्छेदकेति । ह्रदवृत्तित्वादिरित्यर्थः ।

लाघवान्निवेशयितुमुचितमिति । ननु वह्निमान् धूमादित्यादौ वह्नित्वादिना घटाभावसजातीयस्य तादृशाभाववद्वृत्तित्वत्वव्यापकधर्मावच्छिन्नतादृशवृत्तित्वत्वव्यापकप्रतियोगिताकाभावस्याप्रसिद्ध्या असंभव एव वक्तुमुचितः । न च तादृशवृत्तित्वत्वेन तादृशवृत्तित्वघटान्यतराभावस्यैव प्रसिद्धिरिति वाच्यम् । तस्य स्वसमानाधिकरणधर्मावच्छिन्नप्रतियोगिताकत्वेन तदन्यत्वरूपव्यधिकरणधर्मावच्छिन्नप्रतियोगिताकत्वविरहात् । न च समनियताभावैक्यमते तस्य गगनाभावत्वेन साध्याभावसाजात्यं संभवतीति वाच्यम् । तथापि तदनैक्यमतेऽसंभवस्य दुर्वारत्वादिति चेत्, न । वृत्तित्वत्वव्यापकधर्मावच्छिन्नेत्यनेन साध्याभाववद्वृत्तित्वत्वविशिष्टव्यापकतावच्छेदकधर्मावच्छिन्नत्वस्य विवक्षणाद् वाच्यत्वत्वेन साध्याभाववद्वृत्तित्वाभावप्रसिद्धेः द्वित्वावच्छिन्नाभाववारणस्य च संभवात् । अत एव गौरवोक्तिरपि । यथाश्रुते स्वसमानाधिकरणभेदप्रतियोगितावच्छेदकत्वरूपव्यासज्यवृत्तित्वाश्रयधर्मानवच्छिन्नत्वतादृशवृत्तित्वत्वव्यापकयोः साम्येन तदसंगतिरिति ध्येयम् ।

## गादाधरी

(७९) साध्याभाववद्वृत्तित्वे हेतुतावच्छेदकसंबन्धावच्छिन्नत्वनिवेशप्रयोजनकथनम् ।

साध्याभाववद्वृत्तित्वमिति । साध्याभाववत्संनद्धत्वमित्यर्थः । तेन तादात्म्यसंबन्धेन वृत्तेरप्रसिद्धावपि न तत्संबन्धावच्छिन्नहेतुकाव्याप्तिः । संबन्धप्रतियोगित्वरूपसंबद्धत्वैकदेशसंबन्धहेतुतावच्छेदकसंबन्धेनेति––तृतीयार्थाभेदान्वयः । वृत्तावपीति । संबद्धत्वेऽपीत्यर्थः । न दोष इति । हेतुतावच्छेदकसंब-

न्धनिवेशे 'वह्निमान् धूमाद्' इत्यत्र वह्न्यभाववत्संयुक्तत्ववत्वावच्छिन्नाभावप्रतियोगितायाः वह्न्यभाववत्समवेतत्वाद्यवृत्तितया सामान्यतो वह्न्यभाववद्वृत्तित्ववत्वं प्रत्यव्यापकत्वेन तादृशाभावस्य लक्षणघटकत्वानुपपत्तेः वह्न्यभाववद्वृत्तित्ववत्वव्यापकप्रतियोगिताकस्य तद्वृत्तित्वसामान्याभावस्य वह्न्यभाववत्समवेतत्ववति धूमेऽसत्वादव्याप्तिः प्रसज्यते। हेतुतावच्छेदकसंबन्धनिवेशे च निर्वह्निसंयुक्तत्ववत्वावच्छिन्नाभावस्यापि[1] तादृशसंबन्धावच्छिन्नसाध्याभाववद्वृत्तित्ववत्वव्यापकप्रतियोगिताकत्वेन लक्षणघटकतया तमादाय लक्षणसमन्वय इति भावः।

इत्थं च—हेतुतावच्छेदकसंबन्धेन साध्याभाववद्वृत्तित्वविवक्षणे च; सतीति शेषः। [2]तदविवक्षणे च वक्ष्यमाणाप्रसिद्धिविरहादुपष्टम्भासङ्गतिः।

हेतुतावच्छेदकसंबन्धेन कस्यचिदधिकरण[3] इति। अनुयोगितासंबन्धेन हेतुतावच्छेदकसंबन्धवद्वृत्तिरित्यर्थः। अथवा हेतुतावच्छेदकसंबन्धेन धर्मवद्वृत्तिरि[4]त्यर्थः; विशिष्य हेतुतावच्छेदकपुरस्कारेण हेतुमत्त्वनिवेशनसंभवेऽपि बहुपदार्थघटितहेतुतावच्छेदकस्थले धर्मत्वेन निवेशापेक्षया तेन रूपेण निवेशे गौरवमिति सामान्यतो निवेशलाभाय कस्यचिदित्यभिहितम्।

अथ द्रव्यं गुणकर्मान्यत्वे सति सत्त्वादित्यादौ समानाधिकरणधर्मावच्छिन्नप्रतियोगिताकस्यापि साध्याभावस्य सत्तादिरूपहेतु-

1 अभावस्यैव—अ.
2 एतदविवक्षणे—अ.
3 अधिकरणवर्तमान इति—अ.
4 इत्येवार्थः—अ.

समानाधिकरणत्वसंभवेऽपि हेतुतावच्छेदकविशिष्टहेतुसमानाधिकरणनिरुक्तसाध्याभावानां व्यधिकरणधर्मावच्छिन्नप्रतियोगिताकत्वनियमात् तादृशहेतुसमानाधिकरणत्वेनाभावविशेषणे केवलव्यधिकरणधर्मावच्छिन्नप्रतियोगिताकत्वरूपेणैव साजात्यविवक्षणं संभवतीति तन्निवेशनमेवोचितमिति चेत् न। तथा सति तादृशयावत्साध्याभावसजातीयवत्त्वस्यैव लक्षणत्वं संभवति। व्यभिचारिणि समानाधिकरणधर्मावच्छिन्नाभावस्यापि विशिष्टहेतुसमानाधिकरणत्वेन लक्षणघटकतया तद्घटकयावदभावसजातीयाप्रसिद्ध्यैवातिव्याप्तिविरहात्, सद्धेतौ तादृशयावदभावसजातीयव्यधिकरणधर्मावच्छिन्नप्रतियोगिताकयत्किंचिदभावमादायैव लक्षणसमन्वयसंभवादिति साध्याभाववद्वृत्तित्वा[1]भावत्वविशेषणवैयर्थ्यापत्तेः।

हेतुतावच्छेदकसंबन्धेनेति। समवायादिसंबन्धेनेत्यर्थः। साध्याभाववद्वृत्तित्वस्य—समानाधिकरणधर्मावच्छिन्नसाध्याभाववद्वृत्तित्वस्य। न क्षतिरिति। तादृशसाध्याभावस्य समवायादिसंबन्धानुयोग्यवृत्तितया व्यधिकरणधर्मावच्छिन्नाभावस्यैव लक्षणघटकत्वात् तद्वति च तादृशसंबन्धेनापि वृत्तेः प्रसिद्धेरितिभावः।

अत्र च द्रव्यं गुणकर्मान्यत्वे सति सत्त्वाद् इत्यादावव्याप्तिः [2]विशेष्यविशेषणसंबन्धस्य [3]परम्परया हेतुत्वमभ्युपेत्य वारणीयेत्य-

[1] अभाववत्व—अ.

[2] विशेषणविशेष्यसंबन्धस्य—अ. एतादृशपाठमनुसृत्य न्यायरत्ने प्रतीकधारणम्—स्व.

[3] परंपरासंबन्धेनेति न्यायरत्ने प्रतीकधारणम्—स्व.

**भिप्रेत्य हेतुतावच्छेदकसंबन्धेन किंचिद्व्यक्त्यधिकरणवृत्तित्वमभावे विवक्षितम्। यदि च सत्तादेरेव विशिष्टसत्तात्वादिना व्याप्यत्वं हेतुतावच्छेदकविशिष्टनिरूपितहेतुतावच्छेदकसंबन्धावच्छिन्नाधिकरणतासामान्ये तत्तत्साध्याभावसजातीयतत्तदधिकरणानुयोगिकत्वाभावं तत्तत्साध्याभाववद्वृत्तितासामान्ये तत्तत्साध्याभावसजातीयहेतुतावच्छेदकसंबन्धावच्छिन्नत्वविशिष्टहेतुतावच्छेदकावच्छेद्यत्वाभावं वा निवेश्य निवार्यते, तदा जातिमान् सत्त्वाद् इत्यादौ उपदर्शिताप्रसिद्धिनिबन्धनाव्याप्तेरुक्तविवक्षामन्तरेणैव निवारणं संभवतीत्यवधेयम्[1]।**

कृष्णंभट्टीयम्

[2]साध्याभाववद्वृत्तित्वानिवेशादिति भावः। स्वं--प्रतियोगिता। [3]प्रतियोगितायाः सामानाधिकरण्येनावच्छेदकम्। तेन निर्धूमवृत्तितात्वेन घटादिभेदमादाय न दोषः। व्यधिकरणधर्मावच्छिन्नाभावसङ्ग्रहप्रकार उक्तः। तादृशवृत्तित्वाभावश्च व्याप्यवृत्तिर्बोध्यः। तेनाव्याप्यवृत्तेः संयोगात्मकवृत्तित्वाभावस्य पूर्वक्षणवृत्तित्वविशिष्टतादृशवृत्तित्वाभावस्य च सत्त्वेऽपि नातिव्याप्तिः। निरवच्छिन्नविशेषणतासंबन्धेन तद्वत्त्वं वा। हेतुतावच्छेदकसंबन्धानुयोगितानिवेशे तत्संबन्धनिवेशाद् गौरवमतोऽनुयोगितेति।

[1] अत्र तत्तत्साध्याभावसजातीयस्य तत्तदधिकरणवृत्तितावच्छेदकत्वाभावस्य तत्तदधिकरणनिष्ठाधिकरणता निरूपकतावच्छेदकत्वाभावस्य वा हेतुतावच्छेदके निवेशे द्रव्यं विशिष्टसत्त्वादित्यादौ अव्याप्तिवारणं हेतुतावच्छेदकसंबन्धानुयोगिवृत्तित्वविशेषणसार्थक्यं च संभवतीति ध्येयम्--रा.

[2] साध्याभाववद्वृत्तित्वत्वानिवेशात्--अ.

[3] प्रतियोगितासामानाधिकरण्येनावच्छेदकम्--अ.

कस्यचिदिति । दीधित्यनुसारेणाह––अथवेति । प्रथमकल्पसमोऽयं कल्पः । ननु धर्मत्वेन नानापदार्थनिवेशमपेक्ष्य हेतुतावच्छेदकरूपेणैतदनिवेश उचित इत्यत आह––विशिष्येति । बहुपदार्थः सास्नादिः । सामान्यतः–– हेत्वहेतुसाधारणधर्मत्वेन ।

यदि चेति । अथ तत्तत्साध्याभाववद्वृत्तितासामान्ये तत्तत्साध्याभावसजातीयहेतुतावच्छेदकसंबन्धावच्छिन्नत्वविशिष्टहेतुतावच्छेदकावच्छेद्यत्वाभावः कुतो नोक्तः । द्रव्यं विशिष्टसत्त्वादित्यादौ गुणादिवृत्तित्वे हेतुतावच्छेदक[1]पर्याप्तावच्छेदकताकत्वाभावेनाव्याप्तिवारणात् । पूर्ववत् तादृशावच्छेद्यत्वत्वव्यापकव्यासज्यवृत्तिधर्मानवच्छिन्नप्रतियोगिताकाभावनिवेशो वाच्यः । धूमवान् वह्नेरित्यादौ अयोगोलकीय[2]वह्निभेदविशिष्टवह्नित्वावच्छेद्यत्वाभावमादायातिव्याप्तिस्तु न । अयोगोलकीयवह्निनिष्ठवृत्तित्वनिष्ठावच्छिन्नत्वे प्रतियोगिताविरहादिति चेत्, न । हेतुतावच्छेदकानवच्छिन्नत्वस्य नञर्थत्वाभावात् । अत्र स्वाश्रयसाजात्यसंबन्धेन साध्याभावत्वव्यापको यः स्वाधिकरणवृत्तित्वनिष्ठभेदप्रतियोगितावच्छेदकप्रतियोगितानिरूपकवृत्तित्वसंबन्धेन साध्याभावविशिष्टो व्यासज्यवृत्तिधर्मः तदवच्छिन्नाधिकरणत्व[3]मनुगतम् अवच्छेदकत्वं स्वावच्छिन्नप्रतियोगिताकभेदवत्त्वसंबन्धेन बोध्यमिति ।

## गादाधरी

(८०) **मिश्रोक्तद्वितीयलक्षणस्यावतारिका ।**

**मिश्रास्तु––साध्याभाववद्वृत्तित्वाभावरूपव्याप्तेः जातिमान् सत्त्वाद् द्रव्यं विशिष्टसत्त्वाद् इत्यादावव्याप्तिमालोच्य सकल-**

[1] पर्याप्तावच्छेदकत्वाभावेन––अ.

[2] वह्नित्वावच्छेद्यत्वभेदविशिष्टवह्नित्वावच्छेद्यत्वाभावमादाय––अ.

[3] अनुगमः––अ.

**साध्याभाववन्निष्ठाभावप्रतियोगित्वरूपामेव व्याप्तिं साजात्यादि-घटनया परिष्कृतवन्तः। तत्परिष्कृते च यथाश्रुते वक्ष्यमाणदोष-मुद्धर्तुमभावप्रतियोगित्व[1]स्थले स्वावच्छिन्नव्यापकतावच्छेदकप्रति-योगितावच्छेदकत्वरूपपारिभाषिकतत्प्रतियोगितावच्छेदकत्वाश्र-यहेतुतावच्छेदकवत्त्वं निवेशयन् तादृशलक्षणमाह——यद्वेति। ता-दृशाः——व्याप्यवृत्तयः। साध्याभावाः——साध्यतावच्छेदकावच्छि-न्नव्यापकतावच्छेदकरूपावच्छिन्नप्रतियोगिताकाभावाः। प्रत्येकं तेषां सजातीयस्य व्यापकीभूतस्याभावस्य——एकैकतदभावसजा-तीयस्य तत्तदभावव्यापकीभूतस्य व्याप्यवृत्तेरभावस्य। प्रतियोगि-तावच्छेदकेन यद्रूपावच्छिन्नं प्रति व्यापकत्वमवच्छिद्यते——प्रतियो-गितावच्छेदकं यद्धेतुतावच्छेदकावच्छिन्ननिरूपितव्यापकतावच्छेद-कम्। तद्रूपवत्त्वं तत्त्वम्——तेन रूपेण व्याप्यत्वम्।**

## कृष्णंभट्टीयम्

साजात्यादीति। न च स्वसमानजातीयसकलसाध्याभाववन्निष्ठा-भावप्रतियोगित्वमर्थ इति मिश्रपङ्क्तौ आदिपदलभ्यं नास्तीति वाच्यम्। तादृशस्य व्याप्यवृत्तित्वस्य तदभिप्रेतत्वात्। विशिष्ट[2]सत्तासाध्यकातिव्या-प्तिवारणाय साध्यतावच्छेदकावच्छिन्नेति। प्रत्येकं तेषामित्यत्र साजात्य-निरूपकस्य यद्यपि तस्य च तस्य च तस्य चेति व्युत्पत्त्या विशिष्य लाभो भवतीति प्रत्येकमित्यस्य व्यापकीभूताभाव एवान्वय उचितः, अन्यथा एकै-कव्यापकीभूताभावे एकैकसाध्याभावसजातीयाभेदान्वयाभावे व्यतिरेकिसा-ध्यकेऽव्याप्त्यापत्तेः। तथापि पूर्वलक्षणे तादृशान्वयतात्पर्यग्राहकप्रत्येकपदो-

[1] स्थाने इत्यपि पाठः——अ.

[2] सत्तादिसाध्यक——अ.

पादानेन व्युत्पादितस्य तस्य तथान्वयस्येदानीं तदनुपादानेऽपि तत्र लब्धुं शक्यत्वात् तद्वैयर्थ्यमिति मनसिकृत्य प्रत्येकं सजातीयः तेषां व्यपकीभूत इत्यन्वयेनार्थमाह--एकैकेति। व्याप्यवृत्तेरिति पूरणम्। वह्नौ साध्ये धूमो द्रव्यत्वेन व्याप्य इत्यादिप्रयोगवारणाय तेन रूपेणेति।

## गादाधरी

(८१) लक्षणसमन्वयादिप्रदर्शनम्।

**वह्निमान् धूमाद् इत्यादौ वह्नित्वाद्यवच्छिन्नवह्न्याद्यभावसजातीयः तद्व्यापकीभूतो धूमत्वाद्यवच्छिन्नधूमाभावः, वह्नित्वाद्यवच्छिन्नघटाभावसजातीयस्तद्व्यापकीभूतः धूमत्वाद्यवच्छिन्नघटाद्यभावः, तत्प्रतियोगितावच्छेदकं धूमत्वादिकं धूमत्वाद्यवच्छिन्नव्यापकतावच्छेदकमिति लक्षणसमन्वयः। व्यभिचारिणि धूमत्वाद्यवच्छिन्नव्यापकतावच्छेदकधू[1]मत्वाद्यवच्छिन्नघटाद्यभावतादृशवह्नित्वाद्यवच्छिन्नवह्न्याद्यभावसजातीयतत्तदभावव्यापकवह्नित्वाद्यवच्छिन्नघटाद्यभाववह्नित्वाद्यवच्छिन्नवह्न्याद्यभाव-प्रतियोगितावच्छेदकवह्नित्वादेः वह्नित्वाद्यवच्छिन्नव्यापकतावच्छेदकत्वेऽपि तादृशयावत्साध्याभावान्तर्गतधूमत्वाद्यवच्छिन्नधूमाभावसजातीयतद्व्यापकाभावप्रतियोगितावच्छेदकस्य कस्यापि वह्नित्वाद्यवच्छिन्नव्यापकतावच्छेदकत्वाभावान्नातिव्याप्तिः।**

**प्रथमाभावे व्याप्यवृत्तित्वविशेषणात् कपिसंयोगी एतद्वृक्षत्वाद् इत्यादौ कपिसंयोगत्वाद्यवच्छिन्नकपिसंयोगाभावस्य केवलान्वयिनः सजातीयस्य व्यापकीभूतव्याप्यवृत्त्यभावस्याप्रसि-**

[1] वह्नित्वाद्यवच्छिन्न--अ.

द्वावपि न क्षतिः । व्याप्यवृत्तित्व[1]विशिष्टतदभावं प्रति एतद्वृक्षत्वाद्यभावस्य[2] व्यापकत्वात्, साध्यतावच्छेदकसंबन्धेन साध्यव्यापकताया विवक्षणीयतया संयोगेन द्रव्यस्याव्याप्यवृत्तितामते संयोगेन तत्साध्यके तादृशसंबन्धेन व्यापकताप्रसिद्ध्यर्थम् व्यापकताघटकाभावे प्रतियोगिवैयधिकरण्यस्यावश्यनिवेशनीयतया साध्यवन्निष्ठप्रतियोगिसमानाधिकरणाभावप्रतियोगितावच्छेदकस्यापि [3]संयोगत्वादेः साध्यव्यापकतावच्छेदकत्वमक्षतमिति ध्येयम् ।

नानाव्यक्तिसाध्यके तत्तत्साध्यव्यक्त्यभावस्य नानाधिकरणैकव्यक्तिसाध्यके यत्किंचिदधिकरणवृत्तित्वविशिष्टसाध्याभावस्य व्यापकीभूताभावो न हेतुतावच्छेदकावच्छिन्नव्यापकतावच्छेदकरूपावच्छिन्नप्रतियोगिताक इति तादृशसाध्याभावव्यावर्तनाय साध्यतावच्छेदकावच्छिन्नव्यापकतावच्छेदकरूपावच्छिन्नप्रतियोगिताकत्वनिवेशनम् ।

व्यापकता च साध्यतावच्छेदकसंबन्धघटिता[1] । तेन समवायेन द्रव्यत्वादिसाध्यकगुणादिहेतौ विषयतया साध्यव्यापकज्ञा-

[1] नन्वत्र व्याप्यवृत्तित्वं यद्यवच्छिन्नवृत्तिकान्यत्वं तदा संयोगसंबन्धावच्छिन्नसमानाधिकरणधर्मावच्छिन्नप्रतियोगिताकाभावस्यावच्छिन्नवृत्तिकत्वनियमात् तादृशव्यधिकरणधर्मावच्छिन्नाभावमादाय धूमवान् वह्नेरित्यादावतिव्याप्तिः; यदि चानवच्छिन्नवृत्तिकत्वं तदा संयोगी एतत्वाद् इत्यादावव्याप्तिः तदवस्थैव इति चेन्न; यावन्तः साध्याभावाः व्याप्यवृत्तयः तन्निष्ठव्याप्यवृत्तित्वावच्छिन्नव्याप्यतानिरूपितव्यापकत्वस्य विवक्षितत्वात्; व्याप्यवृत्तित्वं चेदानीमनवच्छिन्नवृत्तिकत्वमेवेत्याशयेनाह—व्याप्यवृत्तित्वविशिष्टेति—रा.

[2] अभावस्यैव—अ.

[3] कपिसंयोगत्वादेः—अ.

नादेः साध्यतावच्छेदकसंबन्धावच्छिन्नाभावं प्रति हेतुतावच्छेदकसंबन्धावच्छिन्नहेत्वभावस्याव्यापकत्वेऽपि न क्षतिः ।

साध्याभावश्च साध्यतावच्छेदकसंबन्धावच्छिन्नप्रतियोगिताको ग्राह्यः । तेन संयोगादिना वह्न्यादिसाध्य[1]कधूमादिहेतौ समवायादिसंबन्धावच्छिन्नवह्न्यभावं प्रति संयोगादिना धूमादेरभावस्याव्यापकत्वेऽपि न क्षतिः ।

व्यभिचारिणि समानाधिकरणधर्मावच्छिन्नाभावव्यापकव्यधिकरणहेतुतावच्छेदकाद्यवच्छिन्नप्रतियोगिताकाभावमादायातिप्रसङ्गवारणाय सजातीयत्वोपादानम् । व्यतिरेकिसाध्यकस्थले यावत्साध्याभावसजातीयाप्रसिद्ध्या एकैकतत्सजातीयत्वनिवेशनम् । साजात्यघटकसमानाधिकरणधर्मावच्छिन्नप्रतियोगिताकत्वादिकमनुगतनिरुक्तभेदकूटमेव ग्राह्यम् । अन्यथा यत्र भिन्नभिन्नसंबन्धेन साध्यहेतुभावः, तत्र साध्यतावच्छेदकसंबन्धावच्छिन्नप्रतियोगिताकसाध्याभावस्य यादृशप्रतियोगितानिरूपकत्वं तस्यैव तद्वत्तया सजातीयत्वेन तत्सजातीयाभावनिरूपितहेतुतावच्छेदकसंबन्धावच्छिन्नप्रतियोगित्वाप्रसिद्धेः सजातीयस्यापि साध्यतावच्छेदकसंबन्धावच्छिन्नाभावस्य निवेशे हेतुव्यापकताया अपि तत्संबन्धघटिताया विवक्षणे उक्ताप्रसिद्धिनिबन्धनदोषासंभवेऽपि व्यापकीभूतस्येत्यादेः वैयर्थ्यस्य दुर्वारत्वात् । तत्त्यागे च चरमलक्षण एव पर्यवसानात्[2] ।

[1] घटिता ग्राह्या--अ. न्यायरत्नेऽपि एतत्पाठानुसारेण प्रतीकधारणम् । अपि तु व्यापकता चेत्यत्र चकारो न्यायरत्ने नास्ति--स्व.

[2] अनन्तरं क्वाचित्कपाठः 'अथ सजातीयाभावे हेतुतावच्छेदकसंबन्धावच्छिन्नप्रतियोगिताकत्वस्यानिवेशेऽपि स्वमात्रनिष्ठयथाश्रुतसाजात्यनिवेशपक्षे नातिप्रसंगः;

**व्यभिचारिणि साध्यतावच्छेदकावच्छिन्नसाध्याभावसजातीयहेतुतावच्छेदकावच्छिन्नहेत्वाद्यभावमादायातिप्रसङ्गस्य वारणाय व्यापकीभूतस्येति । [1]व्यभिचारिणोऽभावस्य व्यभिचारनिरूपकाधिकरणे[2] साध्याभावाव्यापकत्वान्न दोषः ।**

कृष्णंभट्टीयम्

कस्यापीति । घटभिन्नत्वेन धूमघटान्यतराभावस्य प्रतियोगितावच्छेदकं वह्नित्वावच्छिन्नव्यापकतावच्छेदकमित्यतिव्याप्तिवारणाय न्यूनवृत्तिभिन्नत्वमतिरिक्तवृत्तिभिन्नत्वं वा अवच्छेदकविशेषणम् । तच्च तत्प्रतियोगितासमानाधिकरणमित्यादि तत्प्रतियोगितानिरूपकाभावस्य निरवच्छिन्नविशेषणतासबन्धगर्भम् । अन्यथा संयोगेन धूमादौ अव्याप्तिः । तत्प्रतियोगितानिरूपकत्वविशिष्टवत्त्वमपि विवक्षितम् । तेन न भाववृत्त्यवच्छेदकस्येत्यग्रिमग्रन्थासङ्गतिः । स्वव्यापकतत्कान्यत्व[3]तत्समानाधिकरणत्वोभयाभावस्य निवेशे तु न काप्यनुपपत्तिः । कपीति । अत्र कपिसंयोगाधिकरणत्वाभावस्य तादृशत्वेऽपि तादात्म्येन हेतावव्याप्तिरिति केचित् । तन्न; व्याप्यवृत्तित्वविशिष्टस्य व्यापकत्वस्य विवक्षणीयतया तस्यातथात्वाद् दर्शितस्थले एवाव्याप्तेर्दुर्वारत्वात् । अप्रसिद्धावपीति । द्वितीयाभावे व्याप्य-

आत्मत्वादिसाध्यके विषयतादिसंबन्धेन हेतौ ज्ञानादौ समवायादिसंबन्धावच्छिन्नज्ञानाद्यभावस्य साध्याभावव्यापकत्वेऽपि यथाश्रुतसाजात्याभावेनातिव्याप्त्यप्रसक्तेः; संयोगादिना वह्न्यादौ साध्ये समवायादिना हेतौ रूपविशेषादिकं प्रति हेतुतावच्छेदकसमवायेन वह्न्याद्यभावप्रतियोगिनः अव्यापकत्वेऽपि न दोषः । साध्यतावच्छेदकसंबन्धेनैव हेतुव्यापकतायाः विवक्षणीयत्वादिति चेत्––तर्हि सजातीयाभावे साध्याभावव्यापकत्वविशेषणवैयर्थ्यमापद्येत, स्वाव्यापकाभावस्य साजात्यविरहेणैव व्यावर्तनात्, ––अ.

1 साध्यव्यभिचारिणो––अ.

2 अधिकरणसाधारणसाध्याभावाव्यापकत्वात्––अ.

3 तत्सामानाधिकरण्योभयाभावनिवेशे––अ.

वृत्तित्वसत्त्वात् तद्विशिष्टसंयोगाभावादेः केवलान्वयित्वं नास्तीत्यप्रसिद्धिरित्यर्थः। केवलसंयोगाभावादौ व्यापकत्वसत्त्वाद् व्याप्यवृत्तीति। अवच्छिन्नवृत्तिकान्यत्वरूपव्याप्यवृत्तित्वप्रवेशे धूमसामान्याभावाद्यसङ्ग्रहः स्यादतोऽनवच्छिन्नवृत्तिकत्वरूपमेव तद्वाच्यम्। तथा चोक्तस्थले तु तदुपादानेऽपि दोषो दुर्वार इत्यत आह––व्याप्यवृत्तित्वेति। व्याप्यवृत्तित्वविशिष्टानां तेषामिति फलितम्। साध्याभावव्यापकताघटकाधिकरणतायां निरवच्छिन्नत्वं निवेश्यमिति निष्कर्षः। एवं च कपिसंयोगाभावादिसाध्यकसद्धेतौ कपिसंयोगादिरूपसाध्याभावसङ्ग्रहवारणाय साध्याभावेऽपि व्याप्यवृत्तित्वमावश्यकमिति बोध्यम्।

ननु साध्याभावे व्याप्यवृत्तित्वं व्यर्थम्; प्रतियोगिवैयधिकरण्याघटितसाध्यव्यापकताया एव लक्षणघटकतया कपिसंयोगाभावव्यावृत्तिसंभवादित्यत आह––साध्यतेति। प्रतियोगितावच्छेदकसंबन्धेन व्यापकताप्रवेशे व्यापकीभूतस्येति व्यर्थं; समानाधिकरणनिवेशेनैवोपपत्तेराह––व्यापकता चेति। इदं तु साध्यतावच्छेदकसंबन्धेन निरुक्तयादृशप्रतियोगितावच्छेदकावच्छिन्नानधिकरणं साध्यवत् तादृशप्रतियोगितानवच्छेदकत्वं प्रतियोगिवैयधिकरण्यघटितसाध्यपकतावच्छेदकत्वं तथा च तादात्म्येन प्रमेयसाध्यकेऽव्याप्तिः तादात्म्यसंबन्धस्य भेदप्रतियोगितावच्छेदकत्वाघटकत्वादतः प्रतियोगिवैयधिकरण्याघटितसाध्यव्यापकताघटितलक्षणान्तरमभिप्रेतमिति। तद्वत्तयेत्यभेदे तृतीया।

भिन्नभिन्नसंबन्धेनेति वह्न्यादेः कालिकसंयोगसंबन्धाभ्यां साध्यसाधनभावे इत्यर्थः। यत्रैकसंबन्धेन विभिन्नरूपेण साध्यहेतुभावः तत्र साध्याभावस्य सजातीयत्वेऽपि न हेतुतावच्छेदकसंबन्धावच्छिन्नतत्प्रतियोगित्वाप्रसिद्धिरिति व्यञ्जितम्। साध्यतेति। साध्यतावच्छेदकसंबन्धावच्छिन्नसाध्याभावनिवेशे तत्सजातीयतया तत्संबन्धावच्छिन्नाभावस्योपादाने इत्यर्थः। तेन वैयर्थ्येन द्वितीयाभावे साध्यतावच्छेदकसंबन्धावच्छिन्नत्वा-

निवेशेऽपि न क्षतिः। तत्संबन्धघटिताया इति। अन्यथा महाकालभिन्नो घटादित्यादौ कालिकसंबन्धेन हेतावव्याप्तेः। व्यापकीभूतस्येति। संयोगावच्छिन्नायोगोलाकावृत्त्यभावसामानाधिकरण्यस्यापि गुणान्तर्भावेन सत्त्वाद् व्यापकत्वपर्यन्तम्।

## गादाधरी

(८२) व्यापकत्वपरिष्कारः।

**व्यापकत्वं च न तत्समानाधिकरणाभावाप्रतियोगित्वम्। सर्वस्यैव तादृशद्वित्वावच्छिन्नाभावप्रतियोगितया असंभवात्। न च तदधिकरणवृत्तित्वं हेतुतावच्छेदकसंबन्धेनावश्यं वाच्यम्, तथा च वह्न्याद्यभाववति धमाद्यभावस्य [1]धूमाद्यात्मकद्वित्वाद्यवच्छिन्नाभावस्य संयोगादिरूपहेतुतावच्छेदकसंबन्धेनावृत्त्या न तमादाय दोषावसर इति वाच्यम्। एवमपि यत्र स्वरूपसंबन्धेन हेतुता तत्र तादृशाभावप्रतियोगितया हेत्वभावस्य व्यापकतानुपपत्तेः दुर्वारत्वात्। नापि तादृशाभावप्रतियोगितानवच्छेदकरूपवत्त्वम् तत्। अभावत्वाद्यात्मकतादृशरूपमादायाभावमात्रस्यैव व्यापकतया व्यापकत्वस्याव्यावर्तकतापत्तेः। एवं वह्न्याद्यभाववति धूमावयवादौ समवायादिना वर्तमानधूमादिरूपमभावमादाय व्यापकताभङ्गभिया हेतुतावच्छेदकसंबन्धेन सामानाधिकरण्यस्य निवेशनीयतया सत्तावान् जातेरित्यादौ सत्त्वाद्यभाववति सामान्यादौ हेतुतावच्छेदकसंबन्धेन वृत्तेरप्रसिद्ध्या अव्याप्तिश्च इति तद्वन्निष्ठान्योन्याभावप्रतियोगितानवच्छेदकत्वमेव साध्याभावव्यापकत्वम्। निर्धूमो वह्निशून्यत्वादित्यादौ हेत्वभावस्य वह्न्यादेः प्रत्येकं**

[1] धूमाद्यात्मकाभावस्य द्वित्वाद्यवच्छिन्नाभावस्य—रा.

धूमादिमन्निष्ठभेदप्रतियोगितावच्छेदकत्वेऽपि अखण्डस्य निर्धूमत्व-प्रकारकप्रमाविषमत्वाद्यभावस्य तादृशव्यापकतासंभवात्, तत्प्रति-योगितावच्छेदकावच्छिन्नस्य हेतुव्यापकतयैव लक्षणसमन्वयः। तद्वन्निष्ठत्वं दैशिकविशेषणतया ग्राह्यम्। अतो वह्न्याद्यभाववति धूमाद्यभाववद्भेदस्य कालिकादिसंबन्धेन वृत्तावपि न क्षतिः। अभावाभावस्य प्रतियोगिरूपत्वेऽपि अभाववद्भेदोऽतिरिक्त एव। अतो धूमाद्यभाववति अयोगोलकादौ दैशिकविशेषणतया वह्न्या-द्यभाववद्भेदस्य वृत्तिरव्याहतैवेति न वह्न्याद्यभावस्य धूमाद्य-भावव्यापकतापत्तिः।

अथवा [1]यदीयदैशिकविशेषणतासंबन्धसामान्ये तत्तत्साध्या-भाववद्वर्तिकिचिद्व्यक्त्यनुयोगिकत्वाभावः तदन्यत्वमेव तदभाव-व्यापकत्वम्।

अभावस्येति भावभिन्नस्येत्यर्थकम्। तेन धूमवान् जल-त्वाभावादित्यादौ जलत्वादिनिरूपितदैशिकविशेषणताया अप्र-सिद्ध्या तत्र निरुक्तभेदकूटात्मकव्यापकतासत्त्वेऽपि नातिव्याप्तिः। अभावरूपसद्धेतौ हेतुमत्त्वप्रकारकप्रमाविषयत्वाद्यभावप्रतियोगि-तावच्छेदकावच्छिन्नव्यापकतामादायैव लक्षणसमन्वयः।

## कृष्णंभट्टीयम्

अव्यावर्तकतापत्तेः। व्यभिचार्यवारकतापत्तेः। यद्धर्मावच्छिन्नव्याप-कतावच्छेदकरूपावच्छिन्नाभावत्वं तादृशाभावप्रतियोगितानवच्छेदकं तद्धर्म-

[1] यदभावीय--अ.

वत्त्वोक्तौ त्वाह––एवमिति । अभाववद्भेदस्यातिरिक्तत्वप्रसाधनानपेक्ष-व्यापकत्वमाह––अथवेति ।

**न्यायरत्नम्**

**हेतुतावच्छेदकसंबन्धानुयोगितानिवेशे तत्संबन्धनिवेशाद् गौरवमतो अनुयोगितेति । दीधित्यनुसारेणाह––अथवेति ।**

**[1]विशेषणविशेष्यसंबन्धस्य । गुणकर्मान्यत्वसामानाधिकरण्यस्य । [2]परंपरासंबन्धेन । स्वाश्रयाश्रयत्वसंबन्धेन । यदि च सत्तादेरेवेति । हेतुतावच्छेदके वृत्तितावच्छेदकत्वाभावनिवेशे विशिष्टहेतुतावच्छेदकस्थलेऽव्याप्तिरतोऽधिकरणताघटितपरिष्कारानुधावनम् ।**

**[3]व्यापकता च साध्यतावच्छेदकसंबन्धघटिता ग्राह्येति । अत्र यद्यपि प्रतियोगितावच्छेदकसंबन्धघटितव्यापकत्वनिवेशसंभवस्तथापि साध्याभावव्यापकत्वविशेषणवैयर्थ्यापत्तेः तदुपेक्षा । तदनिवेशे साध्याभावसामानाधिकरण्यमात्रनिवेशे धूमाभावसमानाधिकरणवह्न्यभावमादाय धूमवान् वह्नेरित्यादावतिप्रसंगो वाच्यः स च न संभवति । प्रतियोगितावच्छेदकसंबन्धेन व्यापकत्वकल्पेऽयोगोलकान्यत्वाभावस्यापि लक्षणघटकत्वात् । साध्यतावच्छेदकसंबन्धेन तन्निवेशे च तस्यातथात्वाद् अयोगोलकावृत्तेरभावस्य लक्षणघटकत्वेऽपि संयोगसंबन्धावच्छिन्नप्रतियोगिताकतादृशाभावस्य गुणादावपि सत्वात् तदन्तर्भावेनैव वह्न्यभावस्य धूमाभावसामानाधिकरण्यं संभवतीति ध्येयम् ।**

[1] विशेष्यविशेषणसंबन्धस्य इत्यपि पाठः गादाधर्याम्––स्व.

[2] परंपरया इत्येव गादाधर्यां पाठो दृश्यते––स्व.

[3] व्यापकता साध्यतावच्छेदकसंबन्धघटिता इत्यपि पाठान्तरं वर्तते । कृष्णंभट्टीयेऽपि व्यापकता चेति प्रतीकधारणम्––स्व.

[1]अनवच्छिन्नदैशिकविशेषणतासंबन्धेन व्यापकत्वलाभायैवेति । इदमत्र चिन्त्यम्—एवं सति द्रव्यत्वादौ साध्ये प्रमेयमित्याकारकजन्यज्ञानस्य हेतुतायां तादृशहेत्वभावस्य व्यापकतापत्तिः । तदीयनिरवच्छिन्नदैशिकविशेषणताया अप्रसिद्ध्या यत्पदेन तस्योपादानासंभवात् । निरवच्छिन्नदैशिकविशेषणतासंबन्धसामान्ये यत्प्रतियोगिकत्वसाध्याभाववद्यत्किंचिद्व्यक्त्यनुयोगिकत्वोभयाभावः तदन्यत्वमेव निरवच्छिन्नदैशिकविशेषणतासंबन्धेन साध्याभावव्यापकत्वमिति विवक्षणावश्यकतया अभावस्येति भावभिन्नस्येत्यर्थकमित्यनेन विवक्षितं भावभिन्नत्वं व्यर्थम् । न च यदीयदैशिकविशेषणतासंबन्धसामान्ये निरवच्छिन्नत्वसाध्याभाववद्यत्किंचिद्व्यक्त्यनुयोगिकत्वोभयाभावः तदन्यत्वरूपमेव निरवच्छिन्नदैशिकविशेषणतासंबन्धेन व्यापकत्वं विषयितया प्रमेयमित्याकारकजन्यज्ञानाभावस्य व्यापकत्ववारणाय विवक्षणीयं, तथा च तत्सार्थक्यमिति शङ्क्यम् । निरवच्छिन्नदैशिकविशेषणतासंबन्धसामान्ये उक्तोभयाद्यघटितव्यापकत्वविवक्षयैव स्वरसतः भावाभावसाधारणानुयोगिताविशेषरूपाभावत्वनिवेशपरस्य व्यापकीभूताभावस्येति मूलस्य संगमने दैशिकविशेषणतासंबन्धसामान्ये उक्तोभयाभावघटितव्यापकत्वविवक्षया तादृशमूलस्यास्वारसिकभावभिन्नत्वनिवेशपरत्वेन संगमनस्य प्रक्षालनाद्धीति न्यायेनानुचितत्वात् । यदि भावभिन्नत्वविशेषणं मूलोक्तं स्यादभावे तदोक्तरीत्या तदभिप्रायवर्णनं न तूक्तम् । अन्यलक्षणेष्विव भावाभावसाधारणाभावत्वनिवेश एवाभावस्येति मूलोक्तेः स्वारस्यादिति । क्रियामात्रस्यैव कालोपाधित्वमते धूमवान् वह्नेरित्यादावतिव्याप्त्यभावात् महाकालभिन्नः कालत्वादिति ।

## गादाधरी

(८३) व्याप्यवृत्तित्वस्य प्रयोजनं परिष्कारश्च ।

[1] अनवच्छिन्नविशेषणतासंबन्धेन व्यापकतानिवेशलाभायैवेति गादाधर्यां पाठः —स्व.

धूमवान् वह्नेरित्यादौ अयोगोलकादावपि उत्पत्तिकालावच्छेदेन वर्तमानस्य वह्न्याद्यभावस्य निरुक्तव्यापकतासत्त्वादतिव्याप्तिः, अतो व्याप्यवृत्तेरिति । यद्यपि तादृशाभावा अपि ह्रदादौ व्याप्यवृत्तयः, तथापि व्याप्यवृत्तित्वविशिष्टस्य व्यापकत्वं विवक्षणीयम्[1] । अनवच्छिन्नविशेषणतासंबन्धेन[2] व्यापकतानिवेशलाभा[3]यैव तदुक्तम् । अवच्छिन्नवृत्तिकान्यत्वरूपं व्याप्यवृत्तित्वं तु न शक्यते निवेशयितुम् । संयोगेन सद्धेतौ हेतुतावच्छेदकसंबन्धावच्छिन्नहेत्वभावस्यातथात्वात् ।

प्रतियोगितावच्छेदकेत्यत्र प्रतियोगिता हेतुतावच्छेदकसंबन्धावच्छिन्ना ग्राह्या, अन्यथा व्यधिकरणसंबन्धावच्छिन्नप्रतियोगिताकहेत्वभावस्य साध्याभावव्यापकस्य समनियताभावैक्यमते व्यधिकरणधर्मावच्छिन्नप्रतियोगिताकाभावरूपतया समानाधिकरणधर्मावच्छिन्नसाध्याभावसजातीयत्वेन तमादायातिव्याप्तिविरहेऽपि आत्मत्वादिसाध्यके विषयतया हेतौ ज्ञानादौ साध्याभावव्यापकसमवायसंबन्धावच्छिन्नज्ञानाद्यभावमादायातिव्याप्तेः । अभावे हेतुतावच्छेदकसंबन्धावच्छिन्नप्रतियोगिताकत्वविशेषणं प्रवेश्य च नातिप्रसङ्गवारणसंभवः । समनियताभावैक्ये समवाय-

[1] तथा च यदभावीयविशेषणतासामान्य इत्यत्र निरवच्छिन्नवृत्तित्वविशिष्टयदभावत्वावच्छिन्ननिरूपितविशेषणतासामान्य इति वक्तव्यमित्यर्थः; लाघवादाह—अनवच्छिन्नेति—रा.

[2] तथा च यदभावीयविशेषणतासामान्य इत्यत्र यदभावीयनिरवच्छिन्नविशेषणतासामान्य इति वक्तव्यमित्यर्थः; नातो विशेषत्वेन रूपेण संसर्गत्वशङ्का —रा.

[3] न्यायरत्नपर्यालोचनायाम् अनवच्छिन्नदैशिकविशेषणतासंबन्धेन व्यापकत्वलाभायैवेति पाठान्तरं वर्तते इति ज्ञायते—स्व.

संबन्धावच्छिन्नज्ञानाद्यभावस्यापि स्वसमवायिविषयकत्वसंबन्धेन ज्ञानादिविशिष्टज्ञानादेः विषयतासंबन्धावच्छिन्नाभावसमनियतत्वेन तादृशसंबन्धावच्छिन्नप्रतियोगिताकत्वात् ।

धूमाद्यभावव्यापकमहानसीयवह्न्यभावप्रतियोगिनो वह्नित्वादिना वह्नित्वाद्यवच्छिन्नव्यापकत्वादतिप्रसङ्ग इति प्रतियोगिनो व्यापकतामुपेक्ष्य प्रतियोगितावच्छेदकस्य तदवच्छेदकत्वपर्यन्तानुधावनम् । द्रव्यं विशिष्टसत्त्वादित्यादौ साध्याभावव्यापकाभावप्रतियोगितावच्छेदकविशिष्टसत्त्वादेर्हेतुतावच्छेदकोपलक्षितहेतुव्यापकतावच्छेदकत्वासंभवाद् यं प्रतीत्यनुक्त्वा यद्रूपावच्छिन्नं प्रतीत्युक्तम् ।

व्यापकता च हेतुतावच्छेदकसंबन्धेन ग्राह्या । अतो महाकालभिन्नः कालत्वादित्यादौ साध्याभावव्यापकाभावप्रतियोगितावच्छेदकस्य साध्यतावच्छेदकादेः कालिकादिसंबन्धेन हेतुव्यापकतायामवच्छेदकत्वेऽपि नातिप्रसङ्गः । व्याप[1]कतावच्छेदकताघटकसंबन्धभेदनिवेशनादिकं स्वयमूह्यम् ।

न च धूमवान् वह्निमत्त्वप्रकारकप्रमाविषयत्वादित्यादावतिव्याप्तिः, धूमाद्यभावव्यापकधूमाद्यभावस्य प्रतियोगितावच्छेदकजलादिवृत्तित्वविशिष्टधूमाभावाभावत्वादेः हेतुतावच्छेदकस्वरूपसंबन्धघटितहेतुव्यापकतावच्छेदकत्वादिति वाच्यम् । भाववृत्तिप्रतियोगितावच्छेदकस्याव्यापकतावच्छेदकताया विवक्षणीयत्वात् ।

[1] व्यापकताघटक—अ.

## कृष्णंभट्टीयम्

ननु व्याप्यवृत्तित्वावच्छेदेन [1]व्यापकत्वान्वयः स्यात्, उद्देश्यतावच्छेदकावच्छेदेन विधेयान्वयात्। स चायुक्तः विशेष्यवृत्तेरिति न्यायादित्यत आह—अनवच्छिन्नेति। निरवच्छिन्नविशेषणतासंबन्धावच्छिन्नतद्वन्निष्ठभेदप्रतियोगितावच्छेदकतायाः यदीयनिरवच्छिन्नविशेषणतायाश्च प्रवेशार्थम्। स्वसमवायीति। घटावच्छेदेन तदात्मनि ज्ञानाभाववद् अव्याप्यवृत्तिज्ञानप्रतियोगितावच्छेदकाभावोऽपीति न समनैयत्यभङ्गः।

पर्यन्तेति। वह्निजलोभयाभाववारणाय प्रतियोगितायाः तदवच्छेदकत्वं नोक्तम्। स्वयमिति। ज्ञानवान् द्रव्यत्वादित्यादौ विषयितया द्रव्यत्वत्ववज्ज्ञानाभावमादायातिव्याप्तिवारणाय हेतुतावच्छेदकताघटकसंबन्धेन प्रतियोगितावच्छेदकत्वम्। धूमवान् वह्नेरित्यादौ साध्याभावव्यापकसाध्याभावप्रतियोगितावच्छेदकस्य कालिकसंबन्धावच्छिन्नहेतुव्यापकतावच्छेदकत्वादतिव्याप्तिरतः हेतुतावच्छेदकताघटकसंबन्धेन हेतुव्यापकतावच्छेदकत्वं प्रवेश्यम्। एकसंबन्धेन तदुभयं वा सम्यक्। आदिना यद्रूपवत्त्वं हेतुतावच्छेदकताघटकसंबन्धेन [2]तद्रूपावच्छिन्नत्वं च हेतुतावच्छेदकसंबन्धेनेत्यस्य परिग्रहः। प्रयोजनं स्फुटम्।

## न्यायरत्नम्

**स्वयमूह्यमिति। ज्ञानवान् द्रव्यत्वादित्यादौ विषयितया द्रव्यत्वत्ववज्ज्ञानाभावस्य साध्याभावव्यापकतया तमादायातिव्याप्तेर्वारणाय प्रतियोगितावच्छेदकतायां हेतुतावच्छेदकघटकसंबन्धावच्छिन्नत्वम् अयमात्मा ज्ञानाद् इत्यादौ विषयतया हेतौ साध्याभावव्यापकात्मत्वाभावप्रतियोगितावच्छेदकात्मत्वत्वस्य विषयतासंबन्धेन हेतुव्यापकतावच्छेदकत्वादति-**

[1] व्यापकतान्वयः—अ.

[2] तद्रूपावच्छिन्नवत्त्वम्—अ.

व्याप्तेर्वारणाय व्यापकगतावच्छेदकतायां हेतुतावच्छेदकताघटकसंबन्धावच्छिन्नत्वं निवेशनीयम्। एवं यद्रूपवत्वं हेतुतावच्छेदकताघटकसंबन्धेन यद्रूपावच्छिन्नवत्वं हेतुतावच्छेदकसंबन्धेन निवेशनीयम्, तत्प्रयोजनं स्फुटमेवेत्येवमित्यर्थः।

## गादाधरी

(८४) यथाश्रुतमिश्रलक्षणदूषणम्।

यथाश्रुतमिश्रलक्षणमुपन्यस्य दूषयति—साधनस्येति। तादृशेति। ये ये साध्याभावाः प्रसिद्धाः तत्तत्सजातीयतत्तद्व्यापकेत्यर्थः। तदवच्छेदकत्वम्—[1]तादृशप्रतियोगितावच्छेदकत्वम्। आद्ये द्रव्यं सत्त्वादित्यादाविति। द्वितीये ज्ञेयं प्रमेयादित्यादाविति। ननु प्रमेयत्वादेः केवलान्वयितावच्छेदकत्वेऽपि वाच्यत्वत्वादेरिव साध्याभावव्यापकव्यधिकरणधर्मावच्छिन्नाभावप्रतियोगितावच्छेदकत्वमक्षतमेवेत्याशङ्कां निरस्यति—प्रमेयत्वव्यधिकरणेति। प्रमेयत्वस्य केवलान्वयित्वादिति भावः। धूमाद्यभावं प्रति विषयितादिसंबन्धेन वह्नित्वाद्यवच्छिन्नस्य योऽभावः तस्य व्यापकत्वात् तमादाय समवायेनात्मत्वे साध्ये समवायेन द्रव्यत्वे हेतौ आत्मत्वाभावं प्रति विषयितासंबन्धेन द्रव्यत्वत्ववज्ज्ञानस्य यः समवायसंबन्धावच्छिन्नप्रतियोगिताकोऽभावस्तस्य व्यापकत्वात् तमादायातिप्रसङ्गस्य वारणाय च प्रतियोगितावच्छेदकतायां हेतुतावच्छेदकताघटकसंबन्धावच्छिन्नत्वस्यावश्यं निवेशनीयतया व्यधिकरणसमवायादिसंबन्धेन प्रमेयत्वस्याभावप्रतियोगितायामसमानाधिकरणतया अवच्छेदकत्वसंभवेऽपि न निस्तार इत्यवधेयम्। अन्यो-

[1] तादृशाभावप्रतियोगितावच्छेदकत्वम्—अ.

**न्याभाव एव व्यधिकरणधर्मावच्छिन्नावच्छेदकताकप्रतियोगिताको न तु अत्यन्ताभाव इत्याशयेनेदम्; अन्यथा घटत्वावच्छिन्नप्रमेयत्वावच्छिन्नप्रतियोगिताकात्यन्ताभावमादाय लक्षणगमनसंभवात्[1]। एतदुपलक्षणम्; गुरुधर्मस्य प्रतियोगितानवच्छेदकत्वे [2]कम्बुग्रीवादिमत्त्वाद्यवच्छिन्नहेतुकाव्याप्तिरिति द्रष्टव्या ।**

**एतेन व्यापकीभूताभावप्रतियोगितायां हेतुतावच्छेदकानवच्छिन्नत्वव्यधिकरणधर्मानवच्छिन्नत्वोभयाभावविवक्षणे प्रमेयहेतुकस्थले वाच्यत्वत्वादिना घटाद्यभावप्रतियोगितायां तादृशोभयाभावसत्त्वेन लक्षणसमन्वयेऽपि न निस्तारः। उक्तस्थले हेतुतावच्छेदकावच्छिन्नत्वाप्रसिद्ध्या अप्रतीकारात् ।**

कृष्णंभट्टीयम्

प्रतियोगितायां हेतुतावच्छेदकसंबन्धावच्छिन्नत्वस्य निवेशितत्वाद् उक्तवह्नित्ववज्ज्ञानाभावस्य व्यधिकरणधर्मावच्छिन्नाभावत्वादाह—आत्मत्वे इति। प्रमेयत्वेन घटपटोभयभेदस्तु वह्नित्वेन तार्णातार्णोभयाभावानङ्गीकर्तृभिः दुरङ्गीकारः। व्यधिकरणेति। वह्निसामान्याभावमादाय धूमवान् द्रव्यत्वादित्यादावतिव्याप्त्यभावाद् अवच्छेदकतावच्छेदेन अतिव्याप्तिलाभायेदम् ।

[1] साध्याभावव्यापकतत्सजातीयाभावप्रतियोगितायां यद्रूपानवच्छिन्नत्वसमानाधिकरणधर्मावच्छिन्नत्वोभयाभावः तद्रूपवत्त्वं व्याप्तिरिति विवक्षणेन एतद्दोषोद्धारेऽपि ——अनन्तरमधिकपाठः——अ.

[2] कम्बुग्रीवादिमत्त्वं च घटत्वव्यञ्जकसंस्थानविशेषः घटत्वापेक्षया तस्य गौरवं, संस्थानस्य विजातीयावयवसंयोगरूपस्यानन्तत्वात्, अनुगमकजातिविशेषसापेक्षत्वाच्च । घटत्वस्य चैकस्य जातिरूपस्य निर्विशेषणकस्यावच्छेदकत्वे लाघवात् । 'संभवति लघौ धर्मे गुरौ तदभावात्' इति नियमेन गुरुधर्मस्य नाभावप्रतियोगितावच्छेदकत्वमिति तद्धर्मावच्छिन्नहेतुकस्थलेऽव्याप्तिः——स्व.

## गादाधरी

(८५) मिश्रोक्ततृतीयलक्षणपरिष्कारः ।

उक्तलक्षणे सजातीयादिपरित्यागेन लघुलक्षणमाह—यद्वेति । व्यभिचारिणि व्यधिकरणधर्मावच्छिन्नाभावादिकमादायातिव्याप्तेर्वारणाय यावन्त इति । वह्निमान् धूमाद् इत्यादौ महानसीयवह्नित्वाद्यवच्छिन्नाभावप्रतियोगितावच्छेदकस्य धूमत्वाद्यवच्छिन्नव्यापकतानवच्छेदकतया अव्याप्तिरिति तादृश इति । साध्यतावच्छेदकावच्छिन्नव्यापकतावच्छेकदरूपावच्छिन्नप्रतियोगिताका इत्यर्थः ।

अत्र व्याप्यवृत्तित्वविशेषणं प्रयोजनाभावादनुपादेयम् । साध्याभावसजातीयत्वादिविशेषणावच्छिन्नस्यापि अभावान्तरस्य प्रक्रान्तत्वात् तादृशपदे तत्परत्वभ्रमस्य [1]झटिति निरासाय अभावा इत्येतन्मात्रमनभिधाय साध्याभावा इत्युक्तम् । यावत्साध्याभावनिरूपिता न काचिदपि प्रतियोगितेति प्रत्येकपदम् ।

अत्र च व्यभिचारिणं प्रत्यपि यत्किंचित्संबन्धेन साध्यतावच्छेदकावच्छिन्नस्य व्यापकतया अतिप्रसङ्गस्य वारणाय प्रतियोगितावच्छेदकसंबन्धेनैव व्यापकता निवेशनीया । [[2]इत्थं च समवायसंबन्धावच्छिन्नवह्न्यभावप्रतियोगितावच्छेदकसमवायादिसंबन्धेन वह्नित्वाद्यवच्छिन्नस्य धूमाद्यव्यापकत्वादसंभव इति प्रतियोगितावच्छेदकसंबन्धेनैव साध्यव्यापकता विवक्षणीया]

[1] स्फुटं—अ.

[2] [ ] एतच्छिह्नान्तर्गतपाठः क्वचिन्नास्ति ।

तथा च केवलान्वयिसाध्यकस्थले व्यधिकरणसंबन्धावच्छिन्न-साध्याभावमादाय निर्वाहो न भवतीति व्यधिकरणधर्मावच्छिन्ना-भावस्योपयोगिता बोध्या ।

धूमवान् वह्नेरित्यादौ धूमाद्यभावप्रतियोगितावच्छेद-कजलादिवृत्तित्वविशिष्टधूमाद्यभावाभावत्वेन वह्न्यादिव्यापक-त्वेऽपि नातिव्याप्तिः। साध्यतावच्छेदकावच्छिन्ननिरूपितस्वा-वच्छेदकसंबन्धघटितव्यापकतावच्छेदकावच्छिन्ना यावत्यः प्रति-योगिताः प्रत्येकं तदवच्छेदकरूपेण तदवच्छेदकसंबन्धेन यद्रूपा-वच्छिन्नं प्रति व्यापकत्वमित्येतादृशार्थस्यैव विवक्षणीयत्वात् । साध्यव्यापकतावच्छेदकं यद्यद्रूपं तेन व्यापकत्वविवक्षणे व्यधि-करणधर्मावच्छिन्नाभावोपयोगिता न घटत इति साध्यव्यापकता-वच्छेदकावच्छिन्नप्रतियोगितावच्छेदकत्वेन व्यापकतावच्छेदक-त्वनिवेशः। यथासन्निवेशे न वैयर्थ्यम् । प्रतियोगितायाः स्वरूप-सम्बन्धरूपत्वे वह्नित्वाद्यवच्छिन्नप्रतियोगिताया वह्न्यादिव्यक्ति-भेदेन भिन्नाया धूमत्वाद्यवच्छिन्नव्यापकतावच्छेदकत्वं न सम्भवतीति व्यापकतावच्छेदकावच्छिन्नप्रतियोगितायां व्यापकता-वच्छेदकत्वं न निवेशितमिति ।।

कृष्णंभट्टीयम्

प्रयोजनाभावादिति। ननु कपिसंयोगाभाववान् मेयत्वादित्यादौ कपिसंयोगात्मकाभावप्रतियोगितावच्छेदकस्य [1]हेतुव्यापकतावच्छेदकतासं-पत्तये हेतुव्यापकत्वं प्रतियोगिवैयधिकरण्यघटितमेव निवेश्यम् । [[2]एवं

[1] हेतुव्यापकतावच्छेदकत्वसंपत्तये--अ.

[2] [ ] एतदन्तर्गपाठो नास्ति--अ.

कपिसंयोग्येतत्त्वादित्यादौ साध्यतावच्छेदकस्य साध्यव्यापकतावच्छेदकस्य साध्यव्यापकतावच्छेदकत्वनिर्वाहाय साध्यव्यापकत्वमपि तथैव निवेश्यम्] [1]एवं व्यधिकरणधर्मावच्छिन्नाभावानुपगमेऽपि पूर्वक्षणवृत्तित्वविशिष्टवाच्यत्वाद्यभावमादायैव लक्षणसङ्गतेः हेतुव्यापकत्वे प्रतियोगिवैयधिकरण्यानिवेशलाघवाद् अवच्छिन्नवृत्तिकान्यत्वरूपव्याप्यवृत्तित्वमावश्यकमिति चेत्, न । एतल्लक्षणे प्रतियोगितावच्छेदकसंबन्धेन व्यापकतयोः निवेशनीयतया प्रतियोगिवैयधिकरण्ययोः न निवेशः । न चैवं व्यधिकरणधर्मावच्छिन्नाभावस्य व्यापकताघटकतानिबन्धदोष इति वाच्यम् । सामानाधिकरण्ये-[2]नावच्छेदकताविवक्षणात् तदपि प्रतियोगिविशेषण[3]वृत्तित्वलक्षणावच्छेदकत्वमेव । तेन वह्नित्वेन महानसीयवह्निघटान्यतराभावमादाय न दोषः । झटितीति । पौनरुक्त्योन्नीतबाधग्रहं विनेत्यर्थः ।

ननु साध्यतावच्छेदकसंबन्धेन प्रतियोगिवैयधिकरण्यघटितव्यापकतयोः प्राग्वत् प्रवेशे प्रतियोग्यवृत्तिश्चेति ग्रन्थानवतारापत्तिरित्यत आह––अत्र चेति। व्यापकतावच्छेदकावच्छिन्नप्रतियोगितायां व्यभिचारिणि दोषवारणाय यावत्त्वं देयम् एवं च साध्यनिष्ठत्वमपि तत्र । तेन वह्नित्वेन घटाभावमादाय न दोषः । तच्च साध्यतावच्छेदकव्यापकत्वम् । तेन वह्नित्वेन तद्वह्निघटान्यतराभावमादाय न दोषः । इदं वाच्यं ज्ञेयत्वादित्यादौ समवायाद्यवच्छिन्नवाच्यत्वनिष्ठप्रतियोगितायाः स्वावच्छेदकसंबन्धेन साध्यव्यापकत्वाप्रसिद्ध्या लक्षणाघटकत्वेऽपि स्वरूपसंबन्धावच्छिनज्ञेयत्वत्वावच्छिन्नवाच्यत्वनिष्ठप्रतियोगिताया लक्षणघटकतया अवतारकत्वनिर्वाहः ।

## न्यायरत्नम्

**हेतुतावच्छेदकावच्छिन्नत्वाप्रसिद्ध्येति । विषयितासंबन्धस्याभावप्रतियोगितानवच्छेदकत्वाभिप्रायेणेदम् । अन्यथा विषयितासंबन्धावच्छिन्न-**

[1] एवं च––अ. [2] अवच्छेदकतायाः––अ.

[3] वृत्तिविलक्षणावच्छेदकत्वमेव––अ.

प्रतियोगितायां तदवच्छिन्नत्वसत्वादप्रसिद्ध्यचेत्यसंगतं स्यात् । विषयितासंबन्धस्याभावप्रतियोगितावच्छेदकत्वे तु व्यापकीभूताभावप्रतियोगितायामुभयसत्वेन गुरुधर्मावच्छिन्नहेतुकस्थलेऽव्याप्तिर्द्रष्टव्या ।

अप्रतीकारादिति । ननु हेतुतावच्छेदकानवच्छिन्नत्वमित्यनेन हेतुतावच्छेदकव्यापकधर्मानवच्छिन्नत्वनिवेशेन कम्बुग्रीवादिमत्त्वावच्छिन्नहेतुकाव्याप्तिप्रतीकारः संभवतीति चेत्, न । तथा सति द्रव्यं सत्त्वाद् इत्यादौ अतिव्याप्तेः । द्रव्यत्वाभावव्यापकविशिष्टसत्ताभावप्रतियोगितायां सत्तात्वव्यापकविशिष्टसत्तात्वावच्छिन्नत्वेनोभयाभावसत्त्वात् । यदि च हेतुतावच्छेदकावच्छिन्नव्यापकतावच्छेदकरूपावच्छिन्नत्वमेव निवेश्यम्; विशिष्टसत्तात्वस्य सत्तात्वावच्छिन्नव्यापकतावच्छेदकत्वाभावात् नातिव्याप्तिरित्युच्यते; तदा सिद्धान्त एव पर्यावसानमिति ध्येयम् ।

इति चतुर्दशलक्षण्यां मिश्रलक्षणम् ।

———

## कूटाघटितलक्षणम्

### दीधितिः

परे तु वृत्तिमद्वृत्तयो यावन्तः साध्याभाववद्वृत्तित्वाभावाः तद्वत्त्वं व्याप्तिः ।

येन संबन्धेन हेतुता तेनैव संबन्धेन वृत्तिमत्त्वं बोध्यम् । तेन व्यधिकरणधर्मावच्छिन्नाभाववति संयोगेन या वृत्तिस्तदभावस्य जात्यादौ वर्तमानस्य धूमादावसत्त्वेपि न क्षतिः ।

साध्याभावश्च पूर्ववद् बोध्यः ।

तद्वद्वृतित्वाभावोऽपि स्वव्यापकतत्तत्साध्याभाववद्वृत्तित्वत्वव्यापकप्रतियोगिताकः तत्तत्साध्याभाववद्वृत्तित्वत्वातिरिक्तेन समानाधिकरणेन साध्याभाववद्वृत्तित्ववृत्तिना वा धर्मेणानवच्छिन्नप्रतियोगिताको बोध्यः। तेनालोकावृत्तित्वेन रूपेण यो वह्निसामान्याभाववद्वृत्तित्वस्य यश्चेन्धनत्वाद्यवच्छिन्नवह्न्यभावाधिकरणीभूतमहानसवृत्तित्वादेरभावः तस्य धूमादौ स्वनिष्ठसाध्याभाववद्वृत्तित्वविरहस्य च हेत्वन्तरवृत्तेः स्वस्मिन् अवृत्तित्वेऽपि न क्षतिरित्याहुः ।

## गादाधरी

(८६) कूटाघटितलक्षणावतारणम् ।

कूटघटितलक्षणे व्यभिचारिणि साध्याभाववद्वृत्तित्वत्वव्यापकप्रतियोगिताको न निर्धूमवृत्तित्वत्वाद्यवच्छिन्नाऽभावः, अपि तु जगद्वृत्तित्वसामान्याभाव एव, स च व्यधिकरणधर्मावच्छिन्नप्रतियोगिताक एव वृत्तिमद्वृत्तिरिति अतिव्याप्तिवारणाय कूटपदमुपात्तम् । [1]तादृशातिव्याप्तिः समानाधिकरणव्यधिकरणधर्मावच्छिन्नाभावसाधारणरूपेण साध्याभावस्य व्याप्यतावच्छेदककोटौ [2]प्रवेशने एव प्रसज्यते, न तु विशिष्य [3]साध्याभावनिवेशे, तथा सति निर्धूमवृत्तित्वत्वावच्छिन्नाभावस्यापि लक्षणघटकतानिर्वाहादिति कूटपदमनुपादाय विशिष्य साध्याभावं निवेश्यैव लक्षणमुचितम् । तदुपादाने बहूनां दोषाणां वक्ष्यमाणत्वादिति [4]कूटघटितलक्षणवादिनमाक्षेप्तुं कूटाघटितं लक्षणं दर्शयति—परेत्वित्यादिना ।

(८७) यावत्पदवृत्तिमद्वृत्तित्वपदयोः प्रयोजनम् ।

साध्याभाववद्वृत्तित्वस्य व्यधिकरणधर्मावच्छिन्नाभावमादाय व्यभिचारिमात्रेऽतिव्याप्तिः, अतो यावन्त इति । तथा सति समानाधिकरणधर्मावच्छिन्नसाध्याभाववद्वृत्तित्वस्य समा-

[1] सा चातिव्याप्तिः—अ.

[2] निवेशने—अ.

[3] निवेशने—अ.

[4] कटघटितलक्षणमाक्षिप्तुम्—अ.

**नाधिकरणधर्मावच्छिन्नाभावस्य यावत्तादृशाभावान्तर्गतस्य व्यभिचारिण्यसत्त्वात् नातिव्याप्तिः। वृत्तिमद्वृत्तित्वानुपादाने समानाधिकरणधर्मावच्छिन्नप्रतियोगिताकस्य व्यधिकरणधर्मावच्छिन्नसाध्याभाववत्संयुक्तत्वाद्यभावस्यासंयुक्ताकाशादौ[1] प्रसिद्धस्य हेतावसत्त्वात् संयोगादिसंबन्धेन हेतावव्याप्तिः। यादृशसंबन्धप्रतियोगित्वं वस्तुमात्र एव, [2]तादात्म्यविषयतादिरूपतादृशसंबन्धेन हेतावेव परं लक्षणसमन्वयो भवति। तादृशसंबन्धेन [3]जगत्संबद्धत्वस्य समानाधिकरणधर्मावच्छिन्नाभावस्याप्रसिद्धिरिति तदुपादानम्।**

कृष्णंभट्टीयम्

दीधितिकारेण हेतुतावच्छेदकसंबन्धेन वृत्तिमद्वृत्तीत्यत्र हेतुतावच्छेदकसंबन्धनिवेशप्रयोजनमात्रं दर्शितम्। न तु विशिष्य वृत्तिमद्वृत्तित्वस्येति स्वयं तस्य व्यावृत्तिमाह--वृत्तिमदिति। [4]असंयुक्तादाविति। आदिना अवृत्तिपरिग्रहः। असंयुक्तपदं चासंयुक्तवृत्तिमत्परम्। तेन न आदिपदवैयर्थ्यम्। गगनादेः संयोगोपगमेऽपि तत्प्रतियोगितानुपगमात् न आदिपदासङ्गतिः। एवं च वृत्तिमत्त्वमुपादाय संबन्धनिवेशव्यावृत्तः नासङ्गतिः। विषयतादीत्यादिना कालिकसंबन्धेन गगनादेः वृत्तित्वमते तत्परिग्रहः। जगत्संबद्धत्वस्येति। स्वयं वृत्तित्वमित्यस्य संबद्धत्वमित्यर्थस्य कृतत्वात् तदनुरोधेनेयमुक्तिः।

1 असंयुक्तादाविति कृष्णंभट्टीय प्रतीकधारणम्।

2 ज्ञेयं घटादित्यत्र यदा घटः पक्षः तदा तादात्म्येन हेतुः, यदा ज्ञानं तदा विषयितया हेतुः, विषयितासंबन्धावच्छिन्नवृत्तित्वस्य तन्निरूपकविषयतारूपतया केवलान्वयित्वात्--रा.

3 जगत्संबद्धस्येति न्यायरत्ने प्रतीकधारणम्; कृष्णंभट्टीये तु जगत्संबद्धत्वस्येति--स्व.

4 असंयुक्ताकाशादाविति गादाधर्यां पाठः--अ.

### न्यायरत्नम्

वृत्तिमद्वृत्तय इत्यत्र हेतुतावच्छेदकसंबन्धेन वृत्तित्वनिवेशमात्रस्य प्रयोजनं दीधितिकृता दर्शितं न तु वृत्तिमद्वृत्तित्वविशेषणस्येत्यतः स्वयं तत्प्रयोजनं दर्शयति––वृत्तिमद्वृत्तित्वानुपादान इति ।

[1]जगत्संबद्धस्येति । स्वयं वृत्तिपदस्य संबद्धत्वमित्यर्थकरणात् तदनुरोधेनेयमुक्तिः ।

### गादाधरी

(८८) हेतुतावच्छेदकसंबन्धेन वृत्तिमत्त्वनिवेशनम् ।

ननु वृत्तिमद्वृत्तित्वोपादानेऽपि जगत्संयुक्तत्वत्वाद्यवच्छिन्नाभावस्य जात्यादिरूपवृत्तिमति वर्तमानस्य वारणासंभवाद् वह्निमान् धूमादित्यादावव्याप्तिर्दुर्वारैव । निर्धूमसंयुक्तत्वाद्यभावस्य निर्धूमवृत्तित्वत्वाव्यापकप्रतियोगिताकतया वृत्तिमन्मात्रस्यैव विर्धूमकालादिवृत्तित्वेन च निर्धूमवृत्तित्वसामान्याभावस्य व्यधिकरणधर्मावच्छिन्नप्रतियोगिताकस्यैव वृत्तिमद्वृत्तित्वेन धूमवान् वह्नेरित्यादावतिव्याप्तेर्वारणाय हेतुतावच्छेदकसंबन्धेन साध्याभाववद्वृत्तित्वस्यैव निवेशनीयतया संयोगादिना यत्र हेतुत्वं तत्र जगत्संयुक्तत्वत्वाद्यवच्छिन्नाभावस्यापि हेतुतावच्छेदकसंबन्धावच्छिन्नसाध्याभाववद्वृत्तित्वत्वव्यापकप्रतियोगिताकत्वेन लक्षणघटकत्वात् । वृत्तिमत्पदस्य यथाश्रुतार्थकत्वे कालिकसंबन्धेन गगनादेरवृत्तित्वमते तेन संबन्धेन यत्र हेतुता तत्रैव परम् अव्याप्तिवार-

[1] जगत्संबद्धत्वस्येत्येव पाठो दृश्यते गादाधर्याम्; कृष्णंभट्टीयेऽपि जगत्संबद्धत्वस्येति प्रतीकधारणम्––स्व.

**कता, तेन संबन्धेन जगद्वृत्तित्वाभावस्यावृत्तिमात्रे प्रसिद्धत्वादित्यत आह––येन संबन्धेनेति । न क्षतिरिति । नाव्याप्तिरित्यर्थः । न तु नासंभव इति, [1]तादात्म्यकालिकादिसंबन्धेन हेतौ लक्षणसमन्वयसंभवादिति ।**

कृष्णंभट्टीयम्

संबन्धान्तरेण वृत्तिप्रदर्शनाय जातीति । तर्हि वृत्तिमद्वृत्तित्वमेव व्यर्थमित्यत आह––वृत्तिमत्पदस्येति । यथाश्रुतार्थकत्वे । आधेयतावदर्थकत्वे; न संबद्धार्थकत्वे; तथा सति इदं वाच्यं घटादित्यादौ कालिकसंबन्धेन हेतौ कालिकसंबन्धावच्छिन्नसाध्याभाववद्वृत्तित्वाभावस्यासंबद्धे प्रसिद्ध्यसङ्गतेः गगनादेरपि तादात्म्यसंबन्धप्रतियोगित्वात् तादात्म्यविषयितासंबन्धेन हेतौ लक्षणसङ्गतेः वृत्तिमद्वृत्तित्वं विनापि प्रदर्शतत्वात् तत्त्यागः । तादात्म्येति । वाच्यत्वादेः साध्यता, तादात्म्यपदं च विषयित्वोपलक्षणम् । उभयत्रापि जगद्वृत्तित्वसामान्याभावाप्रसिद्ध्या व्यधिकरणधर्मावच्छिन्नजगद्वृत्तित्वाभावमादाय कालिकसंबन्धस्थले तु तादृशाभावप्रसिद्धावपि न तस्य वृत्तिमद्वृत्तित्वमिति उक्ताभावमादाय लक्षणसमन्वयः।

## गादाधरी

(८६) **साध्याभावपरिष्कारः ।**

**ननु नानाव्यक्तिसाध्यके तत्तत्साध्यव्यक्त्यभाववद्वृत्तित्वाभावस्य हेतावसत्त्वादव्याप्तिः । कूटघटितलक्षण इवात्रापि साध्यतावच्छेदकसमनियतप्रतियोगिताकाभावनिवेशेऽपि [2]तार्णा-**

[1] तादात्म्यसंबन्धेन कालिकसंबन्धेन च हेतौ लक्षणगमनसंभवेन असंभवाप्रसक्तेः इति पाठभेदः––अ.

[2] तार्णातार्णदहनोभयाभावमादायेति न्यायरत्ने प्रतीकधारणम्––स्व.

**तार्णदहनोभयत्वावच्छिन्नाभावमादाय वह्न्यादिसाध्यके, [1]गुणादिवृत्तित्वविशिष्टसत्ताद्यभावमादाय च सत्तादिसाध्यकेऽव्याप्तिर्दुर्वारैव। एवमव्याप्यवृत्तिकपिसंयोगादिसाध्यके हेत्वधिकरणस्यैव जगत एव कपिसंयोगत्वाद्यवच्छिन्नाभाववत्तया तद्वद्वृत्तित्वत्वव्यापकप्रतियोगिताकस्य व्यधिकरणधर्मावच्छिन्नाभावस्यैव वृत्तिमद्वृत्तित्वेनाव्याप्तिविरहेऽपि तादृशकपिसंयोगाभावादिसाध्यकद्रव्यत्वादिहेतौ कपिसंयोगादिरूपसाध्याभाववद्वृत्तित्वाभावासत्त्वादव्याप्तिरित्यत आह––साध्याभावश्चेति। पूर्ववदिति। मिश्रलक्षणे यथा साध्यतावच्छेदकावच्छिन्नव्यापकतावच्छेदकरूपावच्छिन्नप्रतियोगिताको व्याप्यवृत्तिरभावो निवेश्यते, तथात्रापि निवेशनीय इत्यर्थः। तत्तद्वह्नित्वकथितोभयत्वावच्छिन्नप्रतियोगिताकाभावानां प्रथमविशेषणेन कपिसंयोगादिरूपाभावानां च द्वितीयविशेषणेन व्यावृत्तिः।**

## कृष्णंभट्टीयम्

एतद्रूपवान् एतद्रसादित्यादौ जगत एव पूर्वक्षणवृत्तित्वविशिष्टरूपाभावतद्रूपैतद्रूपोभयाभाववत्त्वेऽपि वृत्तिमद्वृत्तिव्यधिकरणधर्मावच्छिन्नजगद्वृत्तित्वाभावमादायैव लक्षणसमन्वय इत्यतो नानाव्यक्तीति। न चैतद्रूपभिन्नत्वेन एतद्रूपतद्रूपान्यतराभाव[2]मादायैव कुतो नाव्याप्तिः। वह्नित्वेन महानसीयवह्निघटान्यतराभावमादाय दोषवारणाय न्यूनवृत्तिना अतिरिक्तवृत्तिना वा धर्मेणानवच्छिन्नायाः प्रतियोगितायाः रूपावच्छिन्नाप्रतियोगित्वोपादानेऽपि आवश्यकत्वात्। अतिरिक्तवृत्तित्वं च तत्प्रतियोगितानिरूपकीभूताभाववद्वृत्तितावच्छेदकत्वे सति तत्प्रतियोगितासामानाधिकरण्यम्।

[1] गुणादिवृत्तित्वविशिष्टसत्तात्वावच्छिन्नाभाववद्वृत्तित्वाभावमादाय––अ.

[2] आदायैव च––अ.

तेन रूपकपालत्वोभयाभावनिरासः। यदि चैतत्कल्पे तद्रूपत्त्वेन रूपसामान्याभावमादाय दोष [1]उच्यते, तदा न्यूनवृत्तिधर्मानवच्छिन्नत्वमेवोपादेयम्। धूमाभावप्रतियोगितायाश्च धूममात्रवृत्तित्वमेव। तेन तस्याः प्रमेयसामान्यवृत्तित्वेन न तदसङ्ग्रहः शङ्क्यः। जगत एवेति व्याप्यवृत्तितानिरूपकत्वपर्यन्तविवक्षाव्यावृत्तिर्नास्तीति व्यञ्जनाय। तेन धूमवान् वह्नेरित्यादौ तत्सत्त्वेऽपि न क्षतिः। यद्वा अवच्छिन्नवृत्तिकान्यत्वं नेह व्याप्यवृत्तित्वम्; धूमवान् वह्नेरित्यादौ अतिव्याप्तेः। किन्तु निरवच्छिन्नवृत्तित्वम्; तस्य च नेह व्यावृत्तिरिति सूचनाय मिश्रेति। ननु मिश्ररीत्या अभावमनिवेश्य द्वितीयरीत्या अभावनिवेशे व्यापकताशरीरे प्रतियोगिवैयधिकरण्यानिवेशेनोक्तदोषाभावाद् अभावे व्याप्यवृत्तित्वं न देयमिति लाघवम्। वह्नित्वेन घटाद्यभावमादाय व्यापकत्वाप्रसिद्धिवारणाय, सामानाधिकरण्येनावच्छेदकत्वं वक्तव्यम्। वह्नित्वेन महानसीयघटान्यतराभावम् उत्पत्तिकालावच्छेदेन वह्निसामान्याभावं वादाय दोषवारणाय प्रतियोगितावच्छेदकसंबन्धेन साध्यव्यापकतैव निवेश्या। एवं च वह्निमान् धूमादित्यादौ द्रव्यत्वत्वादिना [2]घटाभाव एव लक्षणघटकः। संयोगादिसाध्यके गुणावृत्त्यभावमादाय च नातिप्रसङ्गः इति चेन्न; साध्यतावच्छेदकसमनियतसाध्यतावच्छेदकसंबन्धावच्छिन्नप्रतियोगिताकाभावस्तोमघटितलक्षणवादिनमाक्षेप्तुं स्वयमभिधानीयलक्षणे तार्णातार्णदहनोभयाभावस्य विशिष्य निवेशवारणाय समनैयत्यस्थानिकविशेषणान्तरविशेषितप्रतियोगिताकत्वेन तदभिमतसाध्यतावच्छेदकसंवन्धावच्छिन्नप्रतियोगिताकाभावस्यावश्यनिवेशनीयत्वात्। अन्यथा तदाक्षेपानुपपत्तेः। एतदभिप्रेत्यैव कूटघटितलक्षणे इवेत्याद्यभिहितम्। एवं च गुणवान् द्रव्यत्वादित्यादौ विषयतासंबन्धेन साध्यव्यापकस्य ज्ञानादेः

[1] इत्युच्यते—अ.

[2] घटाद्यभाव एव—अ.

समवायावच्छिन्नाभावमादायाव्याप्तिवारणाय साध्यतावच्छेदकसंवन्धेन व्यापकत्वं प्रवेशितमिति [1]दिक् ।

ननु व्याप्यवृत्तित्वोपादाने कालिकसंबन्धावच्छिन्नप्रतियोगिताकाकाशाभावाभावसाध्यकसद्धेतौ आकाशाभावरूपसाध्याभावस्य व्याप्यवृत्तेरधिकरणे जगति वृत्तिमद्वृत्तेः व्यधिकरणधर्मावच्छिन्नाभावस्यैव सत्त्वात्, अव्याप्तिविरहेऽपि कालिकसंवन्धावच्छिन्नप्रतियोगिताकघटत्वाभावाभावसाध्यकात्मत्वादौ व्याप्यवृत्तेर्घटत्वाभावरूपसाध्याभावस्याधिकरणे आत्मनि हेतुसत्त्वेनाव्याप्तिः । न चावच्छिन्नवृत्तिकान्यत्वं व्याप्यवृत्तित्वं, घटावच्छेदेन साध्यस्येव घटभिन्नावच्छेदेनैव घटत्वाभावस्य काले सत्त्वात् नाव्याप्तिरिति वाच्यम् । संयोगेन साध्यतायां व्यभिचारिणि धूमाद्यभावादेः लक्षणाघटकतया व्यधिकरणधर्मावच्छिन्नाभावमादायातिव्याप्तेः । मैवम्––साध्यव्यापकतावच्छेदकरूपविशिष्टस्वप्रतियोगिमत्ताग्रहविरोधितानियामकसंबन्धेन साध्याभाववत्ताया विवक्षणीयत्वात् । घटत्ववत्ताग्रहे दैशिकविशेषणतासंबन्धेन घटत्वाभावस्य विरोधित्वाद् उक्तदोषवारणाय रूपान्तम् ।

## न्यायरत्नम्

**नानाव्यक्तिसाध्यक इति । नन्वेकव्यक्तिसाध्यके एतद्रूपवान् एतद्रसादित्यादावपि एतद्रूपभिन्नत्वेन एतद्रूपतद्रूपान्यतराभावमादायाव्याप्तिसंभवे नानाव्यक्तीत्यसंगतमिति चेन्न; वह्नित्वेन महानसीयवह्निघटान्यतराभावमादायाव्याप्तेर्वारणाय स्वन्यूनवृत्तिधर्मानवच्छिन्नत्वस्य प्रतियोगिताविशेषणत्वावश्यकत्वेन तादृशाभावस्य लक्षणाघटकत्वात् । यद्वा साध्यमात्रप्रतियोगिताकाभावनिवेशेनैकव्यक्तिसाध्यकेऽव्याप्तिरिति नानाव्यक्तीत्युक्तिः । अत एव रूपघटोभयाभावमादाय तत्रातिव्याप्तिसत्त्वेऽपि**

[1] धनी चैत्रत्वादित्यलक्ष्यमित्यर्थः––अ. दिक् इत्यलं पल्लवेन इत्यधिकपाठः ––अ.

न क्षतिः । [1]तार्णातार्णदहनोभयाभावमादायेति । यद्यपि साध्यसमानाधिकरणसमानाधिकरणधर्मावच्छिन्नाभावभिन्नत्वस्य साध्याभावविशेषणत्वेनाप्ययं दोषो वारयितुं शक्यते । एवं चैतल्लक्षणस्य कूटघटितलक्षणाक्षेपकत्वमपि साधु सङ्गच्छते । अन्यथा सर्वलक्षणानामप्याक्षेपकत्वापत्तेः । तस्मात् कूटातिरिक्तसकलविशेषणसत्त्वे एवाक्षेपकताया वाच्यत्वात् । तथापि तादृशविशेषणोपादाने गौरवं स्यात् । कूटघटितलक्षणाक्षेपकत्वं त्वितरलक्षणापेक्षया प्रचुरसजातीयविशेषणघटितत्वादेव । सर्वांशे साजात्यस्य कथमपि वक्तुमशक्यत्वात् । यदि च साध्यतावच्छेदकसमनियतप्रतियोगिताकाभावनिवेशपक्ष एव लाघवम्; तथा हि साध्यव्यापकतावच्छेदकरूपावच्छिन्नाभावनिवेशे वह्निसाध्यके वह्नित्वेन तद्वह्निघटान्यतराभावमादायाव्याप्तिवारणाय प्रतियोगितायां स्वन्यूनवृत्तिधर्मानवच्छिन्नत्वं देयम्; अथ च द्रव्यत्वत्ववाच्यत्वत्वादीनामपि साध्यव्यापकतावच्छेदकतया तत्तदवच्छिन्नाभाववद्वृत्तित्वत्वसमनियतप्रतियोगिताकाभावकूटमेव व्याप्तिशरीरे निवेशनीयमित्युच्यते । तथापि साध्यतावच्छेदकसमनियतप्रतियोगिताकाभावनिवेशे प्रतियोगितायां साध्यतावच्छेदकसंबन्धावच्छिन्नत्वस्यैव निवेश-नीयतया वृत्त्यनियामकसंबन्धेन साध्यतायां तत्संबन्धावच्छिन्नप्रतियोगिताया अप्रसिद्ध्या अव्याप्त्यापत्तेर्लाघवमकिंचित्करम् । न च लक्षणलाघवानुरोधेन वृत्त्यनियामकसंबन्धस्याभावप्रतियोगितावच्छेदकत्वाभ्युपगमः तेन संबन्धेन साध्यतानभ्युपगमो वा न्याय्यः । तथा सति व्याप्तेः पदार्थान्तरत्वस्यैव युक्तत्वात् ।

व्याप्यवृत्तिरिति । नन्वत्र व्याप्यवृत्तित्वनिवेशो विफलः प्रतियोगिवैयधिकरण्याघटित साध्यव्यापकताया एव निवेशेन कपिसंयोगाभावस्य लक्षणाघटकत्वादिति चेन्न; स्वलक्षणोक्तरीत्या [2]लाघवेन प्रतियोगिवैयधिकरण्यघटितव्यापकताया निवेशनीयत्वात् ।

1 तार्णातार्णदहनोभयत्वावच्छिन्नाभावमादायेति गादाधर्यां पाठो वर्तते––स्व.

2 अवच्छेदकतायां सामानाधिकरण्यप्रत्यासत्त्यवच्छिन्नत्वस्यानिवेशाद् अभावीयवृत्तौ संबन्धभेदानिवेशाच्च लाघवम् पूर्वोक्तम्––स्व.

## गादाधरी

(९०) तद्वद्वृत्तित्वाभावपरिष्कारः ।

ननु साध्याभाववद्वृत्तित्वप्रतियोगिताकाभावमात्रनिवेशे प्रकृतहेतुसाधारणस्य व्यधिकरणधर्मावच्छिन्नसाध्याभाववद्वृत्तित्व[1]विशेषस्य समानाधिकरणधर्मावच्छिन्नाभावोऽपि वृत्तिमद्वृत्तिः संभवतीति यावत्तादृशाभावान्तर्गततद्वत्त्वस्य हेतावभावादसंभवः । [2]एवं समानाधिकरणधर्मावच्छिन्नाभाववद्वृत्तित्वस्य प्रकृतहेतुवृत्तितावच्छेदकीभूतकिंचिद्धर्मावच्छिन्नस्याभावोऽपि यावत्तादृशाभावान्तर्गत इति तद्वत्त्वविरहादपि व्यतिरेकिसाध्यकहेतूनामव्यभिचारित्वानुपपत्तिः । तत्तत्साध्याभाववद्वृत्तित्वत्वावच्छिन्नप्रतियोगिताकाभावश्च विवक्षितुमशक्यः । केवलान्वयिनि साध्याभाववद्वृत्तित्वत्वेन घटाद्यभावस्य तादृशस्य गुरुधर्मस्य प्रतियोगितावच्छेदकत्वमते प्रसिद्धावपि तस्यातथात्वमते व्यधिकरणधर्मावच्छिन्नसाध्याभाववद्वृत्तित्वत्वस्य स्वघटककेवलवृत्तित्वत्वसमनियततया तत्प्रतियोगितानवच्छेदकत्वेन तदवच्छिन्नाभावाप्रसिद्धेर्दुर्वारत्वात् । तत्तदभाववद्वृत्तित्वत्वघटकधर्मावच्छिन्नाभावनिवेशे च वह्नित्वाद्यवच्छिन्नवह्न्याद्यभावव्यक्तेः [3]तत्तदभावत्वावच्छिन्नाभावस्यापि तादृशतया तस्य च धूमादावसत्त्वादव्याप्तिः । साध्याभाववद्वृत्तित्ववृत्ति[4]तादृशधर्मावच्छिन्नाभावनिवेशेऽपि [5]घटवृत्ति-

[1] महानसवृत्तित्वस्य—रा. [2] मिश्ररीत्या निवेशे—रा.

[3] तदवच्छिन्नाभावस्यापि इति न्यायरत्ने प्रतीकधारणम्—स्व.

[4] अत्रापि वह्निमान् धूमादित्यादौ तादृशस्य वह्न्यभावत्वावच्छिन्नाभावस्याप्रसिद्धत्वेनाव्याप्त्यसंभव इति ध्येयम्—रा.

[5] घटवृत्तित्वत्वावच्छिन्नसाध्यके इत्यादिप्रतीकधारणं न्यायरत्ने—स्व.

**त्वत्वाद्यवच्छिन्नसाध्यके तादात्म्येन घटत्वव्यापकादिहेतौ तादृश-साध्याभाववान् यो घटत्वाभावादिः तद्वृत्तित्वनिष्ठतादृशसाध्या-भाववत्त्वरूपत[1]थाविधधर्मावच्छिन्नाभावस्य घटादिमात्रवृत्तेः हेता-वसत्त्वादव्याप्तिर्दुर्वारैव। [2]साध्याभावादिव्यावृत्तघटकतानिवेशे च प्रयासगौरवमिति तत्तत्साध्याभाववद्वृत्तित्वत्वसमनियतप्रतियो-गिताकाभावं विवक्षयति--तद्वदिति। स्वं-प्रतियोगिता।**

## कृष्णंभट्टीयम्

विशेषो--महानसवृत्तित्वादिः। मिश्ररीत्या वृत्तित्वाभावनिवेशे दोषमाह--एवमिति। किंचिद्धर्मः--आलोकावृत्तित्वादिः। तत्तदिति। स्वविषयिताशून्यप्रतीत्यवृत्तितत्तत्साध्याभाववद्वृत्तित्वत्वरूपविशिष्टविष-यिताकत्वम्। न चैवमालोकावृत्त्यभावव्युदासासंभवः, आलोकावृत्तित्व-समानाधिकरण[3]निर्वह्निवृत्तित्वरूपविशिष्टविषयिताव्यक्तेः स्वविषयिता-शून्यप्रतीत्यवृत्तित्वादिति वाच्यम्। तादृशविशिष्टविषयितासामान्यस्य निवेश्यत्वात्। वह्निसामान्याभावव्यक्त्यवच्छिन्नाभावस्त्वलीकः। तद्वतो गगनाभावादेः केवलान्वयित्वादिति वह्नित्वावच्छिन्नाभावनिष्ठ[4]तद्व्यक्ति-त्वावच्छिन्नाभावानुधावनम्। तस्या[5]ग्रिमवृत्तित्वान्तेन वारणलाभाय व्यक्तेरिति। न च वह्न्यभावव्यक्तित्वावच्छिन्नाभावस्य वह्निरूपतया वृत्तिमति स्वरूपसंबन्धेन वृत्तित्वासंभवः। एवमपि वह्निमत्त्वप्रकारकप्रमा-विशेष्यत्वसाध्यकधूमादावव्याप्तेः। अव्याप्तिरिति। केवलान्वयिसाध्यके

[1] घटावृत्तित्वत्वावच्छिन्नाभावपर्यवसितस्य--रा.

[2] साध्याभावव्यावृत्तेति न्यायरत्ने प्रतीकधारणम्--स्व.

[3] निर्वह्निवृत्तित्वत्वरूप--अ.

[4] तद्व्यक्तित्वावच्छिन्नानुधावनम्--अ.

[5] अग्रिमवृत्तिवृत्तित्वान्तेन--अ.

लक्षणसङ्गतेः । एवं तद्धूमनिष्ठवृत्तित्ववान् तादात्म्येन तद्धूमादित्यादौ तद्धर्मनिष्ठवृत्तित्वाभावत्वस्य घटकत्वेऽपि तदवच्छिन्नाभावस्य तद्धूमनिष्ठ-वृत्तित्वात्मनो हेतौ सत्त्वात् लक्षणसमन्वयः । न च वाच्यत्ववत्वेन तद्धूम-निष्ठवृत्तित्वाभाववद्वृत्तित्वत्वघटकतायाः तद्धूमनिष्ठवृत्तित्वत्वे सत्त्वात् न तदवच्छिन्नाभावत्वमिति वाच्यम् । तद्व्यक्तित्वेनैव साध्याभावस्य निवे-शादिति । घटवृत्तित्ववत्वेति । इदं घटवृत्तितावत् प्रमेयादित्यादौ इत्यर्थः ।

एतेन संबन्धसामान्यावच्छिन्नं वृत्तित्वं यदि साध्यघटकं तदा घटत्वा-भावादेः साध्याभाववत्ताप्रदर्शनासङ्गतिः । घटादौ कालिकसंबन्धेन तत्सत्त्वात् । नापि समवायसंबन्धावच्छिन्नं तत् । अत एव द्रव्यत्वघटत्व-घटरूपादीनां सर्वेषां प्रत्येकं हेतुतालाभाय घटत्वव्यापकतोत्कीर्तनमिति सांप्रतम् । तथा सति घटावृत्तित्वावच्छिन्नाभावस्य लक्षणाघटकत्वापातात् । घटावृत्तित्वस्य घटत्वाभावात्मकसाध्याभाववद्वृत्तित्वेऽपि घटासमवेतवृत्ति-त्वत्वरूपसाध्याभाववद्वृत्तित्वत्वघटकत्वाभावात् । न च घटासमवेतत्वस्यैव तद्घटकतया तदवच्छिन्नाभाव एव लक्षणघटको भवत्विति वाच्यम् । वाच्य-त्वादीनामपि घटासमवेततया स्वरूपसंबन्धेन तदभावाप्रसिद्धेः । समवा-यादिना तदभावस्य संभवेऽपि तस्य सामान्यादावपि सत्त्वेन घटादिमात्रवृत्ते-रित्यसङ्गतं स्यात्, स्वरूपसंबन्धावच्छिन्नप्रतियोगिताकत्वस्याग्रे वाच्यतया लक्षणाघटकत्वाच्चेति प्रत्युक्तम् । स्वरूपसंबन्धावच्छिन्नवृत्तित्वस्यैव साध्य-घटकत्वात् ।

ननु घटनिरूपितस्वरूपसंबन्धावच्छिन्नवृत्तित्वस्य साध्यत्वेऽपि कथम-व्याप्तिः । वृत्तीत्यत्र साध्याभाववन्निरूपितहेतुतावच्छेदकसंबन्धावच्छिन्न-यावदाधेयतावृत्तित्वविवक्षयैव घटावृत्तित्वावच्छिन्नाभाववारणात् । घटा-वृत्तित्वं हि न साध्याभाववन्निरूपितयावत्तादात्म्यवृत्ति; घटनिरूपितता-दात्म्यस्यापि यावत्साध्याभाववद्वृत्तित्वान्तर्गततया तत्र घटनिरूपितस्वरूप-संबन्धावच्छिन्नवृत्तित्वाभावरूपघटावृत्तित्वस्यासत्त्वात् । घटनिरूपितता-

दात्म्यं घटे स्वरूपसंबन्धेन वर्तते, न तु घटस्वरूपमिति; तत्र घटावृत्तित्वं नास्तीति । एवं च तादृशाभावो न लक्षणघटक इति चेन्न; प्रमेयत्वं पक्षः, तादात्म्येन प्रमेयत्वमेव हेतुः, नित्यज्ञाने स्वरूपसंबन्धेन वर्तमानयावत्पदार्थ-नित्यज्ञानैतदन्यतमप्रतियोगिकत्वविशिष्टविषयितासंबन्धावच्छिन्नवृत्तित्वं साध्यमित्यादिस्थलाभिप्रायेणाव्याप्तिकथनम् । तत्र यन्निरूपितवृत्तित्वं साध्यं तस्यापि साध्यवत्त्वेन घटादितादात्म्यस्य स्वरूपसंबन्धेन नित्यज्ञाना-वृत्तितया तत्र साध्याभावः सुलभः । एवं च यावत्तादात्म्यवृत्तिनित्यज्ञान-निरूपितनिरुक्तान्यतमप्रतियोगिकत्वविशिष्टविषयितासंबन्धावच्छिन्नवृत्ति-त्वाभावावच्छिन्नाभावस्य स्वरूपसंबन्धावच्छिन्नप्रतियोगिताकस्य ज्ञानमात्र-हेतौ अभावाद् अव्याप्तिः । अथवा घटनिरूपिततादात्म्यसंबन्धस्वरूप-संबन्धान्यतरसंबन्धावच्छिन्नवृत्तित्वं साध्यम् । तथा च घटस्यापि साध्या-भाववत्त्वासंभवः । यत्तु पक्षहेतू प्रागुक्तौ प्रमेयत्वनिरूपितस्वरूपसंबन्धा-वच्छिन्नवृत्तित्वं साध्यमिति तन्न; तदभावावच्छिन्नाभावस्याप्रसिद्धेः तद-भावावच्छिन्नवाच्यत्वादेः केवलान्वयित्वात् ।

अथ तत्तन्निरूपिततादात्म्यस्य तत्तत्स्वरूपत्वमते उक्तस्थले घटा-वृत्त्यभाववारणं साध्याभाववद्वृत्तितात्वसमनैयत्यपक्षे अप्यशक्यम् । गगना-देरपि तन्निरूपिततादात्म्यरूपत्वादिति अव्याप्तिरेवेति चेन्न; तत्तत्साध्या-भाववद्वृत्तित्वत्वातिरिक्तेत्यादिकल्पस्यैव तद्वारणार्थत्वाद् इति । वस्तुतस्तु साध्याभाववद्वृत्तित्वसामान्यवृत्तित्वेन धर्मविशेषणे गोत्वाभाववृत्तित्वसा-ध्यकगोत्वाभावत्वव्यापकादिहेतौ अव्याप्तिर्वज्रलेप एव; गोत्वाभावस्यापि स्वरूपसंबन्धेन गोत्वाभाववृत्तित्वेन गोत्वाभावतादात्म्यस्य यावत्तादृशता-दात्म्यानन्तर्गतत्वात् । गोत्वाभावावृत्तित्वावच्छिन्नाभावस्य च गोत्वाभाव-त्वादावसत्त्वादिति ।

घटत्वव्यापकेति । अत्र तद्धटत्वप्रकारकप्रमाविषयत्वादेः पक्षत्वं हेतुत्वं द्रष्टव्यम् । तादृशसाध्याभाववान् घटादिरित्यादिस्तु अपपाठः । तत्पाठे, घट-

निरूपिततादात्म्यस्य घटापेक्षया अतिरिक्तत्वे, घटनिरूपितवृत्तित्वाभावरूपसाध्याभावस्य घटतादात्म्यरूपसाध्याभाववद्वृत्तित्ववृत्तित्वं न संभवत्येव। तादृशतादात्म्यस्य घटनिरूपितस्वरूपसंबन्धावच्छिन्नवृत्तित्वरूपसाध्यवत्त्वात्। तथा च घटावृत्तित्वाभावावच्छिन्नाभावस्य लक्षणघटकतानुपपत्तिः। तस्य घटरूपत्वे तु, घटेऽपि घटतादात्म्यत्वेन घटनिरूपितस्वरूपसंबन्धावच्छिन्नवृत्तित्वसत्वेन तदभाववान् धट इत्यस्याशुद्धत्वात्। तस्मात् तादृशसाध्याभाववान् यो घटत्वाभावादिरिति [1]पाठः। व्यावृत्तेति। तादृशमुख्यविशेष्यताघटितघटकतानिवेशात्। प्रयासगौरवमिति। [2]मुख्यविशेष्यता[3]निवेशनमपेक्ष्य साध्याभाववद्वृत्तित्वत्वे प्रतियोगिताव्याप्यत्वादिनिवेशे प्रतीत्यपरिचयदशायामपि विशेषणस्य सुग्रहतया लाघवात्।

## न्यायरत्नम्

**हेतुवृत्तितावच्छेदकीभूतयत्किंचिद्धर्मेति। तादृशधर्मः आलोकावृत्तित्वादिः। तत्र हेतुवृत्तितावच्छेदकत्वकथनं तदवच्छिन्नाभावस्य हेत्ववृत्तित्वसूचनायेति ध्येयम्। तत्तदभाववद्वृत्तित्वत्वघटकेति। अत्र घटकत्वं स्वाविषयकप्रतीतिवृत्तितत्तदभाववद्वृत्तित्वत्वरूपविशिष्टनिरूपितविषयिताकत्वरूपं ज्ञेयम्। वह्न्याद्यभावव्यक्तेरिति। निष्ठत्वं षष्ठ्यर्थः, तस्य तदभावत्वेऽन्वयः। [4]तदवच्छिन्नाभावस्यापि, वह्न्यभावत्वावच्छिन्नाभावस्यापीत्यर्थः। तादृशतया, तदभाववद्वृत्तित्वत्वघटकधर्मावच्छिन्नप्रतियोगिताकतया। यद्यपि वृत्तिमद्वृत्तिरित्यत्र वृत्तित्वस्य स्वरूपसंबन्धेनैव ग्राह्यत्वाद् वह्न्यात्मकाभावस्य वृत्तिमद्वृत्तित्वमेव न संभवति। तथापि भावानामपि स्वरूपसंबन्धोऽस्तीत्यभिप्रायेणेदम्। यद्वा वह्न्यधिकरणत्वा-**

1 पाठः समीचीनः--अ.

2 मुख्यविशेष्यतादि--अ.

3 निवेशमपेक्ष्य--अ.

4 तत्तदभावत्वावच्छिन्नाभावस्यापि इति गादाधर्यां दृश्यते--स्व.

त्मकाभावस्य स्वरूपसंबन्धेन वृत्तिमत्त्वाद् वह्न्यधिकरणत्वाभाववह्न्यभावयोः समनैयत्याद् वह्न्यधिकरणत्वमपि वह्न्यभावाभाव इत्यभिप्रायः। [1]घटवृत्तित्वत्वावच्छिन्नसाध्यके तादात्म्येन घटत्वव्यापकादिहेताविति। घटत्वव्यापकत्वं परिचायकम्, तत्परिचितप्रमेयत्ववाच्यत्वादिकं तादात्म्येन हेतुः; स्वरूपसंबन्धावच्छिन्नघटवृत्तित्वं साध्यम्। समवायसंबन्धावच्छिन्नघटवृत्तित्वस्य साध्यत्वे घटनिरूपितस्वरूपसंबन्धावच्छिन्नवृत्तित्वाभावरूपघटावृत्तित्वावच्छिन्नाभावस्य लक्षणघटकत्वासंभवात् तादृशघटावृत्तित्वस्य घटासमवेतवृत्तित्वत्वरूपसाध्याभाववद्वृत्तित्वत्वघटकत्वासंभवात्। घटासमवेतत्वस्य तद्घटकत्वेऽपि स्वरूपसंबन्धावच्छिन्नप्रतियोगिताकस्यैव वृत्तित्वाभावस्य निवेशनीयतया वाच्यत्वादिसाधारणतदवच्छिन्नस्य स्वरूपसंबन्धेनाभावाप्रसिद्धेः।

अथ वृत्तित्ववृत्तीत्यत्र साध्याभाववन्निरूपितहेतुतावच्छेदकसंबन्धावच्छिन्नयावदाधेयतावृत्तित्वविवक्षणात् स्वरूपसंबन्धावच्छिन्नघटवृत्तित्वसाध्यकेऽपि नाव्याप्तिः; तादृशसाध्याभाववद्घटनिरूपिततादात्म्यसंबन्धावच्छिन्नवृत्तित्वे घटतादात्म्यरूपे घटावृत्तित्वस्याभावात्। मैवम्––घटनिरूपिततादात्म्यस्वरूपान्यतरसंबन्धावच्छिन्नवृत्तित्वस्यैव साध्यत्वाद् घटस्य तादृशसाध्याभाववत्त्वाभावात्।

अथ साध्याभाववद्वृत्तित्वमात्रनिष्ठत्वेन धर्मविशेषणत्वे नायं दोषः घटावृत्तित्वस्य तन्मात्रनिष्ठत्वाभावात्। तादृशवृत्तित्वमात्रनिष्ठत्वं च तादृशवृत्तित्वत्वव्याप्यत्वम्, न तु तदितरावृत्तित्वं विषयितासंबन्धेन हेतुके तत्संबन्धावच्छिन्नवृत्तित्वस्य विषयतारूपतया विषयतायाश्च विषयरूपत्वेन तदितराप्रसिद्धेरिति चेन्न; तत्तत्साध्याभाववद्वृत्तित्वत्वसमनियतत्वं धर्मे निवेश्य तदवच्छिन्नत्वस्य प्रतियोगितायां निवेशापेक्षया प्रतियोगितायां तत्तत्साध्याभाववद्वृत्तित्वत्वसमनैयत्यनिवेशस्योचितत्वात्। विषयिता-

[1] घटवृत्तित्वत्वाद्यवच्छिन्नसाध्यके इति गादाधर्यां पाठः––स्व.

संबन्धेन हेतुतायां साध्याभाववद्वृत्तित्वत्वस्य जगद्विषयतात्वरूपतया विषयताया विषयस्वरूपत्वे तत्समनियतधर्मावच्छिन्नप्रतियोगिताकाभावाप्रसिद्धेश्च। एतेन ह्रदवृत्तित्वत्वेन निर्धूमवृत्तित्वसामान्याभावीयप्रतियोगितायाः निर्धूमवृत्तित्वसामान्ये स्वीकारे धर्मे समनैयत्यनिवेश एवोचितः; अन्यथा तादृशाभावमादायादितिव्याप्तेर्दुर्वारतेति निरस्तम्। अनेनैव दोषेण कल्पान्तरस्यावतारणीयत्वाच्च। [1]साध्याभावव्यावृत्तेति। स्वनिष्ठमुख्यविशेष्यताशून्यप्रतीतिवृत्तिसाध्याभाववद्वृत्तित्वत्वरूपविशिष्टनिरूपितविषयिताकत्वरूपेत्यर्थः।

## गादाधरी

(६१) साध्याभावस्य तत्तद्व्यक्तित्वेन निवेशनम्।

अत्र साध्याभावस्य साध्याभावत्वेन सामान्यतो निवेशे व्यभिचारिणि निर्धूमवृत्तित्वत्वाद्यवच्छिन्नाभावप्रतियोगिताया व्यधिकरणधर्मावच्छिन्नसाध्याभाववत्साध्याधिकरणवृत्तित्वसाधारणसाध्याभाववद्वृत्तित्वत्वाव्यापकत्वेन तादृशाभावस्य लक्षणाघटकतया वृत्तित्वसामान्याभावस्य तथाविधप्रतियोगिताकस्य च व्यधिकरणधर्मावच्छिन्नप्रतियोगिताकस्यैव वृत्तिमद्वृत्तितया अतिव्याप्तिरिति तत्तद्व्यक्तित्वेनाभावस्य व्याप्यतावच्छेदककोटिनिवेशनलाभाय तत्तदिति।

यद्यपि यत्किंचित्साध्याभाववद्वृत्तित्वत्वसमनियतप्रतियोगिताकवृत्तिमद्वृत्तियावदभाववत्त्वं व्यभिचारिसाधारणम्, यावन्तः साध्याभावाः प्रत्येकं तत्तदधिकरणवृत्तित्वत्वसमनियतैक-

[1] साध्याभावादिव्यावृत्तेति गादाधर्यां पाठः दृश्यते——स्व.

**प्रतियोगितायाः [1]नानाविपक्षकेऽप्रसिद्धिः, तत्तद्विपक्षावृत्तित्वत्वावच्छिन्नाभाववत्तत्तद्विपक्षवृत्तित्वत्वव्याप्यैकप्रतियोगित्वाप्रसिद्धेः। तथापि यावतामभावानां प्रत्येकाधिकरणवृत्तित्वत्वसमनैयत्यस्य प्रत्येकं प्रतियोगितान्वयेन एतदभाववद्वृत्तित्वत्वसमनियतप्रतियोगिताको योऽभावः तदभाववद्वृत्तित्वत्वसमनियतप्रतियोगिताकश्च योऽभावः तद्वत्त्वमित्येवंरीत्या निवेशान्नानुपपत्तिः। एतल्लक्षणे साध्याभावसमुदायो न समुदायत्वेन प्रविष्टः, अपि तु प्रातिस्विकरूपेणेति कूटघटिताद्विशेषः।**

## कृष्णंभट्टीयम्

नानाविपक्षक इति। [2]एकविपक्षे च तादृशैकप्रतियोगिता तद्विपक्षवृत्तित्वाभावीयैव प्रसिद्धेति न तत्र तादृशाप्रसिद्धिनिबन्धनसमनियतप्रतियोगित्वाप्रसिद्धिः। नन्वेतदशुद्धम्। गगनभिन्नं पृथिवीत्वादित्यादौ एकविपक्षकेऽपि तद्विपक्षावृत्त्यभावस्य गगनभेदाभावस्य वा अधिकरणं गगनं तन्निरूपितवृत्तित्वनिष्ठैकप्रतियोगिताया न गगनभिन्नत्वेन गगनाभावाधिकरणजगद्वृत्तित्वत्वव्यापकत्वं जगद्वृत्तित्वाभावप्रतियोगितायाश्च न विपक्षवृत्तित्वत्वव्यापकत्वमिति तदप्रसिद्धेर्दुवारत्वादिति चेन्न; तत्तत्साध्याभावानां यदेकमधिकरणं तद्वृत्तित्वत्वसमनैयत्यपर्यन्तोक्तौ एतदप्रसिद्धिवारणसंभवात् नानाविपक्षके एकाधिकरणाप्रसिद्धेरिति। अथवा स्वव्यापकतत्तत्साध्या-

[1] एकविपक्षके च तादृशैकप्रतियोगिता तद्विपक्षवृत्तित्वाभावीयैव प्रसिद्धेति, न तत्र तादृशाप्रसिद्धिनिबन्धनासमनियतप्रतियोगित्वाप्रसिद्धिः। परं तु तत्रापि तादृशैकप्रतियोगिताया न जगद्वृत्तितात्वव्यापकत्वं जगद्वृत्तित्वाभावप्रतियोगितायाश्च न विपक्षवृत्तित्वत्वव्यापकत्वमिति रीत्या समनियतप्रतियोगिताप्रसिद्धिरस्त्येवेति बोध्यम्—रा.

[2] एकविपक्षके—अ.

भाववद्वृत्तित्वत्वकत्वे सति यत्किंचित्साध्याभाववद्वृत्तित्वत्वव्यापिका या प्रतियोगितेत्यर्थान्न दोषः ।

एतदभावेति । एकमभावमादाय तदधिकरणवृत्तित्वाभावा यावन्तः, अपरमभावमादाय तदधिकरणवृत्तित्वाभावा यावन्तस्तद्वत्त्वम् इत्यादि-रीत्या निवेशः । सत्तावान् जातेरित्यादौ च न सत्तासामान्याभावोपादान-संभवः; तदधिकरणवृत्तित्वाप्रसिद्धेरिति नाव्याप्तिः । न च यावतामभावा-नामित्यभिधानात् साध्याभावे यावत्त्वानुक्तौ तत्तत्साध्याभावेत्यनेन धूमसा-मान्याभावातिरिक्तधूमत्वेन घटाभावाद्यात्मककतिपयाभावानुपादाय तद्वद्वृत्तित्वाभावमादायातिव्याप्तेश्च तत्र यावत्त्वमावश्यकम् । सत्तावान् जातेरित्यादौ अव्याप्तिस्तु साध्याभावे हेतुतावच्छेदकसंबन्धवद्वृत्तित्वादि-विशेषणेन वारणीयेति वाच्यम्; साध्याभावे यावत्त्वनिवेशे तदतिरिक्तदो-षाणामलग्नकतेति पङ्क्त्यसङ्गतेः । स्वाधिकरणवृत्तित्वत्वसमनियतप्रतियो-गिताकत्वरूपपरंपरासंबन्धेन साध्याभावविशिष्ट[1]यावदभावनिवेशेनाति-व्याप्तेरपि वारणात् । तत्तत्साध्याभाववद्वृत्तित्वाभावा यावन्त इति लक्षणे, तत्तत्साध्याभावशब्देन कतिपयसाध्याभावोपादाने [2]तद्घटितयावद्वृत्तित्वो-पादानेऽपि कतिपय एव वृत्तित्वाभावा उपात्ताः न तु यावन्तः; यावत्त-दुपादाने च कथं कतिपये साध्याभावा उपादीयेरन् इत्याशयेनार्थतः सिद्ध-यावत्त्वलेखनस्यातिव्यापिवारणस्य च सङ्गतेश्च । तादृशरूपावच्छिन्नप्रति-योगिताकत्वेनानुगतन साध्याभावप्रवेशे, निर्धूमवृत्तित्वाभावासंङग्रहादति-व्याप्तिरतः प्रातिस्विकरूपेणेति ।

## न्यायरत्नम्

**तत्तदिति । यद्यपि तत्तद्व्यक्तित्वेनाभावनिवेशे संयोगादिसंबन्धा-वच्छिन्नप्रतियोगिताकप्रमेयसामान्याभावसाध्यके गगनाद्यात्मकसाध्या-**

[1] यावदभाववत्त्वनिवेशे––अ.

[2] तद्घटितयावद्वृत्तित्वाभावोपादानेऽपि––अ.

भावाधिकरणमप्रसिद्धम् । तथापि साध्याभावत्वरूपा यावत्योऽनुयोगिताः प्रसिद्धास्तत्तदवच्छिन्नाधिकरणवृत्तित्वाभावा यावन्त इति निवेशात् न दोषः । अनुयोगित्वप्रतियोगित्वयोरनुयोगिप्रतियोगिस्वरूपत्वमते तु व्यापकतावच्छेदकान्तस्य परिचायकतया तत्परिचिततत्तद्धर्मावच्छिन्नतत्तन्निष्ठतत्तत्संबन्धावच्छिन्नप्रतियोगिताकाभावत्वावच्छिन्नाधिकरणवृत्तित्वाभावा एव निवेश्याः । नानाविपक्षकेऽप्रसिद्धिरिति । नन्वेकविपक्षकेऽपि तद्घटभिन्नं पटत्वादित्यादौ तद्धटवृत्तित्वाभावीयप्रतियोगितायास्तत्तत्साध्याभाववद्वृत्तित्वत्वव्यापकत्वेऽपि तत्तत्साध्याभावान्तःपातिव्यधिकरणधर्मावच्छिन्नाभाववद्वृत्तित्वत्वव्यापकत्वविरहात् समनैयत्याप्रसिद्धिरस्तीति नानाविपक्षकेत्यव्यावर्तकमिति चेन्न; व्याप्यत्वाप्रसिद्धिप्रयोज्यायाः समनैयत्याप्रसिद्धेरेव विवक्षितत्वात् । अत एव व्याप्यैकप्रतियोगिताया अप्रसिद्धेरिति ग्रन्थकृदुक्तिः । न चैवमप्येकविपक्षके व्यापकत्वाप्रसिद्धिप्रयोज्यसमनैयत्याप्रसिद्ध्यनभिधानेन न्यूनता दुर्वारेति वाच्यम् । यत्किंचित्साध्याभाववद्वृत्तित्वत्वव्यापकत्वनिवेशे नाप्रसिद्धिरित्यभिप्रायात् ।

## गादाधरी

(६२) वृत्तिमद्वृत्तित्वविशेषणवैयर्थ्यशङ्का तत्परिहारश्च ।

**अथात्र स्वपदं न तत्तदभावीयप्रतियोगितात्वरूपेण प्रतियोगितापरम्, साध्याभाववद्वृत्तित्वातिरि[1]क्तेऽपि तदभावीयप्रतियोगितान्तरसत्त्वादिति तत्तत्प्रतियोगिताव्यक्तिपरं तद्वाच्यम् । तथा च [2]यत्किंचित्प्रतियोगितानिरूपकाशेषाभावस्या[3]तिव्या-**

[1] पूर्वक्षणवृत्तित्वविशिष्टस्वाभावादौ—रा.

[2] समानाधिकरणधर्मावच्छिन्नसाध्याभाववद्वृत्तित्वाभावस्य व्यधिकरणधर्मावच्छिन्नस्यैकस्यापि अशेषाभावपदार्थत्वात्—रा.

[3] घटत्वावच्छिन्ननिर्धूमवृत्तित्वनिष्ठप्रतियोगितात्वविशेषमादायातिव्याप्तिरित्यर्थः—रा.

**पकतया यावत्यः तादृश्यः प्रतियोगिताः प्रत्येकं तन्निरूपकाभाववत्त्वं निवेशनीयम् । तथा च समानाधिकरणधर्मावच्छिन्नजगद्वृत्तित्वसामान्याभावप्रतियोगितानिरूपकवृत्तिमद्वृत्त्यभावाप्रसिद्ध्या [1]अव्याप्तिरिति वृत्तिमद्वृत्त्यभावीयत्वेन यावत्प्रतियोगिता निवेशनीया । तथा च तन्निरूपकाभावे वृत्तिमद्वृत्तित्वविशेषणं व्यर्थम् । यावत्त्वविशेषणमपि तथेति चेत्; नोपादीयत एव तत्र तद्विशेषणम् । वृत्तिमद्वृत्त्यभावीययावत्प्रतियोगितानिवेशलाभायैव प्रतियोगिताविशेष्यीभूताभावे [2]वृत्तिमद्वृत्तित्वयावत्त्वाभिधानात् ।**

कृष्णंभट्टीयम्

अतिरिक्ते । किंचिद्विशिष्टस्वाभावादौ । [3]कथंचिदिति । घटत्वावच्छिन्ननिर्धूमवृत्तित्वनिष्ठप्रतियोगितेत्यर्थः । तादात्म्य[4]विषयतादिसंबन्धेन लक्षणसमन्वयस्योक्तत्वादुक्तमव्याप्तिरिति ।

**न्यायरत्नम्**

**यत्किंचित्प्रतियोगितेति । व्यधिकरणधर्मावच्छिन्नप्रतियोगितेत्यर्थः । अतिव्यापकतयेति । व्यभिचारिहेतुसाधारणतयेत्यर्थः । तथा चातिव्याप्तिरिति भावः ।**

## गादाधरी

(६३) **भेदकूटात्मकव्यापकत्वत्पुरस्कारेण व्यापकत्वनिवेशप्रकारः ।**

[1] तादात्म्यविषयतादिसंबन्धेन हेतावेव व्यधिकरणधर्मावच्छिन्नाभावस्यैव प्रसिद्धेरसंभवो नास्ति––रा.

[2] वृत्तिमद्वृत्तित्वाभिधानात् इत्येव––अ.

[3] किंचिदिति प्रतीकधारणं साधु । गादाधर्यां कथंचिदिति पाठो नास्ति–स्व.

[4] विषयितादि––अ.

**अत्र च गुरुधर्मस्याभावप्रतियोगितानवच्छेदकत्वे स्वव्यापकतदभाववद्वृत्तित्वत्ववन्निष्ठभेदप्रतियोगितावच्छेदकत्वस्याव्यावर्तकव्यापकतान्तर्घटितत्वेनाभावप्रतियोगितानवच्छेदकतया तदवच्छिन्नान्योन्याभावरूपव्यापकत्वपुरस्कारेण न प्रतियोगितानिवेशः संभवतीति तादृशावच्छेदकभेदकूटात्मकव्यापकत्वपुरस्कारेणैव तन्निवेशः। न च स्वव्यापकतत्तदभाववद्वृत्तित्वत्वकत्वतदभाववद्वृत्तित्वत्ववन्निष्ठान्योन्याभावप्रतियोगितावच्छेदकत्वावच्छिन्नैकभेदोभयरूपेण प्रतियोगितानिवेशसंभवाद् अवच्छेदकभेदकूटनिवेशनमफलमिति वाच्यम्; घटभेदादिसाध्यकस्थले तदभावव्यक्तित्वेन घटत्वादिघटितस्य तदभाववद्वृत्तित्वनिष्ठान्योन्याभावप्रतियोगितावच्छेदकत्वस्य स्वरूपतो घटत्वादिघटितघटवृत्तित्वनिष्ठान्योन्याभावप्रतियोगितावच्छेदकत्वमपेक्ष्य गुरुशरीरतया प्रतियोगितानवच्छेदकत्वेन तदवच्छिन्नैकभेदनिवेशासंभवात्।**

कृष्णंभट्टीयम्

अव्यावर्तकं विशेषणं स्वव्यापकत्वम्।

न चेति। आलोकावृत्तिवृत्तित्वाभाववारणाय प्रथमं [1]तत्तदिति। निर्धूमवृत्तित्वाभावसङ्ग्रहाय द्वितीयं [2]तत्तदिति। घटभेदादीति। नन्वत्र सद्धेतौ समानाधिकरणधर्मावच्छिन्नाभावघटिततद्वद्वृत्तित्वाभावासत्त्वेऽपि न क्षतिः। न च तत्तत्साध्यकव्यभिचारिण्यतिव्याप्तिरभिप्रेता। जगद्वृत्तित्वाभावस्यापि अनीदृशत्वात्; लाघवेन तत्र समवेतत्वनिष्ठभेदप्रतियोगितावच्छेदकत्वस्यैव भेदप्रतियोगितावच्छेदकत्वात्। तर्हि तत्साध्यकसद्धेतौ

[1] क्वचिद् एकमेव तत्पदं वर्तते—स्व.

[2] क्वचिद् एकमेव तत्पदम्।

अव्याप्तिरेवास्तु इति चेन्न; सर्वत्रापि सद्धेतौ जगद्वृत्तित्वाभावस्य [1]साध्याभावघटितस्यैव संयुक्तत्वादिनिष्ठभेदप्रतियोगितावच्छेदकत्वस्यैव लाघवेनावच्छेदकत्वेन अनीदृशतया व्यधिकरणधर्मावच्छिन्नसाध्याभावाधिकरणीयत्वस्य परिचायकत्वस्य वाच्यतया लक्षणसङ्गतेरिति चेत्; तथा सति तत्साध्यकव्यभिचारिणि एतद्दोषस्योक्तत्वात्। साध्याभावे यावत्त्वविशेषणाभिधानेन [2]तत्साध्यकाव्याप्तिरनुपादेया। अन्यथापि उपपत्तेः।

## न्यायरत्नम्

**घटभेदादीति। नन्वत्र घटवृत्तित्वत्वावच्छिन्नाभावस्य लक्षणाघटकत्वेऽपि नातिव्याप्तिः, व्यधिकरणधर्मावच्छिन्नसाध्याभाववद्वृत्तित्वाभावस्यापि लक्षणघटकत्वात्। व्यधिकरणधर्मावच्छिन्नसाध्याभावद्वृत्तित्वनिष्ठान्योन्याभावप्रतियोगितावच्छेदकत्वापेक्षया वृत्तित्वनिष्ठान्योन्याभावप्रतियोगितावच्छेदकत्वस्यैव लघुत्वेन तदवच्छिन्नभेदरूपव्यापकत्वस्य तादृशाभावीयप्रतियोगितायामसंभवात्; न च घटभेदसाध्यके तादृशाभावाप्रसिद्ध्या अव्याप्तिरेव विवक्षितेति वाच्यम्। केवलान्वयिनि वह्निमान् धूमादित्यादौ च सर्वत्राप्रसिद्धिसंभवे तदुपेक्षाया निर्बीजत्वात्। अत्र केचित्——वृत्तित्वांशे व्यधिकरणधर्मावच्छिन्नाभाववन्निरूपितत्वस्योपलक्षणतया घटत्वेन जगद्वृत्तित्वाभावमादाय सद्धेतौ सर्वत्र लक्षणसमन्वयेन घटभेदसाध्यकेऽतिव्याप्तिरेव विवक्षितेत्याहुः।**

**तदवच्छिन्नैकभेदनिवेशासंभवादिति। अथैवमपि विषयितासंबन्धेन हेतुतायामव्याप्तिस्तत्र व्यधिकरणधर्मावच्छिन्नसाध्याभाववद्वृत्तित्वत्वस्य तादृशाभाववद्वृत्तित्वनिष्ठव्यधिकरणधर्मावच्छिन्नप्रतियोगिताव्यापकत्वासंभवात्। तथा हि तादृशप्रतियोगित्वविषयतात्वयोः समनैयत्येन विषयि-**

[1] साध्याभावाघटितस्यैव——अ.

[2] तत्साध्यकाव्याप्तिस्तु अनुपादेया——अ.

तानिष्ठभेदप्रतियोगितावच्छेदकत्वापेक्षया प्रतियोगितासमानाधिकरणभेदप्रतियोगितावच्छेदकत्वस्य गुरुत्वेन प्रतियोगितानवच्छेदकतया तदवच्छिन्नभेदरूपव्यापकत्वाप्रसिद्धेः। न च तत्रापि प्रतियोगितासमानाधिकरणभेदप्रतियोगितावच्छेदकभेदकूटमेव निवेश्यमिति वाच्यम्; तथा सति वह्निमान् धूमात्, वाच्यं ज्ञेयत्वाद् इत्यादौ धूमज्ञेयत्वनिष्ठव्यधिकरणधर्मावच्छिन्नसाध्याभाववद्वृत्तित्वस्य तद्व्यक्तित्वेन योऽभावस्तदीयप्रतियोगितायास्तादृशवृत्तित्वनिष्ठतद्व्यक्तित्वापेक्षया गुरुत्वेन तादृशसाध्याभाववद्वृत्तित्वनिष्ठभेदप्रतियोगितावच्छेदकं यद्यत्तद्भिन्नत्वेन तादृशसाध्याभाववद्वृत्तित्वत्वे तादृशभेदकूटात्मकतद्व्यापकत्वसत्त्वेन च तादृशप्रतियोगिताकाभावस्यापि लक्षणघटकतया असंभवापत्तेः। न च भेदप्रतियोगितावच्छेदकत्वमपि प्रतियोगिताविशेषणं दातुं शक्यम्। तथा सति विषयितासंबन्धेन हेतुतायां जगद्विषयतात्वरूपव्यधिकरणधर्मावच्छिन्नसाध्याभाववद्वृत्तित्वत्वसमनियतप्रतियोगितायास्तादृशविषयित्वनिष्ठाया विषयताया विषयस्वरूपत्वमते केवलान्वयितया भेदप्रतियोगितावच्छेदकत्वाभावेन तादृशप्रतियोगिताया अप्रसिद्ध्या अव्याप्त्यापत्तेरिति चेन्न; प्रतियोगिताया अखण्डत्वमतेनैतदभिधानात्तन्मते तस्याः स्वरूपत एवावच्छेदकत्वान्नोक्तदोषः।

## गादाधरी

(६४) कल्पान्तरेण तद्वद्वृत्तित्वाभावस्य परिष्कारः।

अत्र कल्पे व्यधिकरणधर्मावच्छिन्नसाध्याभाववद्वृत्तित्वत्वसमनियतप्रतियोगिताकस्य पर्वतवृत्तित्वपर्वतान्यवृत्तित्वोभयत्वावच्छिन्नाभावस्य पर्वताद्यवृत्तिवृत्तिमद्वृत्तेः धूमादावभावात्, एकमात्रवृत्तिहेतावपि तादृशप्रतियोगिताकस्य एतत्क्षणावच्छिन्नवृत्तित्वैतदन्यक्षणावच्छिन्नवृत्तित्वोभयत्वाद्यवच्छिन्नाभावस्य एतत्क्षणावृत्तौ वृत्तिमति वर्तमानस्याभावादसंभवः। तादृशाभावव्यावर्तनाय

**व्यासज्यवृत्तिधर्मानवच्छिन्नप्रतियोगिताकत्वनिवेशे गौरवम्। पर्वतवृत्तित्वत्वादिना जगद्वृत्तित्वसामान्याभावस्य व्यावृत्त्यसंभवश्चेत्यतः कल्पान्तरमनुसरति——तत्तत्साध्याभावेति। अतिरिक्तान्तानिवेशे व्यधिकरणधर्मावच्छिन्नाभावमात्रस्य संग्रहाद् व्यभिचारिमात्रेऽतिव्याप्तिरिति तन्निवेशितम्। यद्यपि यथाश्रुतेनानेन महानसवृत्तित्वत्वादिना व्यधिकरणधर्मावच्छिन्नसाध्याभाववद्वृत्तित्वाभाववारणं न संभवति, महानसादिनिरूपितत्वविशिष्टवृत्तित्वत्वस्य साध्याभाववन्निरूपितत्वविशिष्टवृत्तित्वत्वान्यत्वविरहात्। तथापि साध्याभाववद्वृत्तित्वत्वानिरूपितसमानाधिकरणधर्मनिरूपितावच्छेद्यत्वशून्यत्वस्यानवच्छिन्नान्तेन विवक्षणान्न दोषः। महानसवृत्तित्वत्वादिनिरूपितावच्छेद्यत्वस्य साध्याभाववद्वृत्तित्वत्वरूपविशिष्टपदार्थानिरूपितत्वात्। न चैवमपि साध्याभाववन्महानसवृत्तित्वत्वावच्छिन्नाभाववारणमशक्यम्, तादृशधर्मनिरूपितावच्छेद्यतायां तद्घटकसाध्याभाववद्वृत्तित्वत्वनिरूपितत्वस्य अधिकंत्वित्यादिन्यायेनाव्याहतत्वादिति वाच्यम्। गुरुधर्मस्याभावप्रतियोगितानवच्छेदकतया महानसवृत्तित्वत्वसमनियतोपदर्शितगुरुधर्मस्याभावप्रतियोगितानवच्छेदकत्वात्।**

## कृष्णंभट्टीयम्

पर्वताद्यवृत्तीति। महानसादिमात्रसंयुक्ते घटादौ, सत्तादिसाध्यके च घटसमवेतत्वघटान्यसमवेतत्वोभयाभावो घटत्वादौ बोध्यः। पर्वतवृत्तित्वत्वादिनेत्यादिपदं धूमनिष्ठवृत्तित्वत्वेन वृत्तित्वसामान्याभावादिसङ्ग्राहकम्। ननु व्यासज्यवृत्तित्वं स्वसमानाधिकरणभेदप्रतियोगितावच्छेदकत्वे सति स्वसमानाधिकरणत्वम्, अतो न दोषः इति चेन्न; सत्यन्तार्थस्थानेऽति-

रिक्तत्वान्तनिवेशे समनैयत्याप्रवेशात् लाघवमित्याशयेन कल्पान्तरोक्तेः। महानसेति। व्यधिकरणधर्मावच्छिन्नसाध्याभाववद्वृत्तित्वत्वस्य प्रतियोगिविशेषणताप्रदर्शनं महानसवृत्तित्वत्वाद्यभेदस्य निर्विवादत्वलाभाय।

## गादाधरी

(६५) गुरुधर्मस्याभावप्रतियोगितानवच्छेदकत्वेऽतिव्याप्तिशङ्का।

अथ गुरुधर्मस्याभावप्रतियोगितानवच्छेदकत्वे साध्याभावपदस्य साध्यतावच्छेदकावच्छिन्नव्यापकतावच्छेदकरूपावच्छिन्नाभावपरतया धूमवान् वह्नेरित्यादावतिव्याप्तिः। धूमत्वाद्यवच्छिन्नव्यापकतावच्छेदकरूपावच्छिन्नाभाववद्वृत्तित्वत्वस्य समनियतधूमत्वाद्यवच्छिन्नाभाववद्वृत्तित्वत्वापेक्षया गुरुत्वेनाभावप्रतियोगितावच्छेदकत्वविरहेण तदवच्छिन्नाभावाप्रसिद्धेः; धूमत्वाद्यवच्छिन्नाभाववद्वृत्तित्वत्वावच्छिन्नप्रतियोगितायाश्च धूमत्वाद्यवच्छिन्नव्यापकतावच्छेदकावच्छिन्नाभाववद्वृत्तित्वत्वरूपविशिष्टपदार्थानवच्छिन्नतया तन्निरूपकाभावस्य निरुक्ताभावविशेषणानाक्रान्तत्वेन व्यधिकरणधर्मावच्छिन्नप्रतियोगिताकस्य साध्याभाववद्वृत्तित्वाभावस्यैव लक्षणघटकत्वात्।

यदि च साध्यतावच्छेदकावच्छिन्नव्यापकतावच्छेदकरूपावच्छिन्नप्रतियोगिताकाभावस्य तेन रूपेण न निवेशः, अपि तु तत्तदभावत्वेनैव, एतदेव सूचयितुं तत्तत्पदमुपात्तम्। एवं च तत्तद्व्यक्तित्वेन धूमाभावघटिततदभाववद्वृत्तित्वत्वावच्छिन्नाभावस्य लक्षणघटकतया न धूमादिसाध्यकेऽतिव्याप्तिरित्युच्यते। तदापि

**[1]घटभिन्नं एतद्व्यक्तिभिन्नं[2] वा मेयत्वादित्यादावतिव्याप्तिः। तत्र तद्व्यक्तित्वेन रूपेण घटभेदाभावघटिततत्तद्व्यक्तिमद्वृत्तित्वत्वापेक्षया लघोस्तत्समनियतस्य किंचिद्विशेषणानवच्छिन्नघटत्वघटितघटवृत्तित्वत्वस्यैवाभावप्रतियोगितावच्छेदकतया तद्व्यक्तिमद्वृत्तित्वत्वावच्छिन्नाभावाप्रसिद्धेः, घटवृत्तित्वत्वावच्छिन्नप्रतियोगितायाः साध्याभाववद्वृत्तित्वत्वरूपविशिष्टपदार्थानवच्छिन्नतया तन्निरूपकाभावस्य लक्षणघटकत्वासंभवात्। व्यधिकरणधर्मावच्छिन्नसाध्याभाववद्वृत्तित्वत्वाच्छिन्नाभावस्यैव तथात्वात्।**

## कृष्णंभट्टीयम्

समनियतेति। धूमत्वेन घटाभावादिसाधारणरूपेण समनैयत्यभङ्गाद् विशिष्यापि साध्याभावनिवेशो बोध्यः। निरुक्तौ व्यापकतावच्छेदकत्वस्य विशेषणतया निवेशः। अतः तद्रूपस्य गुरुत्वम्, न तु अप्रसिद्धत्वम्। आधेयतावच्छेदककोटौ व्यापकतावच्छेदकत्वप्रवेशात्। धूमत्वावच्छिन्नाभाववद्वृत्तित्वत्वे च व्यापकतावच्छेदकत्वोपलक्षितधर्मावच्छिन्नाभावो घटक इति लघुत्वम्। विशिष्टेति। धूमाभाववद्वृत्तित्वमिति ज्ञानस्य साध्यव्यापकतावच्छेदकताविशिष्टधर्मावच्छिन्नाभाववद्वृत्तित्वत्वाविषयकतया वृत्तिनियामकीभतविषयतासंबन्धावच्छिन्नप्रतियोगितायामेव तादृशविशिष्टपदार्था-

[1] घटभिन्नं मेयत्वादित्यादौ एतद्घटतद्घटान्यतरभेदाभावमादायातिव्याप्तिवारणं संभवति; एतद्घटतद्घटान्यतरत्वरूपाभावस्य तद्व्यक्तित्वेनैव प्रतियोगितावच्छेदककोटिप्रविष्टतया तद्व्यक्तित्वविशेषितान्यतरत्वरूपाभावाधिकरणवृत्तित्वत्वावच्छिन्नाभावस्य हेतावसत्त्वात्। अन्यतरत्वस्याखण्डोपाधित्वे मानाभावेन स्वरूपतः प्रतियोगितावच्छेदककोटावप्रवेशनात् तद्व्यक्तित्वपर्यन्तानुधावनम्। तद्व्यक्तित्वस्य स्वरूपत एव भानोपगमात् न तस्य तद्व्यक्तित्वेन प्रतियोगितावच्छेदककोटौ निवेशः—रा.

[2] एतद्व्यक्तिभिन्नं वा इति पाठः क्वचिन्नास्ति।

वच्छिन्नत्वप्रसिद्धिः। [1]प्रतियोगित्वान्तं परिचायकम् [2]तत्तद्वृत्तित्वेनैव वा अभावनिवेश [3]इत्याशयेनाह––यदि चेति।

न निवेश इति। न च तत्तदभावत्वेन न निवेश्यते, किन्तु साध्यव्यापकतावच्छेदकत्वोपलक्षितरूपावच्छिन्नप्रतियोगिताकत्वेनैवेति वाच्यम्। समानाधिकरणधर्मावच्छिन्नसाध्याभाववद्वृत्तित्वत्व[4]निरूपितावच्छेद्यताया व्यधिकरणधर्मावच्छिन्नसाध्याभावघटिततादृशप्रतियोगिताकत्वाश्रयाभाव-वद्वृत्तित्वत्वरूपविशिष्टानवच्छिन्नतया अतिव्याप्तेर्वारणाय एकैकप्रतियोगितायामेकैकसाध्याभावस्य निवेशार्थं तद्व्यक्तित्वस्यावश्यकतया प्रतियोगिताकत्वान्तस्यैवानिवेशोक्तेः। घटभिन्नत्वसाध्यके तद्घटैतद्घटान्यतरभेदाभाव एव दोषवारकः; तादृशान्यतरत्वरूपस्य तस्य तद्व्यक्तित्वेनैव प्रतियोगितावच्छेदककोटौ[5] प्रविष्टत्वात्। तद्विशेषितान्यतरत्वरूपाभावाधिकरणवृत्तित्वाभावस्य हेतावसत्त्वात्; अन्यतरत्वस्याखण्डोपाधित्वे मानाभावेन स्वरूपतः प्रतियोगितावच्छेदककोटचप्रवेशादिति तद्व्यक्तिभिन्नत्वानुधावनम्। तद्व्यक्तित्वस्य स्वरूपतो भानम्। अन्यथा तत्रापि [6]विषयतानवस्थापात इति, तथैव प्रतियोगितावच्छेदककोटिप्रवेशः। तद्व्यक्तित्वस्य स्वरूपतो [7]भानमते तद्व्यक्तित्वभिन्नं मेयत्वादित्यादावतिव्याप्तिः घटत्वभेदसाध्यकवदिदानीं पिहितैव, जातेरेव स्वरूपतो वृत्तित्वादौ भानं, न तद्व्यक्तित्वादेरिति वा तत्त्यागः इति [8]बोध्यम्।

[1] प्रतियोगिताकत्वान्तम्––अ.
[2] तत्तद्व्यक्तित्वेनैव चाभावनिवेश––अ. अयं पाठः साधुः––स्व.
[3] इत्याशयवानाह––अ.
[4] निरूपितेति पाठो नास्ति––अ.
[5] कोटिप्रविष्टत्वात––अ.
[6] विषयिता––अ.
[7] भाने––अ.
[8] ध्येयम्––अ.

## गादाधरी

यदि चाभावधर्मो विशेषणविधया न निवेश्यते, अपि तु अभावप्रभृतिरेव। अभावे तु साध्यतावच्छेदकावच्छिन्नव्यापकतावच्छेदकरूपावच्छिन्नप्रतियोगिताकत्वमुपलक्षणविधया निवेश्यते। एतल्लाभायैव तत्तत्पदोपादानमपि; न तु तत्तद्व्यक्तित्वेनाभावनिवेशलाभार्थम्; उपलक्षणीभूतप्रतियोगिताविशेषणेनैवाभावान्तरव्यावृत्तिसंभवे तत्तद्व्यक्तित्वस्योपलक्षणतया निवेशे प्रयोजनविरहात्। एवं च घटवृत्तित्वत्वावच्छिन्नाभावोऽपि उक्तस्थले लक्षणघटकः, घटभेदाभावस्य घटत्वस्य तत्प्रतियोगितावच्छेदकघटकत्वात्। प्रतियोगिताविशेषोपलक्षिताभाववद्वृत्तित्वत्वपर्याप्तनिरूपकताकान्यत्वपर्यन्तानिवेशाद्[1] धूमादिसाध्यकस्थले निर्धूमवृत्तित्वत्वावच्छिन्नाभावस्य प्रतियोगितावच्छेदकशरीरेऽभावविशेषणस्याधिकस्य[2] निवेशेऽपि न क्षतिः। न चाभावप्रतियोगिकोटौ उपलक्षणतया भानस्यानुभवविरुद्धत्वाद् विशिष्टनिरूपितत्वाभावरूपस्य निरूपितत्वसंबन्धावच्छिन्नविशिष्टाभावरूपस्य वा विशिष्टानिरूपितत्वस्य प्रतियोगिकोटौ[3] प्रतियोगिताविशेषस्य कथमुपलक्षणविधया निवेश इति वाच्यम्। [4]प्रतियोगिता-

[1] अवच्छेदकतायामित्यादि—रा.

[2] धूमादेः प्रतियोगिनः अभावत्वस्य च—रा.

[3] प्रतियोगितावच्छेदककोटौ—अ.

[4] अभावप्रतियोगिप्रकारशरीरे प्रतियोगितावच्छेदककोटचप्रविष्टस्य न भानमित्येव हि अभावप्रतियोगिनि तत्त्वावच्छेदके वा उपलक्षणस्य न भानमित्यस्यार्थः। प्रकृते तु निरुक्तप्रतियोगिताकत्वस्यावच्छेद्यतानिरूपकतावच्छेदकतया अप्रवेशादेवोपलक्षणत्वम्, न तु निरूप्यत्वाभावप्रतियोगितावच्छेदकघटकतया अप्रवेशात्; अभावप्रतियोगितावच्छेदकप्रविष्टाभावस्याभावान्तरव्यावृत्तये तादृशप्रतियोगिताकत्वस्य प्रतियोगितावच्छेदकघटकतयैव निवेशात्। अधिकपाठः क्वचित् पुस्तके दृश्यते इति —अ.

**संसर्गकज्ञान एव तादृशभानस्य तथात्वात् । जात्यवच्छिन्नप्रतियोगिताकोऽभाव इत्याद्याकारस्य स्वरूपतो घटत्वाद्यवच्छिन्नप्रतियोगिताकाभावभानस्य सर्वसम्मतत्वात् ।**

कृष्णंभट्टीयम्

विशेषणविधयेति । अन्यथा घटभेदादिसाध्यके, घटवृत्तित्वत्वावच्छेद्यतायां, स्वरूपतो घटत्वघटितायां, प्रतियोगिताकत्वादिविशिष्टघटत्ववद्वृत्तित्वत्वरूपविशिष्टपदार्थानवच्छिन्नतया अतिव्याप्तिः स्यात् । तदनिवेशे तु घटवृत्तित्वं नास्तीति प्रत्ययविषयसंसर्गीभूतप्रतियोगिताया एव तदुपलक्षितघटत्वादिघटितप्रतियोगितात्वेन प्रकारविधया निवेशस्य वाच्यतया नातिव्याप्तिरिति भावः ।

अथैवं गुणाद्यन्यत्वविशिष्टसत्ताभावादिसाध्यके सत्ताप्रभृत्येव निवेशादव्याप्तिः । तद्व्यक्तित्व[1]निवेशेऽभावनिष्ठतद्व्यक्तित्वस्य प्रतियोगिताकत्वादन्यतया[2] विशिष्टाधिकरणतानिवेशेन तद्वारणात् । मैवम्––कूटघटितलक्षणकर्त्राक्षेपकतया विशिष्टातिरिक्तत्वोपादानेऽपि अदोषात् । तत्र साध्याभावत्वस्य वैशिष्ट्ये विशिष्टसत्ताधिकरणतायां वोपगमसंभवाच्च तयोः निर्विशेषितभानात्मकस्वरूपतो भानाभावेऽपि वृत्तित्वत्वपर्याप्तनिरूपकतायाः परित्यजनीयतया अदोषात् । अपि त्विति । नकारं विहाय विशेषणविधया निवेश्यते इत्यनुवर्तते । घटत्वात्मकाखण्डाभावाभावानां[3] घटवृत्तित्वत्वनिरूप्यत्वं नास्तीति प्रतीतौ स्वरूपतो भानसंभवात् । एवं सति तत्तत्पदोपादानवैयर्थ्यं स्याद् इत्याशङ्कां परिहरति––एतदिति । न तु तत्तद्व्यक्तित्वेनेति । एवं च तत्तद्व्यक्तित्वेनाभावनिवेशध्रौव्येण [4]तत्पदोपादानमपि

[1] निवेशे त्वभावनिष्ठेत्यादि––अ.

[2] अनन्यतया––अ.

[3] अखण्डाभावानाम्––अ.

[4] तत्तत्पदोपादानमपि––अ.

साधु सङ्गच्छत इत्यग्रिमपङ्क्तिः भ्रान्तिकल्पितैव। उपलक्षणतयापि तत्तद्व्यक्तित्वेन निवेशस्यैतत्पक्षेऽसत्त्वात्। अभावान्तरम्, तत्साध्याभावादि; यद्वा धूमत्वेन घटाभावादि। अयं भावः––[1]तत्साध्याभावमादायाव्याप्तिवारणाय प्रतियोगिताया विशेषणविधया निवेशे निर्धूमवृत्तित्वत्वस्य व्यधिकरणधर्मावच्छिन्नसाध्याभाववद्वृत्तित्वत्वाद्यन्यत्वाद् अतिव्याप्तिरतः तत्तद्व्यक्तित्वनिवेशनमावश्यकम्। तस्या उपलक्षणत्वे तु तस्य तादृशयत्किंचित्प्रतियोगिताकत्वोपलक्षिताभावाधिकरणवृत्तितात्वरूपत्वादेवोक्तरीत्या निर्धूमवृत्तितात्वावच्छिन्नप्रतियोगितायां तत्तत्प्रतियोगिताकाभावस्य स्वाधिकरणवृत्तितात्वानिरूपितावच्छेद्यताशून्यत्वेन निवेशसंभवादतिव्याप्त्यसत्त्वात् तदनावश्यकमिति।

उपलक्षणतया प्रतियोगितानिरूपितानुयोगितावच्छेदकतयेति पाठः। ननु तथापि निर्धूमवृत्तित्वत्वावच्छिन्नप्रतियोगितानिष्ठावच्छेद्यतानिरूपकतया[2] उपलक्षिताभाववद्वृत्तित्वत्वे पर्याप्तिः न संभवति। निर्धूमवृत्तित्वं नास्तीति प्रत्यये धूमान्तर्भावेनैवावच्छेद्यतानिरूपकतापर्याप्तेर्भानात्[3]। एवं धूमाभावनिष्ठतत्तद्व्यक्तित्वादिना[4] [5]तत्तद्व्यक्तिमद्वृत्तित्वाभावप्रतियोगितानिष्ठावच्छेद्यतायां [6]तत्तद्व्यक्तित्वान्तर्भावेन पर्याप्तिनिरूपकताकत्वमेवेति तत्पर्याप्तिनिरूपकताकान्या या तादृशावच्छेद्यता तच्छून्यत्वस्य तादृशप्रतियोगितायामसत्त्वेन तदभावस्य लक्षणाघटकत्वादतिव्याप्तिरित्याशङ्क्य पर्याप्तिर्न प्रवेश्येत्याह––प्रतियोगिताविशेषेति। न चायोगोलकभेदाभावस्यायोगोलकत्वरूपतया स्वरूपतः तद्घटितायोगोलकवृत्तित्वत्वाच्छिन्नप्रति-

1 तत्तत्साध्याभावमादाय––अ.

2 निरूपकतायाः––अ.

3 पर्याप्तिभानात्––अ.

4 तद्व्यक्तित्वादिना––अ.

5 तद्व्यक्तिमद्वृत्तित्वाभावेत्यादि––अ.

6 तद्व्यक्तित्वान्तर्भावेन––अ.

योगिताया अग्रिमरीत्या तादृशप्रतियोगिताकत्वोपलक्षिताभावाधिकरण-[1]वृत्तित्वनिष्ठनिरूपकताकान्यतादृशावच्छेद्यताशून्यत्वेनानतिप्रसङ्गात् पर्याप्तिप्रतिक्षेपवैयर्थ्यमिति वाच्यम्। अयोगोलकभेदाभावस्य मिश्ररीतिपराहत्वेन लक्षणाघटकत्वात्। सद्धेतौ साध्यं व्यधिकरणधर्मं वा अनन्तर्भाव्य अभाववद्वृत्तित्वत्वे निरूपकतापर्याप्तेः क्वचित् प्रसिद्धया व्यधिकरणधर्मावच्छिन्नवृत्तित्वाभावमादाय लक्षणसङ्गतेः तन्नोक्तम्।

ननु लक्षणे प्रतियोगिताकत्वान्तनिवेशे तस्योपलक्षणतया निवेशासंभवाद् [2]घटवृत्तित्वावच्छेद्यतायां तादृशप्रतियोगिताकत्ववदभाववद्[3]वृत्तितात्वरूपविशिष्टपदार्थनिरूप्यत्वमक्षतमित्याशङ्कते––न चेति।

## न्यायरत्नम्

**यदि चाभावधर्मो विशेषणविधया न निवेश्यते अपि तु अभावप्रभृतिरेवेति। अयमर्थः––प्रकृतनिरुक्तौ साध्यव्यापकतावच्छेदकरूपावच्छिन्नप्रतियोगिताकाभावत्वनिष्ठावच्छेदकतानिरूपकीभूता या अभावनिष्ठावच्छेदकता तन्निरूपकीभूता या अधिकरणनिष्ठावच्छेदकता तन्निरूपकीभूता या निरूपितत्वनिष्ठावच्छेदकता तन्निरूपकीभूता या वृत्तित्वत्वनिष्ठनिरूपकता तन्निरूपितस्य निरूप्यत्वस्य योऽभावः तत्त्वेन तत्तत्साध्याभाववद्वृत्तित्वत्वनिरूपितत्वाभावस्य न प्रवेशः। अपि तु साध्यव्यापकतावच्छेदकरूपावच्छिन्नप्रतियोगिताकाभावनिष्ठावच्छेदकतानिरूपकाधिकरणनिष्ठावच्छेदकतानिरूपकेत्यादिक्रमेणैव। एवं च घटवृत्तित्वनिरूपितत्वं नास्तीति धीसिद्धाभावस्य निरुक्तविशेषणाक्रान्तस्य घटवृत्तित्वत्वावच्छिन्नप्रतियोगितायामसत्त्वान्न तादृशाभावस्य लक्षणघटकत्वानुपपत्तिः। तत्र चाभावनिष्ठावच्छेदकतायां किंचिन्निष्ठावच्छेदकत्वानिरूपितत्वरूपमन-**

[1] वृत्तित्वत्व––अ.

[2] घटवृत्तित्वत्वावच्छेद्यतायाम्––अ.

[3] वृत्तित्वत्वरूप––अ.

वच्छिन्नत्वं न निवेश्यते, येन निर्धूमवृत्तित्वत्वनिरूपितत्वं नास्तीति धीसिद्धाभावस्य निरुक्तविशेषणाक्रान्तत्वं न स्यात् । तत्तदभाववद्वृत्तित्वत्वनिरूपितत्वत्वपर्याप्तावच्छेदकताकाभावस्यैव निवेशनीयत्वाद् इति ।

अथात्र तदभावत्वस्योपलक्षणत्वं विशेषणत्वं वा विवक्षितम् । आद्ये--धूमाद्यभावनिष्ठावच्छेदकतानिरूपकाधिकरणनिष्ठावच्छेदकतानिरूपकनिरूपितत्वनिष्ठावच्छेदकताकवृत्तित्वत्वनिष्ठनिरूपकताकत्वत्वपर्याप्तप्रतियोगितावच्छेदकताकाभावत्वेनैव निवेश इति पर्यवसितम् । तथा च धूमाभावत्वावच्छिन्नत्वविशेषितावच्छेदकताघटितं यद् धूमाभावत्वविशिष्टाधिकरणवृत्तित्वत्वनिरूपितत्वं तत्पर्याप्तावच्छेदकताकप्रतियोगिताकाभावस्य सङ्ग्रहो दुर्घटः । यदि च तस्यासङ्ग्रहेऽपि न क्षतिः, धूमाभावनिष्ठावच्छेदकताघटितं यद्धूमाभावत्वोपलक्षिताधिकरणनिरूपितवृत्तित्वत्वनिरूपितत्वत्वं तत्पर्याप्तप्रतियोगितावच्छेदकताकाभावमादायैव निर्धूमवृत्तित्वाभावस्य लक्षणघटकत्वोपपत्तिरित्युच्यते; तदा तत्तदभावत्वेन निवेशो व्यर्थः, गौरवग्रस्तश्च । साध्यव्यापकतावच्छेदकरूपावच्छिन्नप्रतियोगिताकाभावत्वेनानुगतेनोपलक्षणीभूतेन निवेशसंभवात् । तथा निवेशे धूमाभावत्वेन धूमाभावघटितविशिष्टनिरूपितत्वत्वावच्छिन्नाभावस्यासङ्ग्रहेऽपि धूमव्यापकतावच्छेदकरूपावच्छिन्नाभावनिष्ठावच्छेदकतानिरूपकाधिकरणनिष्ठावच्छेदकतानिरूपकनिरूपितत्वनिष्ठावच्छेदकतानिरूपित - वृत्तित्वत्वनिष्ठनिरूपकताकत्वं नास्तीति धीविषयाभावमादायैव निर्धूमवृत्तित्वाभावघटवृत्तित्वाभावादेर्लक्षणघटकत्वसंभवात् । अन्त्ये--घटभिन्नं मेयत्वादित्यादावतिव्याप्तिरिति चेन्न; साध्यव्यापकतावच्छेदकरूपावच्छिन्नाभावत्वेनोपलक्षणेन साध्याभावनिवेशन एव ग्रन्थकृत्तात्पर्यकल्पनात् ।

## गादाधरी

प्रकृते च साध्यतावच्छेदकावच्छिन्नव्यापकतावच्छेदकरूपावच्छिन्नप्रतियोगिताको योऽभावः तद्वद्वृत्तित्वत्वनिरूपितत्वप्रति-

योगिताकाभाववतः समानाधिकरणधर्मावच्छेद्यत्वस्य योऽभावः तद्वत्प्रतियोगिताका यावन्तोऽभावाः तद्वान् हेतुरित्याकारकव्याप्तिग्रहे प्रतियोगिताया विशेषणत्वेनानुपपत्त्यभावात्। अत एव व्यापकतावच्छेदकत्वादेरपि उपलक्षणविधया भानोपपत्तिः। न च तादृशनिरूपितत्वप्रतियोगिकस्य तत्त्वावच्छिन्नप्रतियोगिताकस्य वा अभावस्य निवेशे निर्धूमवृत्तित्वत्वाद्यवच्छिन्नाभावप्रतियोगितानिष्ठावच्छेद्यतायामपि किंचिद्विशिष्टतादृशनिरूपितत्वत्वाद्यवच्छिन्नाभावसत्त्वात् तादृशाभावासंग्रह इति वाच्यम्। तत्तदभाववद्वृत्तित्वत्वनिरूपितत्वत्वपर्याप्तप्रतियोगितावच्छेदकताकाभावस्यैव निवेशनीयत्वात्। [[1]एवं च तत्तद्व्यक्तित्वेनाभावनिवेशध्रौव्येण तत्तत्पदोपादानमपि साधु सङ्गच्छते] इत्युच्यते।

तदापि घटत्वभेदादिसाध्यके व्यभिचारिण्यतिव्याप्तिवारणमशक्यम्, निर्विशेषणकघटत्वादिवृत्तित्वत्वस्यैव तत्र घटत्वादिवृत्तित्वाभावं प्रति प्रतियोगितावच्छेदकतया घटत्वत्वादिरूपसाध्याभावस्य प्रतियोगितावच्छेदकशरीरेऽनिवेशेन व्यधिकरणधर्मावच्छिन्नाभावस्यैव लक्षणघटकत्वात्। न च जातेः समवायेनैव स्वरूपतोऽवच्छेदकत्वम्, न तु संबन्धान्तरेण; अत एव गोत्वादिजातिनिष्ठव्याप्तौ पदविशेषप्रवृत्तिनिमित्तत्वगवेतरासमवेतत्वादेरवच्छेदकत्वं[2] स्वीकुर्वन्ति; न तु तादात्म्यसंबन्धेन लघोरपि गोत्वादिजातेरिति निर्विशेषणघटत्वादिघटितस्य तद्वृ-

[1] [ ] क्वाचित्कपाठः—अ.

[2] एवावच्छेदकत्वम्—अ.

**त्तित्वत्वस्याभावप्रतियोगितावच्छेदकत्वं न संभवतीति वाच्यम्। तादृशनियमे मानाभावात्।**

**यदि चाभावांशस्याप्युपलक्षणत्वं स्वीक्रियते; तदा महानसवृत्तित्वत्वाद्यवच्छिन्नाभाववारणमशक्यमेव। यदि च साध्याभावातिरिक्तविशेषणाविशेषिताधिकरणवृत्तित्वत्वाद्यवच्छेद्यताभिन्नसमानाधिकरणधर्मावच्छेद्यत्वाभावं निवेश्याविशेषितघटत्वादिवृत्तित्वाभावः संगृह्यते; तदा तादृशाभावमादाय जातिसाधारणसद्धेतावव्याप्तिर्वज्रलेपायते।**

**एवं साध्याभाववद्वृत्तितात्वशरीरेऽभावादेर्विशेषणतया प्रवेशे वृत्तिमद्वृत्तिपदमनर्थकमापद्यते। व्यधिकरणधर्मावच्छिन्नसाध्याभाववद्वृत्तित्वस्य यः समानाधिकरणधर्मावच्छिन्नाभावः तत्प्रतियोगितायाः लाघवेन वृत्तित्वत्वेना[1]वच्छिन्नतया [2]तदवच्छेद्यताया अभावघटितविशिष्टपदार्थानिरूपितत्वात्।**

## कृष्णंभट्टीयम्

[3]प्रकृते चेति। धूमाभाववद्वृत्तित्वं नास्तीत्यादिप्रत्ययविषयसंसर्गीभूतद्वितीयप्रतियोगिताया एवोक्तक्रमेण लक्षणघटकत्वं, तत्र च साध्यव्यापकतावच्छेदकरूपावच्छिन्नप्रतियोगिताकाभाववद्वृत्तित्वत्वनिरूपितत्वत्वावच्छिन्नप्रतियोगिताकत्वेन[4] प्रकारविधया धूमाभाववद्वृत्तित्वत्वनिरूपितत्वं नास्तीत्यादिप्रत्ययविषयसंसर्गीभूतप्रतियोगिताया निवेशे तद्धटकाभावे ता-

[1] एवावच्छिन्नतया--अ.

[2] तन्निष्ठावच्छेद्यतायाः--अ.

[3] प्रकृते चेति प्रतीकधारणं नास्ति--अ.

[4] प्रतियोगितात्वेन--अ.

दृशप्रतियोगिताकत्वान्तस्योपलक्षणतया [1]भानं न संभवतीति भावः। यद्यपि भूतले घटो नास्तीत्याकारं स्वरूपतो घटत्वावच्छिन्नाभावभानमस्ति, न तु अवच्छेद्यत्वेऽभाववद्वृत्तित्वनिरूपितत्वं नास्तीत्याकारकं स्वरूपतोऽभावभानम्। तथापि धूमाभाववद्वृत्तित्वत्वनिरूप्यत्वं नास्तीत्यादिज्ञानसत्त्वात् प्रतियोगिताकत्वविशेषिताभावावगाहिप्रतियोगिताप्रकारकं तादृशनिरूप्यत्वत्वावच्छिन्नप्रतियोगिताकत्वविशिष्टभानं संभवतीत्याशयः। [2]अभावप्रतियोगिप्रकारशरीरे प्रतियोगितावच्छेदककोटचप्रविष्टस्य न भानमित्येव हि अभावप्रतियोगिनि तत्त्वावच्छेदके वा उपलक्षणस्य न भानमित्यस्यार्थः। [[3]प्रकृते निरुक्तप्रतियोगिताकत्वस्यावच्छेद्यतानिरूपकतावच्छेदकतया अप्रवेशादेवोपलक्षणत्वम्]; न तु निरूप्यत्वाभावप्रतियोगितावच्छेदकघटकतया अप्रवेशात् तदभावप्रतियोगितावच्छेदकप्रविष्टाभावस्य अभावान्तरव्यावृत्तये तादृशप्रतियोगिताकत्वस्य [4]प्रतियोगितावच्छेदकतयैव निवेशादित्युच्यते[5] इति पाठान्तरं प्रतियोगितायाः विशेषणत्वमसहमानेन कृतं व्याख्यायते। अभावेति। अभावप्रतियोग्यंशे प्रकारः शरीरमिति विग्रहात् साक्षात् परंपरया प्रकार इत्यर्थः। प्रतियोगितेति। प्रतियोगितावच्छेदकतानाश्रायस्येत्यर्थः। प्रतियोगिनीति। साक्षात्प्रकारवारणार्थं विशेषणोपलक्षणयोः प्रतियोगितावच्छेदकताया अग्रे व्युत्पादनात्। प्रकृतेति। धूमाभाववद्वृत्तित्वत्वावच्छिन्नसंसर्गीभूतप्रतियोगिताया एवोक्तरूपत्वं संपाद्यम्। तत्र तादृशप्रतियोगिताकत्वविशिष्टाभावाधिकरणावच्छिन्नवृत्तित्वत्वनिष्ठनिरूपकताकावच्छेद्यतान्यत्वं न प्रवेश्यम्। तथा सति यथामतं विशेष्यविशे-

[1] भानं भवतीपि भावः—अ.

[2] काशीपुस्तके एतादृशपाठो वर्तते—स्व.

[3] [ ] प्रकृते निरुक्तप्रतियोगिताकत्वस्य निरूप्यत्वप्रतियोगिविशिष्टाघटकत्वादेव निरूप्यत्वप्रतियोगिन्युपलक्षणत्वम् इति पाठः काशीपुस्तके।

[4] प्रतियोगितावच्छेदकघटकतयैव—काशीपुस्तके।

[5] इत्युच्यत इति नास्ति काशीपुस्तके।

षणभावापन्नाधिकरणान्तपदार्थपर्याप्तावच्छेदकताकतादृशप्रतियोगिताकत्वावच्छिन्नाभावनिष्ठावच्छेदकतानिरूपिताधिकरणनिष्ठावच्छेदकताकस्वाश्रयाभावाधिकरणीयत्वसंसर्गावच्छिन्नतादृशप्रतियोगिताकत्वनिष्ठनिरूपकताकावच्छेद्यताश्रया वा या वृत्तित्वत्वनिष्ठनिरूपकता [1]तादृशनिरूपकताकान्यत्वप्रवेशेन घटभेदादिसाध्यके घटभेदाभाववद्वृत्तित्वनिष्ठप्रतियोगिताया असङ्ग्रहापत्तिः। तत्र निर्विशेषितघटत्ववद्वृत्तित्वनिष्ठनिरूपकतायाः तादृशप्रतियोगिताकत्वानवच्छिन्नत्वेनान्यत्वान्तसत्त्वात्। अतस्तादृशप्रतियोगिताकाभाववद्वृत्तित्वत्वनिष्ठत्वविशिष्टनिरूपकताकत्वाभाव एव निवेश्यः। तत्र तादृशप्रतियोगिताकत्वमपि प्रतियोगितावच्छेदकघटकम्। अन्यथा निर्धूमवृत्तित्वत्वावच्छिन्नप्रतियोगिताया घटाद्यभावाधिकरणवृत्तित्वत्वनिष्ठनिरूपकताकत्वाभाववदवच्छेद्यतावत्त्वेऽपि धूमाभावमुपादाय [2]तच्छून्यत्वविशेषणनिर्वाहेऽपि महानसीयवह्न्यभावाधिकरणवृत्तित्वत्वावच्छिन्नप्रतियोगितायाः सङ्ग्रहप्रसङ्गादित्यर्थः। अभावप्रभृतिनिवेशाद् घटत्वभेदादीत्यग्रिमग्रन्थसङ्गतिः।

निर्विशेषणकेति। निरूपितत्वसंबन्धेन घटत्वविशिष्टं वृत्तित्वं घट इत्यभिधीयते। एवं च घटात्मकवृत्तित्वाभाव इत्यर्थः। मानाभावादिति। गोत्वादिप्रकारिताप्रकारकानुव्यवसायादौ प्रकारिताद्यंशे स्वरूपत एव गोत्वादेः प्रकारतया तादृशानियमे व्यभिचारोऽपि बोध्यः। एवं च समवायनिरूपितत्वाभ्यामन्यसंबन्धेन जातेः स्वरूपतो न भानमित्येव नियम इति भावः। जातीति। वाच्यं घटत्वत्वात् पटत्वत्वादित्यादौ यथायोगं घटत्वपटत्वादिवृत्तित्वाभावस्य साधारणपदोपादानात् तत्रैव ज्ञेयत्वादिहेतौ सकलघटत्वपटत्वादिवृत्तित्वाभावस्यासत्त्वादिति भावः। ननु समवायप्रकारित्वनिष्ठनिरूपितत्वाभ्यामतिरिक्तसंबन्धघटित एवोक्तनियम

1 तत्कान्यत्वप्रवेशेन—अ.

2 तच्छून्यत्वरूपविशेषणेत्यादि—अ.

इति वृत्तित्वनिरूपितत्वसंबन्धेन स्वरूपतो घटत्वादेर्न प्रकारत्वमिति सकलदोषोद्धाराद् अभावप्रभृतिनिवेशपक्षे दोषमाह––एवमिति ।

### न्यायरत्नम्

तादृशनियमे मानाभावाद् इति । गोत्वादिप्रकारिताप्रकारकज्ञानानुव्यवसाये प्रकारितांशे स्वरूपत एव गोत्वादेः प्रकारतया तादृशनियमे व्यभिचारात्, समवायनिरूपितत्वाभ्यामतिरिक्तसंबन्धेन जातेः स्वरूपतो न भानमित्येवंरूपनियमस्यैव स्वीकारात् समवायेनैवेत्यादि नियमे मानाभावादिति भावः । जातिसाधारणेति । घटत्वत्वपटत्वत्वहेतोर्घटत्वपटत्वादिवृत्तित्वाभावाभावात् । साधारणपदोपादानेनेदं वाच्यं ज्ञेयत्वादित्यादावपि । जातेः समवायेनैवेत्यादि नियमाङ्गीकर्तृमते पूर्वोक्तसकलदोषोद्धाराදभावप्रभृतिविशेषणत्वविवक्षाकल्पे दोषमाह––एवमिति ।

## गादाधरी

(९६) गुरुधर्मस्याभावप्रतियोगितावच्छेदकत्वमतावलम्बनम् ।

अत्र वदन्ति––गुरुधर्मस्याभावप्रतियोगितावच्छेदकत्वमतेनेदमभिहितम् । व्यधिकरणधर्मावच्छिन्नसाध्याभाववन्महानसवृत्तित्वत्वाद्यवच्छिन्नाभाववारणाय च साध्याभाववद्वृत्तित्वत्वपर्याप्तावच्छेदकताभिन्नसमानाधिकरणधर्मनिष्ठावच्छेदकत्वानिरूपकत्वमेव प्रतियोगितायां विशेषणं देयम् । न चैवं घटत्वादिना साध्याभाववद्वृत्तित्वाभावसंग्रहफलकं समानाधिकरणपदोपादानं निषेधद्वयनिवेशनं च विफलम्; तादृशाभावस्यासंग्रहेऽपि केवलान्वयिनि साध्याभाववद्वृत्तित्वत्वेन घटाद्यभावमादाय लक्षणसमन्वयसंभवादिति वाच्यम् । विषयितादिसंबन्धेन यत्र हेतुता तत्र हेतुतावच्छेदकसंबन्धेन साध्याभाववति वृत्तेः साध्याभाववद्विषयतादि-

रूपाया [1]विषयादिस्वरूपत्वेन साध्याभाववद्विषयतात्वादिरूपसाध्याभाववद्वृत्तित्वत्वस्य [2]केवलान्वयितया तदवच्छिन्नाभावाप्रसिद्धेः तादृशाभावघटितलक्षणानुपपत्तेः । न च साध्याभाववद्विषयतात्वादिकं येन संबन्धेनावृत्ति तेन संबन्धेन तदवच्छिन्नाभावमादाय लक्षणसमन्वयः संभवतीति वाच्यम् । कालिकसंबन्धेन साध्याभाववद्वृत्तित्वत्वावच्छिन्नस्य योऽभावस्तस्य [3]ध्वंसाद्यधिकरणहेत्वव्यापकतया[4] स्वरूपसंबन्धावच्छिन्नप्रतियोगितावच्छेदकताकाभावस्यावश्यं निवेशनीयतया व्यधिकरणसंबन्धावच्छिन्नप्रतियोगितावच्छेदकताकाभावस्य लक्षणघटकत्वासंभवात् ।

विषयताया जात्यादिरूपत्वेऽपि विषयतात्वविशिष्टस्य न समवायादिना वृत्तिः, तादृशस्य स्वस्मिन्नेव वृत्तेः; जात्यादौ च समवायाभावात्; किन्तु स्वरूपसंबन्धेनैव । एवं च समवायादिसंबन्धावच्छिन्नप्रतियोगिताक एव विषयतात्वाद्यवच्छिन्नाभावो लक्षणघटको भविष्यतीत्यपि न । कालज्ञानादिरूपहेतौ कालिकविषयितादिसंबन्धावच्छिन्नप्रतियोगिताकसाध्याभाववद्वृत्तित्वत्वावच्छिन्नाभावस्यासत्त्वेन[5] स्वरूपसंबन्धावच्छिन्नप्रतियोगिताका-

1 विषयतात्वादिस्वरूपत्वेन—अ.

2 जगन्मध्ये ज्ञानादेरपि संग्रहात्—रा.

3 कृष्णंभट्टीये, न्यायरत्ने, च ध्वंसाधिकरणेति प्रतीकधारणात् तादृशपाठोऽपि वर्तते इति गम्यते—स्व.

4 हेतुव्यावृत्ततया—अ. कृष्णंभट्टीये न्यायरत्ने च अव्यापकतयेति प्रतीकधारणम्—स्व.

5 अव्याप्तेरिति शेषः; गगनभेदादिसाध्यके घटत्वादिहेतौ लक्षणगमनसंभावान्नासंभवः—रा.

**भावस्यैव निवेशनीयत्वात् । न चैवं साध्याभाववद्वृत्तित्वत्वातिरिक्तसमानाधिकरणधर्मानवच्छिन्नाभावस्यापि तत्राप्रसिद्धिः; घटत्वादेः साध्याभाववद्विषयतादिनिष्ठप्रतियोगितावैयधिकरण्यासंभवादिति वाच्यम् । घटत्वादिना पटाद्यभावस्यैव [1]तथात्वात् ।**

कृष्णंभट्टीयम्

इदमिति । तथा च व्यभिचारिणि नातिव्याप्तिः । यत्रेति । वाच्यं विषयितासंबन्धेन घटादित्यादावित्यर्थः । [2]विषयिताया अतिरिक्ततामते [3]तादृशविषयितात्वेन घटाद्यभावप्रसिद्धेराह––विषयितादीति । एवं च सामान्यरूपेण विशेषाभावानङ्गीकारान्न दोषः । विषयितायाः ज्ञानरूपतामते विषयवृत्तितावच्छेदकसंबन्धावच्छिन्नाभावनिवेशेऽपि विषयित्वेन घटाभावप्रसिद्धेरादिपदं चिन्त्यम् । वस्तुतस्तु साध्याभाववद्वृत्तित्वत्वेन धूमनिष्ठवृत्तित्वघटान्यतराभावादिवारणाय साध्याभाववद्वृत्तित्वत्वनिष्ठप्रतियोगिविशेषणतापन्नीयविलक्षणावच्छेदकताभिन्नसमानाधिकरणनिष्ठावच्छेदकत्वानिरूपकप्रतियोगिताकत्वस्य निवेशनीयतया वैयर्थ्यानवकाशाद् विषयतायाः अतिरिक्तत्वमतेऽपि न दोष इति । ध्वंसाधिकरणहेत्वव्यापकतया । ध्वंसः––संयोगादिध्वंसः तदधिकरणं हेतुस्तदवृत्तित्वेनाव्याप्तेः[4] संपादकतया । न च धूमादौ नाव्याप्तिः; कालिकसंबन्धेन तादृशवृत्तितात्वविशिष्टसंयोगादिध्वंससत्त्वेन[5] तदभावासत्त्वेऽपि तदभावस्य तादृशसंयोगादि-

[1] अत्र 'ईश्वरप्रत्यक्षभिन्नं विषयितया घटात्' इत्यत्रातिव्याप्तिस्तत्रापि घटत्वेन पटाभावस्यैव लक्षणघटकत्वादिति तु नाशङ्कनीयम् । भट्टाचार्यवक्ष्यमाणमहाकालभिन्नं घटादित्येतत्स्थलीयातिव्याप्तिसमशीलत्वेनेष्टत्वात्––रा.

[2] विषयतायाः––अ.

[3] तादृशविषयतात्वेन––अ.

[4] अव्याप्तिसंपादकतया––अ.

[5] सत्त्वे––अ.

ध्वंसस्य संयोगेन वर्तमाने सर्वत्र सत्त्वाद् वृत्तिमद्वृत्तित्वाप्रसिद्धेरिति वाच्यम्। द्रव्यत्वकपालत्वादिसाध्यके समवायेन हेतौ घटादावव्याप्तेरुक्तत्वात्। ईदृशस्याप्यभावस्य ध्वंसानधिकरणे वृत्तिमति वृत्तेः यावदन्तर्गतस्य तत्रासत्त्वादिति। जात्यादिनित्यहेतुके केनापि संबन्धेन तादृशसंयोगादिध्वंसासत्त्वाद् ईदृशाभावसत्त्वेन नासंभवः।

उक्तस्थले प्रकारान्तरेणाव्याप्तिं वारयतां मतमुत्थापयति––विषयताया इति। स्वस्मिन्नेव––विषयतात्मकजात्यादावेव। एतेन जातेः समवायेन घटादौ सत्त्वात् समवायावच्छिन्न[1]विषयित्वाभावकथंता निरस्ता। कालः––क्रिया। तथा च वह्निमान् तत्क्रियातः, आत्मा ज्ञानादित्यादौ इत्यर्थः। कालिकेति। यावदन्तर्गतस्य तस्य कालज्ञानादिभिन्ने वृत्तिमति वृत्तित्वं स्मर्तव्यम्। गगनभेदादिसाध्यके घटत्वादौ लक्षणसङ्गतेर्नासंभवः। निषेधद्वयसमानाधिकरणपदो[2]पादानेऽपि वाच्यत्वसाध्यके विषयितासंबन्धेन घटादिहेतावव्याप्तिं शङ्कते––न चैवमिति। घटत्वादिनेति। तादृशस्वसमानाधिकरणधर्मनिष्ठावच्छेदकतानिरूपकं यद्यत् तदन्यत्वस्य निवेश्यतया घटत्वादेः घटाद्यात्मकसाध्याभाववद्विषयतानिष्ठप्रतियोगितासामानाधिकरण्येऽपि पटाद्यात्मकविषयतानिष्ठप्रतियोगितासामानाधिकरण्यविरहात् लक्षणसमन्वय इति भावः। घटत्वपटत्वाभ्यां साध्याभाववद्विषयत्वाभावस्तु नोक्तः। यादृशावच्छेदकतापर्याप्त्यधिकरणं स्वसमानाधिकरणं तादृशावच्छेदकत्वानिरूपकत्वविवक्षापत्तेः।

## न्यायरत्नम्

**[3]ध्वंसाधिकरणहेत्विति। कपालं घटादित्यादावित्यर्थः। संयोगेन वृत्तिमति तादृशध्वंसवत्त्वनियमेन तादृशाभावस्य वृत्तिमद्वृत्तित्वाभावादतः**

[1] विषयत्वाभाव––अ.	[2] पदयोरुपादानेऽपि––अ.

[3] 'ध्वंसाद्यधिकरणे'त्यादि गादाधर्यां पाठो वर्तते। कृष्णंभट्टीयेऽपि ध्वंसाधिकरणेत्यादिप्रतीकधारणम्––स्व.

संयोगेन धूमस्य हेतुत्वपरित्यागः। अव्यापकतया, अवृत्तितया। तथा च तादृशाभावस्य समवायेन वृत्तिमति रूपादावसत्त्वादव्याप्तिरिति भावः। स्वस्मिन्नेव, जात्यादावेव। एतेन जातेर्घटादौ समवायेन सत्त्वात् समवायावच्छिन्नविषयत्वाभावस्य घटवृत्तित्वे कथंता निरस्ता। कालेति। कालपदं क्रियापरम्। तथा च वह्निमान् [1]क्रियातः, आत्मा ज्ञानाद् इत्यादावित्यर्थः। गगनभेदसाध्यके घटत्वहेतौ लक्षणसमन्वयान्नासंभवः।

## गादाधरी

अथैवमपि सामानाधिकरण्यमुपेक्ष्य साध्याभाववद्वृत्तित्वनिष्ठत्वेन धर्मविशेषणकल्पे घटत्वादेः घटादिस्वरूपसाध्याभाववद्विषयतानिष्ठत्वेन, गगनादेरपि स्वनिष्ठविषयतात्मकत्वेन साध्याभाववद्विषयतानिष्ठतया साध्याभाववद्वृत्तित्वत्वातिरिक्तवृत्तित्ववृत्तिधर्मानवच्छिन्नाभावाप्रसिद्ध्या उक्तस्थलेऽव्याप्तिर्दुर्वारैव। येन रूपेण[2] यत् साध्याभाववद्वृत्तित्ववृत्ति तद्रूपविशिष्टतदनवच्छिन्नप्रतियोगिताकाभावविवक्षणेन गगनत्वविशिष्टगगनाद्यवच्छिन्नाभावस्य लक्षणघटकतानिर्वाहेऽपि हेतुनिष्ठव्यधिकरणधर्मावच्छिन्नसाध्याभाववद्वृत्तित्वव्यक्तेः किंचिदविशेषिततत्तद्व्यक्तित्वावच्छिन्नप्रतियोगिताकाभावस्य तथाविधस्य हेतावसत्त्वादसंभवप्रसङ्ग इति चेन्न। येन संबन्धेन यद्वर्तते तेन संबन्धेन [3]तन्निष्ठावच्छेदकताकान्यत्वस्य तदनवच्छिन्नत्वस्य विवक्षणीयतया

[1] तत्क्रियातः इति विवक्षितमिव।

[2] साध्याभाववद्वृत्तित्वनिरूपितस्वनिष्ठवृत्तितावच्छेदकधर्मनिष्ठावच्छेदकताकसाध्याभाववद्वृत्तित्वत्वातिरिक्तनिष्ठावच्छेदकत्वानिरूपकप्रतियोगितेत्यर्थः। स्वपदं साध्याभाववद्वृत्तित्वत्वातिरिक्तपरम्––रा.

[3] तन्निष्ठावच्छेदकताकान्यत्वस्य इति नास्ति क्वचित्––अ.

**संयोगादिसंबन्धावच्छिन्नघटत्वादिनिष्ठावच्छेदकताकाभावमादायोक्तस्थले लक्षणसमन्वयसंभवात्। उक्तार्थलाभायैव साध्याभाववद्वृत्तित्ववृत्तित्वोपादानम्, न तु तदपि लक्षणघटकम्; प्रयोजनाभावात्। सर्वत्र दर्शिताभावमादायैव लक्षणसमन्वयसंभवेन समवायादिसंबन्धेन घटत्वाद्यवच्छिन्नसाध्याभाववत्संयुक्तत्वाद्यभावस्य लक्षणाघटकत्वेऽपि क्षतिविरहात्।**

**एतेन धूमत्वत्वाद्यवच्छिन्नधूमत्वाद्यभावस्य धूमत्वप्रकारकप्रमाविषयत्वत्वाद्यवच्छिन्नाभावस्य [1]च साध्याभाववद्वृत्तित्ववृत्तिधर्मानवच्छिन्नप्रतियोगिताकस्य वारणाय साध्याभाववद्वृत्तित्वप्रतियोगिकत्वविशेषणमप्यनादेयम्[2]। अत पव स्वसमानाधिकरणत्वस्य प्रतियोगितावच्छेदकविशेषणत्वकल्पापेक्षया लाघवमेवैतत्कल्पानुसरणबीजभूतं निष्प्रत्यूहमिति।**

कृष्णंभट्टीयम्

गगनादिना साध्याभाववद्विषयत्वाभावेन दोषवारणं भूयादित्याशङ्कां निरस्यति––गगनादेरपीति। स्वनिष्ठेत्यादिः। गगनादे[3]र्विषयित्वनिष्ठत्वप्रतिपादको हेतुः––गगनत्वेति। [4]विषयितात्वस्यैव तादृशरूपतया उक्ताभावप्रतियोगितायास्तद्रूपविशिष्टतदवच्छेद्यत्वात्[5]––किंचिदविशेषितेति। तद्व्यक्तित्वस्य स्वरूपत एवावच्छेदकत्वस्फोरणाय––येनेति। साध्या-

1 चकारस्थाने वाकारः––अ.

2 प्रतियोगितायां साध्याभाववद्वृत्तित्वनिष्ठत्वनिवेशनमप्यनादेयम्––अ.

3 विषयत्वनिष्ठत्वप्रतिपादको––अ.

4 विषयतात्वस्यैव––अ.

5 तदनवच्छेद्यत्वात्––अ.

भाववद्वृत्तित्वत्वपर्याप्तावच्छेदकताभिन्नस्वाश्रयनिष्ठाधेयतावच्छेदकसंबन्धावच्छिन्नावच्छेदकताकान्यत्वं निर्गलितार्थः। एवं सति साध्याभाववद्वृत्तित्ववृत्तित्ववैयर्थ्यं निराचष्टे—उक्तार्थेति। लक्षणेति। अथ येन संबन्धेन यद्वर्तते इति क्रमेणार्थनिवेशोऽसङ्गतः। यथाश्रुतस्य साध्याभाववद्वृत्तित्वत्वातिरिक्तसाध्याभाववद्वृत्तित्ववृत्तिधर्मावच्छिन्नत्वस्यैव सम्यक्त्वात्। न चैवं घटत्वेन पटाभावस्यापि पटवृत्तिप्रतियोगितायाः साध्याभाववद्वृत्तित्वत्वपर्याप्तावच्छेदकताभिन्नघटादिस्वरूपसाध्याभाववद्विषयतानिष्ठघटत्वादिनिष्ठावच्छेदकताकतया लक्षणाघटकत्वेनासंभव इति वाच्यम्। साध्याभाववद्वृत्तित्वसामान्यवृत्तित्वविवक्षया घटत्वेन पटाभावस्य लक्षणघटकत्वसंभवादिति चेन्न। तथापि गोत्वाभाववद्वृत्तित्वादिसाध्यके तादात्म्येन गोत्वाभावव्यापकादिहेतौ अव्याप्तेः। गोत्वाभावत्वादेः गोत्वाभावावृत्तिमत्त्वाद् गोत्वाभावावृत्तित्वस्य च साध्याभाववन्निरूपितयावत्तादात्म्यवृत्तित्वात्। किंच महानसवृत्तित्वाभावादेः प्रतियोगितावच्छेदकस्य पर्वतवृत्तित्वादिसाधारणसामान्यावृत्तित्वेनावारणात् न किंचिदेतत्। एतेन यद्यपि वृत्तित्ववृत्तिना वा धर्मेणेति; तथापि धर्मेण वेति कल्पान्तरम्। धर्मत्वं वृत्तिमत्त्वम्। एवं सर्वत्र गगनाद्यवच्छिन्नाभाव एव घटक इति मतं प्रत्युक्तम्। पूर्वोल्लेखितवाकारसत्त्वेन संदर्भविरोधात्। वृत्तिमन्निष्ठावच्छेदकताकत्वमात्रोक्तौ गगनादेरपि कालिकसंबन्धेन वृत्तिपक्षेऽसंभववारणायावच्छेदकताघटकसंबन्धेन वृत्तेरवश्यवाच्यत्वाच्च। एतत्सूचनाय दर्शिताभावमादायैव इति एवकारोपादानम्।

ननु उक्तरीत्या वृत्तित्वाभावे स्वरूपसंबन्धावच्छिन्नप्रतियोगिताकत्वस्य निवेशनीयतया स्वरूपसंबन्धावच्छिन्नप्रतियोगिताक[1]धूमाभावस्य केवलान्वयित्वात् नाव्याप्तिरित्यत आह—धूमत्वेति। अत्र घटभेदत्वेन धूमनिष्ठसंयुक्तत्वघटभेदान्यतराभावमादाय दोषवारणाय साध्याभाववद्-

[1] धूमत्वाभावस्य—अ.

वृत्तित्वभिन्नावृत्तित्वं प्रतियोगिताविशेषणम् अपिना सूचितम् । लाघवमिति । घटत्वेन पटाद्यभावसङ्ग्रहानुरोधेनावच्छेदकताघटकसंबन्धावच्छिन्नत्वं स्वसमानाधिकरणत्वे निवेश्यम् । न च तदसङ्ग्रहेऽपि घटत्वेनात्माद्यभाव एव लक्षणघटक इति न दोष इति वाच्यम्; व्यधिरकणीभूतैकधर्मावच्छिन्नप्रतियोगिताया एकत्वात् । एवं च तत्र प्रतियोगितानिरूपितत्वस्याधिकस्यैव प्रवेश इति भावः । एवं येन रूपेण यद् वृत्तित्ववृत्ति तद्रूपेतरधर्मानवच्छिन्नतन्निष्ठावच्छेदकत्वानिरूपकत्वनिवेशे किंचिदविशेषिततद्व्यक्तित्वावच्छिन्नाभाववारणसंभवेऽपि गौरवमेव दूषणं बोध्यम् ।

## न्यायरत्नम्

**येन संबन्धेन यद्वर्तते इति । साध्याभाववद्वृत्तित्वत्वनिष्ठस्वरूपसंबन्धावच्छिन्नावच्छेदकताभिन्नसमानाधिकरणसंबन्धावच्छिन्नावच्छेदकत्वानिरूपकत्वं प्रतियोगितायां पर्यवसितम् ।**

## गादाधरी

(६७) गुरुधर्मस्याभावप्रतियोगितानवच्छेदकत्वमतेन लक्षणपरिष्कारः ।

**यदि च गुरुधर्मो नाभावप्रतियोगितावच्छेदकः, तदा महानसवृत्तित्वत्वाद्यवच्छिन्नाभाववारणाय साध्याभाववद्वृत्तित्वत्वातिरिक्तेत्यनेन साध्याभाववद्वृत्तित्वत्वाघटकत्वमेव विवक्षणीयम् । तदर्थश्च स्वाविषयकप्रतीतिवृत्तिसाध्याभाववद्वृत्तितात्वरूपविशिष्टनिरूपितविषयिताकत्वम् । स्वाविषयकत्वं च इतरविशेषणतानापन्नस्वविषयताशून्यत्वम् । अतो विशेषणविधया साध्याभाववद्वृत्तित्वत्वघटकसाध्याभावत्वादेरपि तदघटकत्वनिर्वाह इति [1]पूर्वोक्तदोषानवकाशः । चरमापि विषयिता इतरविशेषणताना-**

[1] वह्न्यभावत्वावच्छिन्नाभावमादाय धूमादावव्याप्तिरूपदोषः—रा.

**पन्ननिरूपितैव ग्राह्या । तेन वृत्तित्वत्वादिविशेषणकज्ञाने साध्याभाववद्वृत्तित्वत्वादेर्विशेषणतया विषयत्वेऽपि वृत्तित्वत्वादेः न साध्याभाववद्वृत्तित्वत्वाघटकत्वम् । एवं च शुद्धवृत्तित्वत्वावच्छिन्नाभावोऽपि लक्षणघटक इति वृत्तिमद्वृत्तिपदसार्थक्यम् । न च साध्याभाववद्वृत्तित्वत्वघटकधर्मपर्याप्तप्रतियोगितावच्छेदकताकोऽभावो निवेश्यताम्; घटकान्तार्थश्च स्वाविषयकप्रतीत्यवृत्तिसाध्याभाववद्वृत्तित्वत्वरूपविशिष्टनिरूपितविषयिताकत्वम् । तेन साध्याभाववद्वृत्तित्वत्वकेवलवृत्तित्वत्वयोरेव घटकतानिर्वाहः; न तु स्वाविषयकप्रतीत्यविषयतादृशविशिष्टकत्वम्; तत्तदभाववद्वृत्तितात्वाविषयकप्रतीतौ केवलाधेयतात्वस्य विषयतया तदभाववन्निरूपितत्वविशिष्टाधेयतात्वे तदविषयकप्रतीत्यविषयत्वस्य दुर्घटतया तदभाववद्वृत्तित्वत्वादेस्तद्घटकत्वनिर्वाहात् केवलाधेयतात्वस्य च तद्घटकतया वृत्तिमद्वृत्ति तेन रूपेण घटाद्यभावमादायातिव्याप्त्यापत्तेरिति वाच्यम् । तथा सति उक्तरीत्या विषयितासंबन्धेन यत्र हेतुता तत्र तादृशाभावाप्रसिद्ध्यापत्तेः ।**

## कृष्णंभट्टीयम्

इतरविशेषणतानापन्नत्वं प्रकारित्वानवच्छिन्नत्वम् । किंचिद्विशेष्यत्वानिरूपितत्वमिति केचित् । [[1]पूर्वोक्तेति । अन्यथा वह्न्यभावत्वावच्छिन्नाभावस्य धूमादौ विरहादव्याप्तिः स्यात्] । ननु धूमवान् वह्नेरित्यादौ निर्धूमवृत्तित्वत्वस्यापि स्वनिष्ठमुख्यविशेष्यताशून्यतया निर्धूमवृत्तितात्ववानिति प्रतीतेः तद्वृत्तिसाध्याभाववद्वृत्तित्वत्वनिरूपितविषयिताकत्वेन अतिरिक्तत्वापत्तिः । न चैतादृशरीत्या जगद्वृत्तित्वत्वस्यापि अतिरिक्त-

[1] [ ] एतदन्तर्गतपाठो नास्ति——अ.

तया नातिव्याप्तिरिति वाच्यम् । घटत्वादिना घटाद्यभावमादायातिव्याप्तेरत आह[1]––चरमापीति । एवं चेति । वृत्तित्वस्य स्वमुख्यविशेष्यताशून्यजगद्वृत्तित्वत्ववानिति ज्ञाने जगद्वृत्तित्वत्वविषयितासत्त्वेन अतिरिक्तत्वाद् घटत्वादिना पटाद्यभावमादायैव लक्षणसङ्गतेः वृत्तिमद्वृत्तित्ववैयर्थ्यं स्याद्, यदि चरमविषयितायां मुख्यत्वं न स्यादित्यर्थः । वृत्तित्वत्वेन महानसवृत्तित्वाभावो नास्ति । उक्तरीतौ नञ्द्वयोपादानादिवैयर्थ्यमाशङ्कते––न चेति । स्वं––घटकधर्मः, केवलवृत्तित्वत्वं, साध्याभाववद्वृत्तित्वत्वं च । स्वाविषयकेति । स्वनिरूपितमुख्यविशेष्यताशून्येत्यर्थः । मुख्यत्वानुपादाने स्वं––वह्न्यभावत्वं; तद्विषयिताशून्या वह्न्यभाववद्वृत्तित्वत्वमित्याकारिका न प्रतीतिः; किन्तु घट इत्याकारिकैवेति तदवच्छिन्नाभावमादायाव्याप्तेः । साध्याभाववद्वृत्तित्वत्वविशिष्टनिरूपितविषयितायामपि मुख्यत्वमावश्यकम् । अन्यथा साध्याभाववद्वृत्तित्ववानिति ज्ञाने तादृशवृत्तित्वत्वनिष्ठमुख्यविशेष्यताशून्यत्वेन तादृशप्रतीत्यवृत्तित्वस्य साध्याभाववद्वृत्तित्वत्वविषयतायामसत्त्वेन घटकधर्माप्रसिद्धिप्रसङ्गात् । महानसवृत्तित्वत्वव्यधिकरणधर्मावच्छिन्नसाध्याभाववद्वृत्तित्वत्वोभयरूपेण तादृशवृत्तित्वाभाववारणाय पर्याप्तिनिवेशः । धूमाभावविशेषितह्रदवृत्तित्वत्वप्रतीतेः निर्धूमवृत्तितात्वरूपसामान्याविषयित्वासंभवेन नातिव्याप्तिः । तदिति । साध्याभाववद्वृत्तित्वत्वेत्यर्थः । दुर्घटतयेति । विशिष्टाधेयतात्वस्य शुद्धाधेयतात्वानतिरिक्ततया, विशेष्यवृत्तेः विशिष्टानुयोगिकाभावानुपगमादिति भावः । धूमवान् वह्नेरित्यादावतिव्याप्त्यापत्तेः । अप्रसिद्ध्यापत्तेरिति । विषयितासंबन्धावच्छिन्नवृत्तितात्वस्योक्तरीत्या केवलान्वयितया तेन रूपेण अभावाप्रसिद्धेरित्यर्थः ।

## न्यायरत्नम्

**तदर्थश्च स्वाविषयकप्रतीतिवृत्तीति । इदमत्र विचार्यम्––स्वाविषयकप्रतीतिवृत्तिसाध्याभाववद्वृत्तित्वत्वरूपविशिष्टनिरूपितविषयिताकत्व-**

[1] अतिव्याप्तेरित्यत आह––अ.

रूपाघटकत्वशरीरे साध्याभावानां केन रूपेण निवेशः? न तावत् तत्तद्व्यक्तित्वेन, साध्यव्यापकतावच्छेदकरूपावच्छिन्नप्रतियोगितानिरूपिता या अनुयोगिताव्यक्तयः प्रत्येकं तत्तद्व्यक्तिपुरस्कारेण वा। भूतत्वमूर्तत्वोभयाभाववान् भूतत्वविशिष्टमूर्तत्वाभाववान् वा मनस्त्वादित्यादौ तत्तद्व्यक्तित्वेन, तादृशोभयाभावादिनिष्ठप्रतियोगितानिरूपितानुयोगिताविशेषेण वा विशेषिततत्तत्साध्याभाववद्वृत्तित्वत्वरूपविशिष्टनिरूपितविषयितायाः स्वरूपतो मूर्तत्वरूपजातिघटितमूर्तवृत्तित्वत्वाविषयकप्रतीतिवृत्तित्वविरहेण स्वपदेन तादृशमूर्तवृत्तित्वत्वस्योपादानासंभवेन तस्याघटकत्वाभावादघटकधर्मानवच्छिन्नप्रतियोगिताकमूर्तवृत्तित्वत्वावच्छिन्नाभावस्य गगनपरिमाणादौ वृत्तिमद्वृत्तेर्मनस्त्वरूपहेतावभावेनाव्याप्तेः।

अथ तादृशानुयोगिताव्यक्त्यवच्छिन्ननिरूपकताकाधिकरणवृत्तित्वत्वाघटकत्वमेव निवेशनीयमतः स्वरूपतो मूर्तत्वघटितमूर्तवृत्तित्वत्वस्य तादृशवृत्तित्वत्वाघटकत्वनिर्वाहात् तदवच्छिन्नाभावस्य लक्षणाघटकत्वेनोक्ताव्याप्त्यनवकाश इति चेत्। तर्हि भूतत्वमूर्तत्वोभयाभावसाध्यके घटभेदसाध्यके च मेयत्वादावतिव्याप्त्यापत्तिर्दुवारा। स्पर्शवृत्तित्वत्वघटवृत्तित्वत्वादेस्तादृशानुयोगिताव्यक्त्यवच्छिन्ननिरूपकताकाधिकरणवृत्तित्वत्वाघटकत्वेन तादृशवृत्तित्वत्वस्य स्पर्शवद्वृत्तित्वत्वापेक्षया गुरुत्वेनाभावप्रतियोगितानवच्छेदकतया व्यधिकरणधर्मावच्छिन्नाभावस्यैव लक्षणघटकत्वादिति।

## गादाधरी

घटत्वभिन्नं प्रमेयत्वादित्यादौ निर्विशेषणघटत्वादिवृत्तितात्वस्य यथा समानाधिकरणधर्मावच्छिन्नसाध्याभाववद्वृत्तितात्वघटकत्वं तथा वाच्यं ज्ञेयत्वादित्यादावपि तादृशस्य स्वाविषयकप्रतीत्यवृत्तिव्यधिकरणधर्मावच्छिन्नसाध्याभावविशेषितघटत्वादिघटिततदभाववद्वृत्तित्वत्वरूपविशिष्टनिरूपितविषयिताक-

तया तदभाववद्वृत्तित्वत्वघटकतया वृत्तिमद्वृत्तितदवच्छिन्नाभावस्य हेतावसत्त्वेना[1]व्याप्त्यापत्तेः, तत्तदभाववद्वृत्तित्वत्वाघटकधर्मानवच्छिन्नाभावनिवेशेनैव[2] वारणसंभवाच्च । तादृशधर्मे निरुक्तसाध्याभाववद्वृत्तित्वघटकत्वसत्त्वेऽपि स्वाविषयकप्रतीतिवृत्तिसाध्याभावव[3]द्धर्म्यन्तरवृत्तित्वविषयिताकत्वेन साध्याभाववद्वृत्तित्वत्वाघटकत्वस्यापि सत्त्वेन तदवच्छिन्नाभास्य यथानिरुक्ताभावानात्मकत्वात् । न च स्वाविषयकप्रतीत्यवृत्तितदभाववद्वृत्तित्वत्वनिरूपितविषयितासामान्यकत्वरूपतत्तदभाववद्वृत्तित्वत्वघटकतानिवेशे निर्विशेणकघटत्वादिवृत्तित्वत्वस्य[4] साध्याभाववद्वृत्तित्वत्वघटकत्वाप्रसक्त्या तद्घटकधर्मावच्छिन्नाभावनिवेशोऽपि संभवतीति वाच्यम् । तथा सति व्यापकताघटितसामान्यपदार्थनिवेशेन तदघटकधर्मानवच्छिन्नाभावनिवेशापेक्षया गौरवात् । समानाधिकरणपदसार्थक्यं तु उक्तरीत्यैवेति ध्येयम् ।

[[5]केचित्तु---व्यधिकरणधर्मावच्छिन्नसाध्याभाववद्वृत्तित्वत्वेन पर्वतवृत्तित्वघटान्यतराभाववारणाय एतन्मतेऽपि स्वव्यापकतत्तत्साध्याभाववद्वृत्तित्वत्वकत्वं प्रतियोगिताविशेषणमावश्यकम् । तथा च साध्याभाववद्वृत्तित्वत्वेन घटाभावस्य लक्षणघटकता न संभवतीति घटत्वेन साध्याभाववद्वृत्तित्वाभावस्य लक्षणघटकतानिर्वाहाय निषेधद्वयनिवेशनसमानाधिकरणपदोपादानयोः

[1] अव्याप्तेः---अ.

[2] एवकारेणोक्तकल्पे केवलान्वयिन्यपि दोषवारणात् चकारसंगतिः---रा.

[3] धर्मान्तर---अ.

[4] अस्यानन्तरं 'साध्याभाववद्वृत्तित्वस्य' इति क्वाचित्कः पाठः---अ.

[5] [ ] अन्तर्गतपाठः क्वाचित्कः---अ.

**सार्थकतेत्याहुः । वस्तुतस्तु उक्तान्यतराभाववारणाय साध्याभाववद्वृत्तित्वत्वनिष्ठप्रतियोगिविशेषणतापन्नीयावच्छेदकताभिन्नसमानाधिकरणधर्मनिष्ठावच्छेदकतानिरूपकत्वं प्रतियोगिताविशेषणमित्येतावतैव समानाधिकरणपदोपादनं नञ्द्वयसार्थकता च युज्यत इति बोध्यम् ।]**

कृष्णंभट्टीयम्

विषयिताया अतिरिक्तत्वेऽपि, नञ्द्वयाद्युपादानप्रयोजनमाह——घटत्वभिन्नमिति । साध्याभावोपलक्षिताधिकरणवृत्तित्वत्वघटकतानिर्वाहाय निर्विषयक (निर्विशेषण) त्वोत्कीर्तनम् । निर्विशेषणघटत्वादिवृत्तित्वत्वस्य साध्याभावविशिष्टाधिकरणवृत्तित्वत्वघटकत्वाभावाद् वाच्यं ज्ञेयत्वादित्यादौ अव्याप्त्युद्धारेऽतिव्याप्तिप्रदर्शनाय दृष्टान्तः । तादृशस्य——स्वरूपतो घटत्वाघटितघटत्वादिवृत्तित्वत्वस्य । नञ्द्वयाद्युपादाने तु नाव्याप्तिरित्याह——तत्तदभावेति । निर्विशेषणकेति । स्वाविषयकप्रतीत्यवृत्तियत्किंचि[1]द्विषयतारूपघटत्वादिघटितसाध्याभाववद्वृत्तित्वत्वविषयिताकत्वेऽपि घटत्वाद्यघटितसाध्याभाववद्वृत्तित्वविषयितासाधारणतादृशविषयितात्वव्यापकतादृशवृत्तित्वकत्वविरहाद् इति भावः । [2]अतिगौरवात् । [[3]इतरभेदानुमाने लिङ्गतावच्छेदकगौरवात्]; सर्वत्र कारणतावच्छेदकगौरवाद्वा । उक्तरीत्यैवेति । व्यधिकरणधर्मावच्छिन्नाभावसङ्ग्राहकतयेत्यर्थः । तथा च विषयितासंबन्धेन यत्र हेतुता तत्र घटत्वेन पटाभाव एव लक्षणघटक इति भावः ।

स्वव्यापकेति । अत्र स्वव्यापकवृत्तित्वत्वकत्वमात्रं, वृत्तित्वभिन्नावृत्तित्वमात्रं वा निवेश्यम्; शेषवैयर्थ्यात् । न संभवतीति । तथा च वाच्यं

[1] विषयिता——अ.

[2] क्वचिद् गौरवादित्येव पाठः——स्व.

[3] [ ] एतदन्तर्गतपाठो नास्ति——अ.

ज्ञेयत्वादित्यादौ केवलान्वयिनि वृत्तिमद्वृत्तितादृशवृत्तित्वाभावाप्रसिद्धेरिति भावः। आहुरित्यस्वरसः। प्रतियोगितायां स्वव्यापकेत्याद्युपादानेऽपि साध्याभाववद्वृत्तित्वत्वेन पर्वतसंयुक्तत्वपर्वतान्यसंयुक्तत्वोभयाभावमादायातिव्याप्तिरिति। वस्तुतस्तु--वह्नित्वेन तार्णातार्णदहनाभावानुपगन्तृभिः नायमभाव उपेतुं शक्यः। किन्तु साध्याभाववद्वृत्तित्वत्वनिष्ठप्रतियोगिविशेषणतापन्नीयावच्छेदकताभिन्नसमानाधिकरणधर्मनिष्ठावच्छेदकताकान्यत्वोपादानादेव अन्यतराभावनिरासात् तद्घटकनञ्द्वयादिसार्थक्याच्च विशेषणपूरणवैयर्थ्यमेवास्वरसः।

## गादाधरी

(६८) प्रतियोगितायां साध्याभाववद्वृत्तित्वत्वव्याप्यत्वादिनिवेशप्रयोजनम्।

**प्रतियोगितायां साध्याभाववद्वृत्तित्वत्वव्याप्यत्वनिवेशनप्रयोजनमाह--आलोकाद्यवृत्तित्वेनेति। वह्निसामान्याभाववद्वृत्तित्वस्य योऽभावस्तस्य धूमादावसत्त्वेऽपि इत्यन्वयः। वह्निसामान्याभावो--वह्नित्वावच्छिन्नवह्न्यभावः। साध्याभाववद्वृत्तित्वत्वव्यापकतानिवेशनप्रयोजनमाह--यश्चेति। इन्धनत्वाद्यवच्छिन्नेति। साध्यतावच्छेदकावच्छिन्नव्यापकतावच्छेदकरूपावच्छिन्नप्रतियोगिताकाभावस्यैव लक्षणघटकतया घटत्वावच्छिन्न-[1]वह्न्यभावोपेक्षणम्। महानसवृत्तित्वादेरभाव इत्यत्र महानसवृत्तित्वत्वादिनेति बोध्यम्।**

**यत्तु तादृशाभावाधिकरणमहानसवृत्तित्वत्वाद्यवच्छिन्नस्येति षष्ठ्यन्त[2]व्याख्यानम्, तदसत्। गुरुधर्मस्याभावप्रतियोगिता-**

[1] वह्नित्वेन घटाभावोपेक्षणं च समानाधिकरणधर्मस्याप्यवच्छेदकत्वे व्यापकतावच्छेदकरूपपर्याप्तावच्छेदकताकत्वाभावात् तस्येति व्यक्तं कूटघटिते--रा.

[2] प्रतीक--रा.

**वच्छेदकत्वेऽपि तादृशाभावाविशेषितमहानसवृत्तित्वत्वावच्छिन्नाभावमादायैव दोषप्रसक्तेः तद्विशेषितमहानसवृत्तित्वत्वावच्छिन्नाभावपर्यन्तानुसरणमनुचितम्। अधिकरणान्तस्योपलक्षणतया शेषांशस्य विशेषणतया भानस्य व्युत्पत्तिविरुद्धतया[1] तथा विवक्षयितुमशक्यत्वात्। अधिकरणविशेषानुपरक्तवृत्तेरभावमादायापि दोषं दर्शयति––स्वनिष्ठेति। धूमादिनिष्ठसाध्याभावद्वृत्तित्वव्यक्तेः तद्वयक्तित्वावच्छिन्नाभावस्येत्यर्थः। हेत्वन्तरवृत्तेः––आलोकादिवृत्तेः। एतेन वृत्तिमद्वृत्तित्वमस्तीति सूचितम्। स्वस्मिन्––धूमादौ।**

कृष्णंभट्टीयम्

साध्यतावच्छेदकसंबन्धावच्छिन्नप्रतियोगित्वसूचकं वह्निपदमिति मतं कटाक्षयति––साध्यतेति। तथा सति घटरूपद्रव्यमेव उत्कीर्तयेत्। उपेक्षणमिति। [2]प्रतियोगिविशेषणस्य अवच्छेदकत्वनिवेशस्य कूटघटिते वक्तव्यत्वात्। अशक्यत्वादिति। तथा च तादृशप्रतीकेन तथा अबोधनात् महानसवृत्तित्वत्वेनेति पूरणम् आवश्यकमिति।

## गादाधरी

(९९) कूटाघटितकूटघटितलक्षणयोर्विशेषस्य कथनम्।

**अत्र च लक्षणे सत्ताभाववान् द्रव्यत्वादित्यादौ सत्तावत्समवेतत्वाभावस्य व्यधिकरणधर्मावच्छिन्नप्रतियोगिताकस्यैव समवेत-**

1 'सिद्धत्वात्' इति पाठः––अ,

प्रतियोगितावच्छेदककोटौ उपलक्षणतया भानस्वीकारात्; यत्किंचिदंशे, न तु सर्वांशे, जात्यवच्छिन्नप्रतियोगिताकोऽभाव इति प्रतीतेः। तथा च तादृशप्रतियोगिकेनाबोधनात् स्वतन्त्रव्याख्यानं महानसवृत्तित्वत्वेनेति। इदं पुरणम्। इति काचित् टिप्पणी सिद्धत्वादिति पाठमनुसृत्य––अ.

2 प्रतियोगिविशेषणस्यापि––अ.

**वृत्तित्वेऽपि द्रव्यावृत्तित्वाद्यवच्छिन्नाभावस्यापि साध्यतावच्छेदकावच्छिन्नव्यापकतावच्छेदकरूपावच्छिन्नप्रतियोगिताकतया समानाधिकरणधर्मावच्छिन्नप्रतियोगिताकस्यापि तद्वत्समवेतत्वाभावस्य समवेतगुणत्वादिवृत्तितया द्रव्यत्वादेः तद्वत्त्वाभावान्नातिव्याप्तिः । एवमवृत्तिसाध्यकस्थलेऽपि[1] साध्यतावच्छेदकावच्छिन्नव्यापकत्वाप्रसिद्ध्या नातिव्याप्तिः । कूटघटितलक्षणे च तत्र तत्रातिव्याप्तिवारणाय [2]साध्यसमानाधिकरणत्वे सतीति विशेषणं देयम् । एतल्लक्षणे च अवृत्तिहेतुकेऽतिव्याप्तिवारणाय वृत्तिमत्त्वमात्रमुपादेयम् । कूटघटितलक्षणवदत्रापि महाकालान्यो घटादित्यादावतिव्याप्तिर्द्रष्टव्या । [3]किन्तु तदन्यदोषाणामेवात्रानवकाश इत्यवधेयम् ।**

## कृष्णंभट्टीयम्

वृत्तिमत्त्वमात्रमिति । साध्यसामानाधिकरण्यपर्यन्तनिवेशव्यवच्छेदाय मात्रपदम् । परन्तु इदमसङ्गतम् । धूमवान् अयोगोलकानुयोगिकत्वविशिष्टसंयोगेन वह्नेरित्यादौ विरुद्धे साध्यव्यापकतावच्छेदकरूपावच्छिन्नप्रतियोगिताकत्वात् [4]तत्तद्विपक्षावृत्त्यभावाधिकरणतत्तद्विपक्षनिरूपितहेतुताघटकसंबन्धावच्छिन्नवृत्तित्वत्वावच्छिन्नाभावस्य तादृशहेतुताघटकसंबन्धावच्छिन्नवृत्तिमद्वृत्तेरप्रसिद्धतया व्यधिकरणधर्मावच्छिन्नाभावसत्त्वादिति साध्यसामानाधिकरण्यपर्यन्तावश्यकत्वात् । वस्तुतस्तु––तत्पर्यन्तानुपादाने समवायेन गोत्वादिसाध्यके कालिकसंबन्धेन महाकालवृत्तित्वविशिष्टघटा-

[1] अपि शब्दो नास्ति––अ.

[2] साध्यसमानाधिकरणेति विशेषणं देयम्––अ.

[3] किन्तु इति नास्ति––अ.

[4] तद्विपक्षेत्यादि––अ.

दिहेतौ विरुद्धे साध्यव्यापकतावच्छेदकीभत[1]तद्घटावृत्तित्वावच्छिन्नाभावाधिकरणतत्तद्घटादिवृत्तित्वाभावस्य महाकालमात्रवृत्तिहेतौ सत्त्वादतिव्याप्तिरिति । एवं महाकालावृत्तिमान् महाकालान्यो वा खण्डकालान्यवृत्तित्वविशिष्टघटादित्यादौ विरुद्धेऽतिव्याप्तिवारणमपि तत्फलं बोध्यम् ।

**न्यायरत्नम्**

**किन्तु तदन्यदोषाणामेवात्रानवकाश इति । अत्र केचित्तु पूर्वपक्षयन्ति--अस्मिन् लक्षणेऽपि साध्याभावे यावत्त्वस्य पूर्वमुक्तत्वात् सत्तावान् जातेरित्यादौ यावदन्तर्गतसत्तासामान्याभाववन्निरूपितसमवायेन वृत्त्यप्रसिद्धया अव्याप्तेः कूटघटितलक्षण इवात्रापि सत्त्वेन तदन्यदोषाणामत्रानवकाश इत्यसंगतम् । अत्रेदं समाधानं बोध्यम्--तत्तत्साध्याभाववद्वृत्तित्वत्वसमनियतप्रतियोगिताकाभावनिवेशकल्पे साध्याभावे यावत्त्वविशेषणावश्यकत्वेऽपि 'यदि चाभावधर्मो विशेषणतया न निवेश्यत' इति प्रतिपादितपूर्वकल्पे तत्तत्साध्याभाववद्वृत्तित्वत्वातिरिक्तसमानाधिकरणधर्मानवच्छिन्नप्रतियोगिताकाभावनिवेशपक्षीये येन संबन्धेन यद्वर्तत इति निष्कृष्टार्थे साध्याभावे यावत्त्वानिवेशेऽपि क्षतिविरहात् तादृशपक्षाभिप्रायेण तदन्यदोषाणामत्रानवकाश इत्युक्तिः सङ्गमनीयेति ।**

**इति कूटाघटितलक्षणम्**

---

[1] तत्तद्घटावृत्तीत्यादि ।--अ.

# कूटघटितलक्षणम्

## दीधितिः

अन्ये तु वृत्तिमद्वृत्तयो यावन्तः साध्याभावसमुदायाधिकरणवृत्तित्वाभावाः तद्वत्त्वं तत्त्वम् । तादृशवृत्तित्वाभावः स्वव्यापकतादृशवृत्तित्वत्वव्यापकप्रतियोगिताको बोध्यः । प्रयोजनं च उक्तप्रायम् । साध्याभावाधिकरणवृत्तित्वत्वव्यापकप्रतियोगिताकस्य व्यधिकरणधर्मावच्छिन्नाभावस्यैव वृत्तिमद्वृत्तित्वाद् व्यभिचारिण्यतिव्याप्तिः, अतः समुदायेति ।

## गादाधरी

(१००) कूटघटितलक्षणे दलप्रयोजनप्रतिपादनम् ।

**अन्ये त्विति । घटत्वादिना निर्धूमवृत्तित्वाभावमादाय व्यभिचारिण्यतिव्याप्तिवारणाय यावत्त्वोपादनम् । एवं च केवलान्वयिनः साध्यस्य व्यधिकरणधर्मावच्छिन्नप्रतियोगिताकस्यैवाभावस्य प्रसिद्ध्या तत्समुदायाधिकरणजगद्वृत्तित्वाभावो अवृत्तौ प्रसिद्धः । समानाधिकरणधर्मावच्छिन्नाभावोऽपि यावदभावान्तर्गत इति तद्वत्त्वविरहात् तादृशसाध्यके विषयिताद्य[1]तिरिक्तसंबन्धेन**

[1] ज्ञानविषयत्वस्य केवलान्वयित्वाद् जगद्विषयत्वाभावाप्रसिद्ध्या व्यधिकरणधर्मावच्छिन्नाभावमादायैव लक्षणसमन्वयसंभवादतिरिक्तेति—रा.

हेतावव्याप्तिः । साधनसमानाधिकरणत्वेन साध्याभावविशेषणपक्षे च व्यतिरेकिणोऽपि साध्यस्य व्यधिकरणधर्मावच्छिन्नप्रतियोगिताकस्यैवाभावस्य सद्धेतौ लक्षणघटकतया जगत एव तत्कूटाधिकरणतया व्यतिरेकिसाध्यकेऽपि [1]विषयितातिरिक्तसंबन्धेन हेतावव्याप्तिरिति वृत्तिमद्वृत्तित्वमभावविशेषणम् । तादृशवृत्तित्वेति । साध्याभावसमुदायाधिकरणवृत्तित्वेत्यर्थः । प्रयोजनं चेति । पूर्वदलप्रयोजनम् आलोकाद्यवृत्तित्वेन निर्वह्निवृत्तित्वाभावमादाय वह्निमान् धूमादित्यत्राव्याप्तिवारणरूपं पूर्वलक्षणे उक्तमेव । चरमदलप्रयोजनं तु साधनसमानाधिकरणत्वस्य साध्याभावाविशेषणत्वे केवलान्वयिसाध्यके ज्ञेयत्वादिहेतौ घटादिवृत्तित्वाभावमादाय अव्याप्तिवारणमेव, न तु वह्निमान् धूमादित्यादौ महानसवृत्तित्वाद्यभावव्यावर्तनम्; तत्र महानसादेः वह्नित्वाद्यवच्छिन्नवह्न्यभावानधिकरणत्वेन साध्याभावकूटानधिकरणत्वात् । [2]एतस्य प्रागनुक्तत्वाद् [3]उक्तप्रायमिति । समुदायपदप्रयोजनमाह—साध्याभावाधिकरणेति । व्यधिकरणधर्मावच्छिन्नाभावस्यैवेति । निर्धूमवृत्तित्वत्वाद्यवच्छिन्ननिर्धूमवृत्तित्वाभावस्य प्रतियोगिताया व्यधिकरणधर्मावच्छिन्नसाध्याभावाधिकरणमहानसादिवृत्तित्वावृत्तितया साध्याभावाधिकरणवृत्तित्वत्वाव्यापकतया जगद्वृत्तित्वसामान्याभावस्यैव तद्व्यापकप्रतियोगिताकतया तस्य

[1] विषयितादिसंबन्धेन घटादिहेतौ सर्वत्र प्रसिद्धतत्संबन्धावच्छिन्नवृत्तित्वस्य घटत्वेन योऽभावः तस्य सत्त्वात्, गगनादेरपि विषयितासंबन्धेन ईश्वरज्ञानसंबद्धत्वात्तु लक्षणसमन्वयान्नासंभवः—रा.

[2] एतस्य च—अ..

[3] उक्तप्रायमित्युक्तम्—अ.

**समानाधिकरणधर्मावच्छिन्नप्रतियोगिताकस्यावृत्तावेव प्रसिद्धत्वादिति भावः। व्यभिचारिण्यतिव्याप्तिरिति। तादृशस्य जगद्वृत्तित्वाभावस्य [1]सर्वत्र सत्त्वादिति भावः।**

कृष्णंभट्टीयम्

यावत्त्वानुपादाने वृत्तिमद्वृत्तित्ववैयर्थ्यादुक्तम्––एव चेति। इदं तु बोध्यम्––वृत्तिमद्वृत्तित्वस्यानुक्तौ, वाच्यं घटादित्यादौ कालिकसंबन्धेन हेतौ उक्तरीत्या अव्याप्तिः स्यादिति भावेनावृत्त्युत्कीर्तनम्। एवं च वाच्यं ज्ञेयत्वादित्यादौ स्वरूपसंबन्धावच्छिन्नतादृशवृत्तित्वाभावस्य घटादावपि प्रसिद्धत्वेनाव्याप्तिवारणाय तत्र हेतुतावच्छेदकसंबन्धावच्छिन्नत्वं निवेशनीयमिति संबन्धमात्रप्रयोजनं द्रष्टव्यम्। यादृशसंबन्धप्रतियोगित्वं वस्तुमात्र एवेति रीत्या विषयितादिसंबन्धेन हेतावव्याप्त्यभावादाह––विषयितादीति।

**गादाधरी**

(१०१) समुदायपदप्रयोजनविचारः।

**अत्र च स्वव्यापकसाध्याभावसमुदायाधिकरणवृत्तित्वत्वकत्वे सति साध्याभावसमुदायाधिकरणवृत्तित्वत्वव्यापकत्वं प्रतियोगिताविशेषणम्। तत्र च शेषदले समुदायानिवेशे निर्धूमवृत्तित्वत्वाद्यवच्छिन्नाभावस्य लक्षणाघटकत्वेऽपि नातिव्याप्तिः संभवति; व्यतिरेकिसाध्यके तादृशप्रतियोगिताया एवाप्रसिद्धेः। जगद्वृत्तित्वसामान्याभावप्रतियोगितायाः साध्याभावाधिकरणवृत्तित्वत्वव्यापकत्वेऽपि स्वव्यापकसाध्याभावसमुदायाधिकरणवृत्तित्वत्वकत्वरूपपूर्वदलविरहात्। धूमाद्यभावसमुदायाधिकरण-**

[1] सर्वत्रैव––अ.

वृत्तित्वत्वशून्ये महानसादिवृत्तित्वेऽपि तादृशप्रतियोगितासत्त्वादिति पूर्वपक्षयित्वा शेषदले समुदायाप्रवेशे पूर्वदलमेव नोपादेयम्; तदनुपादानेऽपि वह्निमान् धूमादित्यादौ आलोकाद्यवृत्तित्वाद्यवच्छिन्नाभावप्रतियोगित्वस्य आलोकादिनिष्ठपर्वतादिवृत्तित्वसाधारणसाध्याभावाधिकरणवृत्तित्वत्वाव्यापकतया तादृशाभावमादाय दोषाप्रसक्तेः। [1]तदुपादाने व्यतिरेकिसाध्यकमात्र एव उक्तरीत्या तादृशप्रतियोगित्वाप्रसिद्ध्या अव्याप्तिप्रसङ्गाच्च। तथा च धूमवान् वह्नेरित्यादौ घटत्वेन जगद्वृत्तित्वाभाव[2]मादायातिव्याप्तिरित्याशयेन दीधितिकृतेदमभिहितम्। अतिव्याप्तिवारणाय शेषदले समुदायप्रवेशने च निर्वह्निवृत्तित्वत्वव्यापकप्रतियोगिताकस्य आलोकावृत्तित्वावच्छिन्नाभावस्य वह्निमान् धूमादित्यत्र शेषदलाक्रान्ततया पूर्वदलोपादानमावश्यकम्। तत्र च समुदायाप्रवेशे व्यधिकरणधर्मावच्छिन्नसाध्याभावाधिकरणवृत्तित्वत्वव्याप्यप्रतियोगिताकस्य आलोकावृत्तिवृत्तित्वत्वावच्छिन्नाभावस्य धूमेऽसत्त्वादव्याप्तिरिति तत्रापि [3]तत्प्रवेशनमिति केचित् समादधते।

## कृष्णंभट्टीयम्

तादृशविशेषणदलस्य तादृशप्रतियोगित्वाप्रसिद्धिसंपादकतया अतिव्याप्तिवारकत्वं चेद् ब्रूयात् तदाप्याह---[4]तदुपादान इति। अतिव्याप्तिवा-

[1] तदुपादाने च---अ.

[2] इदमत्रावधेयम्---पूर्वदलाप्रवेशे धूमभेदजगत्संयुक्तत्वोभयाभावस्य वह्निनिष्ठवृत्तितात्वेन जगत्संयुक्तत्वाभावस्य धूमभेदत्वेन धूमभेदजगत्संयुक्तत्वान्यतराभावस्य च धूमवृत्तेः यावदन्तर्गतस्य वह्न्यावसत्त्वान्नातिव्याप्तिरिति---रा.

[3] तथा च धूमनिष्ठपर्वतादिवृत्तित्वमपि आलोकावृत्त्याधेयत्वमिति न तादृशव्यापकत्वमिति भावः---रा.

[4] तदुपादाने चेति---अ. तदुपादाने च इति पाठोऽपि गादाधर्यां वर्तते---स्व.

रणायेति । ननु पूर्वदलाभावेऽपि चरमदले समुदायपदप्रयोजनमसङ्गतमेव । व्यधिकरणधर्मावच्छिन्नजगद्वृत्तित्वाभावसंभवेऽपि पूर्वदलाभावे आलोकभेदजगत्संयुक्तत्वोभयाभावादेरालोकादौ वृत्तिमद्वृत्तियावदन्तर्गतस्यासत्त्वादेव अतिव्याप्त्यसत्त्वात्[1] । न च पूर्वदलानुपादाने तदुपादाने च घटवृत्तित्वघटान्यवृत्तित्वोभयाभावमादाय केवलान्वयिसाध्यकेऽव्याप्तिरतः प्रतियोगितायां व्यासज्यवृत्तिधर्मानवच्छिन्नत्वमावश्यकमिति वाच्यम् । तथापि वह्निनिष्ठवृत्तितात्वेन जगत्संयुक्तत्वाभावमादायैव अनतिप्रसङ्गात् । न च वाच्यत्वादिनिष्ठवृत्तितात्वेन जगत्संयुक्तत्वाभावमादायाव्याप्तिवारणाय विशेषरूपेण सामान्याभावप्रतियोगिताया विशेषधर्मिनिष्ठत्वव्यवस्थापनात् तन्मतमालम्ब्यमिति न उक्ताभावस्य लक्षणघटकतासंभव इति वाच्यम् । धूमभेदत्वेन धूमभेदजगत्संयुक्तत्वान्यतराभावमादायातिव्याप्तेर्वारणात् । न च वाच्यत्वभेदत्वेन वाच्यत्वभेदजगत्संयुक्तत्वान्यतराभावमादायाव्याप्तेर्वारणाय प्रतियोगितायां स्वन्यूनवृत्तिधर्मानवच्छिन्नत्वमुपादेयमिति तत्सङ्गतिरिति वाच्यम् । एवमपि वह्निजगद्वृत्तित्वान्यतरत्वेन हेतुजगत्संयुक्तत्वोभयाभावमादायानतिप्रसङ्गात् । तुल्ययुक्त्या वह्निमान् धूमादित्यादावपि हेतुजगद्वृत्तित्वान्यतरत्वेन तदुभयाभावमादायाव्याप्तिवारणाय पूर्वदलस्योपादाने च तदनुपादेयमिति ग्रन्थासङ्गतिरिति चेन्न । अव्याप्तिवारणानुरोधेन स्वव्यापकवृत्तित्वत्वकत्वस्योपादेयत्वेऽपि विशिष्टपूर्वदलस्य प्रयोजनं नास्त्येवेत्याशयेन समुदायपदसार्थक्योक्तेः । अतिव्याप्तिवारणस्यैव विशिष्टतद्दलप्रयोजनत्वसंभवेऽपि चरमदले समुदायनिवेश एव लघुः । यद्वा वह्नित्वेन तार्णतार्णाभावानङ्गीकर्तॄणां हेतुजगद्वृत्तित्वान्यतरत्वेन तदुभयाभावासत्त्वाद् उक्तरीत्यैवातिव्याप्तिसङ्गतिरिति ।

अत्रेदमरुचिबीजम्--शेषदले समुदायप्रवेशाय पूर्वदलत्यागोऽसङ्गतः । [2]समुदायरहिततद्दलसहितपूर्वदलनिवेशेनापि अतिव्याप्तिवारणसंभवात् ।

[1] एवातिव्याप्त्यसत्त्वाद् इति नास्ति--अ.

[2] समुदायरहितोत्तरदलसहितपूर्वदलनिवेशेनापि--अ.

अव्याप्तिवारणायैव शेषदले समुदायप्रवेशावश्यकत्वेन संदर्भविरोधादिति ।

## न्यायरत्नम्

शेषदल इति । साध्याभावसमुदायवद्वृत्तित्वत्वव्यापकत्वदल इत्यर्थः । तथा चेति । पूर्वदलानुपादाने चेत्यर्थः । अतिव्याप्तिरित्याशयेनेति । ननु पूर्वदलानुपादानेऽपि नातिव्याप्तिसंभवः, धूमभेदजगत्संयुक्तत्वोभयाभावस्य शेषदलाक्रान्तस्य धूमादौ वृत्तिमद्वृत्तेः वह्नावभावात् । न च घटवृत्तित्वघटान्यवृत्तित्वोभयाभावमादाय वाच्यं ज्ञेयत्वादित्यादौ अव्याप्तिवारणाय प्रतियोगितायां व्यासज्यवृत्तिधर्मानवच्छिन्नत्वविशेषणस्यावश्यकतया न तस्य लक्षणघटकत्वमिति वाच्यम् । एवमपि वह्निवृत्तितात्वेन जगद्वृत्तित्वाभावस्य तादृशस्य हेतावसत्त्वाद् अतिव्याप्तेरनवकाशात् । न च तुल्ययुक्त्या हेतुनिष्ठवृत्तित्वत्वेन जगद्वृत्तित्वाभावमादाय सद्धेतावपि लक्षणायोगवारणाय प्रतियोगितायां स्वन्यूनवृत्तिधर्मानवच्छिन्नत्वविशेषणस्य विशेषरूपेण सामान्याभावीयप्रतियोगित्वस्य विशेषमात्रनिष्ठत्वाभ्युपगमस्य वा आवश्यकत्वेन तादृशाभावनिरास इति वाच्यम् । एवमपि वह्निजगद्वृत्तित्वान्यतरत्वेन वह्निजगत्संयुक्तत्वोभयाभावमादायातिव्याप्तेः निरास इति चेन्न । दर्शितान्यतरत्वेनोभयाभावस्य वह्नित्वेन तार्णातार्णदहनोभयाभाववदनङ्गीकारात् । अन्यथा तुल्ययुक्त्या हेतुवृत्तित्वजगद्वृत्तित्वान्यतरत्वेन तादृशोभयाभावमादाय सद्धेतौ लक्षणायोगस्य दुर्वारत्वात् । यद्वा तादृशाभावस्वीकारेऽपि तमादायाव्याप्तिवारणाय पूर्वदलं देयम् । न च तथा सति पूर्वदलमेव नोपादेयमिति ग्रन्थासङ्गतिरिति वाच्यम् । अव्याप्तिसंपादकदर्शिताभावव्यावर्तनाय स्वव्यापकवृत्तित्वत्वकत्वस्य पूर्वदलघटकस्यैव ग्राह्यत्वात् । नोपादेयमित्यस्य विशिष्टदलानुपादान एव तात्पर्यकल्पनात् । तादृशविशिष्टदलस्य अतिव्याप्तिवारणप्रयोजनकत्वसंभवेऽपि तद्वारणाय शेषदले समुदायनिवेशस्यैव लघुत्वमिति तदनुपादानत्वोक्तिरिति विभावनीयम् । अत्र शेषदले समुदायपदोपादाने पूर्वदलोपादानमावश्यकमित्यसङ्गतम्;

समुदायरहितोत्तरदलसहितपूर्वदलोपादाने वह्निमान् धूमादित्यादौ प्रसक्ताव्याप्तिवारणस्य शेषदले समुदायप्रवेशप्रयोजनस्य सत्त्वात् तद्वर्णनमेव सम्यगिति केचिदित्यनेनास्वरसः सूचितः ।

## गादाधरी

(१०२) मतान्तरेण समुदायपदप्रयोजनकथनम् ।

परे तु—प्रतियोगित्वव्यापकताविशेष्यतापन्नमेव साध्याभावसमुदायाधिकरणवृत्तित्वत्वं व्यापकत्वविशेषणविधया निवेश्यते; न तु तद्दलस्योक्तरीत्या द्विधा निवेशः । एवं च पूर्वपक्ष एवायं नावतरति । न च गुरुधर्मस्याभावप्रतियोगितानवच्छेदकत्वे प्रतियोगित्वे प्रतियोगित्वव्यापकत्वविशेषितसाध्याभावसमुदायाधिकरणवृत्तित्वत्वाधिकरणनिष्ठान्योन्याभावप्रतियोगितावच्छेदकत्वत्वं नाभावप्रतियोगितावच्छेदकमिति तादृशावच्छेदकत्वत्वावच्छिन्नाभावरूपव्यापकतानिवेशासंभवात् तद्दलस्य द्विधा निवेशनमावश्यकमिति वाच्यम् । व्यापकतान्तस्योपलक्षणविधया साध्याभावसमुदायाधिकरणवृत्तित्वत्वरूपव्याप्यांशे निवेशनसंभवात् । व्यापकतावच्छेदकावच्छिन्ना[1]भाववानित्यादिज्ञाने व्यापकतावच्छेदकत्वांशस्येव उक्तावच्छेदकत्वत्वावच्छिन्नप्रतियोगिता[2]काभावबुद्धौ व्यापकताया उपलक्षणतया भानेऽविरोधात् । वस्तुतस्तु गुरुधर्मस्य अभावप्रतियोगितानवच्छेदकत्वे साध्याभावसमुदायाधिकरणवृत्तित्वत्वाधिकरणनिष्ठान्योन्याभावप्रतियोगितावच्छेदकत्वत्वमपि नाभावप्रतियोगितावच्छेदकम् । वह्नित्वावच्छिन्न-

[1] प्रतियोगिताकेति वाच्यम्—रा.

[2] प्रतियोगिताकत्वेनाभावबुद्धौ—अ.

**वह्न्यभाववद्वृत्तित्वनिष्ठान्योन्याभावप्रतियोगितावच्छेदकत्व-त्वादिरूपसमनियत[1]धर्मापेक्षया[2] व्यधिकरणधर्मावच्छिन्नसाध्या-भावेनाधिकेन घटितस्य तस्य गुरुत्वादिति तादृशधर्मावच्छिन्ना-भावो निवेशयितुमशक्यः । किन्तु तादृशान्योन्याभावप्रतियोगिता-वच्छेदकं यद्यत् तत्तद्भेदकूटमेव [3]निवेशनीयम् । एवं च प्रतियोगि-ताव्यापकत्वघटितोक्तधर्मस्य प्रतियोगितानवच्छेदकत्वमकिंचित्क-रमेवेत्याहुः ।**

कृष्णंभट्टीयम्

व्यापकतावच्छेदकावच्छिन्नाभाववत्ताज्ञानस्य न प्रतियोगितासंसर्गेण व्यापकतावच्छेदकत्वोपलक्षितावच्छिन्नप्रकारत्वम् । तथा सति ह्रदे व्याप-कतावच्छेदकावच्छिन्नं नास्तीति प्रत्ययप्रसङ्गाद् अतः प्रतियोगिताकेति ।

ननु प्रकृते उक्तावच्छेदकत्वत्वावच्छिन्नप्रतियोगिताया अप्रसिद्धया प्रकारतया निवेशासंभवात् कथं व्यापकताया उपलक्षणतया निवेश इति चेत् तर्हि द्वेधा निवेशोऽपि न भवेदिति दोषं प्रदर्श्य गुरुधर्मस्यानवच्छेदक-त्वमते निवेशप्रकारमाह––वस्तुतस्त्विति । साध्याभावेति । व्यधिकरण-धर्मावच्छिन्नसाध्याभावघटितसमानाधिकरणधर्मावच्छिन्नसाध्याभाववद्-वृत्तित्वत्वमपेक्ष्य केवलवह्न्यभावघटितसाध्याभाववद्वृत्तित्वत्वस्य लघुत्वा-दिति भावः । अत्र घटवत्तित्वघटान्यवृत्तित्वोभयाभावादिकमादाय केवला-न्वयिसाध्यके नाव्याप्तिसंभवः । उभयत्वस्य एकविशिष्टापरतया तस्योक्त-विशेषणानाक्रान्तत्वेन वारणादिति प्रतियोगितायां व्यासज्यवृत्तिधर्मान-वच्छिन्नत्वं, घटवृत्तित्वत्वादिना जगद्वृत्तित्वाभावमादाय व्याप्तिर्नास्ति,

1 समनियतलघुधर्मापेक्षया––अ.

2 विचार्यमेतत्––रा.

3 निवेश्यमिति न्यायरत्ने प्रतीकधारणम्––स्व.

विशेषरूपेण सामान्याभावप्रतियोगिताया [1]विशेषधर्मनिष्ठत्वव्यवस्थापनादिति तत्र स्वन्यूनवृत्तिधर्मानवच्छिन्नत्वं च नोक्तम् ।

### न्यायरत्नम्

**अविरोधादिति। प्रतियोगितासंसर्गकाभावज्ञान एव प्रतियोगितावच्छेदकांशे उपलक्षणतया भानस्यानुभवविरुद्धत्वादिति भावः। प्रतियोगितासंसर्गकव्याप्तिज्ञानस्यैव लाघवेन अनुमितिहेतुत्वमित्यभिप्रायेणाह--वस्तुतस्त्विति। [2]भेदकूटमेव निवेश्यम् इति। स्वव्यापकसाध्याभावसमुदायाधिकरणवृत्तित्वत्ववन्निष्ठभेदप्रतियोगितावच्छेदकत्वसमानाधिकरणोभयावृत्तित्वपरिचितधर्मावच्छिन्नप्रतियोगिताकभेदकूटवत्त्वसंबन्धेन स्वविशिष्टप्रतियोगितैव निवेश्या। तेन तादृशकूटस्य दुर्ज्ञेयत्वेऽपि न व्याप्तिज्ञानानुपपत्तिः; संबन्धज्ञानस्य विशिष्टबुद्धावहेतुत्वस्य अन्यत्रोक्तत्वात्; कूटस्य संबन्धत्वे तज्ज्ञानानपेक्षणात्।**

### दीधितिः

साध्याभावश्च साध्यतावच्छेदकसंबन्धेन बोध्यः। तेन समवायेन वह्नेः साध्यत्वे धूमे, संयोगेन च तथात्वे वह्न्यवयवत्वे, पर्वतवह्न्यवयवसंयोगे च पर्वतस्य वह्न्यवयवस्य च संबन्धद्वयावच्छिन्नवह्न्यभावद्वयानधिकरणत्वेऽपि नातिव्याप्तिः। तथा स्वव्यापकीभूतसाध्यतावच्छेदकव्यापकप्रतियोगिताकोऽपि बोध्यः। तेन यत्र पृथिवीत्वाभावादौ साध्ये तत्तद्विपक्षावृत्तित्वाद्यवच्छिन्न-प्रतियोगिताकाभावकूटाधिकरणमप्रसिद्धम् तत्र सद्धेतौ, पृथिवीत्वादौ साध्ये जातित्वाद्यवच्छिन्नाभाववति सामान्यादौ अवर्तमाने

1 विशेषधर्मनिष्ठत्वस्य--अ.

2 भेदकूटमेव निवेशनीयमिति गादाधर्यां दृश्यते--स्व.

द्रव्यत्वप्रकारकप्रमाविषयत्वादौ च नाव्याप्तिः, अतिव्याप्तिर्वा। नाप्यभावत्वादिना अभावादौ साध्ये तत्तत्साध्याभावकूटाधिकरणाप्रसिद्ध्या अव्याप्तिरित्याहुः।

## गादाधरी

(१०३) साध्याभावे साध्यतावच्छेदकसंबन्धावच्छिन्नप्रतियोगिताकत्वविशेषणप्रयोजनकथनम्।

तेनेति। समवायेन वह्नेः साध्यत्वे पर्वतस्य संबन्धद्वयावच्छिन्नवह्न्यभावद्वयानधिकरणत्वेऽपि धूमे नातिव्याप्तिः; संयोगेन वह्नेस्तथात्वे वह्न्यवयवस्य तादृशाभावद्वयानधिकरणत्वेऽपि वह्न्यवयवत्वे नातिव्याप्तिः; समवायेन वह्नेः साध्यत्वे संयोगेन तस्य तथात्वे च पर्वतस्य वह्न्यवयवस्य च तादृशाभावद्वयानधिकरणत्वेऽपि पर्वतवह्न्यवयवसंयोगे नातिव्याप्तिरिति योजना। संबन्धद्वयावच्छिन्नवह्न्यभावद्वयम्—[1]संयोगसंबन्धावच्छिन्नवह्न्यभावसमवायसंबन्धावच्छिन्नवह्न्यभावद्वयम्। साध्यतावच्छेदकसंबन्धावच्छिन्नप्रतियोगिताकत्वानिवेशने तादृशाभावद्वयानधिकरणस्य पर्वतादेः साध्याभावकूटानधिकरणतया तत्कूटाधिकरणवृत्तित्वाभावा यावन्तस्तद्वत्त्वं धूमादावव्याहतमेवेत्यतिव्याप्तिः स्यादिति भावः। न च साध्यतावच्छेदकसंबन्धावच्छिन्नाभावनिवेशनेऽपि समवायेन वह्नौ साध्ये संयोगेन हेतौ धूमे नातिव्याप्तिर्वारयितुं शक्यते; समवायसंबन्धावच्छिन्नवह्न्यभावकूटाधिकरणसंयुक्तत्वस्य व्यधिकरणधर्मावच्छिन्नाभावस्यैव

[1] संयोगसंबन्धावच्छिन्नसमवायसंबन्धावच्छिन्नवह्न्यभावद्वयम्—अ.

**संयुक्तवृत्तित्वाद् वह्न्यवयवमात्रसंयुक्तपदार्थाप्रसिद्धेः; संयुक्तमात्रस्यैव तादृशाभावकूटाधिकरणगगनसंयुक्तत्वादिति कथमत्र व्यावृत्तिप्रदर्शनम्। समवायेन धूमहेतुकस्थलपरता च न युज्यते; समवायेन धूमवतः साध्याभावकूटाधिकरणत्वानिराकरणादिति वाच्यम्। संयुक्तमात्रस्य गगनादिसंयुक्तत्वेऽपि [[1]तादृशस्य संयोगस्य वृत्त्यनियामकतया] यस्य द्रव्यस्य वह्न्यवयव एवाधिकरणत्वप्रत्ययः प्रामाणिको न त्वन्यत्र, तत्र संयोगेन गगनादि-[2]वृत्तित्वप्रतीत्यप्रसिद्ध्या संयोगेन वह्न्यवयवान्यवृत्तित्वाभावस्य संयोगेन वृत्तिमद्वृत्तेः सुलभतया वृत्तिपदस्य यथाश्रुतपरतामते तादृशव्यावृत्तिदानसंगतेः।**

## कृष्णंभट्टीयम्

नातिव्याप्तिरिति। वह्निमान् धूमादित्यादौ यावद्वह्न्यभावाधिकरणनित्यगुणादिनिरूपितसंयोगावच्छिन्नवृत्तित्वाप्रसिद्ध्या अव्याप्तिस्तु न; वह्निशून्यस्य द्रव्यवतः सत्त्वात्। न च व्याप्यवृत्तित्वविशिष्टकालिकसंबन्धावच्छिन्नवह्न्यभावघटितकूटवत्त्वं न तत्रेति वाच्यम्। पर्वतादेः कालोपाधित्वानुपगमात्। विशेषणतातिरिक्तसंबन्धावच्छिन्नप्रतियोगितानिवेशाद्वा। एवमपि अतिव्याप्तिरित्याशयः। एतच्च दीधितौ द्वयपदेन सूचितम्। समवायेनेति अतिव्याप्त्यप्रसक्तिव्यञ्जकम्। सुलभतयेति। वह्न्यवयव एव यद्द्रव्यस्याधिकरणत्वप्रत्ययः[3] तद्द्रव्ये इति शेषः। तथा च गगनानुयोगिकसंयोगस्य वृत्त्यनियामकतया, वह्न्यवयवमात्रसंयुक्ते वस्तुनि समवायेन

[1] [ ] एतदन्तर्गतपाठो नास्ति—अ.

[2] वृत्तित्वाप्रसिद्ध्या—अ.

[3] अनन्तरं प्रामाणिकः इति अधिकपाठः—अ.

वह्न्यभाववत्संयुक्तत्वाभावस्य प्रसिद्धस्य हेतावसत्त्वात् नातिव्याप्तिरिति भावः।

## गादाधरी

वृत्त्यनियामकतादात्म्यादिसंबन्धेन व्याप्तिस्वीकारे वृत्तिपदस्य [1]सम्बद्धार्थकत्वमावश्यकम्। [[2]तथा च इदं महाकालान्यो घटादित्येतत्समशीलम्] इत्यभिप्रायेण एतदुपेक्ष्य द्वितीयस्थलानुसरणम्। साधनसामानाधिकरण्यस्य साध्याभावविशेषणत्वपक्षे समवायादिसंबन्धावच्छिन्नवह्न्यभावस्य [3]वह्न्यवयवत्त्वरूपसाधनसामानाधिकरण्याभावेन न तत्रातिव्याप्तिसंभवः। एवं सत्ताभाववान् द्रव्यत्वादित्यादावतिव्याप्तिवारणाय साध्यसामानाधिकरण्ये सतीति विशेषणप्रवेशस्यावश्यकतया संयोगादिना वह्निमत्यवर्तमाने वह्न्यवयवत्त्वादौ [4]तेनापि अतिव्याप्तिर्वारयितुं शक्यत इत्यतः पर्वतवह्न्यवयवसंयोगहेतुकानुसरणम्। संयोगेन द्रव्यस्याव्याप्यवृत्तितापक्षे पर्वतस्य संबन्धद्वयावच्छिन्नवह्न्यभावद्वयाधिकरणत्वेऽपि न तस्य व्याप्यवृत्तित्वविशिष्टसाध्याभावकूटाधिकरणत्वम्। विवक्षणीयं चावश्यं तादृशसाध्याभावकूटाधिकरणत्वम्। अन्यथा अव्याप्यवृत्तिसंयोगादिसाध्यके व्यभिचारिणि जगत एव साध्याभावकूटाधिकरणत्वेनातिव्याप्तिरिति दर्शितहेतोः

[1] सम्बन्ध्यर्थकत्वम्——क. न्यायरत्ने संबन्धित्वार्थकत्वमिति प्रतीकधारणम्। कृष्णंभट्टीये संबद्धेति सम्बद्धार्थकमिति पाठमनुसृत्य——स्व.

[2] [ ] एतदन्तर्गतपाठः नास्ति——क. मै. क्वाचित्कपाठः इति——अ.

[3] उत्पत्तिकाले वह्न्यवयवेऽपि वह्न्यभावसत्त्वाद् वक्ष्यमाणरीत्या न दोषः——रा.

[4] वह्न्यन्तरसंयुक्तवह्न्यवयवस्यापि सत्त्वात् तेनापि इत्यपिशब्दोऽनास्थायाम् ——रा.

**पर्वतवृत्तित्वेऽपि तादृशाभावकूटाधिकरणवृत्तित्वाभावोऽक्षत एवे-त्यतिव्याप्तिप्रसङ्गः ।**

कृष्णंभट्टीयम्

संबद्धेति । नन्वेवं गगनादेरभावकूटाधिकरणतया व्यधिकरणधर्मा-वच्छिन्नवृत्तित्वाभावस्यैव लक्षणघटकतया अतिव्याप्तिर्दुर्वारैवेति चेत्; सत्यम् । तदा महाकालान्यो घटादित्यादौ इत्यादिपदग्राह्यतैव । 'आवश्य-कतया महाकालान्यो घटादित्यत्र एतत्समशीलम्' इति पाठान्तरं च । अत्रायमभिप्रायः—वृत्तिपदस्य आधेयतार्थत्वे व्याभिचारिणि प्रथमतः प्रयोजनं दीधितिकृद्भिः दर्शितम् । न च विरुद्ध एव तत्र तत्प्रयोजनमिति ब्रूम इति वाच्यम् । तथा सति वृत्तिनियामकसंयोगत्वेनैव संवन्धतापत्त्या वृत्तिपदस्य [1]संबद्धार्थकत्वे त्विति पङ्क्त्यसङ्गतेः । तत्संवन्धेन संबद्धत्वस्य वृत्तित्वपर्यवसन्नत्वात् ।

ननु समवायेन वह्नेः साध्यत्वे संयोगेन धूमस्य न व्यभिचारित्वं संभवति । तथा सति क्वचिद् वह्न्यवयवे संयोगेन धूमानुरोधेन वह्न्यन्तर-संयोगावश्यकतया वह्न्यवयवत्वस्य विरुद्धत्वानापत्तेः । न च केवलधूमस्यैव हेतुत्वाद् वह्न्यन्तरसंयोगो नापेक्षित इति वाच्यम् । तथा सति तादृशधूम-वत्प्रभामण्डलादेरेव संवन्धद्वयावच्छिन्नवह्न्यभाववत्त्वेनातिव्याप्त्यप्रसक्ते-रिति चेत् सत्यम् । संयोगमात्रस्य हेतुतावच्छेदकसंवन्धत्वे इदम् । तेन संवन्धेन विशिष्टधूमोत्पत्त्यवच्छेदके क्वचिद् वह्न्यवयवे तादृशसंबन्धेन वह्न्यन्तरसंयोग उपेयत इति व्यभिचारित्वम् । अतिव्याप्तिश्च वृत्त्यनि-यामकसंयोगस्य प्रतियोगितानवच्छेदकत्वेऽपि, गगनस्य तादृशसंबन्धद्वया-वच्छिन्नवह्न्यभावद्वयानधिकरणत्वेऽपि, वृत्तित्वाप्रसिद्धया [2]दुर्वारत्वात् । द्वितीयं तु वृत्तिनियामकसंयोगसंबन्धेन साध्यत्वाभिप्रायकम् । अन्यथा नाना-वह्निद्वयणुकत्र्यणुकसंयोगादिना वह्न्यन्तरजननाद् व्यभिचारित्वादिति ।

[1] संबद्धार्थत्वे—अ.		[2] दुर्धरत्वात्—अ.

इदं तु बोध्यम्––सार्वभौमाणां वृत्तिपदस्य संबन्धार्थत्वानालोचनं कथं कल्पयितुं शक्यम् । तादात्म्यसंबन्धेन हेतावव्याप्तेः अग्रिमदूषणगणानन्तर्गतत्वात् । तदालोचनेऽपि कथं साध्यतावच्छेदकसंबन्धविवक्षयामपि दोषस्यानालोचनन् । तैः तादृशस्थलमेव नालोचितमिति चेत्––वृत्तिपदस्य यथाश्रुतार्थत्वे किं तैः तत्स्थलमालोचितं ब्रूषे ? तर्हि निष्कृष्टसंबन्धार्थकत्वे अनालोचितं कथं ब्रूयाः ? दीधितिकृतस्त्विदानीं यथास्थितानुवादपरा इति नैतादृशचातुरी तत्र कल्पनार्हा । तस्मात् प्रथमं दर्शितरीत्या विरुद्धमेव । एवं च विरुद्धवारकविशेषणवति दोषोद्भावनोत्तरं विरुद्धे दोषोद्भावने कथंतापि परास्ता । एवं च साध्यसामानाधिकरण्यविशेषणेनैव तद्दोषवारणसंभवात् कथमग्रिमदूषणानां मध्ये एतद्दूषणान्तरं गणनीयम् । द्वितीयं तु क्वचिद् वह्न्यवयवे वह्न्यन्तरसंयोगमुपेत्य व्यभिचारि । (न च) समवायेन वह्नेः हेतुत्वमुपेक्ष्य वह्न्यवयवत्वानुधावने किं बीजं, न किंचित् । वृत्त्यनियामकसामानाधिकरण्यादिसंबन्धावच्छिन्नवह्न्यभावमुपेत्य तत्समुदायविशिष्टं यत् प्रलयादि, तत्र हेतुतावच्छेदकसंबन्धावच्छिन्नवृत्तित्वाप्रसिद्धेरतिव्याप्तेः भङ्गवारणाय समवायसंबन्धावच्छिन्नवह्नित्वावच्छिन्ननिरूपिततादात्म्यसंबन्धावच्छिन्नजनकतापर्यन्तनिवेशात् । तत्र च वह्न्यन्तरसंयोगानुपगमे तृतीयमिति । सत्ताभावेति । सत्तावदसमवेतत्वस्य वृत्तिमदवृत्तित्वात् ।

## न्यायरत्नम्

**वृत्तिपदस्य [1]संबन्धित्वार्थकत्वमावश्यकमिति । नन्वेवं सति समवायेन वह्नेः साध्यत्वे संयोगेन धूमस्य हेतुत्वेऽतिव्याप्तिः; धूमाद्यभावाधिकरणगगनसंबन्धित्वस्य व्यधिकरणधर्मावच्छिन्नाभावस्यैव वृत्तिमद्वृत्तित्वादिति चेन्न । महाकालान्यो घटादित्यादावित्यादिपदसंग्राह्यत्वात् तादृशातिव्याप्तेः । न चैवं प्रसिद्धसाध्यकस्थलत्यागानौचित्यमाशङ्क्यम् । वृत्तिपदस्य यथाश्रुतार्थपरत्वाभिप्रायेण तत्त्यागात् । वस्तुतस्तु––साध्यवदनुयोगिक-**

[1] अत्र पाठभेदाः गादाधर्यां दर्शिताः––स्व.

त्वहेतुप्रतियोगिकत्वोभयाभावावृत्तिवृत्तित्वे तदुभयाभावव्याप्यं यत्साध्याभाववन्निरूपितहेतुतावच्छेदकसंबन्धेन संबन्धित्वं तदभाव एव निवेश्यः। निरुक्तस्थले गगनान्यसाध्याभाववत्संबन्धित्वमेव तथेति तादृशाभावस्य वृत्तिमद्वृत्तेः हेतावसत्त्वान्नातिव्याप्तिरित्यवधेयम्। एतेन वृत्तिपदस्य संबन्धार्थतानालोचनं कथं वक्तुं शक्यम्? तादात्म्यसंबन्धेन हेतावव्याप्तेः अग्रिमदूषणानन्तर्गतत्वात्। तदालोचने कथं साध्यतावच्छेदकसंबन्धनिवेशनेऽपि तद्दोषानालोचनमिति शङ्कानवकाशः। प्रथमदोषस्य मतद्वयसाधारण्याभावेन तदनुद्भावनात्। साध्यतावच्छेदकसंबन्धविवक्षायां चोक्तविवक्षया अतिव्याप्तेरपि वारणात्।

तेनाप्यतिव्याप्तिर्वारयितुं शक्यत इति। अत्रेदं विचार्यम्——साध्यसामानाधिकरण्यविशेषणेन तद्वह्निमान् तद्वह्न्यवयवत्वादित्यादौ अतिव्याप्तिवारणसंभवेऽपि सामान्यतः संयोगेन वह्निमान् वह्न्यवयवत्वादित्यत्र अतिव्याप्तिर्दुर्वारैव। स्वावयवे स्वसंयोगासंभवेऽपि स्वातिरिक्तवह्निसंयोगोत्पत्तौ बाधकाभावात्। अन्यथा एतद्धूमावयवे धूमान्तरसंयोगसत्त्वस्य सार्वभौमनिरुक्तौ स्वयमुक्तस्यानुपपत्तेरिति।

## गादाधरी

(१०४) साध्याभावे साध्यतावच्छेदकसमनियतप्रतियोगिताकत्वनिवेशनम्।

**पूर्ववदत्र साध्याभावपदेन साध्यतावच्छेदकविशिष्टव्यापकतावच्छेदकरूपावच्छिन्नाभावविवक्षणे[1] नानाविपक्षके तथाविधतत्तद्विपक्षावृत्तित्वावच्छिन्नाभावकूटाधिकरणाप्रसिद्ध्या अव्याप्तिः।**

[1] एतद्विवक्षणप्रयोजनं तु अभाववान् मेयत्वादित्यादौ घटादिवारणमेव, न तु वह्निमान् धूमादित्यादौ तत्तद्वह्न्यभाववारणम्; वह्नित्वावच्छिन्नवह्न्यभावघटितकूटाधिकरणतायाः ह्रदादावेव सत्त्वात् तद्वृत्तित्वाभावसत्त्वात्——रा.

**[1]साध्यतावच्छेदकविशिष्टसमव्यापकतावच्छेदकावच्छिन्नाभाव-निवेशने[2] गौरवमिति साध्यतावच्छेदकसमव्याप्तप्रतियोगिताकाभाव एव विवक्षितुमुचितः । तार्णातार्णदहनवृत्तिद्वित्वावच्छिन्न-प्रतियोगिताकानां तथाविधसाध्याभावानामधिकरणे धूमादेः वृत्तावपि वह्नित्वावच्छिन्नवह्न्यभावघटिततादृशाभावकूटवति अवृत्तेः अव्याप्त्यनवकाशादित्याशयेन तथाविधमेवाभावं निवेशयति--तथेति । स्वम्--प्रतियोगिता । समनियताभावैक्यमते साध्याभाव-प्रतियोगितायाः साध्याभावसमनियताभावप्रतियोगिपदार्थान्तर-[3]वृत्तित्वेऽपि साध्यतावच्छेदकेन व्यधिकरणेन वा धर्मेणावच्छिन्नायाः साध्यमात्रवृत्तिप्रतियोगितायाः साध्यतावच्छेदकसमनैयत्यमक्षतमेव[4] ।**

## कृष्णंभट्टीयम्

[5]समव्यापकेति । साध्यव्यापकतावच्छेदकत्वे सति साध्यव्याप्यतावच्छेदक इति नार्थः; केवलान्वयिनि अव्याप्तेः । किन्तु स्वावच्छिन्नव्यापकतावच्छेदकसाध्यतावच्छेदकावच्छिन्नव्यापकतावच्छेदकधर्मेत्यर्थः । आशयेनेति । साधनसमानाधिकरणत्वविशेषणतापक्षे वह्निसामान्याभावस्य कूटानन्तर्गतत्वेऽपि तार्णातार्णदहनोभयाभावमादाय नातिव्याप्तिः ।

[1] साध्यव्यापकतावच्छेदकतावच्छेदकत्वे सति तद्व्यापकतावच्छेदको यत्स्वावच्छिन्नव्यापकतावच्छेदकसाध्यतावच्छेदकविशिष्टसाध्यव्यापकतावच्छेदको यो धर्मः तदवच्छिन्नेत्यर्थः--रा.

[2] निवेशने च--अ.

[3] वह्निप्रकारकप्रमाविशेष्यत्वादि--रा.

[4] तथा च तत्तत्प्रतियोगिताकत्वेन व्यापकता--रा.

[5] समव्यापकतेति प्रतीकधारणम्--अ.

सार्वभौममते उभयत्वस्य एकविशिष्टापरत्वरूपतया, तदभावस्य साध्यतावच्छेदकसमनियतप्रतियोगिताकत्वाभावादिति भावः । अक्षतमेवेति । तत्तत्प्रतियोगितात्वेन व्याप्यताया निवेश्यत्वात् ।

### न्यायरत्नम्

नानाविपक्षकेति । वह्निमत्त्वप्रकारकप्रमाविषयो धूमादित्यादावित्यादिः । तेन संयोगेन वह्निसाध्यके संयोगसंबन्धावच्छिन्नप्रतियोगिताकतत्तद्विपक्षावृत्तित्वावच्छिन्नाभावकूटाधिकरणस्य गुणादेः प्रसिद्धत्वेऽपि न क्षतिः । समव्यापकतावच्छेदकेति । साध्यतावच्छेदकव्यापकत्वे सति तद्व्याप्यतावच्छेदकधर्मावच्छिन्नेत्यर्थः । तद्व्याप्यतावच्छेदकत्वं च स्वावच्छिन्नव्यापकतावच्छेदकसाध्यतावच्छेदककत्वम् । अव्याप्त्यनवकाशादिति । ननु साधनसमानाधिकरणत्वस्य साध्याभावविशेषणत्वपक्षे वह्न्यभावघटितकूटस्य लक्षणाघटकत्वात् तार्णातार्णदहनोभयाभावघटितकूटमादायाव्याप्तिरस्त्येवेति चेन्न; साधनसामानाधिकरण्यविशेषणपक्षे साध्याभावे साध्यसमानाधिकरण-समानाधिकरणधर्मावच्छिन्नाभावभिन्नत्वविशेषणस्य वक्ष्यमाणत्वाद् दर्शितोभयाभावस्य तादृशविशेषणानाक्रान्ततया तद्घटितकटस्य लक्षणघटकत्वविरहात् ।

## गादाधरी

(१०५) घटत्वेन वाच्यत्वाभावस्य साध्यतावच्छेदकसमनियतप्रतियोगिताकत्वोपपादनम् ।

अथ घटत्वाद्यवच्छिन्ना या वाच्यत्वनिष्ठप्रतियोगिता सा घटादिभिन्नयावद्वस्तुवृत्तिरेकैव स्वीक्रियते, न तु वाच्यत्वादिमात्रवृत्तिः । तथा सति घटत्वेन प्रमेयत्वं नास्तीत्यादिप्रतीतिविषयप्रतियोगितान्तरकल्पने गौरवादिति तादृशप्रतियोगिताया

न वाच्यत्वत्वादिरूपसाध्यतावच्छेदकसमनैयत्यमिति चेत् । काक्षतिः । वाच्यत्वभिन्नत्वेन वाच्यत्वं नास्तीत्यादिप्रतीतिविषयमभावमादायैव तत्र लक्षणसमन्वयसंभवात् । स्वव्यधिकरणवाच्यत्वभिन्नत्वावच्छिन्नायाः प्रतियोगिताया वाच्यत्वभिन्नवृत्तित्वस्यासंभावितत्वात् ।

वस्तुतस्तु घटत्वावच्छिन्नवाच्यत्वाभावप्रतियोगितायां व्यधिकरणघटत्वादेरिव समानाधिकरणवाच्यत्वत्वादेरपि अवच्छेदकत्वमावश्यकम्[1] । घटत्वेन वाच्यत्वं नास्तीत्यादिप्रतीत्या वाच्यत्वत्वादेः प्रतियोगितावच्छेदकत्वानवगाहने तादृशप्रतीतेः वाच्यत्वत्वादिविशिष्टवैशिष्टयानवगाहित्वेन तत्र वाच्यत्वत्वादिप्रकारकज्ञानानपेक्षापत्तेः । एवं च घटत्वेन प्रमेयत्वं नास्तीत्यादिप्रतीतिविषयप्रतियोगिताया अतिरिक्तत्वमावश्यकम्, अवच्छेदकभेदाद् इति घटत्वेन वाच्यत्वं नास्तीत्यादिप्रतीति[2]विषयप्रतियोगिता वाच्यत्वादावेव वर्तते, न त्वन्यत्रापि, [3]मानाभावात् । अतो घटत्वादिना वाच्यत्वाभावोऽपि लक्षणघटकः ।

अथैवं साध्यतावच्छेदकावच्छिन्नव्यापकतावच्छेदकरूपावच्छिन्नाभावघटितलक्षणे वह्नित्वाद्यवच्छिन्नसाध्यकस्थले वह्नित्वादिना घटाद्यभावो लक्षणघटको न स्यात्, व्यापकतावच्छेदकवह्नित्वादिपर्याप्तप्रतियोगितावच्छेदकताकत्वविरहात् । महानसीयवह्नित्वाद्यवच्छिन्नाभाववारणायावच्छेदकतापर्याप्तिविवक्षण-

[1] आवश्यकमुक्तयुक्तेः—अ.

[2] विषयाभावीयप्रतियोगिता—अ.

[3] मानाभावादिति घटत्वादिना—अ.

**स्यावश्यकत्वादिति चेन्न। व्यापकतावच्छेदकपर्याप्तत्वं हि व्यापकतानवच्छेदकावृत्तित्वम्। तच्च इन्धनत्वाद्यवच्छिन्नवह्न्यभावप्रतियोगितावच्छेदकतायामक्षतमिति तादृशाभावमादायैव लक्षणसमन्वयसंभव इति। [[1]अत एव यश्चेन्धनत्वाद्यवच्छिन्नवह्न्यभावाधिकरणीभूतमहानसवृत्तित्वादेरभाव इति दीधितिग्रन्थः संगच्छते। अन्यथा इन्धनत्वादिना घटाद्यभावोपेक्षाया निर्बीजता आपद्येत।] [2]एवं च सार्वभौमाणामेतल्लक्षणाभिप्रायकतया समवायितया वाच्यत्वाभावो घट एव प्रसिद्ध इति मूलग्रन्थोपवर्णनमपि [3]संगच्छते।**

कृष्णंभट्टीयम्

असंभावितत्वादिति। सजातीयप्रतियोगिताया एव ऐक्यस्य प्रागुक्तत्वात्। वाच्यत्वभिन्नत्वेन वाच्यत्वघटान्यतराभावसद्भावेऽपि एतत्प्रतियोगिताया न यत्किंचित्त्वाघटितवैयधिकरण्याश्रयधर्मावच्छिन्नत्वमिति तत्प्रतियोगितान्यत्वाल्लक्षणनिर्वाहः।

ननु धूमत्वेन प्रमेयं नास्ति इति [4]प्रतीतेः धूमाभावप्रतियोगितायाः प्रमेयमात्रनिष्ठत्वात्, धूमभिन्नत्वेन धूमाभावमादायातिव्याप्तिरिति चेन्न। साध्यतावच्छेदकसंबन्धावच्छिन्नप्रतियोगिताकत्वसाधनसामानाधिकरण्यनिवेशनव्याकोपः; वह्नित्वसत्तात्वाद्यवच्छिन्नाभावस्य प्रमेयमात्रप्रतियोगिकत्वेन लक्षणाघटकत्वात्। रूपाभावसाध्यके अव्याप्तिदानासङ्गतिश्चेति तस्या धूममात्रनिष्ठत्वमेवेत्यभिप्रायात्।

1 [ ] एतदन्तर्गतपाठो नास्ति—अ.
2 प्रतियोगिताभेदे च—रा.
3 प्रतियोगितैक्ये तु न संगच्छत इति भावः—रा.
4 प्रतीतिः—अ.

नन्वेवं तादृशसाध्याभावसमुदायस्य साध्यतावच्छेदकसमनियतप्रतियोगितासमुदायस्य वा वाच्यत्वादिसाध्यकेऽप्रसिद्धिः। अथ साध्यसामान्याभावासत्त्वे कूटाघटितमेव; तत्सत्त्वे तु कूटघटितमिति चेन्न। कूटघटितवादिनां तदघटितदलक्षणासिद्धेरित्यत आह—वस्तुतस्त्विति।

पर्याप्तीति। यद्यपि द्वितीयलक्षणे न पर्याप्तिनिवेशः। प्रतियोगितावच्छेदकावच्छिन्नसामानाधिकरण्यस्थलेऽवच्छेदकतापर्याप्त्यप्रवेशेन महानसीयवह्न्यभावस्य तदुपपादानसंभवात्। यत्तु—धूमाभावस्य धूमत्वेन प्रमेयाभावानन्यतया प्रमेयत्वमपि प्रतियोगितावच्छेदकम्। तदादाय च दोषवारणाय शेषदले पर्याप्तिविवक्षणमावश्यकमिति; तन्न। समनियताभावैक्यनये शेषदले पर्याप्त्युपादाने आत्मा ज्ञानादित्यादौ चैत्रवृत्तित्वविशिष्टज्ञानाभावस्य स्वविशिष्टहेत्वधिकरणे प्रतियोगितावच्छेदकतापर्याप्त्यधिकरणधर्मावच्छिन्नसामानाधिकरण्यासंभवाद् [1]अव्याप्तिः। न च साध्यतावच्छेदकपर्याप्तप्रतियोगितावच्छेदकताकत्वाभावात् नायमभावो लक्षणघटक इति वाच्यम्। प्रतियोगिविशेषणस्यापि प्रतियोगितावच्छेदकत्वमते वह्नित्वेन इन्धनाभावस्यैव तादृशतया प्रतियोगितावच्छेदकावच्छिन्नेन्धनत्ववह्नित्वविशिष्टाधिकरणाप्रसिद्ध्या असंभवात्। तस्मात् तल्लक्षणे प्रतियोगिविशेषणस्य नावच्छेदकत्वं तदैक्ये शेषदले पूर्वदले च पर्याप्तिः; तद्भेदे तु दलद्वयेऽपि न पर्याप्तिः। तथापि मिश्रादिलक्षणे तद्विवक्षणं बोध्यम्।

नन्वेवमपि महानसीयवह्न्यभावो न वार्यते समुदायपर्याप्तेः, प्रत्येकपपर्याप्तिव्याप्यत्वादित्यत आह—व्यापकतेति। एवं चेति। पूर्वकल्पे समवायितया प्रमेयत्वाभावसमवायितया वाच्यत्वाभावयोरेकप्रतियोगितापत्त्या तस्याः साध्यतावच्छेदकसमनैयत्यं न स्यादिति तन्मूलस्यैतल्लक्षणाभिप्रायकत्वं न भवेदिति असङ्गतिः। एतत्कल्पे चावच्छेदकभेदेन प्रतियोगिताभेदाद् अदोष इति।

[1] अव्याप्तेः—अ.

## न्यायरत्नम्

वाच्यत्वभिन्नेति। साध्यतावच्छेदकसंबन्धेन वृत्तिमतीत्यादिः। तेन वाच्यत्वभिन्नत्वेन वाच्यत्वगगनान्यतराभावस्य वाच्यत्वभिन्नत्वेन वाच्यत्वाभावसमनियतत्वेन तदभिन्नतया तदीयप्रतियोगितायां वाच्यत्वान्यगगनवृत्तित्वसंभवेऽपि न क्षतिः। साध्यतावच्छेदकसंबन्धावच्छिन्नाधेयताविशिष्टप्रतियोगितात्वेन समनैयत्यविवक्षणाच्च न समनैयत्यभङ्गः इत्यवधेयम्। यद्यप्येवंरीत्या लक्षणसंगमनेऽपि धूमत्वेन प्रमेयाभावीयप्रतियोगितायाः प्रमेयसामान्यवृत्तितया धूमाभावो न लक्षणघटक इति धूमभिन्नत्वेन धूमाभावमादायातिव्याप्तिः। तथापि वह्नित्वेन प्रमेयसामान्याभावपरित्यागावसरे तादृशप्रतियोगिताया वह्निमात्रनिष्ठत्वव्यवस्थापनान्न दोषः। समवायितया वाच्यत्वाभावस्य लक्षणाघटकत्वेऽथेत्यादिग्रन्थस्य एतल्लक्षणाभिप्रायकत्वमनुपपन्नमित्याशयेन तस्य लक्षणघटकत्वार्थमाह--वस्तुतस्तु। यत्तु--वाच्यत्वभिन्नत्वेन वाच्यत्वाभावस्य लक्षणाघटकत्वेऽपि कूटाप्रसिद्ध्या अव्याप्तिशङ्कया तदवतरणम्, तन्न सम्यक्। समनियताभावैक्यमते सिद्धान्तेऽपि कूटाप्रसिद्धेः अव्यासज्यवृत्त्यनेकवृत्तिधर्मभिन्नधर्मावच्छिन्नाधिकरणस्यैव समुदायाधिकरणमित्यनेन विवक्षणीयतया अदोषात्। ज्ञानानपेक्षापत्तेः इति। यदि च ज्ञानापेक्षा नास्त्येवेत्युच्यते, तदा चक्रवर्तिलक्षणोक्तरीत्या तत्सिद्धिर्बोध्या।

अथैवमिति। मिश्रलक्षणे पर्याप्तिनिवेश आवश्यकः; अन्यथा साध्यव्यापकतावच्छेदकवह्नित्वावच्छिन्नप्रतियोगिताकमहानसीयवह्न्यभाववद्वृत्तित्वाभावस्य हेतावसत्त्वादव्याप्तेः। यद्यपि वह्नित्वेन घटाभावस्य तल्लक्षणाघटकत्वेऽपि वह्निसामान्याभावमादाय लक्षणसमन्वयः संभवति। तथापि तल्लक्षणे हेतुतावच्छेदकसंबन्धेन कस्यचिदधिकरणे वर्तमानत्वविशेषणावश्यकतया तदाक्रान्तयावदभावाप्रसिद्धिः द्रव्यसामान्याभावादेरतथात्वादिति वह्नित्वेन घटाद्यभावस्य लक्षणघटकत्वमावश्यकम्; तन्न

संभवतीति शङ्कातात्पर्यम् । व्यापकतानवच्छेदकावृत्तीति । इदमत्र चिन्त्यम् ——साध्यतावच्छेदकसंबन्धेनैव व्यापकतानवच्छेदकत्वस्य विवक्षणीयतया संयोगेन द्रव्यप्रमेयादिसाध्यके तादृशाव्याप्तिरपरिहार्यैव अस्मिन् कल्प इति। एवं चेति । घटत्वसमवायित्वादिना वाच्यत्वाभावस्यापि लक्षणघटकत्वे चेत्यर्थः । पूर्वकल्पे समवायितया वाच्यत्वाभावस्य लक्षणाघटकत्वादुपष्टम्भ-सङ्गतिः ।

## गादाधरी

(१०६) उभयत्वावच्छिन्नसाध्यकस्थले प्रतियोगितायाः साध्यतावच्छेदक-व्याप्यद्वयोपपादनम् ।

अथ पर्याप्तिसंबन्धेन यत्रोभयत्वादिकं साध्यतावच्छेदकं तत्र प्रतियोगिताया अव्यासज्यवृत्तित्वेन तत्पर्याप्त्यधिकरणप्रत्येक-व्यक्तौ पर्याप्तिसंबन्धेनोभयत्वादेरत्यन्ताभावस्य तदवच्छिन्नभेदस्य च सत्त्वात्[1] तस्य प्रतियोगिताव्यापकत्वं न संभवति । न चा-व्याप्यवृत्तिसंयोगादेर्यत्र साध्यतावच्छेदकता तत्र प्रतियोगिताव्याप-कत्वनिर्वाहाय प्रतियोग्यसामानाधिकरण्यं व्यापकताघटकाभावे निवेशनीयम् । तावता[2] उभयत्वस्यापि व्यापकत्वं निर्वहति । [3]पर्याप्तिसंबन्धेन उभयत्वपर्याप्त्यधिकरणस्य प्रत्येकानतिरिक्त-तया प्रत्येकवृत्तेः उभयत्वाभावस्यापि प्रतियोगिसमानाधिकरण-त्वादिति वाच्यम् । पृथिवीत्वघटत्वोभयत्वादिना यत्र साध्यता [4]तत्र जातित्वाद्यवच्छिन्नाभावप्रतियोगितासमानाधिकरणस्य

1 सत्त्वात्तत्र——अ

2 तावता पर्याप्तिसंबन्धेन——अ.

3 पर्याप्तिसंबन्धेन इति पाठो नास्ति——अ.

4 तत्र व्यभिचारिणि——अ.

तादृशसाध्यतावच्छेदकाभावस्य प्रतियोग्यधिकरणावृत्तित्वविरहेण तादृशसाध्यतावच्छेदकस्य तादृशप्रतियोगिताव्यापकतापत्त्या तादृशाभावमादाय तदवच्छिन्नसाध्यकद्रव्यत्वप्रकारकप्रमाविषयत्वादिहेतावतिव्याप्त्यापत्तेः [1]प्रतियोग्यनधिकरणवृत्तित्वस्यैवाभावे निवेशनीयतया उभयत्वाभावव्यावर्तनासंभवात्;[2] तदभाववतः प्रत्येकं तदनधिकरणत्वात्; तस्येव तदधिकरणताया अपि व्यासज्यवृत्तित्वादिति चेन्न। सामानाधिकरण्यस्याव्याप्यवृत्तितापक्षे [3]प्रतियोगिसामानाधिकरण्याभावविशिष्टाभाववत्ताघटितव्यापकताया एव निवेशसंभवात्, पृथिवीत्वादावुक्तोभयत्ववति पृथिवीत्वत्वावच्छेदेन तदभावस्य प्रतियोगिसमानाधिकरणत्वेऽपि जलत्वादेः तत्सामानाधिकरण्याभावविशिष्टतदभाववत्त्वेनातिप्रसङ्गाभावात्। उभयत्वाद्यभावस्य तदभाववति एकस्मिन्नपि तत्सामानाधिकरण्याभावानभ्युपगमात्, तत्सामानाधिकरण्यावच्छेदकस्य प्रत्येकानतिरिक्तत्वात्।

कृष्णंभट्टीयम्

संबन्धान्तरावच्छिन्नसाध्यतावच्छेदकाभावमादाय व्यापकत्वाप्रसिद्धिरतः साध्यतावच्छेदकताघटकसंबन्धेन व्यापकत्वं [4]प्रवेश्यम्। तथापि शङ्कते—अथेति। प्रतियोग्यनधिकरणवृत्तित्वेति। प्रतियोग्यनधिकरणी-

[1] प्रतियोग्यनधिकरणीभूतप्रतियोगितावन्निष्ठेत्यर्थः—रा.

[2] उभयत्वरूपप्रतियोग्यनधिकरणे प्रत्येकव्यक्तौ उभयत्वाभावसत्त्वात्। एतदेवोपपादयति—रा.

[3] स्वप्रतियोगिसामानाधिकरण्याभावविशिष्टाभावघटितायाः इति न्यायरत्ने प्रतीकधारणम्—स्व.

[4] निवेश्यम्—अ.

भूतप्रतियोगितावन्निष्ठेत्यर्थः। व्यावर्तनेति। उभयत्वरूपप्रतियोग्यनधिकरणे प्रत्येकव्यक्तौ उभयत्वाभावसत्त्वात्। तदेवोपपादयति––तदभाववत इति। पृथिवीत्वघटत्वोभयादिसाध्यके जातित्वावच्छिन्नाभावप्रतियोगितायां निरुक्तसाध्यतावच्छेदकव्याप्यत्वाभावमुपपादयति––पृथिवीत्वेति। प्रतियोगीति। तादृशोभयत्वाभावे प्रतियोगितावन्निष्ठत्वसत्त्वात् प्रतियोगिसामानाधिकरण्याभावविशिष्टे तत्र तन्निष्ठत्वाभावो न संभवतीत्यतो विशिष्टाभाववत्तेत्युक्तम्। न च प्रतियोगिसामानाधिकरण्याभावविशिष्टस्वाभाववदवृत्तिप्रतियोगिताकत्वोक्तौ केवलान्वयिसाध्यतावच्छेदकके ऽप्रसिद्धिरिति वाच्यम्। [1]प्रतियोगिसामानाधिकरण्याभावविशिष्टयदभाववत्त्वं प्रतियोगिनः तदन्यत्वस्यैव प्रतियोगिता[2]व्यापकत्वरूपत्वात्। उक्ताव्याप्तिवारणप्रकारमाह––उभयत्वादीति। अनभ्युपगमादिति। तथा च स्वसामानाधिकरण्याभावविशिष्टस्वाभाववत्त्वं स्वाधिकरणे नास्तीति तदुभयवृत्तिप्रतियोगिताव्यापकत्त्वं तदुभयत्वे वर्तत एवेति न दोषः। ननु प्रत्येकमुभयत्वाभावस्येव तत्र प्रत्येकावच्छेदेनोभयत्वसामानाधिकरण्याभावः कुतो नेत्यत आह––तदिति। न च येन रूपेण प्रतियोग्यवच्छेदकता तदन्यरूपेणाभावावच्छेदकत्वमिति तद्व्यक्तित्वविशिष्टावच्छेदेन तदभावसत्त्वसंभवः। कालदेशातिरिक्तनिष्ठावच्छेदकतायाः किंचिदवच्छिन्नत्वस्याप्रामाणिकत्त्वात्।

ननु महाकालः सर्ववान् महाकालत्वादित्यादौ तादात्म्यसंबन्धेन साध्यतायां महाकालभेदो लक्षणघटको वाच्यः। तत्र प्रतियोगिताश्रये महाकाले साध्यतावच्छेदकताघटकसंबन्धेन प्रतियोगिसामानाधिकरण्याभावविशिष्टाभावाधिकरणत्वाप्रसिद्धिः यादृशावान्तरकालविशिष्टस्य महाकालस्य प्रतियोगिसामानाधिकरण्यावच्छेदकत्वं तदन्यावान्तरकालविशिष्टस्य तदभावावच्छेदकत्वे अवच्छेदकतावच्छेदकाङ्गीकारप्रसङ्ग इति

1 प्रतियोगिसामानाधिकरण्यविशिष्टयदभाववत्त्वम्––अ.

2 व्यापकतारूपत्वात्––अ.

चेन्न। प्रतियोगितावच्छेदकसंबन्धेन यादृशप्रतियोगिताश्रयसामानाधिकरण्याभावविशिष्टाभाववत्त्वं प्रतियोगिताश्रयस्य तादृशप्रतियोगितायां साध्यतावच्छेदकताघटकसंबन्धावच्छिन्नत्वयन्निष्ठत्वोभयाभावः तत्त्वं प्रतियोगिताव्यापकत्वमित्यदोषः। समवायाद्यवच्छिन्नघटत्वाद्यभावमादायैव लक्षणसङ्गतेरिति।

इदं तु बोध्यम्——साध्यतावच्छेदकताघटकसंबन्धेन प्रतियोगिसामानाधिकरण्याभावनिवेशकल्पे सर्ववत् नित्यज्ञानत्वादित्यादौ तादात्म्येन साध्यतायां सर्वत्वावच्छिन्नविषयकास्मदादिज्ञाने साध्यतावच्छेदकताघटकीभूतविषयितासंबन्धेन घटत्वावच्छिन्नसामानाधिकरण्याभावविशिष्टघटत्वाद्यवच्छिन्नाभावस्य सत्त्वेनैव लक्षणसमन्वयः। न च सर्वत्वविशिष्टे तदन्यत्वाभावाद् अव्याप्तिरिति वाच्यम्। प्रमेयसाध्यतावच्छेदककादौ दोषवारणाय तदनवच्छेदकसाध्यतावच्छेदकतापर्याप्त्यवच्छेदकधर्मवत्त्वरूपस्य तद्वदपर्याप्तसाध्यतावच्छेदकताकत्वस्य[1] वा तदन्यत्वस्य निवेशनीयत्वात्। नित्यत्वविशिष्टसर्वत्वावच्छिन्नस्य साध्यतावच्छेदकत्वस्थले[2] नित्यत्वानधिकरणेऽपि नित्यत्वविशिष्टसर्वमिति ज्ञाने विषयितया नित्यत्वविशिष्टसर्वसबन्धित्वोपगमे उक्तरीत्या तदनुपगमे च तुल्ययुक्त्या जन्यत्वविशिष्टघटादेरपि विषयितया ईश्वरज्ञाने असत्त्वेन प्रतियोगिसामानाधिकरण्याभावविशिष्टतदभावमादायैव लक्षणसङ्गतिः। एवं च महाकालः सर्ववानित्यादौ कालिकसंबन्धावच्छिन्नप्रतियोगिताकघटाद्यभावे प्रतियोगिसामानाधिकरण्यस्य अवान्तरकालमात्रावच्छेद्यत्वोपगमात् महाकालस्य तदभावविशिष्टतदभाववत्त्वं निष्प्रत्यूहम्। सर्ववान् कालत्वादित्यादौ घटवद्भेदस्तु न लक्षणघटकः। तत्र क्रियाद्यात्मकप्रतियोगिनः सर्वसामानाधिकरण्याभावविशिष्टसर्वाभावाधिकरणत्वात्। न च घटवान् महाकालत्वादित्यादौ

[1] साध्यतावच्छेदकवत्त्वस्य——अ.

[2] स्थले च——अ.

अव्याप्तिः । घटवद्भेदस्य प्रतियोगिनि महाकाले प्रलयावच्छेदेन [1]घटसामानाधिकरण्यविशिष्टघटाभाववत्त्वेन लक्षणाघटकत्वादिति वाच्यम् । यादृशयादृशप्रतियोगिताश्रयसामानाधिकरण्यविशिष्टाभावाधिकरणताः प्रतियोगिताश्रयस्य तादृशतादृशप्रतियोगितानाश्रयत्वकुटस्य वाच्यत्वात् । तत्र यादृशप्रतियोगिताघटितनिरवच्छिन्नाधिकरणताः तादृशप्रतियोगित्वाभावः याश्च तादृशतदवच्छिन्नाधिकरणताः तदवच्छिन्नत्वतादृशप्रतियोगित्वोभयाभाव इति क्रमेण कूटं निवेश्यम् । एवं च घटवान् कालत्वादित्यादौ घटत्ववदभावमादाय नातिव्याप्तिः । तदभावप्रतियोगिनः प्रलयस्य व्याप्यवृत्तिघटसामानाधिकरण्याभावाधिकरणतायाः निरवच्छिन्नत्वात् । अवच्छिन्नाधिकरणतानां सर्वत्रासंभवेन कतिपयलक्षणघटकत्वाद् व्याप्तिभेद इति चेत् । ओमिति; न काप्यनुपपत्तिः ।

केचित्तु––सामानाधिकरण्यस्य व्याप्यवृत्तित्वं भवतु मा वा, वस्तुगत्या प्रतियोग्यधिकरणं यद्यत् तत्तद्भेदकूटवद् यत् प्रतियोगित्ववत् तन्निष्ठत्वस्य व्यापकताघटकाभावे निवेशाद् उभयत्वे प्रतियोगिताव्यापकत्वनिर्वाहः । उभयत्वाधिकरणतायाः व्यासज्यवृत्तित्वेऽपि उभयत्वाधिकरणतत्तद्व्यक्तित्वावच्छिन्नभेदकूटस्य तत्तद्व्यक्तित्वस्याव्यासज्यवृत्तित्वेनासंभवात् । एवं च प्रतियोग्यनधिकरणप्रतियोगित्ववन्निष्ठेत्यादिकल्पेऽपि निर्वाहसंभवात् सामानाधिकरण्यस्याव्याप्यवृत्तित्वमतमवलम्ब्य विशिष्टाधिकरणतानिवेशायासो नोपादेय इति प्राहुः ।

### न्यायरत्नम्

**द्रव्यत्वप्रकारकप्र[2]माविषयत्वादिति । द्रव्यत्वस्य समवायेन हेतुत्वे जातित्वावच्छिन्नाभावघटितकूटवति समवायेन वृत्त्यप्रसिद्ध्या नातिव्या-**

[1] घटासामानाधिकरण्येत्यादि––अ.

[2] प्रमाविषयत्वादि इत्येव पाठः गादाधर्याम्––स्व.

प्तिरतः तावत्पर्यन्तानुधावनम्। स्व[1]प्रतियोगिसामानाधिकरण्याभाव-विशिष्टाभावघटितताया इति। स्वाधिकरणावच्छेदेन स्वप्रतियोगिसामाना-धिकरण्याभाववदभावघटितताया इत्यर्थः। तेन केवलोभयत्वाभावादेस्तादृश-विशिष्टाभावानतिरेकेऽपि न क्षतिः। स्वं––प्रतियोगिता। जलत्वादे-स्तत्सामानाधिकरण्याभावविशिष्टतदभाववत्त्वेन––तादृशोभयत्वाभावे जलत्वावच्छेदेन प्रतियोगिसामानाधिकरण्याभाववत्त्वेन। [2]निवेशसंभवा-दिति। ननु प्रतियोग्यसामानाधिकरण्यघटकप्रतियोग्यधिकरणत्वं साध्यता-वच्छेदकताघटकसंबन्धेनैव वक्तव्यम्। तथा च कालिकसंबन्धेन सर्ववत-स्तादात्म्यसंबन्धेन साध्यतायां सर्ववद्भेदीयप्रतियोगित्वाधिकरणमहाकाला-वच्छेदेन प्रतियोगिसामानाधिकरण्याभावविशिष्टाभावाप्रसिद्धिरिति चेन्न। स्वाधिकरणावच्छेदेन प्रतियोगितावच्छेदकसंबन्धेन प्रतियोगिसामानाधि-करण्याभाववदभावीयप्रतियोगितासामान्ये यन्निष्ठत्वसाध्यतावच्छेदकता-घटकसंबन्धावच्छिन्नत्वोभयाभावः तत्त्वस्य विवक्षितत्वात्।

## गादाधरी

[3]अथवा यन्निरूपितसाध्यतावच्छेदकताघटकसंबन्धसामान्ये[4] प्रतियोगित्वाधिकरणय[5]त्किंचिद्व्यक्त्यनुयोगिकत्वाभावस्तदन्यत्व-

[1] प्रतियोगिसामानाधिकरण्याभावविशिष्टाभाववत्ताघटितव्यापकतायाः इति गादाधर्यां पाठः––स्व.

[2] निवेशसंभवादि'ति वाक्यं 'जलत्वादे'रित्यादि पूर्वप्रतीकवाक्यात् पूर्वं गादाधर्यां विद्यते––स्व.

[3] विशिष्य तादृशोभयत्वाभावे प्रतियोगितावन्निष्ठत्वसत्त्वात् प्रतियोगितासामा-नाधिकरण्याभावविशिष्टे तस्मिन् तन्निष्ठत्वाभावानुपगमात् तादृशाभाववत्ताघटितं तादृशाभाववदवृत्तिप्रतियोगिताकत्वमेव प्रतियोगिताव्यापकत्वं वाच्यम्। तथा च केव-लान्वयिसाध्यतावच्छेदकेऽप्रसिद्धिः इत्यत आह––अथवेति––रा.

[4] दण्डिमानित्यादिसद्धेतुसंग्रहाय सामान्येति––रा.

[5] पूर्वोक्तातिव्याप्तिवारणाय यत्किंचिदिति––रा.

**मेव प्रतियोगिताव्यापकत्वम्। उभयत्वनिरूपितपर्याप्तौ च[1] न प्रत्येकानुयोगिकत्वाभावः; तदनुयोगिनः[2] प्रत्येकानतिरिक्तत्वादिति[3]।**

कृष्णंभट्टीयम्

यादृशव्यापकतानिवेशे उक्तपूर्वपक्ष एव नोदियात् तादृशव्यापकत्वं सामानाधिकरण्यव्याप्यवृत्तितामतसाधारण्यार्थमाह––अथवेति। दण्डचादेः साध्यत्वे परंपरया दण्डत्वस्य साध्यतावच्छेदकत्वमतेऽपि दण्डचाद्यभावस्य सङ्ग्रहाय सामान्यपदोपादानम्। समवायैक्यमते च यत्समवायस्य [4]प्रतियोगिताधिकरणयत्किंचिद्व्यक्त्यनुयोगिकत्वाभावः तदप्रसिद्धेः यन्निरूपितसाध्यतावच्छेदकताघटकसंबन्धानुयोगितासामान्य इति वाच्यम्। तत्र सामान्यपदमावश्यकम्। अन्यथा यत्किंचिद्वह्नित्वप्रतियोगिकसमवायसंबन्धानुयोगित्वस्य तादृशाभाववत्त्वेन अव्याप्तेः। साध्यतावच्छेदकताघटकसंबन्धावच्छिन्नयदनुयोगितासामान्य इति तु अनुपादेयम्, गौरवात्।

नन्वत्र सर्ववत् नित्यज्ञानत्वादित्यादौ सर्वमित्याकारकजन्यज्ञानस्यापि साध्यतया तत्र घटत्वविशिष्टविषयितातिरिक्तायाः सर्वत्वविशिष्टविषयिताव्यक्तेः सामान्यरूपेण संबन्धत्वेऽपि घटत्वविशिष्टविषयिताव्यक्तौ तथा[5]विधानुयोगिताकत्वोपपादनसंभवेन पारिभाषिकतदन्यत्वस्य साध्यतावच्छेदके सत्त्वेनाव्याप्तिविरहेऽपि सर्ववान् महाकालत्वादित्यादौ अव्याप्तिरिति चेन्न। साध्यतावच्छेदकताघटकसंबन्धसामान्ये प्रतियोगिताधिकरणयत्किंचिदनुयोगिकत्वयन्निरूपितत्वोभयाभावः पारिभाषिकतदन्यत्वस्य गगनादिक-

[1] चकारो नास्ति––अ.

[2] तदनुयोगिनः उभयस्य––अ.

[3] एतदनन्तरं तस्य प्रतियोगिताव्यापकत्वनिर्वाहः इत्यधिकः पाठः––अ.

[4] प्रतियोगित्वाधिकरणेत्यादि––अ.

[5] अनुयोगिताकत्वाभावोपपादनसंभवेन––अ.

मादायैव सुवचत्वात् । गगनादेः कालिकसंबन्धेन वृत्तित्वमते तु किंचित्प्रतियोगिकयद्यत्संबन्धे प्रतियोगित्वाधिकरणयत्किंचिदनुयोगिकत्वाभावः तत्तदन्यस्वनिरूपितसाध्यतावच्छेदकताघटकसंबन्धकमेव वाच्यं साध्यतावच्छेदकमिति [1]दिक् । यत्किंचित्त्वानिवेशे घटत्वपृथिवीत्वोभयवान् इत्यादौ जातित्वावच्छिन्नाभावस्य लक्षणघटकत्वापत्त्या अतिव्याप्तिरतः यत्किंचित्त्वनिवेशः ।

ननु साध्यतावच्छेदकसमनियतप्रतियोगिताकाभावनिवेशे महानसीयवह्निमान् धूमादित्यादौ वह्निसामान्याभावस्यापि लक्षणघटकत्वापत्तिः, तत्प्रतियोगितायाः साध्यतावच्छेदकीभूतवह्नित्वसमनियतत्वात् । न च साध्यतावच्छेदकतापर्याप्त्यवच्छेदकरूपावच्छेदेन साध्यतावच्छेदकस्य प्रतियोगितासमनैयत्यस्य विवक्षणात् नायं दोष इति वाच्यम् । तथा सति वह्निधूमोभयवान् धूमादित्यादौ त्वित्वरूपतादृशरूपावच्छेदेन साध्यतावच्छेदकस्य व्यापकताया दुर्घटतया अव्याप्त्यापत्तेः ।

एतेन साध्यतावच्छेदकं यद्यत् तत्तद्व्याप्यत्वविवक्षापि प्रत्युक्ता । यद्रूपाश्रयप्रतियोगिकसाध्यतावच्छेदकताघटकसंबन्धसामान्ये प्रतियोगित्वाधिकरणयत्किंचिद्व्यक्तिवृत्तित्वाभावः तद्रूपभिन्नत्वस्य साध्यतावच्छेदकतापर्याप्त्यवच्छेदकविशेषणत्वे पुनः उक्तस्थले अतिप्रसङ्गतादवस्थ्यम् । अत एव साध्यतावच्छेदकतापर्याप्त्यधिकरणविशिष्टनिरूपितसंबन्धप्रतियोगित्वस्य तादृशविशिष्टनिरूपितविषयितानिरूपकत्वस्य वा प्रतियोगिताव्यापकत्वविवक्षणमपि अनादेयम् । तथा सति 'अथ पर्याप्तिसंबन्धेन यत्र उभयत्वं साध्यतावच्छदछेक' मिति शङ्काग्रन्थस्य तत्समाधानग्रन्थस्य च उन्मत्तप्रलपितत्वापत्तेश्चेति चेन्न । साध्यतावच्छेदकतापर्याप्त्यधिकरणस्य प्रतियोगिताव्यापकत्वस्योक्तत्वात् ।

1 घटत्वादिमद्भेदस्तु वार्यः—अ.

'पर्याप्तिसंबन्धेन यत्रोभयत्वं साध्यतावच्छेदकमि'ति ग्रन्थपर्यालोचनया वह्निधूमोभयत्वादिकमेव साध्यतावच्छेदकं, न तु वह्नित्वादिकम्; साध्यतावच्छेदकताघटकसंबन्धस्तु वह्नित्वधूमत्वव्यापकत्वविशिष्टपर्याप्तिरिति मतावलम्बनं प्रतीयते। वह्नित्वधूमत्वादेरपि साध्यतावच्छेदकत्वमते च यद्धर्मावच्छिन्नाधेयता [1]प्रतियोगिताधिकरणयत्किंचिदवृत्तिः तद्धर्मान्यत्वं विवक्षणीयम्। वह्नित्व[2]धूमताद्यवच्छिन्नाधेयतैकैवेति वह्निधूमोभयाभावसङ्ग्रहः।

यद्वा यत्किंचित्प्रतियोगित्वाधिकरणतावच्छेकतापर्याप्तिशून्यो यो धर्मः तदपर्याप्तविषयतापर्याप्त्याश्रयत्वं वाच्यम्। वह्नित्वधूमत्वादित्रयस्य तादृशावच्छेदकतापर्याप्तिमत्तया तच्छून्यः केवलवह्नित्वादिरेवेति तदुभयाभावसङ्ग्रहः। महानसीयवह्न्यादिसाध्यके महानसीयवह्नित्वादेः कालिकसंबन्धावच्छिन्नतदधिकरणतावच्छेदकतया वह्निसामान्याभावसङ्ग्रहापत्तिरतः अधिकरणतायां साध्यतावच्छेदकताघटकसंबन्धा[3]वच्छेदकताकत्वं निवेश्यम्।

अत्र यादृशनिरूपकताकत्वविशिष्ट[4]साध्यतावच्छेदकावच्छेदकताघटकसंबन्धत्वे तादृशानुयोगितानिरूपकतावच्छेदकत्वाभावः तादृशनिरूपकतापर्याप्त्यनधिकरणत्वविवक्षणे महानसीयत्ववह्नित्वयोः साध्यतावच्छेदकताघटकसंबन्धभेदेऽपि महानसीयवह्न्यनुयोगिकसंबन्धप्रतियोगितात्वेन व्यासज्यवृत्तितया न वह्निसामान्याभावस्य लक्षणघटकत्वसंभव इति तु न सम्यक्। उभयसाध्यके उभयत्वव्याप्यत्वविशिष्टसमवायादिसाधारणनिरूपकताकत्वस्य व्यासज्यवृत्तितया तदुभयाभावस्य लक्षणघटकत्वानुपपत्तेः।

1 प्रतियोगित्वाधिकरणेत्यादि--अ.

2 धूमत्वाद्यवच्छिन्नेत्यादि--अ.

3 अवच्छेदकत्वम्--अ.

4 साध्यतावच्छेदकताघटकसंबन्धत्वे--अ.

## न्यायरत्नम्

सामानाधिकरण्यस्य व्याप्यवृत्तित्वे त्वाह—अथवा यन्निरूपितेति । सामान्यपदानुपादाने संयोगेन वह्निमतः तादात्म्येन साध्यतायां साध्यतावच्छेदकताघटकपर्वतानुयोगिकवह्निसंयोगे प्रतियोगित्वाधिकरणयत्किंचिन्महानसानुयोगिकत्वाभावसत्त्वेन वह्निमद्भेदीयप्रतियोगिताव्यापकत्वस्य वह्निरूपसाध्यतावच्छेदकेऽनुपपत्तिरतस्तदुपादानम् । पृथिवीत्वघटत्वपर्याप्तौ जातिसामान्याभावीयप्रतियोगिताधिकरणानुयोगिकत्वसामान्याभावासत्त्वेन तादृशोभयत्वस्यापि तादृशप्रतियोगिताव्यापकत्वापत्तिरतो यत्किंचिदिति । समवायैक्यमते तु यन्निरूपितसाध्यतावच्छेदकताघटकसंबन्धानुयोगितासामान्ये प्रतियोगित्वाधिकरणयत्किंचिन्निष्ठत्वाभावः तदन्यत्वमेवविवक्षणीयम् ।

नन्वत्रापि कालिकसंबन्धेन सर्ववतः तादात्म्यसंबन्धेन साध्यतायां तादृशसाध्यवद्भेदीयप्रतियोगिताव्यापकत्वं साध्यतावच्छेदके दुरुपपादम् । वृत्तिमन्मात्रस्य यत्पदेनोपादाने तन्निरूपितसाध्यतावच्छेदकताघटककालिकसंबन्धे तादृशप्रतियोगित्वाधिकरणानुयोगिकत्वस्यैव सत्त्वात् तदभावो न संभवति; अवृत्तेरुपादाने तन्निरूपिततादृशसंबन्धस्यैवाप्रसिद्धेः । मैवम्—गगनादीनामवृत्तित्वमते तादृशसंबन्धसामान्ये यत्प्रतियोगिकत्वप्रतियोगित्वाधिकरणयत्किंचिद्व्यक्त्यनुयोगिकत्वोभयाभावस्तदन्यत्वस्यैव प्रतियोगिताव्यापकत्वरूपत्वात् तत्र गगनादेरेव यत्पदेनोपादानसंभवात् । न च यत्पदेन गगनस्योपादानसंभवेऽपि तद्भिन्नत्वस्य सर्वत्वावच्छिन्नेऽसत्त्वात् सर्वत्वावच्छिन्नस्य व्यापकत्वानुपपत्तेरिति वाच्यम् । यत्प्रतियोगिकत्वस्थाने यद्धर्मावच्छिन्नप्रतियोगिकत्वं निवेश्य तदवच्छिन्नापर्याप्तिकविषयतापर्याप्त्याश्रयत्वस्या विवक्षितत्वात् । गगनादीनां वृत्तित्वमते तु स्वाधिकरणयत्किंचिन्निष्ठाभावप्रतियोग्यनुयोगितासामान्ये यत्प्रतियोगिकसाध्यतावच्छेदकताघटकसंबन्धनिरूपितत्वाभावस्तत्त्वमेव प्रतियोगिताव्यापकत्वम्; स्वम्—प्रतियोगिता ।

ननु महानसीयवह्निसाध्यके व्यभिचारिणि वह्निसामान्याभावीयप्रतियोगिताया अपि साध्यतावच्छेदकताश्रयीभूतवह्नित्वव्याप्यत्वाद् व्यापकत्वाच्च तन्निरूपकाभावमादायातिव्याप्तिः। न च साध्यतावच्छेदकतापर्याप्त्यधिकरणव्याप्यत्वं विवक्षणीयमिति वाच्यम्। उभयत्वावच्छिन्नसाध्यके उभयाभावीयप्रतियोगितायास्तद्व्याप्यत्वानुपपत्तिः। तत्रोभयत्वधर्मितावच्छेदकस्यापि साध्यतावच्छेदकतापर्याप्त्यधिकरणत्वात्। मैवम्––तत्र द्वित्वस्यैव साध्यतावच्छेदकत्वात्। तद्धर्मितावच्छेदकस्यापि तत्त्वे च साध्यतावच्छेदकतापर्याप्त्यधिकरणधर्मपर्याप्तावच्छेदकताकप्रमीयप्रकारताव्याप्यत्वस्यैव विवक्षणात् नानुपपत्तिः।

## गादाधरी

(१०७) रूपध्वंसवान् रूपादित्यत्रातिव्याप्तिशङ्कातत्परिहारौ।

यत्तु–प्राचीनमते रूपादिसामान्याभावस्य रूपतद्ध्वंसतत्प्रागभावत्रयप्रतियोगिकतया रूपध्वंसादिसाध्यकरूपादिहेतावतिव्याप्तिः। रूपादिसामान्याभावीयरूपध्वंसत्वावच्छिन्नप्रतियोगितायाः साध्यतावच्छेदकसमनियतत्वेन तद्घटिताभावकूटाधिकरणे वायौ रूपादेरवृत्तेः। न च रूपस्यापि रूपध्वंसा[1]भावरूपतया तद्घटितस्य रूपसामान्याभावाघटितकूटस्यापि यावतामैकाधिकरण्यमिति विवक्षया लक्षणघटकत्वात् [2]तद्वति हेतोर्वृत्त्या नोक्तातिव्याप्तिरिति वाच्यम्। रूपादीनां प्रत्येकं स्वस्वध्वंसाभावरूपत्वेऽपि स्वान्यरूपादिध्वंसाद्यभावानात्मकतया साध्यतावच्छेदकसमनियतप्रतियोगिताकत्वविरहेण लक्षणाघटकत्वादिति; तन्न। जलपर-

[1] प्रागभावो विवक्षितः––रा.

[2] तद्वति च––अ.

**माण्वादौ रूपध्वंसत्वावच्छिन्नाभावबुद्धिनिर्वाहाय[1] जन्यरूपत्वावच्छिन्नाभावे रूपध्वंसत्वावच्छिन्नप्रतियोगिताकत्वकल्पनस्यावश्यकतया तत एव रूपादिसामान्याभाववत्यपि तत्प्रतीतिनिर्वाहाद् रूपादिसामान्याभावस्य रूपध्वंसादिप्रतियोगिकत्वानभ्युपगमात् । साधनसमानाधिकरणत्वस्य साध्याभावविशेषणतापक्षे तेनापि उक्तस्थले रूपादिसामान्याभावव्यावर्तनात्, स्वनिरूपकाभाववत्त्वसंबन्धेन साध्यतावच्छेदकसमनियतप्रतियोगिताकूटाधिकरणत्वमेव निवेश्य लक्षणस्य परिष्करणीयतया रूपादिसामान्याभावानधिकरणस्यापि जलपरमाण्वादेरुक्तस्थले [2]तत्कूटाधिकरणत्वेनातिव्याप्तेरनवकाशाच्च ।**

कृष्णंभट्टीयम्

स्वान्येति । तथा च घटीयरूपस्वरूपसाध्याभावस्य प्रतियोगित्वं घटीयरूपध्वंस एव, साध्यतावच्छेदकं तु पटीयरूपध्वंसेऽपीति न समनैयत्यमिति भावः। न च रूपात्यन्ताभावस्येव सामान्यतो रूपस्यापि रूपध्वंसमात्रे प्रतियोगित्वं संभवति। तथा सति नीरूपतया गगनादौ रूपध्वंसत्वावच्छिन्नाभावप्रत्ययानुपपत्तेः; रूपवत्तया घटादौ तत्प्रत्ययापत्तेः। रूपध्वंसत्वावच्छिन्नाभावस्य रूपात्मकत्वं रूपध्वंसवान् पृथिवीविशेषत्वादित्यादौ अव्याप्तिप्रसङ्गाच्च; साध्याभावस्यानन्तरूपघटितत्वात्। ननु जलपरमाणौ रूपध्वंसो नास्तीति प्रत्ययानुरोधेन, जन्यरूपाभावे रूपध्वंसप्रतियोगिकत्वमास्तां परंतु वायौ रूपध्वंसो नास्तीति [[3]प्रत्ययस्य रूपसामान्याभावविषयकतासंभवात् घटसामान्याभावादेः घटध्वंसादिप्रतियोगिकत्वेन घटध्वंसो नास्तीति]

[1] निर्वाहाय तस्य--अ. तस्य--प्राचीनस्य--रा.

[2] तत्कूटाधिकरणत्वेनापि--अ.

[3] [ ] एतदन्तर्गतपाठो नास्ति--अ.

प्रत्ययविषयतावद् रूपसामान्याभावेऽपि तत्स्वीकार्यम् । एवं च तदुभयघटितकूटाधिकरणं वायुरेवेत्यतिव्याप्तिर्दुर्वारैवेत्यत आह––साधनेति । तथा च रूपसामान्याभावस्य साधनासमानाधिकरणतया नातिव्याप्तिरिति भावः । अत्र जन्यजले पटादौ च रूपध्वंसो नास्तीति प्रत्ययानुरोधेन पाकजरूपाभावे एव तथात्वं कल्पनीयं न तु जन्यरूपाभावे [1]इति बोध्यम् । परिष्करणीयतयेति । अन्यथा समनियताभावैक्ये केवलान्वयिसाध्यके व्यधिकरणधर्मावच्छिन्नसाध्याभावकूटाप्रसिद्ध्यापत्तेः । जलपरमाण्वादेरिति । जन्यरूपाभाववत इत्यादिः । जन्यरूपाभावस्य तादृशप्रतियोगिताकत्वात् । तथा च रूपसामान्याभावात्मकसाध्याभावीयरूपध्वंसत्वावच्छिन्नप्रतियोगितायाः साध्यतावच्छेदकसमनैयत्यं जन्यरूपाभावद्वारा तत्कूटाधिकरणत्वं चेत्यर्थः इति भावः ।

### न्यायरत्नम्

**जन्यरूपत्वावच्छिन्नाभावेति । यद्यपि जन्यजले पटादौ च रूपध्वंसो नास्तीति प्रतीतेः जन्यरूपाभावेऽपि रूपध्वंसत्वावच्छिन्नप्रतियोगिताकत्वमसंभवदुक्तिकम्, तथापि जन्येत्यस्य पाकजन्येत्यर्थः इति ध्येयम् । तत्कूटाधिकरणत्वेनेति । स्वनिरूपकजन्यरूपाभावरूपसंबन्धेन रूपध्वंसत्वावच्छिन्नप्रतियोगिताया जलपरमाणौ सत्त्वादिति भावः ।**

## गादाधरी

(१०८) **प्रतियोगितायाः प्रतियोगिस्वरूपत्वमते तस्याः साध्यतावच्छेदकसमनैयत्योपपादनम् ।**

**प्रतियोगितायाः प्रतियोगिस्वरूपत्वमते नानाव्यक्तिसाध्यकस्थले साध्यतावच्छेदकसमनैयत्यस्य प्रत्येकं प्रतियोगितायामसत्त्वेऽपि स्वावच्छेदकावच्छिन्नतदभावीयप्रतियोगितात्वेन**

[1] इति तु बोध्यम्––अ.

समनैयत्यविवक्षणान्न दोषः । तत्तद्वह्नितत्तद्धूमादिस्वरूपप्रतियोगितानामपि स्वावच्छेदकवह्नित्वधूमत्वाद्यवच्छिन्नतदभावप्रतियोगितात्वेन वह्नित्वधूमत्वादिसमनैयत्यात् । वह्नित्वाद्यवच्छिन्नवह्न्यादिस्वरूपप्रतियोगितानां द्रव्यत्वाद्यवच्छिन्नाभावीयवह्न्यादिस्वरूपप्रतियोगितात्मकतया तदवच्छेदकद्रव्यत्वाद्यवच्छिन्नप्रतियोगितायाः[1] घटादावपि सत्त्वात् न तत्प्रतियोगितावच्छेदकावच्छिन्नप्रतियोगितात्वेन वह्न्यादिसमनैयत्यमिति तदभावीयत्वविशेषणम् । तथा[2] सति वह्नित्वाद्यवच्छिन्नाभावप्रतियोगिताया घटादावसत्त्वात् नानुपपत्तिः ।

यद्यप्येवमपि वाच्यत्वत्वादिसमनियतप्रतियोगित्वाप्रसिद्धिर्दुर्वारैव; व्यधिकरणधर्मावच्छिन्नाभावानामभिन्नतया वाच्यत्वादिस्वरूपवाच्यत्वभिन्नत्वाद्यवच्छिन्ना[3]भावीयप्रतियोगितावच्छेदक-[4]घटत्वाद्यवच्छिन्नप्रतियोगितानां पटादावपि सत्त्वात् । यत्किंचिदेकधर्मावच्छिन्नतदभावीयप्रतियोगितात्वेन समनैयत्यघटकव्याप्यत्वविवक्षणे च पृथिवीत्वाद्यभावादिसाध्यकस्थले घटावृत्तित्वाद्यवच्छिन्नाभाववारणमशक्यम्; तदभावीयपृथिवीत्वाभावादिरूपप्रतियोगितानां पृथिवीत्वाभावत्वाद्यवच्छिन्नाभावीयप्रतियोगितात्मकतया पृथिवीत्वाभावत्वादिरूपतदवच्छेदकावच्छिन्नप्रतियोगितात्वेन पृथिवीत्वाभावत्वादिसमनैयत्यसत्त्वात् । तथापि यद्धर्मा-

1 प्रतियोगितायाश्च--अ.

2 तथा च सति--अ.

3 वाच्यत्वभिन्नत्वावच्छिन्नवाच्यत्वाभावीय--अ.

4 नानाधर्मावच्छिन्नस्वरूपसंबन्धात्मिका या वाच्यत्वादिनिष्ठप्रतियोगिता तदवच्छेदकत्वाद् घटत्वादेरपि--रा.

**वच्छिन्नप्रतियोगितात्वेन यदभावनिरूपितत्वं तादृशधर्मावच्छिन्नतदभावीयप्रतियोगितात्वेनैव व्याप्यत्वनिवेशान्न दोषः। पृथिवीत्वाभावत्वावच्छिन्नप्रतियोगितात्वेन[1] पृथिवीत्वादिरूपाभावमात्रनिरूपितत्वम्, न तु घटावृत्तित्वावच्छिन्नाभावनिरूपितत्वमिति।**

कृष्णंभट्टीयम्

स्वावच्छेदकेति। तथा च साध्यतावच्छेदकव्याप्यत्वं तद्व्यापकत्वं च स्वावच्छेदकावच्छिन्नत्वविशिष्टतदभावीयप्रतियोगितात्वेन निवेशनीयमित्यर्थः। वह्निसामान्याभावप्रतियोगितायाः किंचिद्विशिष्टस्वाभावेऽपि सत्त्वेन साध्यतावच्छेदकव्यापकत्वभङ्गः। साध्यतावच्छेदकसंबन्धावच्छिन्नप्रतियोगिताया उपादानेऽपि स्वरूपसंबन्धेन साध्यतायां साध्याभावप्रतियोगितायाः किंचिद्विशिष्टस्वाभावेऽपि[2] सत्त्वात् तद्भङ्ग इति विशिष्टान्तम्। यद्यपि विशिष्य प्रतियोगितानां व्याप्यतानिवेशकल्पेऽपि निर्वाहो भवति, विशिष्टान्तं चानावश्यकम्, तथापि प्रतियोगिता अतिरिक्तेति पक्षे तादृशो निर्वाहः, न तु प्रतियोगिरूपत्वमते। तन्मते पृथिवीत्वसाध्यके जातित्वावच्छिन्नाभावसङ्ग्रहापत्तेरिति इदमुक्तम्। वाच्यत्वादीति। घटत्वेन वाच्यत्वाभावघटत्वेन [3]घटाभावप्रतियोगित्वाभ्यामेव दूषणनिर्वाहसंभवेऽपि वाच्यत्वभिन्नत्वेन वाच्यत्वाभावमादाय समनैयत्यभ्रमः स्यादिति इत्थमभिधानम्। यद्धर्मेति। यद्यपि वाच्यत्वभिन्नत्वेन वाच्यत्वाभावीयस्वरूपसंबन्धावच्छिन्नप्रतियोगितायाः घटादौ स्वीकारे बाधकाभावः; वाच्यत्वभिन्नत्वेन वाच्यत्वघटान्यतरन्नास्तीति प्रत्ययात्। एवं वह्निभिन्नत्वेन वह्न्यभावप्रतियोगितायाः रूपादौ स्वीकारापत्तिः। एवं च साध्यतावच्छेदकव्याप्यत्वस्य प्रतियोगिताविशिष्टव्यापकतावच्छेदकसाध्यतावच्छेदकत्वरूपत्वमुपेत्यैव

[1] पृथिवीत्वाभावत्वावच्छिन्नतदभावीयप्रतियोगितात्वेनेति क्वचित् पाठः—अ.

[2] अपि शब्दो नास्ति—अ.

[3] पटाभावेत्यादि—अ.

तदभावानां लक्षणघटकत्वं वाच्यम् । इदानीमेव तथा विवक्षणे पृथिव्यन्यत्व-विशिष्टद्रव्यत्वसाध्यकातिव्याप्त्यलग्नकतापत्तिस्तु न, तत्राधिकविवक्षयैवा-नतिपसङ्गात्; न तु एतन्मात्रविवक्षयेति । तथापि प्रतियोगिताव्यापकस्वा-भावकधर्मतत्समानाधिकरणस्वाभावकधर्मभेदेन तदवच्छेद्यप्रतियोगिता-भेदस्य सर्वसम्मतत्वात् । तथा च वाच्यत्वभिन्नत्वेन वाच्यत्वाभावादिप्रति-योगिताया अतिरिक्तत्वमिति तामाश्रित्य यथाश्रुतसाध्यतावच्छेदकव्याप्य-त्वनिवशसङ्गतिः ।

### न्यायरत्नम्

**स्वावच्छेदकावच्छिन्नतदभावीयप्रतियोगितात्वेन समनैयत्यविवक्षणा-दिति । यद्यपि वह्न्यादिसाध्यके साध्याभावीयप्रतियोगितायाः किंचि-द्विशिष्टस्वाभावेऽपि सत्त्वेन तदभावीयप्रतियोगितात्वेन तस्याः साध्यता-वच्छेदकव्याप्यत्वासंभवाद् व्याप्यदिशि स्वावच्छेदकावच्छिन्नत्वविशेषण-मर्थवत्; व्यापकदिशि तद्व्यर्थमेव । तथापि स्वावच्छेदकावच्छिन्ना च, तदभावीया च, स्वावच्छेदकावच्छिन्नतदभावीये; ते च ते प्रतियोगिते च, स्वावच्छेदकावच्छिन्नतदभावीयप्रतियोगिते; तयोर्भावः तादृशप्रतियोगि-तात्वं, तेन तादृशप्रतियोगितात्वेनेति व्युत्पत्त्या स्वावच्छेदकावच्छिन्नत्वतद-भावीयप्रतियोगितात्वयोः लाभः । अवच्छिन्नत्वं तृतीयार्थः । समनैयत्य-शब्दार्थः व्याप्यत्वं व्यापकत्वं च । स्वावच्छेदकावच्छिन्नत्वान्वितावच्छिन्न-त्वस्य व्याप्यत्वेऽन्वयः; तदभावीयप्रतियोगितात्वान्वितावच्छिन्नत्वस्य व्यापकत्वेऽन्वयः; व्याप्यत्वव्यापकत्वयोः ससंबन्धिकत्वेन विशिष्टघट-कैकदेशान्वयेऽपि नासामर्थ्यम् । तथा च स्वावच्छेदकावच्छिन्नत्वेन व्याप्यता तदभावीयप्रतियोगितात्वेन व्यापकता निवेशनीयेति लभ्यते । एवं सति व्यापकतायाः सामान्यरूपावच्छिन्नायाः व्याप्यतायाश्च विशेषरूपा—वच्छिन्नाया एव निवेशादित्यवतरणग्रन्थोक्तिरपि सङ्गच्छते । न च व्याप्यदिशि तदभावीयप्रतियोगितात्वस्योक्तशब्दाद् अलाभेऽतः तदभावीयत्वं प्रतियोगिताविशेषणमिति तद्व्यावृत्तिकथनपरग्रन्थविरोध इति शङ्क्यम् ।**

तादृशग्रन्थस्य देयमिति पदपूरणेन शब्दलभ्यविशेषणातिरिक्तविशेषणदान-प्रयोजनपरत्वात् ।

## गादाधरी

(१०६) साध्यतावच्छेदकव्याप्यत्वदलप्रयोजनविचारः ।

यद्यपि पूर्वदलाप्रवेशे वह्न्यादिसाध्यके धूमादिहेतौ साध्यतावच्छेदकसंबन्धावच्छिन्नसाध्यतावच्छेदकव्यापकप्रतियोगिताकतत्तद्धर्मावृत्तित्वावच्छिन्नाभावकूटाधिकरणत्वस्य गुणादौ प्रसिद्धत्वेऽपि तत्र हेतुतावच्छेदकसंबन्धेन वृत्तेरप्रसिद्ध्या अव्याप्तिसंभवः। तथापि साध्याभावकूटवति तादृशवृत्तेरप्रसिद्ध्या अव्याप्तिः तद्दलनिवेशेऽपि सत्तावान् जातेरित्यादौ वक्ष्यत इति स्थलान्तरे कूटाधिकरणाप्रसिद्ध्या अव्याप्तिवारणरूपं तत्प्रयोजनमाह––यत्र पृथिवीत्वाभावादाविति । तत्तद्विपक्षेति । घटपटादिरूपेत्यर्थः । तत्र सद्धेताविति । तत्र, साध्ये यः सद्धेतुर्जलत्वादिस्तत्रेत्यर्थः नाव्याप्तिरित्यनेनान्वयः । यावतामैकाधिकरण्यं संभवति तावदभावसमुदायाधिकरणविवक्षायां तद्दोषासंभवेन[1] स्थलान्तरे व्यावृत्तिमाह––पृथिवीत्वादाविति । द्रव्यत्वादेः समवायेन हेतुत्वे जातित्वाद्यवच्छिन्नाभावघटितकूटाधिकरणे समवायेन वृत्तेरप्रसिद्ध्या अतिव्याप्तेरनवकाशात् स्वरूपसंबन्धेन [2]हेतुत्वानुसरणम् । साधनसमानाधिकरणत्वस्य साध्याभावविशेषणतापक्षे जातित्वाद्यवच्छिन्नाभावस्य साधनासमानाधिकरणतया वारणसंभवेऽपि प्रत्येकं साधनसमानाधिकरणजलावृत्तित्वतेजोऽवृत्तित्वाद्यवच्छिन्न-

[1] एतद्दोषोद्धारसंभवेन––अ.

[2] द्रव्यत्वप्रकारकप्रमाविशेष्यत्वादेः हेतुत्वानुसरणम्––अ.

**समवायावच्छिन्नप्रतियोगिताकाभावकूटाधिकरणतायाः सामान्यादावेव सत्त्वादतिव्याप्तिः दुर्वारैवेति ध्येयम् ।**

कृष्णंभट्टीयम्

यद्यपीति । अत्र यद्यपि साधनसमानाधिकरणत्वस्याभावविशेषणतापक्षे नायं दोषः । तथापि [1]पृथिवीत्वादिसाध्यके जलावृत्त्यभावतेजोवृत्त्यभावादिघटितकूटवति सामान्यादौ द्रव्यत्वप्रकारकप्रमाविषयत्वादिहेतोरवृत्तेरतिव्याप्तिर्द्रष्टव्या । यत्रेत्यनेन हेत्वभिधाने, यत्र तत्रेत्यनयोर्वैयर्थ्यम्, अतः यत्रेत्यनेन साध्यस्यैव प्रक्रान्तत्वमालम्ब्याह––तत्र साध्ये इति ।

## गादाधरी

(११०) साध्यतावच्छेदकव्यापकत्वदलप्रयोजनविचारः ।

**[2]द्वितीयदलप्रयोजनमाह––नापीति । घटत्वाभावत्वादिना साध्यतायां घटादावेव साध्याभावकूटाधिकरणत्वप्रसिद्धिः, अत उक्तमभावत्वादिनेति । आदिपदात्प्रमेयत्वादिपरिग्रहः । तत्तत्साध्येति । घटत्वाभावपटत्वाभावरूपसाध्यस्य यः साध्यतावच्छेदकव्याप्यप्रतियोगिताको घटत्वपटत्वादिरूपाभावः तत्समुदायाधिकरणाप्रसिद्ध्येत्यर्थः । यावतामैकाधिकरण्यं संभवतीति विवक्षायामपि तादृशाभावसमुदायवति घटादौ हेतोर्वृत्तेरव्याप्तिरेव । न च [3]यावतामैकाधिकरण्यसंभवः तादृशतादृशाभावकूटाधिकरणं यद्यत् तावदन्यतमवृत्तित्वत्वसमनियतप्रतियोगिताकोऽभावो**

1 पृथिवीत्वसाध्यके––अ.

2 द्वितीयदलप्रवेशफलमाह––अ.

3 यावतामभावानाम्––अ.

**विवक्षणीयः। घटवृत्तित्वत्वाद्यवच्छिन्नाभावश्चोपदर्शितस्थले न तथा, जगत एव तावदन्यतमान्तर्गतत्वात्; अपि तु घटत्वादिना जगद्वृत्तित्वसामान्याभाव एव वृत्तिमद्वृत्तिस्तथाविधोऽभावः[1]। तत्तदधिकरणान्यतमत्वं[2] च तत्तदधिकरणावृत्तिशून्यत्वम्, न तु तत्तदधिकरणान्यान्यत्वम्; अतो नाप्रसिद्धिरिति वाच्यम्। एवमपि जातिप्रतियोगिकाभाववान् मेयत्वादित्यादौ जातिमतामेव प्रत्येकं घटत्वपटत्वघटिततादृशकूटाधिकरणतया [3]जातिमद्वृत्तित्वत्वावच्छिन्नाभावस्यापि [4]तादृशतया अव्याप्तेर्दुर्वारत्वादिति[5]।**

कृष्णंभट्टीयम्

अभावत्वादिनेति। न चात्र भावत्वेन अभावाभावमात्रसंभवात् कथं कूटप्रसिद्धिः; समवायेन गगनेन विरुद्धघटत्वपटत्वाभ्यां वा अभावाभावसंभवात्। यदि च प्रतियोगितावच्छेदकैक्ये सजातीयप्रतियोगिताया ऐक्येन तदभावानां प्रमेयसामान्यप्रतियोगिकत्वं घटत्वादिना अभावाभावोऽपि घटभिन्नमात्रप्रतियोगिक इति मम्, तदा भावत्वप्रकारकप्रमाविशेष्यत्वेन अभावाभावसंभवान्न दोषः। प्रतियोगिविशेषणस्यापि अवच्छेदकत्वपक्षे तु नानुपपत्तिगन्धोऽपि। अव्याप्तिरेवेति। वृत्तिमद्यत्किंचिदेकवृत्तित्वनिवेशे तादृशघटपटादिवृत्तित्वाभावानां भिन्नभिन्ने पटत्वघटत्वप्रकारकप्रमाविशेष्यत्वादावेव वृत्तावपि न व्यधिकरणधर्मावच्छिन्नवृत्तित्वाभावमात्रमादायाव्याप्तिनिरासः। किन्तु घटवृत्तित्वाभावमात्रसहितस्य पटवृत्तित्वाभाव-

[1] तथा च हेतौ सत्त्वात् नाव्याप्तिरिति भावः--रा.

[2] तावदधिकरणान्यतमत्वं च--अ.

[3] तादृशजातिमत् इत्यादि--अ.

[4] उक्तसमनियतप्रतियोगिताकतया--रा.

[5] इतिशब्दो नास्ति--अ.

मात्रसहितस्य वा व्यधिकरणधर्मावच्छिन्नवृत्तित्वाभावकूटस्य एकत्र पटत्वप्रकारकप्रमाविशेष्यत्वादौ घटत्वप्रकारकप्रमाविशेष्यत्वादौ वा असत्त्वादव्याप्तिरित्येवकारार्थः। अव्याप्तिं परिहरति––घटेति। तथाविधोऽभाव इति। तस्य हेतौ सत्त्वात् नाव्याप्तिरिति शेषः। तत्तदवृत्तिशून्यत्वं तत्तदवृत्तित्वकूटावच्छिन्नप्रतियोगिताकाभाववत्त्वं,; तेन व्यभिचारिणि साध्यवतोऽपि गगनाभाववत्त्वेऽपि नातिव्याप्तिः। केवलान्वयिसाध्यके च तादृशकूटस्य प्रतियोगितावच्छेदकत्वोपगमात् नाव्याप्तिः।

जातिमतामेवेति। ननु तत्र जगत एव अन्यतमत्वम्। तथा हि––यथा प्रत्येकं घटपटादि घटत्वपटत्वादिघटिततादृशकूटाधिकरणं, तथा विशिष्टसत्ताभावघटत्वपटत्वोभयाभावादेः जातिप्रतियोगिकाभावत्वेन साध्यतया जातिमद्वृत्तित्वविशिष्टतदभावस्य सामान्यादौ सत्त्वम्। न च वैशिष्ट्यानवच्छिन्नजातिवृत्तिप्रतियोगिताकाभावत्वेन साध्यत्वम्। तथापि जातिमद्वृत्तित्वविशिष्ट[1]तादृशप्रतियोगिताकाभावादेः सामान्यादौ सत्त्वमव्याहतमेवेति, विनापि साध्यतावच्छेदकव्यापकत्वं, लक्षणसमन्वय इति चेन्न। गौरवेण जातिप्रतियोगिताकाभावत्वस्य तदभाव[2]प्रतियोगितावच्छेदककोटिप्रवेशानुपगमेन जातिमद्वृत्तित्वविशिष्टाभावादेः साध्यतावच्छेदकाव्याप्यप्रतियोगिताकत्वेनाव्याप्तिसङ्गतेः। वस्तुतस्तु––विशिष्टातिरिक्तत्वस्य सार्वभौममतसिद्धत्वाद् जातिमद्वृत्तित्वविशिष्टसाध्याभावो न साध्यतावच्छेदकव्याप्यप्रतियोगिताक इति अव्याप्तिसङ्गतिः। अन्यथा व्यधिकरणधर्मावच्छिन्नाभावानुपगमेऽपि वह्न्यादिसाध्यके तत्तत्क्षणान्यक्षणवृत्तित्वविशिष्टवह्न्याद्यभावं, तदात्म्येन प्रमेयसाध्यके तत्तत्क्षणान्यवृत्तित्वविशिशिष्टिप्रमेयभेदं, गगनाभावादिसाध्यके ईदृशरीत्या साध्याभावं चादाय कूटप्रसिद्ध्या लक्षणसमन्वयसंभवात् अवतारकत्वानुपपत्तेः।

[1] तादृशजातिप्रतियोगिकाभावाभावादेः––अ.

[2] प्रतियोगितावच्छेदककोटिप्रवेशानुपगमे च––अ.

समनैयत्यनिवेशेऽपि गगनाभावादिसाध्यके तत्तदधिकरणवृत्तित्वविशिष्ट-साध्याभावकूटाधिकरणाप्रसिद्धेर्दुर्वारत्वाच्च ।

अथ एतादृशरीत्या जात्यादिभेदविशिष्टघटत्वपटत्वोभयाद्यभावा-भावस्यापि लक्षणघटकतया तद्घटितकूटाधिकरणतायाः जात्यादौ सत्त्वेन लक्षणसङ्गतेर्वारणेऽपि घटत्वजातित्वादिप्रत्ये[1]कान्यतराभावात्मकान्यतर-घटितकूटवत्त्वस्य सामान्यादौ सत्त्वात् व्यावृत्त्यसङ्गतिर्दुर्वारैवेति चेन्न; जातिमात्रप्रतियोगिकाभावस्य साध्यतया तत्सङ्गतेः । यत्तु––प्रतियोगि-तायां साध्यतावच्छेदकव्यापकत्वव्यावृत्तिरशुद्धैव । तथा हि जातिभिन्न-प्रतियोगिकस्य सामान्यत्वघटत्वोभयाभावस्य जातिप्रतियोगिकाभावत्वेन साध्यतया तदभावस्य तदुभयरूपतया तदधिकरणं सामान्यम् । एवं विशेष-त्वघटत्वोभयाभावादिकमादाय विशेषादिकमिति रीत्या, जगत एवान्यत-मत्वाक्रान्ततया नाव्याप्तिरिति पूर्वपक्षे, उभयत्वम् एकविशिष्टापरत्वं विशिष्टं च केवलान्यदिति तस्य जात्यप्रतियोगिकत्वात् न साध्यतेति समाधानम्––तदुभयमप्यसत्; समवायसंबन्धावच्छिन्नतत्तज्जात्यभावानां समवायावच्छिन्नजातिप्रतियोगिकाभावत्वेन साध्यत्वे तत्संबन्धावच्छिन्न-दर्शितोभयाभावस्य केवलान्वयितया तदभावाप्रसिद्धेः शङ्काया अत एव समाधानस्य चासङ्गतेः । कालिकसंबन्धावच्छिन्नतत्तज्जात्यभावानां न कालिकसंबन्धावच्छिन्नजाति[2]प्रतियोगिकाभावत्वेन साध्यत्वाभिप्रायः । तथा सति प्रतियोगितावच्छेदकविशिष्टसाध्यवत्ताग्रहविरोधितानियामक-कालिकसंबन्धेन कालस्यैव [3]साध्याभाववत्त्वेन जातिमतामेवेति लेखनवि-रोधात् । यदि च कालिकसंबन्धावच्छिन्नतत्तज्जात्यभावानामपि संबन्ध-विशेषाघटिततद्रूप्येण साध्यत्वम्, तदापि साध्यवत्ताग्रहविरोधितानियामक-कालिकसंबन्धेन सामान्यत्वादिमत्त्वं कथं सामान्यादौ संभवेदिति । अत्र

[1] स्वरूपसमवायान्यतरसंबन्धावच्छिन्न––अ.

[2] प्रतियोगिताकाभावत्वे––अ.

[3] साध्याभाववत्तया––अ.

कालिकसंबन्धावच्छिन्नजातिमात्रप्रतियोगिताकाभावोपलक्षणमिदम्; तेन तत्तज्जात्यनधिकरणदेशावच्छेदेन काले 'कालिकसंबन्धावच्छिन्नतत्तज्जात्यभावसत्त्वेऽपि काले एव तदभावानां स्वाधिकरणीभूततत्तज्जात्यधिकरणदेशावच्छेदेन सत्त्वात्। अत्र समनैयत्यनिवेशेऽपि घटत्वाभावतदन्याभावोभयाभावादिव्यावृत्तये अत्राहुः इत्याद्युक्तविशेषणे घटत्वाद्यात्मकाभावो न लक्षणघटक इति तु [1]न इदानीमुभयाभावस्य विशिष्टाभावत्वादित्यग्रे व्यक्तीभविष्यति। तादृशतया, साध्यतावच्छेदकव्याप्यप्रतियोगिताकतया।

## न्यायरत्नम्

**तत्तदधिकरणावृत्तिशून्यत्वमिति। तत्तदधिकरणवृत्तित्वाभावकूटसमानाधिकरणोभयावृत्तिधर्मावच्छिन्नाभावकूटवत्त्वमित्यर्थः। उभयावृत्तित्वपर्यन्तं परिचायकम्। एतेन तत्तदवृत्तिनिष्ठप्रतियोगिताकाभाववत्त्वविवक्षणे व्यभिचारिसामान्येऽतिव्याप्तिः; तादृशगगनाभाववत्त्वस्य जगत्येव सत्त्वात्। तत्तदवृत्तित्वावच्छिन्नप्रतियोगिताकाभावश्च गुरुधर्मस्य अभावप्रतियोगितानवच्छेदकत्वमते विवक्षितुमशक्यः। केवलान्वयिनि अवृत्तित्वमात्रस्य तत्प्रतियोगितावच्छेदकत्वसंभवेन तादृशाभावाप्रसिद्धेरिति शङ्का निरस्ता। जातिमतामेवेति। अथ जातिप्रतियोगिकाभाववान् मेयत्वादित्यादौ सत्ताविशिष्टजातिप्रतियोगिताकाभावाभावीयप्रतियोगिताया अपि साध्यतावच्छेदकसमनियतत्वेन तादृशप्रतियोगिताकाभावघटितकूटाधिकरणं सामान्यादिचतुष्टयमिति जगत एव तादृशान्यतमाधिकरणत्वमिति नाव्याप्तिः। न चातिप्रसङ्गानापादकलघुधर्मस्यावच्छेदकत्वे तादृशाभावीयप्रतियोगितायां सत्तावैशिष्ट्यस्यैवावच्छेदकत्वसंभवात् तादृशविशिष्टाभावाप्रसिद्धिः। सत्तावैशिष्ट्यावच्छिन्नाभावीयप्रतियोगितायाश्च साध्यतावच्छेदकव्याप्यत्वविरहाद् घटत्वपटत्वादिरूपाभावानामेव लक्षणघटकतया जातिमतामेव**

[1] नकारो नास्ति—अ.

तादृशाधिकरणान्यतमत्वमिति वाच्यम् । तथा सति विशिष्टसत्तावान् जाते-रित्यादौ साध्याभावस्योक्तयुक्त्या लक्षणाघटकत्वेन वैशिष्ट्यावच्छिन्ना-भावीयप्रतियोगितायाः साध्यतावच्छेदकव्याप्यप्रतियोगिताकत्वविरहेण घटत्वादिना सत्ताभावमादायातिव्याप्तेः । पृथिव्यन्यत्वविशिष्टद्रव्यत्ववत्, द्रव्यत्वादित्यादौ द्रव्यत्वत्वावच्छिन्नाभावमादायातिव्याप्तिदानासङ्गतेश्च । तत्रापि द्रव्येतरासमवेतत्वस्यैव लघोरतिप्रसङ्गानापादकस्यावच्छेदकत्वसं-भवेन तादृशाभावाप्रसिद्धेः। तस्मात् लघुसमनियतगुरोरेवानवच्छेदकत्वमिति सिद्धान्तानुसरणं प्रकृते युक्तम् । तथा सति सत्ताविशिष्टजातिप्रतियोगिता-काभावाभावस्यापि लक्षणघटकत्वं दुर्वारमिति चेन्न; तादृशाभावस्य विवक्षणीयसाध्यसमानाधिकरण-समानाधिकरणधर्मावच्छिन्नप्रतियोगिता-काभावान्यत्वविरहेण लक्षणाघटकत्वात् । न च तथा सति घटत्वपटत्वादि-रूपाणामप्यभावानां साध्यसमानाधिकरणत्वात् समानाधिकरणधर्मावच्छि-न्नप्रतियोगिताकत्वाच्च लक्षणाघटकत्वेनाव्याप्त्यभावेन साध्यतावच्छेदक-व्याप्यत्वविशेषणवैयर्थ्यमिति वाच्यम् । समनियताभावैक्यमते साध्यसमाना-धिकरण-समानाधिकरणधर्मावच्छिन्नप्रतियोगिताकाकाशाभावभिन्नत्वस्य क्वापि व्यधिकरणधर्मावच्छिन्नाभावेऽसत्त्वाद् वाच्यत्वसाध्यके तादृशाभावा-प्रसिद्ध्या अव्याप्तिवारणाय समानाधिकरणधर्मे साध्यतावच्छेदकव्यापक-त्वस्य विवक्षणीयत्वाद् घटत्वाभावत्वादौ तद्विरहाद् घटत्वाद्यात्मकाभावानां लक्षणघटकत्वाक्षतेः । न चैवमपि सत्ताभावसाधारणजातिप्रतियोगिताका-भाववत्त्वरूपसाध्यतावच्छेदकव्यापकत्वस्य सत्ताविशिष्टजातिप्रतियोगिता-काभावत्वेऽसत्त्वात् तदवच्छिन्नाभावस्य लक्षणघटकत्वं दुर्वारमिति वाच्यम् । सत्तान्यजातिप्रतियोगिताकाभावस्यैव साध्यत्वेनानुपपत्त्यभावात् । वस्तु-तस्तु—विशिष्टस्यातिरिक्तत्वमिति सार्वभौममतानुसारेणैव जातिप्रतियोगि-काभाववानित्यत्राव्याप्तिकथनम् । एतेन सत्तान्यजातिप्रतियोगिकाभावस्य साध्यत्वेऽपि सामान्यघटान्यतरवृत्तित्वविशिष्टजातिप्रतियोगिकाभाव-त्वादेः घटत्वाभावादिसाधारणनिरुक्तसाध्यतावच्छेदकव्यापकत्वाभावात्

तदवच्छिन्नाभावादेरपि लक्षणघटकतया तद्घटितकूटाधिकरणं सामान्य-विशेषादिकमपीति जगत एव तादृशान्यतमाधिकरणत्वात् नाव्याप्तिरिति शङ्कानवकाश इति दिक् ।

## गादाधरी

(१११) साध्याभाववत्तायां साध्यवत्ताग्रहविरोधितानियामकसंबन्धनिवेशनम् ।

अत्र साध्याभाववत्तायां संबन्धविशेषा[1]निवेशे कालपरिमाणवान् मेयत्वादित्यादावतिव्याप्तिः; कालस्यापि कालिकसंबन्धेन कालपरिमाणाभावाधिकरणतया जगत एव साध्याभावकूटवत्त्वात् । दैशिकविशेषणतासंबन्धनिवेशे च घटत्वाभाववान् पटत्वादित्यादावव्याप्तिः । घटत्वादेः तेन संबन्धेनावृत्तेः, तेन संबन्धेन तद्घटितकूटाधिकरणाप्रसिद्धेः । तेन संबन्धेन वृत्तिमत्त्वस्याभावविशेषणत्वे तु घटत्वाभावादिसाध्यके व्यभिचारिणि व्यधिकरणधर्मावच्छिन्नाभावमादायातिव्याप्तिः । कालिकसंबन्धावच्छिन्नप्रतियोगिताके घटत्वाभावाभावे साध्ये आत्मत्वादिहेतावव्याप्तिश्च; घटातिरिक्तवस्तुमात्रस्यैव दैशिकविशेषणतया साध्याभावकुटवत्त्वात् । साध्यनिरूपितप्रतियोगितावच्छेदकसंबन्धनिवेशेऽप्ययमेव दोषः; [2]किंचिद्विशिष्टस्य[3] तादृशसाध्यस्य

[1] अविवक्षणे--अ.

[2] किंचिद्विशिष्टतादृशसाध्यस्येति--क. न्यायरत्ने तु किंचिद्विशिष्टसाध्यस्येति प्रतीकधारणम् । कृष्णंभट्टीयेऽपि किंचिद्विशिष्टसाध्यस्येत्याद्युक्तिवैयर्थ्याच्चेति वाक्यात् किंचिद्विशिष्टसाध्यस्येति पाठो वर्तते इति गम्यते--स्व.

[3] इदमुपलक्षणम् । साध्यतावच्छेदकसंबन्धान्यसंबन्धावच्छिन्नाभावोऽपि बोध्यः --रा.

योऽभावस्तस्य[1] दैशिकविशेषणतासंबन्धावच्छिन्नाभावस्तद्रूप[2] इति दैशिकविशेषणताया अपि निरुक्तसाध्यनिरूपितप्रतियोगितावच्छेदकसंबन्धत्वात्। स्वनिष्ठतादृशप्रतियोगितावच्छेदकसंबन्धेन स्वाधिकरणत्वनिवेशे च व्यधिकरणधर्मावच्छिन्नाभावस्य साध्याप्रतियोगिकतया तदसङ्ग्रहप्रसङ्ग इति साध्यतावच्छेदकसंबन्धेन स्वप्रतियोगितावच्छेदकविशिष्टसाध्यवत्ताज्ञानं प्रति यत्संबन्धावगाहियदभाववत्ताज्ञानं प्रतिबन्धकं तेन संबन्धेन तदभावाधिकरणत्वं विवक्षणीयम्। [3]व्यधिकरणधर्मावच्छिन्नाभाववत्ताबुद्धिरपि व्यधिकरणधर्मावच्छिन्नप्रतियोगिप्रकारकबुद्धिं प्रतिबध्नातीति तादृशाभावस्य लक्षणघटकतानिर्वाहः।

यदि चाभाववत्ताज्ञानं प्रति दैशिकविशेषणतासंसर्गकमपि तदभावाभावत्वावच्छिन्नप्रकारकज्ञानं प्रतिबन्धकम्; अभावाभावस्यातिरिक्ततामते तादृशज्ञानप्रतिबन्धकताया आवश्यकत्वात्। तस्य प्रतियोगिस्वरूपतामतेऽपि फलसाम्यानुरोधेन तदावश्यकत्वात्। अभावाभावस्यातिरिक्तत्वग्रहदशायां तत्प्रतिबन्धकताया दुरपह्नवत्त्वाच्च। एवं च [4]कालिकसंबन्धावच्छिन्नप्रतियोगिताके घटत्वाभावजातित्वादेरभावे[5] साध्ये आत्मत्वजातित्वादावव्याप्ति-

1 प्रकृतसाध्याभावादतिरिक्तस्येति शेषः—रा.

2 साध्यस्वरूपः—रा.

3 व्यधिकरणधर्मावच्छिन्नप्रतियोगिताकोऽपि चेदभावः प्रामाणिकः तदा तस्यैकस्यैव प्रतियोगिताः सर्वैरेव व्यधिकरणैर्धर्मैः सर्वैश्च समानासमानाधिकरणैः संबन्धैरवच्छिद्यन्ताम् इति दीधितिकारेणैव सामान्याभावग्रन्थे वक्ष्यमाणत्वात्—स्व.

4 संबन्धे यावत्त्वानिवेशात् समवायमादायैव घटत्वाभाववान् पटत्वादित्यत्र लक्षणगमनाद् उपेक्षा—रा.

5 अभावे वा—अ.

**र्दुर्वारैव; दैशिकविशेषणतासंबन्धस्यापि निरुक्तरूपाक्रान्तत्वात् । न चैवं तादृशसाध्यवत्यपि पक्षे तादृशसाध्याभावत्वावच्छिन्नप्रकारकप्रमारूपप्रतिबन्धकज्ञानसंभवात् तद्विषयस्य हेत्वाभासतापत्तिरिति वाच्यम् । तत्र पक्षे साध्यं नास्तीति ज्ञानस्य भ्रमत्वं निर्विवादमिति तदुपपादनाय तादृशसाध्यप्रतियोगिनः तादृशसाध्याभावत्वेन दैशिकविशेषणतया वृत्त्यनभ्युपगमादित्युच्यते । तदा निरुक्तसंबन्धेन साध्याभावत्वावच्छिन्नाधिकरणताकूटवत्त्वमेव विवक्षणीयम् । हेतुमति तादृशाधिकरणताविरहान्नोक्ताव्याप्तिः ।**

## कृष्णंभट्टीयम्

[1]विशेषणेति । तथा च व्यधिकरणधर्मावच्छिन्नाभावमादाय सद्धेतौ लक्षणसमन्वयः । किंचिद्विशिष्टेति । ननु विशिष्टानतिरिक्ततामते आत्मवृत्तित्वविशिष्टसाध्याभावमादाय तद्धटितकूटाधिकरणात्मभिन्नवृत्तित्वाभावस्यात्मत्वे सत्वात् नाव्याप्तिः । विशिष्टातिरिक्ततामते च [2]ग्रन्थासङ्गतिः । तत्तदात्मवृत्तित्वविशिष्टसाध्याभावकूटाधिकरणाप्रसिद्ध्या अव्याप्तिस्तु नात्र अभिप्रेता । साध्यतावच्छेदकसंबन्धेन प्रतियोगितावच्छेदकविशिष्टेत्यादिप्रकारेण संबन्धनिवेशेऽपि रूपाभावादिसाध्यके कूटाधिकरणाप्रसिद्ध्या अव्याप्तेर्वक्तव्यतया इदानीं तद्दाने संदर्भविरोधात् । किंचिद्विशिष्टसाध्यस्येत्याद्युक्तिवैयर्थ्याच्चेति; चेन्न । गुरुधर्मस्य प्रतियोगितानवच्छेदकतया तत्र साध्येतरसाधारणकिंचिद्विशिष्टत्वत्वमात्रस्यैवावच्छेदकत्वेन तादृशानां लक्षणाघटकत्वात् । योऽभाव इति । साध्यतावच्छेदकसंबन्धावच्छिन्नः तदन्यसंबन्धावच्छिन्नो वा फलतः न कश्चिद्विशेषः । तद्रूपः, साध्यस्वरूपः ।

[1] विशेषणे त्विति प्रतीकधारणम्––अ. गादादधर्यां विशेषणत्वे तु इत्येव पाठो दृश्यते; तथा च विशेषणे त्विति प्रतीकधारणं न सम्यक्––स्व.

[2] किंचिद्विशिष्टेति––अ.

व्यधीति। प्रकृतसाध्याभावादतिरिक्तस्येत्यादिः। पर्वतो वह्निमान् कालिकसंबन्धावच्छिन्नवह्न्यभाववांश्चेति ज्ञानं प्रति कालिकसंबन्धस्य विरोधिताघटकत्ववारणाय ज्ञानसामान्यं विवक्षणीयम्। तथा च व्यापकताभङ्गवारणाय साध्यतावच्छेदकसंबन्धेनेति। ननु अभावाभावस्यातिरिक्ततामते यथा न समवायसंबन्धावगाहि तज्ज्ञानं प्रतिबन्धकं; तथा मन्मते स्वरूपसंबन्धावगाहिज्ञानमपि; फलसाम्यमकिञ्चित्करमित्यत आह——अभावाभावस्येति। ननु तथाविधदैशिकविशेषणतासंबन्धेन साध्याभाववद्यथा घटभिन्नं तथैव कालिकविशेषणतासंबन्धेन तद्वान् घटोऽपि; जन्यमात्रस्य कालत्वादिति घटत्वावच्छिन्नजगद्वृत्तित्वाभावस्यैव लक्षणघटकत्वात् नाव्याप्तिरतो जातित्वादेरिति। तत्र कालजात्यन्यतरवृत्तित्वसामान्याभावस्य रूपवत्ताप्रकारकप्रमाविषयत्वे प्रसिद्धस्यासत्त्वादव्याप्तिः। तदेति। रूपाभाववान् वायुत्वादित्यादौ अग्रिमाप्रसिद्धचसङ्गतिर्बोध्या।

### न्यायरत्नम्

**किंचिद्विशिष्टसाध्यस्येति। यद्यपि सार्वभौममते विशिष्टस्यातिरिक्तत्वान्न दोषः। तथापि तस्यानतिरिक्तत्वाभिप्रायेणेदम्।**

## गादाधरी

(११२) **साध्याभाववत्तायां दैशिकविशेषणतासंबन्धनिवेशनं, भावानामपि तेन संबन्धेन वृत्तेः उपपादनं च।**

**परे तु——घटत्वादेरपि दैशिकविशेषणतास्वीकार आवश्यकः। अन्यथा घटे न घटत्वाभाव इत्यादि नञुल्लेख्यप्रतीतिव्यवहारयोरनुपपत्तिः। काले न द्रव्यत्वमित्यादिप्रयोगाभावेन दैशिकविशेषणता[1]संबन्धावच्छिन्नाधेयत्वान्वितस्वार्थावगाहिबोधजनक-**

[1] संसर्गावच्छिन्न——अ.

त्वस्यैव नञ्पदे व्युत्पन्नत्वात् । न च भावरूपप्रतियोगिवाचकपद-समभिव्याहृतनञा दैशिकविशेषणता, अभावरूपप्रतियोगिवाचक-पदसमभिव्याहृतनञा च प्रतियोगीभूताभावप्रतियोगितावच्छेदक-संबन्धः प्रत्याय्यत इति व्युत्पत्तिरिति वाच्यम् । प्रतियोगितावच्छे-दकसंबन्धत्वेन संबन्धताविरहाद् विशिष्य समवायकालिकादि-संबन्धभानस्यैवोपगन्तव्यतया प्रतियोगिन्यभावे संबन्धविशेषा-वच्छिन्नप्रतियोगिताकत्वाबोधकाद् अत्रायमभावो नास्तीत्यादितः संबन्धविशेषावच्छिन्नाधेयतायाः प्रतीतौ नियामकाभावात् । समभिव्याहारविशेषनिरपेक्षस्य तात्पर्यस्य नियामकत्वे कालि-कादिसंबन्धावच्छिन्नप्रतियोगिताकात्मत्वाभावाभावस्य[1] समवा-यादिसंसर्गतात्पर्येण आत्मन्ययमभावो नास्तीति प्रयोगप्रसङ्गात् । वास्तवतत्संबन्धावच्छिन्नप्रतियोगिताकाभावरूपप्रतियोगिवाचक-पदसमभिव्यवहारस्य तत्संबन्धभाननियामकत्वे वस्तुतः कालिक-संबन्धावच्छिन्नप्रतियोगिताकेऽस्मिन्नभावे कालिकसंबन्धावच्छिन्न-प्रतियोगिताकत्वसंशयदशायाम् अत्रायमभावो नास्तीति वाक्याद् अधिकरणे एतदभावाभावप्रतीतावपि अधिकरणे कालिकसंबन्धेन एतदभावाभाववत्त्वादिसंशयस्य सर्वानुभवसिद्धस्योच्छेदापत्तेः ।

अथैवं कालादावपि कालिकसंबन्धावच्छिन्नघटत्वाभावो नास्तीति प्रतीत्यनुरोधेन घटत्वादेः दैशिकविशेषणतास्वीकारा-वश्यकतया तत्र समवायावच्छिन्नघटत्वाभावो नास्तीति व्यवहारा-पत्तिरिति चेन्न । प्रतियोगिमति तदभावत्वेन वृत्तेरनभ्युपगमात् । इत्थं च दैशिकविशेषणतासंबन्धेन साध्याभावत्वावच्छिन्नवत्त्वं

[1] आत्मत्वाद्यभावस्यात्मत्वादिरूपो योऽभावः तस्य—अ.

**लक्षणे निवेशनीयम्। कालिकसंबन्धावच्छिन्नप्रतियोगिताकघटत्वाभावाभाववान् आत्मत्वादित्यादौ घटत्वाभावस्य तादृशसाध्याभावत्वेन आत्मन्यवृत्तेः नाव्याप्तिः। एतेन यादृशसाध्यकस्थले साध्याधिकरणे साध्याभावस्य, तदधिकरणे च साध्यस्य न भ्रमः प्रसिद्धः, तत्र प्रतिबद्धचप्रतिबन्धकभावकल्पनाया असंभवेन प्रतिबन्धकताघटितलक्षणाव्याप्तिरिति निरस्तमिति वदन्ति।**

## कृष्णंभट्टीयम्

अभावाभाववत्ता दैशिकविशेषणतासंबन्धेनैव निवेश्यते; भावाभावसाधारणविशेषणतास्वीकाराच्च, न घटत्वाभावादिसाध्यकेऽव्याप्तिरिति मतमाह––परे त्विति। अयमभावो नास्तीत्यादौ नियामकनिरपेक्षमेव संवन्धानवच्छिन्नायाः, प्रतियोगितावच्छेदकसंबन्धत्वेन संबन्धावच्छिन्नाया वा आधेयताया भानमङ्गीकृत्य नोपपत्तिरित्याह––प्रतियोगितेति। तत्संबन्धावच्छिन्नप्रतियोगिताबोधकाभावरूपप्रतियोगिबोधकपदसमभिव्याहृतनञः तत्संबन्धावच्छिन्नाधेयत्वान्वितस्वार्थबोधजनकत्वनियममालम्ब्य दूषयति––प्रतियोगिनीति। गगनाभावादेः केवलान्वयितया अभावो नास्तीति प्रत्ययानुपपत्तेरयंपदम्। ननु उक्तनियमानुपगमेऽपि यत्संबन्धावच्छिन्नप्रतियोगिताकत्वेन अभावं तात्पर्यविषयतया बुद्धीकृत्य प्रयुज्यमानमभावबोधकं, यत्संबन्धावच्छिन्नप्रतियोगिताकाभावबोधकं वा यत्पदं तद्घटितवाक्यघटकनञः तत्संबन्धावच्छिन्नाधेयत्वान्वितस्वार्थबोधजनकत्वमित्येव नियमः। तथा च प्रतियोगिबोधकपदासमभिव्याहारेऽपि न क्षतिः। तात्पर्यविशेषस्यैव नियामकत्वोपगमादित्याशङ्क्य तत्राद्यं दूषयति––समभिव्याहारेति। तादृशप्रतियोगिबोधकपदसमभिव्यवहारं विनैवेत्यर्थः। कालिकेति। वस्तुतः कालिकसंबन्धावच्छिन्नाभावस्य [1]समवायसंबन्धावच्छिन्नप्रतियोगिताकत्वेन

[1] समवायावच्छिन्नप्रतियोगिताकत्वेन––अ.

बोधेच्छायां तथाविधाभावबोधकायंपदसत्त्वे तादृशाभावाभावनिष्ठसमवायावच्छिन्नाधेयताप्रत्ययापत्तेरित्यर्थः । इष्टापत्तेर्वारणाय आत्मनीति । समभिव्यवहारविशेषसापेक्षतात्पर्यस्यैव प्रत्ययनियामकतया तत्र बोधसामान्यानुदयस्यैव इष्टत्वादिति भावः । द्वितीयं दूषयति––वास्तवेति । प्रकृते च अयंपदमेव तथेति भावः । दशायामित्यस्य संशये अन्वयः । अधिकरणे । सा च भवन्मते कालिकसंबन्धावगाहिन्येवेति भावः । तद्धर्मावच्छिन्ने विशेषणसंदेहेऽपि तद्विशेषणाविशेषिततद्धर्मावच्छिन्नाभावसंशयोऽनुभवसिद्धः । तेन कालिकतयैव तदभावाभावतदभावोभयमात्रकोटिकत्वेनासङ्गतिः । उच्छेदापत्तेरिति । अस्मन्मते च दैशिकविशेषणतासंबन्धेनाधिकरणे एतदभावाभाववत्त्वप्रत्ययः; स च विरोधीति भावः ।

वदन्तीत्यस्वरसः––स च रूपाभावसाध्यके रूपाणामनन्तत्वेऽपि विशेषणताविशेषावच्छिन्नरूपाभावत्वावच्छिन्नाधिकरणत्वाप्रसिद्धेर्विरहाद् अग्रिमग्रन्थासङ्गतिः । पूर्वमते तु यदि चेत्यादिरीतौ अनिर्भरात् साध्याभावत्वस्याधिकरणतानिरूपकतावच्छेदकतया न प्रवेशः, प्रयोजनाभावात् । [1]तादृशघटत्वाभावादिसाध्यके कालिकसंबन्धस्यैव साध्यवत्ताग्रहविरोधितानियामकतया तत्संबन्धावच्छिन्नाधिकरणताघटितकूटस्य हेतुमत्यसत्त्वेन अव्याप्त्यभावात् । एतन्मते च तत्राव्याप्तेः, साध्याभाववत्त्वस्य तथाप्रवेशावश्यकत्वम् । किंच प्रतिबन्धकत्वमेककाले एकत्रावर्तमानत्वं; ईश्वरीयव्यधिकरणधर्मावच्छिन्नाभावज्ञानमादायैव तन्निर्वाह इति । अवच्छेदकधर्मदर्शनादिप्रतिबन्धकतानां च विशिष्यैव भेदो निवेश्यः । समानधर्मितावच्छेदकताप्रत्यासत्त्या वा ज्ञानवैशिष्ट्यानवच्छिन्नप्रतिबन्धकतानिवेश इति ।

1 तादशघटत्वाभावाभावादिसाध्यके––अ.

## न्यायरत्नम्

[1]दैशिकविशेषणतावगाहिबोधजनकत्वस्यैव नञ्पदव्युत्पन्नत्वादिति । नञ्तु तथाप्याभावविशेष्यकदैशिकविशेषणतासंबन्धावच्छिन्नाधेयताप्रकारक-शाब्दबोधं प्रति प्रतियोगिवाचकपदसमभिव्याहृतनञ्पदज्ञानत्वेन कारणतायाः सर्वसिद्धत्वादित्यर्थः । सर्वानुभवसिद्धस्योच्छेदापत्तेरिति । यद्यपि दैशिकविशेषणतासंबन्धावच्छिन्नप्रतियोगिताकाभावे दैशिकविशेषणतासंबन्धावच्छिन्नप्रतियोगिताकत्वसंशयदशायामयमभावो नास्तीति वाक्याद् एतदभावाभावस्य दैशिकविशेषणतया निश्चयात् तेन संबन्धेन तत्संशयोच्छेदः सिद्धान्तेऽपि तुल्यः । तथापि कालिकसंबन्धावच्छिन्नप्रतियोगिताकात्मत्वाभावे समवायसंबन्धावच्छिन्नप्रतियोगिताकत्वभ्रमवतोऽयमभावो नास्तीति वाक्यात् कालिकसंबन्धानवगाहनस्य सर्वानुभवसिद्धतयोक्तनियमभङ्ग इत्यत्रैव तात्पर्यम् ।

अत्र [2]केचित्—वदन्तीत्यनेनास्वरसः । स च रूपाभावसाध्यके रूपाणामनन्तत्वेऽपि दैशिकविशेषणतासंबन्धावच्छिन्नरूपाभावाभावत्वावच्छिन्नाधिकरणत्वस्य प्रसिद्धत्वात् अग्रिमग्रन्थविरोधः पूर्वमते । यदि चेत्यादिरीतौ अनिर्भरात् साध्याभावत्वस्याधिकरणतानिरूपकतावच्छेदकतया न प्रवेशः, प्रयोजनाभावात् । किंच प्रतिबन्धकत्वम् एकाले एकत्रावर्तमानत्वम्; ईश्वरीयव्यधिकरणधर्मावच्छिन्नाभावज्ञानमादायैव तन्निर्वाह इत्याहुः । तदसत् । अवच्छिन्नदैशिकविशेषणतासंबन्धावच्छिन्नाधिकरणतासंबन्धेन साध्यतावच्छेदकसमनियतप्रतियोगितानिरूपितानुयोगिताकूटस्यैव निवेशेनानुयोगितायाश्चानुयोगिभेदेन भिन्नत्वात् कूटाधिकरणत्वप्रसिद्ध्यभावेन अग्रिमग्रन्थविरोधविरहात् । अपि च प्रतिबन्धकतायाः पूर्वोक्तरूपत्वे यादृशस्थले व्यधिकरणधर्मविशिष्टसाध्यवत्ताज्ञानं नैवासीत् तत्र दोषो न

1 गादाधर्यामन्यः पाठः वर्तते––स्व.

2 केचिदित्यनेन कृष्णंभट्टमतवर्णनम्––स्व.

**वारयितुं शक्यः। अपि च वह्निसाध्यके कालिकसंबन्धस्यापि लक्षणघटकत्वापत्तिः; कालिकसंबन्धावगाहियादृशवह्न्यभावज्ञानकाले वह्निमत्ताज्ञानं नाजनिष्ट, तादृशकालिकसंबन्धावगाहिवह्न्यभावज्ञानस्य प्रतिबन्धकत्वापात इति न किंचिदेतत्।**

## दीधितिः

तन्न; द्रव्यत्वपृथिवीत्वोभयवान् द्रव्यत्वादित्यादौ तदुभयान्यतरत्वावच्छिन्नाभाववति द्रव्यत्वादेरवृत्तेरतिव्याप्तेः।

अपि च इदं पृथिव्यन्यत्वविशिष्टद्रव्यत्ववद् द्रव्यत्वादित्यादौ द्रव्यत्वत्वाद्यवच्छिन्नाभावकूटाधिकरणगुणाद्यवृत्तित्वस्य द्रव्यत्वे सत्त्वादतिव्याप्तिः; द्रव्यत्वत्वाद्यवच्छिन्नप्रतियोगितायाः पृथिव्यन्यत्वविशिष्टद्रव्यत्वत्वसमव्याप्तत्वात्।

किंच रूपाभावसाध्यकसद्धेतौ साध्याभावसमुदायनिविष्टसकलरूपव्यक्त्यधिकरणाप्रसिद्धिः।

## गादाधरी

(११३) कूटघटितलक्षणदूषणप्रारम्भः। तत्र 'द्रव्यत्वपृथिवीत्वोभयवान् द्रव्यत्वात्' इत्यत्रातिव्याप्त्युपपादनम्।

**तदुभयेति। द्रव्यत्वपृथिवीत्वान्यतरत्वावच्छिन्नप्रतियोगिताया अपि तदुभयत्वसमनियततया तादृशाभाववतो गुणादेरेव निरुक्तसाध्याभावकूटाधिकरणत्वादिति भावः।**

**प्रतियोगिवैयधिकरण्याघटितस्य व्यापकत्वस्य साध्यतावच्छेदकविशेषणत्वमुपगम्य तदुभयत्ववति प्रत्येकमुभयत्वाभावस-**

त्त्वेन तस्य प्रतियोगिताव्यापकत्ववारणे तु तद्रूपावच्छिन्नसाध्यकसद्धेतावव्याप्तिर्द्रष्टव्या ।

## गादाधरी

(११४) इदं पृथिव्यन्यत्वविशिष्टद्रव्यत्ववत् द्रव्यत्वादित्यत्रातिव्याप्त्युपपादनम् ।

व्यासज्यवृत्तित्वाव्यासज्यवृत्तित्वान्यतररूपेण साध्यतावच्छेदकसजातीयो यो धर्मः तदवच्छिन्नत्वस्य प्रतियोगिताविशेषणत्वोपगमे नैतादृशातिव्याप्त्यवकाश इत्यतः स्थलान्तरेऽतिव्याप्तिमाह––अपि चेति । द्रव्यत्वत्वाद्यवच्छिन्नेति । शुद्धद्रव्यत्वत्वाद्यवच्छिन्नेत्यर्थः । पृथिव्यन्यत्वविशिष्टद्रव्यत्वत्वसमव्याप्तत्वादिति । किंचिद्विशेषणावच्छिन्नस्य शुद्धविशेष्यानतिरिक्तत्वादिति भावः । तदवच्छिन्नाभाववतो गुणादेरेव यथोक्तसाध्याभावकूटाधिकरणत्वादिति [1]भावः ।

## कृष्णंभट्टीयम्

व्यासज्येति । निरुक्तरूपेण साध्यतावच्छेदकसजातीयधर्मावच्छिन्नत्वं साध्यतावच्छेदकसमनियतप्रतियोगिताविशेषणमित्यर्थः । यद्यप्येवमपि सत्ताद्रव्यत्वपृथिवीत्वैतत्त्रितयादिसाध्यके पृथिवीत्वद्रव्यत्वान्यतरसत्तोभयाभावादिकमादायातिव्याप्तिः । तथापि साध्यतावच्छेदकनिष्ठव्यासज्यवृत्तितासजातीयव्यासज्यवृत्तित्वान्यतरवत्त्वेन धर्मस्य निवेशान्न दोषः । त्रितयपर्याप्तत्वत्वेन उभयपर्याप्तत्वस्यासजातीयत्वात् । न च द्रव्यत्वपृथिवीत्वान्यतरसत्तोभयाभावः द्रव्यत्वसत्तोभयाभाव इति किं तद्विवक्षणेनेति वाच्यम् ।

1 शेषः इति––अ.

द्रव्यत्वपृथिवीत्वान्यतरसत्तोभयसाध्यकव्याभिचारिणि अतिव्याप्तेः। एवमपि सत्ताद्रव्यत्वान्यतरपृथिवीत्वोभयसाध्यके पृथिवीत्वद्रव्यत्वान्यतरसत्तोभयाभावादिकमादायातिव्याप्तिरिति चेत्; तर्हि स्वधर्मितावच्छेदकत्वेन भासमानयावद्धर्मघटितत्वे सति पर्याप्तिविशेषसंबन्धेन वृत्तिमत्त्वरूपव्यासज्यवृत्तित्वं निरुच्य सकलदोषवारणं कार्यम्। प्रमेयसाध्यके विरुद्धघटत्वपटत्वोभयं व्यासज्यवृत्त्येवेति। साध्यतावच्छेदकेतरसमानाधिकरणधर्मभिन्नधर्मावच्छिन्नत्वं तु न तदर्थः; द्रव्यत्वाभावव्यावृत्त्या उत्तरग्रन्थविरोधात्। शुद्धेति। तदवच्छिन्नाभाववतो गुणादेरेव साध्याभावकूटवत्त्वादिति भावः।

## न्यायरत्नम्

**व्यासज्यवृत्तित्वाव्यासज्यवृत्तित्वेति। अथैवमपि सत्ताद्रव्यत्वपृथिवीत्वैतत्त्रित्वावच्छिन्नसाध्यके द्रव्यत्वादौ व्यभिचारिणि सत्तापृथिवीत्वैतदन्यतरद्रव्यत्वोभयत्वावच्छिन्नाभावीयप्रतियोगिताया अपि साध्यतावच्छेदकसमनियतत्वेन व्यासज्यवृत्तित्वेन साध्यतावच्छेदकसजातीयधर्मावच्छिन्नत्वेन च तादृशाभावस्यापि लक्षणघटकतया तद्घटितकूटाधिकरणं गुणादिरेवेत्यतिव्याप्तिः दुर्वारेति चेत्——**

**अत्र केचित्——स्वधर्मितावच्छेदकत्वेन भासमानयावद्धर्मघटितत्वे सति पर्याप्तिसंबन्धेन वृत्तिमत्त्वरूपस्वनिष्ठव्यासज्यवृत्तित्वेन साजात्यं विवक्षणीयम्। न चैवमपि निरुक्तत्रित्वरूपसाध्यतावच्छेदकधर्मितावच्छेदकत्वेन भासमानद्रव्यत्वत्वसत्तात्वयोरपि निरुक्तद्वित्वशरीरे अन्यतरत्वघटकभेदप्रतियोगिनि विशेषणत्वात् तद्घटितत्वस्य निरुक्तद्वित्वेऽक्षतत्वात् नोक्तातिव्याप्तिवारणसंभव इति वाच्यम्। तद्घटितत्वस्य तदवच्छिन्नमुख्यविशेष्यतानिरूपितप्रकारताश्रयत्वरूपस्यैव विवक्षितत्वात्, तस्य च तादृशद्वित्वेऽभावादित्याहुः।**

**परे तु—स्वपर्याप्त्यवच्छेदकधर्मावच्छिन्नपर्याप्तिकत्वेनैव साजात्यं विवक्षणीयम्। तथा च निरुक्तत्रित्वपर्याप्त्यवच्छेदकधर्मावच्छिन्नपर्याप्तिकत्वस्य निरुक्तद्वित्वेऽसत्त्वात् न तदवच्छिन्नाभावमादायातिव्याप्तिः। न चैवं सति पर्याप्तिश्च अयमेक इमौ द्वावित्यादौ अयमेक इति लेखनस्वारस्येन अव्यासज्यवृत्तिधर्माणामपि पर्याप्तिस्वीकारेण वाच्यत्वत्वपर्याप्त्यवच्छेदकवाच्यत्वनिष्ठतद्व्यक्तित्वावच्छिन्नपर्याप्तिकत्वस्य वाच्यत्वत्वे सत्त्वेऽपि समवायित्वे अभावात् तादृशसजातीयधर्मावच्छिन्नप्रतियोगिताकाभावाप्रसिद्ध्या वाच्यं ज्ञेयत्वादित्यादौ अव्याप्तिरिति वाच्यम्। व्यधिकरणधर्मावच्छिन्नाभावीयप्रतियोगितायां समानाधिकरणधर्मस्याप्यवच्छेदकत्वव्यवस्थापनेन तादृशनिरुक्तरूपेण वाच्यत्वत्वसजातीयवाच्यत्वत्वावच्छिन्नत्वस्य तादृशाभावीयप्रतियोगितायामक्षतत्वात्। सजातीयधर्मावच्छिन्नेत्यत्र तन्मात्रावच्छिन्नत्वानिवेशादिति वदन्ति।**

## दीधितिः

यावतामैकाधिकरण्यं संभवति तावतां समुदाये विवक्षितेऽपि इदं पृथिवीवृत्तिगुणशून्यम्, सत्तान्यपृथिवीवृत्तिशून्यं वा वायुत्वाद् रूपवदन्यत्वाद्वा इत्यादौ अतिव्याप्तिः; तत्र तादृशसाध्याभावस्तोमस्य नियमतो रूपादिघटितत्वेन तद्वति हेतोरवृत्तेः।

वस्तुतो निखिलानामेव रूपाणां तादृशाभावसहस्रसमानाधिकरणत्वात् समानाधिकरणयावदभावाधिकरणप्रसिद्धिर्दुर्वारैव।

## गादाधरी

(११५) **रूपसामान्याभावसाध्यकसद्धेतावव्याप्त्युद्भावनम्।**

**विशिष्टस्यातिरिक्तत्वेन, साध्यतावच्छेदकस्य प्रतियोगिताव्यापकत्वस्थले[1] [2]प्रतियोगितावच्छिन्नव्यापकतावच्छेदकत्वनिवेशेन वा, विशिष्टद्रव्यत्वादिसाध्यकस्थले शुद्धद्रव्यत्वाभावस्य वारणसंभवाद् दूषणान्तरमाह——किंचेति। रूपाभावेति। रूपत्वाद्यवच्छिन्नाभाव इत्यर्थः। सद्धेताविंत्यव्याप्तिसूचनाय। सकलरूपव्यक्त्यधिकरणाप्रसिद्धिरिति। तथा च तद्घटितसाध्याभावकूटाधिकरणाप्रसिद्ध्या अव्याप्तिरिति भावः।**

## कृष्णंभट्टीयम्

प्रतियोगितावच्छिन्नेति। यद्यपि विशिष्टाभावप्रतियोगिताया विशेष्य[3]मात्रपर्याप्तत्वाद् विशिष्टद्रव्यत्वाभावासङ्ग्रहः। साध्यतावच्छेदकस्य तादृशप्रतियोगिताश्रयद्रव्यत्वव्यापकतानवच्छेदकत्वेन तादृशप्रतियोगित्वाप्रसिद्ध्यैव अतिव्याप्तिवारणे तु तुल्यन्यायेन विशिष्टद्रव्यत्वसाध्यकसद्धेतावप्रसिद्धिः। तथापि विशिष्टाभावप्रतियोगिता वैशिष्ट्यान्तर्भावेन पर्याप्तेत्याशयः। प्रतियोगितावच्छेदकविशिष्टव्यापकतावच्छेदकत्वनिवेशेन विशिष्टाभावप्रतियोगिताया विशेष्यमात्रपर्याप्तत्वपक्षे वारणम्। तादात्म्येन प्रमेयसाध्यके विरुद्धघटत्वपटत्वोभयरूपेण प्रमेयसामान्यभेदस्य बहिष्कारेऽपि, समवायित्वादिना प्रमेयत्ववद्भेदस्य, संयोगादिना प्रमेयत्वेन प्रमेयभेदस्य च जागरूकत्वात्।

[1] स्थाने——क.

[2] प्रतियोगित्वावच्छिन्नेत्यादि——अ. कृष्णंभट्टीये प्रतियोगितावच्छिन्नेति प्रतीकधारणम्। न्यायरत्ने प्रतियोगित्वावच्छिन्नस्येति——स्व.

[3] मात्रपदं नास्ति——अ.

## न्यायरत्नम्

[1]साध्यतावच्छेदकस्य प्रतियोगिताव्यापकत्वस्थाने प्रतियोगित्वावच्छिन्नस्य व्यापकतावच्छेदकत्वनिवेशेनेति। अथैवं विशिष्टसाध्यके विशिष्टाभावस्य लक्षणघटकत्वानुपपत्तिः; तादृशाभावीयप्रतियोगित्वावच्छिन्नशुद्धव्यापकतावच्छेदकत्वस्य साध्यतावच्छेदकेऽभावात्। न च विशिष्टाभावीयप्रतियोगितायास्तादृशाभावस्योपलक्षिताभाववैलक्षण्यनिर्वाहाय विशेषणान्तर्भावेन पर्याप्तत्वस्य वक्तव्यत्वात् तदवच्छिन्नव्यापकतावच्छेदकत्वं साध्यतावच्छेदकेऽक्षतमिति वाच्यम्। तथापि साध्यतावच्छेदकसंबन्धेनैव स्वावच्छिन्नाधिकरणत्वस्य वक्तव्यत्वात् तादृशसमवायेन गुणाद्यन्यत्वद्रव्यत्वोभयत्वावच्छिन्नाधिकरणत्वस्येव तादृशप्रतियोगित्वावच्छिन्नस्य समवायेन अधिकरणत्वस्याप्रसिद्धतया तादृशप्रतियोगितायाः स्वपदेनोपादानासंभवादिति चेत्।

अत्र केचित्––विशिष्टाभावस्योपलक्षिताभावाद् वैलक्षण्याय विशिष्टाभावीयप्रतियोगितायां विशिष्टप्रतियोगिकसंबन्धेनैवावच्छेदकत्वम्। एवं च विशिष्टसत्तावानिति ज्ञानस्य प्रतियोग्यभावान्वयौ तुल्ययोगक्षेमाविति न्यायेन विशिष्टप्रतियोगिकसंबन्धावगाहित्वे सिद्धेऽनुमितिविधेयतावच्छेदकत्वमपि तस्यैवेति साध्यतावच्छेदकविशिष्टप्रतियोगिकसंबन्धेन विशिष्टाभावीयप्रतियोगित्वावच्छिन्नव्यापकत्वस्य साध्यतावच्छेदके प्रतियोगिताया विशेष्यमात्रनिष्ठत्वेऽपि अक्षतत्वात्। न च विशिष्टप्रतियोगिकसंबन्धस्य विशिष्टाभावप्रतियोगितावच्छेदकत्वं विचारासहमिति वाच्यम्। तादृशाभावीयप्रतियोगिताया विशेषणान्तर्भावेन पर्याप्तत्वस्यापि प्रतियोगितावच्छेदकसंबन्धेन प्रतियोगितावच्छेदकविशिष्टप्रतियोगितापर्याप्त्यधिकरणतया साकमभावस्य विरोधाङ्गीकर्तृव्यधिकरणधर्मावच्छिन्नाभाववादिमते विचारासहत्वात्। यादृशदण्डद्वयं परस्पराश्रयम्, तादृशान्यतरविशिष्टा-

[1] अत्र पाठभेदाः गादाधर्यां दर्शिताः––स्व.

न्यतराभावस्य तादृशान्यतरोपलक्षितान्यतराभाववैलक्षण्यस्य विशिष्टाभावीयप्रतियोगितायाा विशषणान्तर्भावेन पर्याप्तत्वस्वीकारेऽप्यनिर्वाहाच्च । दर्शितस्थले विशेषणविशेष्ययोरैक्यात् । तस्मात् क्वचित् विशिष्टाभावीयप्रतियोगितायाः विशेषणविशेष्यपर्याप्तत्वं, क्वचित् तस्यां विशिष्टप्रतियोगिकसंबन्धस्यैवावच्छेदकत्वमित्येवं विशिष्टाभावभेदेन व्यवस्था । प्रकृते गुणान्यत्वविशिष्टप्रतियोगिकसंबन्धस्य तादृशविशिष्टाभावप्रतियोगितावच्छेदकत्वे बाधकविरहात् तदभिप्रायकोऽयं ग्रन्थः । यद्वा स्वावच्छिन्नव्यापकतावच्छेदकत्वस्थाने स्वावच्छेदकावच्छिन्नव्यापकतावच्छेदकत्वमेव निवेश्यम् । तथा च न कोऽपि दोष इति वदन्ति ।

वस्तुतस्तु——घटत्वपटत्वोभयस्य समवायेन एकत्रासत्त्वेऽपि घटपटोभयवदिति प्रतीतिबलाद् घटत्वपटत्वद्वित्वैतत्त्रितयपर्याप्तविलक्षणावच्छेदकताकनिरूपकताकाधिकरणता भूतलादौ स्वीक्रियते । तथा समवायेन विशिष्टाभावप्रतियोग्यधिकरणमिति प्रतीतिबलाद् व्यासज्यवृत्तितादृशप्रतियोगित्वावच्छिन्नसमवायसंबन्धावच्छिन्नाधिकरणतापि विशिष्टाधिकरणे स्वीक्रियत इति परमतात्पर्यार्थः ।

## गादाधरी

(११६) संभवदैकाधिकरण्यकसाध्याभावसमुदायाधिकरणविवक्षायामपि स्थलान्तरेऽतिव्याप्त्युपपादनम् ।

**यावतामिति । तथा च प्रकृते सकलरूपघटितसमुदायस्य न लक्षणघटकता, सकलरूपाणामैकाधिकरण्यविरहात् । किन्तु एकैकरूपव्यधिकरणधर्मावच्छिन्नाभावघटितकूटानामेव । प्रत्येकं तदधिकरणता च रूपवत्स्वेव प्रसिद्धेति नाव्याप्त्यवकाश इति भावः । इदमिति । वायौ पृथिवीवृत्तिद्वित्वसंयोगादिसत्त्वाद् वायुत्वादेरुक्तसाध्यव्यभिचारिता । गुणसामान्याभावस्य साध्यत्वे वायवी-**

यस्पर्शादिरपि साध्याभावः; तद्घटितनिरुक्ताभावकूटवद्वृत्तित्वाभावस्य यावदन्तर्गतस्य वायुत्वादावभावात् नातिव्याप्तिसंभव इति पृथिवीवृत्तीति। घटतद्वायुद्वित्वपटतद्वायुद्वित्वादिरूपपृथिवीवृत्तिगुणाभावाभावानां यावतां वायावैकाधिकरण्यसंभवेन तद्घटितकूटस्यापि लक्षणघटकतया तद्वति वायौ हेतोर्वृत्त्या नातिव्याप्तिसंभवः। न च द्वित्वादिरूपसाध्याभावस्योत्पत्तिकालेऽसत्वेन कालिकाव्याप्यवृत्तितया व्याप्यवृत्तित्वविशेषणेन तद्व्यावृत्तिः। पार्थिवपरमाण्वेकत्वादिरेव लक्षणघटक इत्यतिव्याप्तिर्दुवारैवेति वाच्यम्। प्राचीनमते द्वित्वादिमति तत्प्रागभावादिकालावच्छेदेन तदत्यन्ताभावासत्त्वाद् द्वित्वादेरपि व्याप्यवृत्तित्वादिति पृथिवीपदमेतत्पृथिवीपरम्। इदम्पदपृथिवीपदयोः कर्मधारयो वा अभिमतः। न च स्वसमानाधिकरणाभावाप्रतियोगित्वमनवच्छिन्नवृत्तिकत्वं[1] वा व्याप्यवृत्तित्वम्; न तु स्वसमानाधिकरणात्यन्ताभावाप्रतियोगित्वम्। तच्च न [2]द्वित्वादिसाधारणमिति पृथिवीपदस्य पृथिवीसामान्यपरत्वेऽपि न क्षतिरिति वाच्यम्। एतदतिव्याप्तिवारणानुरोधेनात्यन्ताभावघटितव्याप्यवृत्तित्वस्यैव निवेशयितुमुचितत्वात्। एतद्रूपात्यन्ताभाववान् मेयत्वादित्यादौ एतद्रूपात्मकाभावस्य [3]लक्षणाघटकत्वेऽतिव्याप्त्यापत्त्या[4] प्राचीनमतेऽत्यन्ताभावघटितव्याप्यवृत्तित्वनिवेशस्यावश्यकत्वाच्च। अत एव चाग्रेतनं

[1] वृत्तित्वमिति न्यायरत्ने प्रतीकधारणम्--स्व.

[2] द्वित्वादेरपि स्वसमानाधिकरणप्रागभावप्रतियोगित्वात् न व्याप्यवृत्तित्वमिति भावः--रा.

[3] उक्तव्याप्यवृत्तित्वसत्त्वात्--रा.

[4] अतिव्याप्त्या इति पाठः--अ.

रूपादिघटितत्वेनेत्यपि[1] साधु सङ्गच्छते । पार्थिवरूपमात्रस्यैवानित्यतया अत्यन्ताभावघटितव्याप्यवृत्तित्वानिवेशे[2] तदसाङ्गत्यापत्तेः ।

पृथिवीवृत्तीत्यत्र वृत्तिः समवायेन बोध्या । तेन [3]स्पर्शादेः कालिकसंबन्धेन पृथिवीवृत्तित्वेऽपि न क्षतिः । [4]पृथिवीसमवेतत्वाद्यवच्छिन्नाभावो गुरुधर्मस्य प्रतियोगितानवच्छेदकत्वेऽप्रसिद्धः । पृथिवीसमवेतत्वाद्यवच्छिन्नत्वेनाभिमतायां प्रतियोगितायां केवलसमवेतत्वस्यैवावच्छेदकत्वसंभवेन पृथिवीसमवेतत्वस्याभावप्रतियोगितानवच्छेदकत्वात् । न च पृथिवीसमवेतत्वावच्छिन्नाया जलत्वादिव्यावृत्तप्रतियोगितायाः अतिप्रसक्तसमवेतत्वेन नावच्छेदकत्वसंभव इति वाच्यम् । समवेतत्वावच्छिन्नप्रतियोगितातोऽतिरिक्ताया जलत्वादिव्यावृत्तप्रतियोगिताया एवाप्रसिद्धेः । गुरुधर्मस्याभावप्रतियोगितावच्छेदकत्वेऽपि पृथिवीसमवेतत्वावच्छिन्नाभावसाध्यके नातिव्याप्तिसंभवः । तादृशाभावस्य समवेतत्वावच्छिन्नाभावसमनियततया तदभिन्नत्वेन समवेतमात्रस्यैव [5]तदभावतया वायुत्वादेरपि तथात्वात् । न च पृथिवीसमवेतत्वविशिष्टाभाववति जलादौ समवेतत्वावच्छिन्नाभावविरहान्न तयोः समनैयत्यम् । एवं च गुरुधर्मस्याभावप्रतियोगितानवच्छेदकत्वमतेऽपि पृथिवीसमवे-

1 इत्यादि—अ.

2 तस्य व्याप्यवृत्तित्वाभावेन तदसाङ्गत्यापत्तेः—अ.

3 वायवीयस्पर्शादेः—अ.

4 पृथिवीसमवेतत्वावच्छिन्नाभावः इति—अ, क. न्यायरत्नेऽपि एतादृशपाठानुसारेण प्रतीकधारणम्—स्व.

5 साध्याभावात्मकतया—रा.

तत्वस्य तादृशविशिष्टाभावप्रतियोगितावच्छेदकत्वमावश्यकम् । समवेतत्वविशिष्टवति जलादौ [1]तत्सत्त्वेन तन्मात्रस्य तत्प्रतियोगितावच्छेदकत्वासंभवादिति वाच्यम् । विशिष्टाभावस्य साध्यत्वे तस्य वायुसाधारणतया सद्धेतुत्वप्रसङ्गेन पृथिवीसमवेतत्वोपलक्षिताभावस्यैवात्र साध्यतयोपगन्तव्यत्वादिति गुणपदोपादानम् । पृथिवीसमवेतगुणत्वावच्छिन्नाभावो गुणादिसाधारणत्वान्न समवेतत्वावच्छिन्नाभावसमनियत इति नोक्तदोषावसरः ।

ध्वंसप्रागभावावच्छिन्ने सामान्याभावमुपगच्छतां वाय्वादेरप्युत्पत्तिकालावच्छेदेन पृथिवीवृत्तिगुणसामान्याभाववत्त्वात् तत्साध्यको वायुत्वादिः सद्धेतुरेवेत्यतो नातिव्याप्तिसंभव इत्यतः साध्यान्तरपाह––सत्तान्येति । सत्तान्यत्वनिवेशनप्रयोजनं पूर्ववत् । वायुत्वादेरपि सत्तान्यसमवेताभावाभावत्वात् पृथिवीति । अत्र पृथिवीपदं पृथिवीसामान्यपरमेव, घटवायुद्वित्वादेः स्वसमानाधिकरणात्यन्ताभावप्रतियोगित्वेन व्याप्यवृत्तित्वविशेषणव्यावर्त्यत्वात्[2]। रूपादिघटितत्वेनेत्यत्र रूपपदोपादानं प्राचीनमताभिप्रायेण[3] पूर्वसाध्यमभिप्रेत्य । हेतौ साध्यसामानाधिकरण्यविशेषणेन वायुत्वेऽ[4]तिव्याप्तिवारणसंभवाद् [5]द्वितीयहेत्वनुसरणम् ।

[1] पृथिवीसमवेतत्वविशिष्टाभावसत्त्वेन––रा.

[2] नव्यैः ध्वंसादिमत्यप्यत्यन्ताभावाङ्गीकारात्––रा. व्यावृत्तत्वात् इति––क.

[3] प्राचीनमताभिप्रायेणोपन्यस्तम्––अ, क.

[4] नातिव्याप्तिरतो. द्वितीयहेत्वनुसरणम्––क.

[5] द्वितीयहेत्वनुसरणम् इति पाठो नास्ति; अपि तु हेत्वन्तरमाह––रूपवदन्यत्वादिति––अ.

## कृष्णंभट्टीयम्

व्याप्यवृत्तित्वेति। अथ पर्वतस्य वह्न्यवयवस्य चेति दीधितिटिप्पणीसमये व्याप्यवृत्तित्वविशिष्टाधिकरणताया निवेशेऽपि साध्याभावे व्याप्यवृत्तित्वानिवेशात्, न द्वित्वादिरूपसाध्याभावव्यावृत्तिरिति चेन्न। कपिसंयोगाभावसाध्यकसद्धेतुसङ्ग्रहाय पृथग्व्याप्यवृत्तित्वावश्यकत्वात्। स्वेति। न चैवं संयोगसाध्यकव्यभिचारिणि अतिव्याप्तिरिति वाच्यम्; स्वाधिकरणीभूतयत्किञ्चिन्निष्ठाभावाप्रतियोगित्वस्य वाच्यत्वात्। [1]एतद्रूपात्मकेति। तस्य प्राचां मतेऽवच्छिन्नवृत्तिकतया निरवच्छिन्नवृत्तिकत्व[2]निवेशपक्षेऽपि लक्षणाघटकत्वादिति भावः। साधारणमिति। द्वित्वादेः स्वसमानाधिकरणप्रागभावादिप्रतियोगित्वेन न व्याप्यवृत्तित्वमिति भावः। एतदिति। [[3]संसर्गाभावघटितव्याप्यवृत्तित्वं निवेश्य द्वित्वादीनां लक्षणघटकतां निराकृत्य परमाण्वेकत्वाद्यात्मकाभावमादाय वायुत्वादौ अतिव्याप्तिरिति] पृथिवीपदस्य पृथिवीसामान्यपरत्वपक्षे दीधितिकृदाशयवर्णनं न सम्यक्। तथा सति अतिव्याप्तिवारकविशेषणोपादानस्यो[4]चितत्वेन अत्यन्ताभावघटितव्याप्यवृत्तित्वं निवेश्यैव द्वित्वादिकमादायाति[5]व्याप्तिवारणमेव स्यात्। अतोऽत्यन्ताभावघटिततन्निवेशेऽपि अतिव्याप्तिसङ्गमनाय पृथिवीपदस्य एतत्पृथिवीपरत्वमावश्यकमिति। संसर्गाभावघटितव्याप्यवृत्तित्वनिवेशासंभवमप्याह——एतद्रूपेति।

[1] एतद्रूपात्मकेति प्रतीकधारणं तदर्थवर्णनं च अग्रेतनस्य एतद्रूपेति प्रतीकधारणास्यनन्तरमेव भवितुमर्हतीति प्रतिभाति। गादाधरीपाठानुरोधात्——स्व.

[2] निवेश इति नास्ति——अ.

[3] [ ] एतदन्तर्गतपाठो नास्ति; तत्स्थाने संसर्गाभावमादाय वायुत्वादावतिव्याप्तिरिति इति पाठो वर्तते——अ.

[4] औचित्येन——अ.

[5] तदतिव्याप्तिवारणमेव——अ.

संबन्धसामान्येन पृथिवीवृत्तित्वनिवेशे पृथिवीवृत्तिगुणाभावसाध्यकवायुत्वादेर्विरुद्धत्वेऽपि अतिव्याप्तिर्न स्यात्, अत आह--पृथिवीति । गुरुधर्मस्येत्यादि । उपलक्षणस्यापि प्रतियोगितावच्छेदकत्वं सिद्धान्तलक्षणे स्वयमभिधास्यते । तदभावतया, साध्याभावरूपतया । तथात्वादिति । न च तादृशसाध्याभावकूटाधिकरणं यद्यत् तावदन्यतमवृत्तित्वत्वसमनियतप्रतियोगिताकस्य व्यधिकरणधर्मावच्छिन्नाभावस्यैव समवेतवृत्तेः हेतावपि सत्त्वात्; तथापि अतिव्याप्तिर्दुवारैव; ज्ञेयत्वादावव्याप्त्यापत्त्या तत्तदधिकरणवृत्तित्वाभावकूटनिवेशासंभवादिति वाच्यम् । वायुत्वादेः विरुद्धतया साध्यसामानाधिकरण्यविशेषणेनैव तद्वारणाद् रूपवदन्यत्वादावेवातिव्याप्तिर्वाच्या; सा च न सङ्गच्छत इति भावः । तत्सत्त्वेन, पृथिवीसमवेतत्वविशिष्टाभावसत्त्वेन । पूर्वसाध्यमिति । एतत्साध्ये च परमाण्वेकत्वादिकमादायातिव्याप्तिः ।

## न्यायरत्नम्

**न च स्वसमानाधिकरणेति । ननु संयोगी सत्त्वादित्यादावतिव्याप्तिः; संयोगाभावस्य स्वसमानाधिकरणाभावप्रतियोगित्वेन व्यधिकरणधर्मावच्छिन्नाभावस्यैव लक्षणघटकत्वादिति चेन्न । स्वाधिकरणे यत्किंचित्त्वस्य विवक्षितत्वात् । लाघवादाह--अनवच्छिन्न[1]वृत्तित्वं वेति ।**

**पृथिवीवृत्तिगुणशून्यमित्यत्र गुणपदव्यावृत्तिं दर्शयति--[2]पृथिवीसमवेतत्वावच्छिन्नाभाव इत्यादिना । अप्रसिद्ध इति । वायुत्वहेतोर्व्यभिचारित्वनिर्वाहाय पृथिवीसमवेतत्वोपलक्षिताभावस्यैव साध्यतया समवेतत्वमात्रस्य तादृशाभावप्रतियोगितावच्छेदकत्वेऽपि क्षतिविरहादिति भावः ।**

[1] वृत्तिकत्वमिति गादाधर्यां दृश्यते--स्व.

[2] पृथिवीसमवेतत्वाद्यवच्छिन्नाभाव इत्यपि गादाधर्यां पाठो वर्तते--स्व.

विशिष्टाभावस्य साध्यत्वमित्यभिप्रायेण शङ्कते--न चेति । उपलक्षिताभावस्य साध्यत्वाभिप्रायेण समाधत्ते--समवेतत्त्वेति । गुणपदोपादानमिति । अत्र यद्यपि विशिष्टाभावस्य साध्यत्वे वायुत्वस्य सद्धेतुत्वापत्त्या उपलक्षिताभावस्यैव साध्यत्वं वक्तव्यम् । तस्य च गुणसामान्याभावसमनियततया गुणत्वस्यैवावच्छेदकत्वं संभवतीति पूर्वतौल्यमिति शङ्का संभवति । तथापि यादृशजले पृथिवीवृत्तिगुणः कदापि नोत्पन्नः तादृशजलमस्तीत्यभिप्रायकल्पनान्न दोषः । तथा सति गुणसामान्याभावस्य तादृशाभावसमनैयत्यासंभवात् ।

अत्र पृथिवीपदं पृथिवीसामान्यपरमेवेति । अत्रेदं चिन्त्यम्--पूर्वानुमानएव तदतिव्याप्तिवारणानुरोधेन एतद्रूपात्यन्ताभाववान् मेयत्वादित्यादौ अतिव्याप्तिवारणानुरोधेन चात्यन्ताभावघटितस्यैव व्याप्यवृत्तित्वस्य विवक्षावश्यकतां प्रदर्श्य घटतद्वायुद्वित्वपटतद्वायुद्वित्वात्मकाभावानां व्याप्यवृत्तित्वमुपपाद्य पृथिवीपदस्य एतत्पृथिवीपरत्वं यथोपपादितं तथा द्वितीयानुमानेऽपि संभवति । तथा हि--साध्याभावे व्याप्यवृत्तित्वं स्वसमानाधिकरणात्यन्ताभावप्रतियोगितानवच्छेदकसाध्याभावत्ववत्त्वम्, निरवच्छिन्नाधेयतावच्छेदकसाध्याभावत्ववत्त्वं वा एतदतिव्याप्तिवारणानुरोधेनैव निवेशनीयम् । न तु स्वसमानाधिकरणात्यन्ताभावप्रतियोगितायां सामानाधिकरण्येनानवच्छेदकं यदभावनिष्ठं तद्व्यक्तित्वं तत्त्वं, निरवच्छिन्नवृत्तित्वं तत्त्वावच्छेदकं यदभावनिष्ठं तद्व्यक्तित्वं तत्त्वं वा; दर्शितद्वित्वानां तत्तद्व्यक्तित्वेनाव्याप्यवृत्तित्वादेतदतिव्याप्तेः । कालिकसंबन्धावच्छिन्नप्रतियोगिताकव्यतिरेकित्वावच्छिन्नाभावे साध्ये मेयत्वादावतिव्याप्तेश्च । साध्याभावानां व्यतिरेकिणां सर्वेषामेव तत्तद्व्यक्तित्वेन कालिकाव्याप्यवृत्तित्वात् निरुक्तव्याप्यवृत्तित्वविरहेण व्यधिकरणधर्मावच्छिन्नाभावस्यैव लक्षणघटकत्वात् । अपि च साध्याभावत्वघटितव्याप्यवृत्तित्वाप्रवेशे वृक्षत्वसंयोगोभयाभावसाध्यके वृक्षत्वादावव्याप्तिरपि वृक्षत्वस्य दर्शितोभयाभावाभावत्वेनाव्याप्यवृत्तित्वेऽपि तद्व्यक्तित्वेन व्याप्यवृत्तित्वेन तद्घटितकूटाधिकरणे

हेतोर्वृत्तेः। एवं च घटतद्वायुद्वित्वपटतद्वायुद्वित्वात्मकाभावानामपि अवश्यं विवक्षणीयसाध्याभावत्वघटितव्याप्यवृत्तित्वेन लक्षणघटकतया तद्घटित-कूटाधिकरणे वायौ हेतोर्वृत्तेरतिव्याप्तिविरहाद् द्वितीयानुमानेऽपि पृथिवी-पदस्य एतत्पृथिवीपरत्वं युक्तमिति।

## गादाधरी

(११७) यावतामैकाधिकरण्यं संभवतीति विवक्षायामपि रूपाभाववान् वायु-त्वाद् इत्यत्राव्याप्तिः इत्युपपादनम्।

ननु समनियताभावैक्यमते सत्तान्यपृथिवीसमवेतत्वावच्छि-न्नाभावस्य सत्तान्यद्रव्यसमवेतत्वावच्छिन्नाभावाभिन्नतया विभ्वस-मवेतपृथिवीसमवेतत्वावच्छिन्नाभावस्य विभ्वसमवेतस्पर्शवत्समवे-तत्वावच्छिन्नाभावाभिन्नतया वायुत्वादिरपि तदभाव इति न ता-दृशाभावसाध्यकेऽतिव्याप्तिः संभवतीति [1]पूर्वोक्तायाः रूपाभाव-वान् वायुत्वादित्यत्राव्याप्तेरेवोक्तविवक्षायां दुर्वारतामाह—वस्तुत इति। अत्रायमाशयः——यावतामैकाधिकरण्यं तावत्समुदायाधिक-रणमित्यस्य[2] यत्किंचिदधिकरणवृत्तिसकलसाध्याभावाधिकरणत्वं यत्किंचिदधिकरणवृत्तिसाध्याभावत्वव्यापकाधेयताकत्वपर्यवसित-मर्थः; साध्याभावाधिकरणाधिकरणकसकलसाध्याभावाधिकरण-त्वं साध्याभावसमानाधिकरणसाध्याभावत्वव्यापकाधेयत्वकत्व-पर्यवसितं[3] वा। आद्ये——व्यभिचारिमात्रेऽतिव्याप्तिः; जगत एव साध्यवद्यत्किंचिदधिकरणवृत्तिसकलसाध्याभाववत्त्वादिति समुदा-

[1] पूर्वोक्तरूपाभाववान्——क.

[2] अधिकरणत्वमित्यस्य——क.

[3] आधेयताकत्वपर्यवसितम्——क.

**योपादानस्याकिंचित्करतया तद्विवक्षणासंभवः। द्वितीये च--साध्याभावसमानाधिकरणसाध्याभाववत्वमुक्तस्थले निखिलरूपाणामेवाक्षतमिति तादृशसाध्याभाववत्वव्यापिका न केनाप्यधिकरणेन निरूपिताधेयतेति तादृशाधिकरणाप्रसिद्धिस्तदवस्थैवेति।**

कृष्णंभट्टीयम्

ननु सत्तान्यपृथिवीसमवेतशून्यं वायुत्वादित्यादौ अतिव्याप्तिवारणसंभवेऽपि विभ्वसमवेतपृथिवीसमवेतशून्यं वायुत्वादित्यादौ तद्दुर्वारत्वमेव इत्याशङ्कां निराकरोति--विभ्विति। मूर्तत्वरूपजात्यङ्गीकारेणेदम्। अन्यथा नव्यमते वायावपि उत्पत्तिकालावच्छेदेन घटवायुवृत्तिद्वित्वाद्यभावसत्त्वेन व्यभिचारित्वानुपपत्तेः। सकलेति। साकल्यं व्यर्थमेव; तत्सत्त्वेऽपि अतिव्याप्तेर्वक्ष्यमाणत्वात्। परंतु तत्सत्त्वेऽपि अतिव्याप्तिः न हीयत इति सूचकम्। आधेयत्वकत्वेति। तादृशाधेयताकं यद्यत्तावदन्यतमवृत्तित्वत्वसमनियतप्रतियोगिताकाभावनिवेशात्, न केवलान्वयिनि अव्याप्तिः। एवं द्वितीयेऽपि। जगत एवेति। धमवान् वह्नेरित्यादौ यत्किंचिदधिकरणं महानसादि; तद्वृत्तिसाध्याभावा व्यधिकरणधर्मावच्छिन्नाभावा एवेति व्यधिकरणधर्मावच्छिन्ना एव जगद्वृत्तित्वाभावा वृत्तिमद्वृत्तय इति अतिव्याप्तिः। साध्याभावेति। व्यधिकरणधर्मावच्छिन्नसाध्याभावेत्यर्थः।

**न्यायरत्नम्**

**ननु सत्तान्यपृथिवीसमवेतशून्यसाध्यके वायुत्वादावतिव्याप्तिविरहेऽपि विभ्वसमवेतपृथिवीसमवेतशून्यत्वसाध्यकेऽतिव्याप्तिरस्त्येवेत्याशङ्कां निरस्यति--विभ्विति। मूर्तत्वस्य जातिरूपत्वमित्यभिप्रायेणेदम्। अन्यथा नव्यमते तादृशाभावस्योत्पत्त्यादिकालावच्छेदेन वायौ सत्त्वाद् वायुत्वस्य व्यभिचारित्वानुपपत्तेः। सकलेति। अत्र साकल्यविशेषणसत्त्वेऽपि अति-**

**व्याप्तेः वक्ष्यमाणत्वाद् उपादानं तत्सत्त्वेऽपि अतिव्याप्तिर्न हीयत इत्येवं प्रदर्शनार्थमिति ध्येयम् ।**

## दीधितिः

किंच हेतुतावच्छेदकसंबन्धेन या साध्याभाववति वृत्तिः तदभावो वक्तव्यः । अन्यथा धूमादावव्याप्तेः । साध्यतावच्छेदकसंबन्धेन साध्याभाववति कालादौ वृत्तिमन्मात्रस्यैव वृत्तेः व्यभिचारिण्यतिव्याप्तिप्रसङ्गो वा । तथा च सत्तादिसाध्यके संयोगेन समवायेन वा हेतावव्याप्तिः । साध्याभाववति तेन संबन्धेन वृत्तेरप्रसिद्धेः ।

## गादाधरी

(११८) यावतामैकाधिकरण्यं संभवतीत्यस्य परिष्कारपूर्वकं किं च इति ग्रन्थस्यावतारणम् ।

**ननु स्ववृत्तिसाध्याभावत्वव्यापकं यद्यदधिकरणवृत्तित्वं तत्तदधिकरणवृत्तिसाध्याभावत्वव्यापकस्ववृत्तिताकाधिकरणमेवाधिकरणान्तार्थः । धूमवान् वह्नेरित्यादौ महानसादिकं न तथा । अयोगोलकवृत्तितायास्तद्वृत्ति[1]साध्याभावत्वव्यापकत्वात् [2]अयोगोलकवृत्तिसाध्याभावत्वस्य च समानाधिकरणधर्मावच्छिन्नसाध्याभावसाधारणतया [3]तद्वृत्तित्वाव्याप्यत्वादिति अयोगोलकाद्येव तादृशं स्वमिति नातिव्याप्तिः । तादृशयत्किंचिदधिकरणह्रदादिवृत्तित्वाभावस्य वह्न्यादौ सत्त्वेऽपि न क्षतिः । तादृशं यद्यत्स्वं**

[1] महानसवृत्तीत्यर्थः––रा.

[2] अयोगोलकादिवृत्तिसाध्याभावत्वस्य––क.

[3] महानसादिवृत्तित्वा––रा.

**तावदन्यतमवृत्तित्वत्वसमनियतप्रतियोगिताकाभावनिवेशात्[1] । अन्यतमत्वं च तत्तदवृत्तिशून्यत्वम्; न तु तत्तदन्यान्यत्वम् । अतो न केवलान्वयिसाध्यकेऽप्रसिद्धिः[2] । तादृशं स्वं यद्यत्तत्तदधिकरण-वृत्तित्वाभावकूटवत्त्वनिवेशेऽपि केवलान्वयिसाध्यकेऽव्याप्तिः; हेतुमतोऽपि तथात्वाद् इति तदुपेक्षितम् । रूपसामान्याभाववान् वायुत्वादित्यादौ च सकलरूपवतामेव तथात्वं स्ववृत्तिताया [3]एव तत्तद्धटादिवृत्तिसाध्याभावत्वव्यापकत्वात्, अतो नाव्याप्तिः ।**

कृष्णंभट्टीयम्

दीधितौ सहस्रपददर्शनात् निखिलसाध्याभावसमानाधिकरणनिखि-लसाध्याभावाधिकरणत्वं लभ्यते । तत्परिष्काराभ्यामुक्तदोषं वारयति-- न्विति । स्वम्--अधिकरणम् । यद्यदिति वीप्साया अनिवेशे स्वपदेन पर्वतमादाय तद्वृत्तिव्यधिकरणधर्मावच्छिन्नसाध्याभावत्वव्यापकं महानस-वृत्तित्वं भवतीति पर्वतस्य स्वपदार्थत्ववत् सर्वस्यापि तादृशतया, जगत एव साध्याभावकूटवत्त्वादतिव्याप्तिरेव धूमवान् वह्नेरित्यादौ भवेदिति । स्ववृत्तिसाध्याभावत्वसमानाधिकरणं यद्यदधिकरणवृत्तित्वमित्युक्तौ, रूपा-भाववान् वायुत्वादित्यादावव्याप्तिः । घटान्तरवृत्तित्वस्य [4]तद्धटवृत्तिसाध्या-भावत्वसामानाधिकरण्यात् । एवमुत्तरदले व्यापकत्वस्थाने सामानाधि-करण्यनिवेशे धूमवान् वह्नेरित्यादावतिव्याप्तिः; महानसादिवृत्तित्वे अयो-गोलकादिवृत्तित्वसामानाधिकरण्यात् । अतो व्यापकत्वद्वयम् । तादृशमिति ।

[1] तथा च निर्धूमवृत्तित्वाभाव एव तादृश इति नातिव्याप्तिः--रा. प्रतियो-गिताकाभावस्य निवेशात्--क.

[2] अप्रसिद्धिप्रसङ्गः--अ. अप्रसिद्धिरिति--क.

[3] एवकारो नास्ति--क.

[4] स्वपदेन तत्तद्धटादेरेवोपादेयत्वादिति भावः--स्व.

तेन निर्धूमवृत्तित्वाभावमादाय नातिव्याप्तिः। तथात्वात्, उक्तस्वान्तर्गतत्वात्।

## गादाधरी

**अथवा स्ववृत्तिसकलसाध्याभावसमानाधिकरणसाध्याभावत्वावच्छेदेन यदधिकरणवृत्तित्वं, [[1]तादृशयत्किंचिदधिकरणवृत्तिसकलसाध्याभाववत्त्वमेव यावतामित्यादेरर्थः।] धूमवान् वह्नेरित्यादौ [2]तादृशयत्किंचिदधिकरणं न साध्यवत्; तद्वृत्तिसकलसाध्याभावसमानाधिकरणस्य साध्यतावच्छेदकावच्छिन्नसाध्याभावस्य [3]तद्वृत्तित्वाभावात्; किन्तु अयोगोलकाद्येवेति [4][तद्वृत्तिसकलसाध्याभाववत्त्वं साध्यशून्यस्यैवेति] जगतोऽतथात्वान्नातिव्याप्तिः। रूपाभाववान् वायुत्वादित्यादौ च तादृशाधिकरणं [5]तत्तद्घटादिरेव। व्यधिकरणधर्मावच्छिन्नसाध्याभावस्यैव[6] तद्वृत्तिसकलसाध्याभावसमानाधिकरणत्वात् तस्य च तद्वृत्तित्वनियमादिति[7] नाव्याप्त्यवकाशः। शेषं पूर्ववत्।**

1 [ ] एतदन्तर्गतपाठो नास्ति। तत्स्थाने तादृशाधिकरणमेवाधिकरणान्तार्थः इति पाठः—अ.

2 तादृशाधिकरणम्—अ. यत्किंचिदधिकरणम्—क.

3 तदवृत्तित्वात्—क.

4 [ ] एतदन्तर्गतपाठो नास्ति—क.

5 तद्घटादिरेव—क.

6 रूपसामान्याभावस्वरूपाणामभावानां प्रत्येकं सकलसाध्याभावसमानाधिकरणत्वाद् विरुद्धरूपवारणाय एवकारः, न तु घटरूपवारणायापीति ज्ञेयम्—रा.

7 तद्वृत्तित्वनियमात् तद्वृत्तिसकलसाध्याभाववत्त्वं तत्रैव प्रसिद्धमिति इत्यधिकः पाठः—अ. तद्वृत्तित्वनियमान्नाव्याप्त्यवसरः—क.

## कृष्णंभट्टीयम्

नन्वेवं रूपाभाववान् वायुत्वादित्यादौ यद्यदर्थाप्रसिद्धिः । तत्साध्यके वीप्सानुपादाने रूपाभाववान् द्रव्यत्वादित्यादौ अतिव्याप्तिरित्यत आह—अथवेति । स्ववृत्तिसाध्याभावत्वव्यापकाधेयतानिरूपकवृत्तिसाध्याभावत्वव्यापकस्ववृत्तिताकत्वमर्थः । केचित्तु [कैश्चित्तु]—यद्यदिति वीप्साया व्यापकत्वार्थकत्वे न कोऽपि दोष इत्यपि लिखितम् । तत्र यद्यदर्थप्रवेशे प्रयोजनाभावो बोध्यः । [1]साध्याभावस्यैव इत्येवकारो व्यधिकरणरूपव्यवच्छेदार्थः । न च स्ववृत्तितादेः स्वरूपसंबन्धेन निवेशनीयतया समानाधिकरणरूपस्यापि व्यवच्छेद एवेति वाच्यम् । तथा सति अभावसाध्यकव्यभिचारिणि अतिप्रसङ्गात् । किन्तु स्वप्रतियोगितावच्छेदकविशिष्टसाध्यवत्ताग्रहविरोधितानियामकसंबन्धेन वृत्तिचतुष्टयं निवेश्यमिति न तद्व्यवच्छेदः । अवच्छेदेनेत्यस्य प्रयोजनमाह—धूमवानिति । सकलपदोपादानप्रयोजनमाह—रूपाभावेति । अन्यथा तादृशाधिकरणाप्रसिद्धिरिति भावः ।

यद्वा स्ववृत्तिसकलसाध्याभावाधिकरणतासमानाधिकरणसाध्याभावाधिकरणतात्वव्यापकस्ववृत्तिताकत्वमर्थः । वृत्तिचतुष्टयमपि स्वरूपसंबन्धेन बोध्यम् । साध्याभावाधिकरणतासु दर्शितसंबन्धनिवेशेऽपि तावन्मात्रवृत्तिरूपेण तन्निवेशात् । रूपाभावादिसाध्यके स्वपदेन तद्घटमादाय तद्वृत्तिस्वरूपसमवायावच्छिन्नतावदधिकरणतान्यतरत्वादिव्यापकाधेयत्वादिकं सुलभमेव । धूमवान् वह्नेरित्यादौ स्वपदेन पर्वतस्योपादाने तद्वृत्तितादृशसाध्याभावाधिकरणतान्यतमत्वव्यापकाधेयतानिरूपकवृत्त्यधिकरणतान्यतमत्वकस्य समानाधिकरणधर्मावच्छिन्नसाध्याभावाधिकरणतासाधारणतया नातिव्याप्तिः । शेषम्, तावदन्यतमवृत्तित्वत्वसमनैयत्यादिकम् । अन्यथा केवलान्वयिसाध्यके तादृशं स्वं यद्यत् तावदन्यतमवृत्तित्वत्वसमनियत-

[1] साध्याभाववत्त्वमेवेति गादाधर्यां पाठाद् अत्रापि साध्याभावस्यैव इत्यस्य स्थाने साध्याभाववत्त्वमेव इति पाठः स्यात्—स्व.

प्रतियोगिताकाभावकूटवत्त्वनिवेशेऽप्रसिद्धेः। यदि च पूर्वं तादृशयत्किंचिदधिकरणवृत्तिसकलसाध्याभाववत्त्वमेव यावतामित्यादेरर्थ इति पाठः; एकविपक्षस्थले च पूर्वपाठे यद्यदर्थाप्रसिद्ध्या वीप्सात्यागमपेक्ष्यायं पाठः सम्यक्; तदा [1]शेषं पूर्ववदिति पाठो नास्तीत्यवधेयम्।

## न्यायरत्नम्

**रूपसामान्याभाववान् वायुत्वादित्यादौ स्वपदेन तत्तद्घटादेरेवोपादेयतया तत्र यद्यदर्थाप्रसिद्धिः तत्साध्यके वीप्सानुपादाने तत्साध्यके व्यभिचारिण्यतिव्याप्तिरत आह––अथवेति। स्ववृत्तिसाध्याभावत्वव्यापकाधेयतानिरूपकाधिकरणवृत्तिसाध्याभावत्त्वव्यापकस्ववृत्तिताकमधिकरणं यावतामित्यादेरर्थ इत्यथवेति कल्पाभिप्रायः। शेषमिति। तादृशह्रदवृत्तित्वाभावमादायातिव्याप्तिवारणाय तादृशं यद्यत्स्वं तावदन्यतमवृत्तित्वत्वसमनियतप्रतियोगिताकत्वविवक्षणमित्यर्थः।**

## गादाधरी

**अथवा व्यासज्यवृत्तिसाध्याभावमात्रवृत्तिधर्मावच्छिन्नाधिकरणत्वमेव साध्याभावकूटाधिकरणत्वम्। जगत एव साध्याभावत्वावच्छिन्नाधिकरणतया व्यभिचारिण्यतिव्याप्तिवारणाय व्यासज्यवृत्तित्वं धर्मविशेषणम्। तथा सत्यपि [2]च जगत एव व्यधिकरणधर्मावच्छिन्नसाध्याभावमात्रवृत्तितथाविध[3]धर्मावच्छिन्नाधिकरणत्वात् स एव दोष इति आधेयतावच्छेदकतादृशधर्मन्यूनवृत्ति-**

[1] न्यायरत्ने शेषं पूर्ववदिति पाठमङ्गीकृत्य व्याख्यातम्––स्व.

[2] चकारो नास्ति––क.

[3] तथाविधेति––व्यासज्यवृत्तीत्यर्थः। समनियताभावैक्यमतेऽपि वक्ष्यमाणव्यासज्यवृत्तित्वसत्त्वादिति भावः––रा.

**तद्व्याप्यं यद्यत्तदन्यत्वेन धर्मो विशेषणीयः। न्यूनवृत्तित्वं च [1]तत्समानाधिकरणाभावप्रतियोगित्वमात्रम्। उक्तस्थले तद्रूपव्यधिकरणधर्मावच्छिन्नसाध्याभावोभयत्वादिरेव तादृशो धर्मः। तस्य रूपान्तरसाधारणत्रित्वादिन्यूनवृत्तित्वेऽपि तादृशत्रित्वाद्यवच्छिन्नस्य क्वचिदप्यवृत्तेः तस्याधेयतानवच्छेदकतया आधेयतावच्छेदकीभूततादृशधर्मन्यूनवृत्तिताविरहात्। न च समनियताभावैक्ये व्यधिकरणधर्मावच्छिन्ना[2]भावमात्रवृत्तिव्यासज्यवृत्तिधर्माप्रसिद्ध्या केवलान्वयिसाध्यकेऽव्याप्तिरिति वाच्यम्। तथा सति व्यासज्यवृत्तिस्थले[3] अव्यासज्यवृत्त्यनेकवृत्तिधर्मभिन्नत्वस्य निवेशनीयत्वात् केवलान्वयिसाध्यके साध्याभावत्वस्यैव तथात्वादित्यतो दोषान्तरदानाय [4]वृत्तौ हेतुतावच्छेदकसंबन्धं निवेशयति––किंचेति।**

कृष्णंभट्टीयम्

यद्यत्त्वमिति निवेशे दुर्ज्ञेयता, गौरवम् चेत्यत: यावतामभावानामैकाधिकरण्यमित्याद्यविवक्षित्वैवाह––अथवेति। धर्म इति। तथा चाधेयतावच्छेदकीभूतव्यासज्यवृत्तिसाध्याभावमात्रवृत्तिधर्मन्यूनवृत्तितद्व्याप्यं यद्यत् तत्तद्भिन्नो य: व्यासज्यवृत्तिसाध्याभावमात्रवृत्तिधर्म: तदवच्छिन्नाधिकरणतावन्निरूपितवृत्तित्वाभाववत्त्वं निष्कर्ष:। व्यधिकरणधर्मावच्छिन्नसाध्याभावसाधारणद्वित्वनिरूपितन्यूनवृत्तित्वादे: वह्न्यभावत्वे प्रसिद्धि:। अत्र प्रतियोगिकोटौ साध्याभावमात्रवृत्तीत्यत्र मात्रपदानिवेशे, वाच्यत्वादिसाध्यके साध्याभावमात्रवृत्तिव्यासज्यवृत्ते: व्यधिकरणधर्मावच्छिन्नसाध्या-

1 स्वसमानाधिकरणाभावप्रतियोगित्वमात्रम्––क.

2 साध्याभाव––अ, क.

3 स्थाने––अ. व्यासज्यवृत्तित्वस्थले––क.

4 वृत्ताविति नास्ति––क.

भावमात्रवृत्ति[1]कूटत्वरूपधर्मस्य व्यधिकरणधर्मावच्छिन्नवाच्यत्वज्ञेयत्वाद्यभावसाधारणकूटत्वन्यूनवृत्तितया तद्व्याप्यत्वेन च तद्भिन्नत्वासंभवेन अव्याप्तिरतः तन्निवेशः। एवं च तादृशकूटत्वस्य व्यधिकरणधर्मावच्छिन्नवाच्यत्वाद्यभावभिन्नतादृशज्ञेयत्वाद्यभाववृत्तेः साध्याभावमात्रवृत्तित्वासंभवेन नाप्रसिद्धिः। व्यासज्यवृत्तित्वानिवेशे रूपाभावसाध्यके एकरूपघटितव्यधिकरणधर्मावच्छिन्नाभावघटितद्वित्वस्य सकलरूपात्मकाभावव्यधिकरणधर्मावच्छिन्नसाध्याभाववृत्तिसाध्याभावत्वरूपो यो धर्मः तन्न्यूनवृत्तित्वात्, तद्भिन्नधर्माप्रसिद्धिरतस्तत्र तन्निवेशः। अनुयोगिकोटौ मात्रपदानिवेशे केवलान्वयिनि घटनिष्ठतद्व्यक्तित्वव्यधिकरणधर्मावच्छिन्न[2]साध्याभावे तन्निष्ठद्वित्वमादायैव तदवच्छिन्नाधिकरणवृत्तित्वस्य हेतौ सत्त्वाद् अव्याप्तिरतो मात्रपदनिवेश इति तु न सत्। साध्याभाववृत्तिधर्मत्वेनैव निवेशसत्त्वात् साध्याभावद्वित्वमादाय तदवच्छिन्नाधिकरणतायाः केवलान्वयित्वात्। व्यभिचारिणि तादृशभिन्नसाध्याभावमात्रवृत्तिव्यधिकरणधर्मावच्छिन्नाभावत्वरूपधर्ममादाय जगत एव तदवच्छिन्नवत्त्वात् अतिव्याप्तिः अतः व्यासज्यवृत्तीति। एकत्वानवच्छिन्नपर्याप्तिसंबन्धेन वृत्तिमत्त्वं व्यासज्यवृत्तित्वम्। द्वित्वस्य स्वात्मकतादृशधर्मव्याप्यतया तद्भिन्नत्वासंभवोऽतः न्यूनवृत्तीति। व्यधिकरणानां घटत्वाद्युदासीनधर्माणां न्यूनवृत्तितया तत्तद्भेदकूटनिवेशे गौरवम्।

वस्तुतस्तु—रूपाभावसाध्यके लक्षणघटकत्वेनाभिमतमात्रतन्नीलघटितकूटत्वतत्पीतरूपघटितकूटत्वादीनां सर्वेषामेव न्यूनवृत्तित्वात् तद्भिन्नत्वं न स्यादिति त्रित्वादीनामेव तद्भिन्नतया, तदवच्छिन्नाधिकरणाप्रसिद्धिरतः तद्व्याप्यत्वनिवेशः। न च तत् स्वसमानाधिकरणत्वं वृत्तिमत्तत्तत्पदार्थभेदानिवेशेन लाघवादिति वाच्यम्। दर्शितकूटत्वयोः व्यधिकरणधर्मावच्छिन्ना-

[1] कूटवत्त्वरूप—अ.

[2] साध्यपदं नास्ति—अ.

भाव एव सामानाधिकरण्यात्। नापि तादृशधर्मनिष्ठव्याप्यवृत्तितानिरूपकाधिकरणवृत्तित्वं; तस्य तत्पर्याप्त्यधिकरणपर्याप्तत्वरूपत्वेन व्यधिकरणधर्मावच्छिन्नधूमाभावद्वित्वस्य धूमसामान्याभावसाधारणत्रित्वाव्याप्यत्वेन तादृशसाध्याभावमात्रवृत्तित्वसत्त्वात् जगत एव तदवच्छिन्नाधिकरणतया अतिव्याप्तेः। नापि स्वव्यापकतत्कत्वं; गौरवात्। किन्तु तद्वदन्यावृत्तित्वं; निरुक्तकूटत्वयोः अन्योन्याव्याप्यत्वेन सङ्ग्रहः। न च न्यूनवृत्तित्वं, स्वव्यापकतत्कत्वे सति तद्भिन्नत्वं; तावतापि निरुक्तकूटत्वयोः अन्योन्यन्यूनवृत्तित्वाभावेन सङ्ग्रहसंभवादिति व्याप्यत्वं व्यर्थम्; पूर्वोक्तद्वित्वसङ्ग्रहाय तद्भिन्नत्वनिवेशः। यद्वा तद्भिन्नतद्व्याप्यनिवेशात् तन्न्यूनवृत्तित्वं व्यर्थमिति वाच्यम्। साध्याभावयोरपेक्षाबुद्धिक्रमेण क्रमजनितयोः द्वित्वयोः परस्परभिन्नत्वात् परस्परव्याप्यत्वाच्च, तद्भिन्नत्वाभावेन असंभवभयेन, तन्न्यूनवृत्तित्वस्यावश्यकत्वात्। तच्च तत्समानाधिकरणभेदप्रतियोगितावच्छेदकत्वपर्याप्त्यधिकरणत्वम्। पर्याप्तिफलं स्फुटम्। न तु तत्र सामानाधिकरण्यप्रवेशः, वैयर्थ्यात्।

अथ केवलान्वयिनि साध्याभावकूटत्वस्यापि स्वाधिकरणप्रत्येकवृत्तिभेदप्रतियोगितावच्छेदकत्वात् तद्भिन्नधर्माप्रसिद्धिः। न च भेदे निरवच्छिन्नवृत्तिकत्वं प्रतियोग्यवृत्तित्वं वा विशेषणमिति न स्वस्य न्यूनवृत्तित्वमिति वाच्यम्। तथा सति रूपाभावसाध्यके व्यधिकरणरूपद्वयसाधारणत्रित्त्वस्यापि तादृशधर्मभिन्नतया तदवच्छिन्नाधिकरणाप्रसिद्धेः अव्याप्तिरिति चेन्न। त्रित्वाद्यवच्छिन्नाधिकरणाप्रसिद्धावपि द्वित्वमादायैव तादृशधर्मभिन्नधर्मावच्छिन्नधिकरणप्रसिद्धेः। गगनाधिकरणाप्रसिद्धावपि गगनस्य प्रमेयत्वेन प्रमेयत्वावच्छिन्नाधिकरणप्रसिद्धिवत्। आधेयतावच्छेदकनिवेशफलमाह——उक्तस्थले इति। साध्याभावत्वस्यैवेति। एवकारेण केवलान्वयिसाध्यके न साध्याभावत्वकूटनिवेशः, अकिंचित्करत्वादिति सूचितम्।

तथात्वादिति । अत्र समनियताभावैक्यात् उक्तन्यूनवृत्तित्वविशिष्टतद्व्याप्याप्रसिद्धिरिति न शङ्क्यम् । तन्न्यूनवृत्तित्वतद्व्याप्यत्वयोः उभयोरभावस्योक्तत्वात् । यद्वा तद्व्याप्यत्वं पूर्वोक्तमेव । तन्न्यूनवृत्तित्वं च तत्समानाधिकरणात्यन्ताभावप्रतियोगित्वम् । एवं च केवलान्वयिसाध्यके गगनादावेव तद्विशिष्टतद्व्याप्यत्वप्रसिद्धिः । न च साध्याभावद्वित्वस्य तदधिकरणप्रत्येकवृत्त्यभावप्रतियोगित्वमस्त्येव । अभावस्य प्रतियोगिवैयधिकरण्यप्रवेशस्तु[1] व्यर्थः; प्रत्येकं द्वित्ववद्भेदस्य सर्वसम्मतत्वादिति वाच्यम् । पर्याप्त्यघटितस्वरूपसंबन्धेन प्रतियोगित्वस्योक्तत्वात् । वैशिष्ट्याद्यनवच्छिन्नत्वं व्यासज्यवृत्तिधर्मानवच्छिन्नत्वं वा प्रतियोगित्वविशेषणम् । यद्वा तद्धर्मावच्छिन्नसमानाधिकरणाभावप्रतियोगितावच्छेदकत्वं तन्न्यूनवृत्तित्वम् । तच्च घटत्वेन वाच्यत्वाद्यभावत्वनिरूपितं पटादिवृत्तित्वविशिष्टवाच्यत्वाद्यभावत्वादौ पटादिवृत्तित्वविशिष्टघटत्वेन वाच्यत्वाभावत्वादौ वा प्रसिद्धम् । अत्रापि अवच्छेदकत्वपर्याप्तिः निवेश्या । अतश्चाधेयतावच्छेदकव्यासज्यवृत्तिसाध्याभावमात्रवृत्तिधर्मस्य द्वेधा निवेशभयेन स्वव्यापकतादृशधर्मनिरूपितन्यूनवृत्तित्वपर्याप्त्यधिकरणभेदनिवेशोऽपि भवत्येव ।

### न्यायरत्नम्

**यद्यत्त्वमिति निवेशे दुर्ज्ञेयत्वं गौरवं चेत्यत आह––अथवेति । धर्मो विशेषणीय इति । तथा चाधेयतावच्छेदकः साध्याभावमात्रवृत्तिव्यासज्यवृत्तिः यो धर्मः तन्न्यूनवृत्तितद्व्याप्यं यत् तदन्यो यः साध्याभावमात्रवृत्तिव्यासज्यवृत्तिधर्मः तदवच्छिन्नाधिकरणतावद्वृत्तित्वाभाववत्त्वं व्याप्तिरिति निष्कर्षः । न्यूनवृत्तित्वं सामानाधिकरण्यघटितम् । व्याप्यत्वं च सामानाधिकरण्यमात्रमिति विवक्षितम् । प्रतियोगितावच्छेदककोटौ मात्रपदानुपादाने व्यधिकरणधर्मावच्छिन्नसाध्याभावमात्रवृत्तिसमुदायत्वे तादृशाभावोदासी-**

1 निवेशस्तु––अ.

नसाधारणसमुदायत्वन्यूनवृत्तित्वव्याप्यत्वयोः सत्त्वेन तद्भिन्नसाध्याभावमात्रवृत्तिव्यासज्यवृत्तिधर्माप्रसिद्ध्या वाच्यत्वसाध्यकेऽव्याप्तिरतः तन्निवेशः। व्यासज्यवृत्तित्वानिवेशे रूपाभावसाध्यके एकरूपव्यधिकरणधर्मावच्छिन्नसाध्याभाववृत्तिसमुदायत्वस्य सकलरूपव्यधिकरणधर्मावच्छिन्नसाध्याभावसाधारणो यः साध्याभावत्वरूपो धर्मः तन्न्यूनवृत्तितया तद्व्याप्यतया च तद्भिन्नतादृशधर्माप्रसिद्धिरतस्तन्निवेशः। आधेयतावच्छेदकत्वविशेषणप्रयोजनं ग्रन्थकृद्दर्शितं ज्ञेयम्। घटत्वाद्युदासीनधर्माणां भेदनिवेशे गौरवमतो व्याप्यत्वनिवेशः। स्वस्यापि स्वव्याप्यत्वात् तद्भिन्नतादृशधर्माप्रसिद्धिरतो न्यूनवृत्तित्वनिवेशः। अनुयोगिकोटौ मात्रपदानुपादाने वाच्यत्वसाध्यके व्यधिकरणधर्मावच्छिन्नसाध्याभावघटाधिकरणत्वैतद्द्वित्वरूपतादृशधर्मावच्छिन्नाधिकरणे हेतोर्वृत्त्या अव्याप्तिरतः तन्निवेशः। व्यभिचारिणि तादृशसाध्याभावत्वरूपधर्ममादाय तदवच्छिन्नाधिकरणत्वं जगत एव स्यादतो व्यासज्यवृत्तीति। समनियताभावैक्यमते तादृशधर्मन्यूनवृत्तितादृशधर्मव्याप्यधर्माप्रसिद्ध्या तद्भिन्नतादृशधर्माप्रसिद्धिः तन्न्यूनवृत्तित्वतद्व्याप्यत्वोभयाभावं निवेश्य वारणीया।

## गादाधरी

(११९) हेतुतावच्छेदकसंबन्धेन साध्याभाववद्वृत्तित्वनिवेशस्य प्रयोजनकथनम्। तथानिवेशे सत्तावान् जातेरित्यादौ अव्याप्तिप्रसञ्जनम्।

धूमादावव्याप्तिरिति। वह्निमन्मात्रसमवेतघटादौ[1] वर्तमानस्य निर्वह्निसमवेतत्वाभावस्य तत्रासत्त्वादिति भावः। एतच्च यत्किंचित्संबन्धावच्छिन्नतादृशवृत्तित्वत्वसमनियतप्रतियोगिताकाभावनिवेशाभिप्रायेण। अन्यथा निर्वह्निसंयुक्तत्वादिसाधारणतादृशवृत्तित्वत्वं प्रति तथाविधाभावप्रतियोगिताया अव्यापकत्वात्

[1] घटादिव्यक्तौ—अ.

**तस्य लक्षणाघटकतया वृत्तिमन्मात्रस्यैव साध्याभावाधिकरणकालादौ वृत्तेः निर्वह्निवृत्तित्वसामान्याभावस्य व्यधिकरणधर्मावच्छिन्नप्रतियोगिताकस्यैव वृत्तिमद्वृत्तित्वादव्याप्त्यसंगतेः। अत एव संबन्धमनिवेश्य तादृशाधिकरणवृत्तित्वत्वसमनियतप्रतियोगिताकाभावनिवेशपक्षे दूषणान्तरमाह––साध्यतावच्छेदकसंबन्धेनेति। एतच्च [1]कालिकसंबन्धावच्छिन्नसाध्याभावस्य कालादावसत्त्वेऽपि [2]तस्य यथाविवक्षितसाध्याभावसमुदायवत्त्वमक्षतमेवेति सूचनाय। कालादावित्यादिपदाद् [3]विषयितासंबन्धेन वस्तुमात्रसंबन्धिन ईश्वरज्ञानादेः परिग्रहः। व्यभिचारिणीति। यत्साध्यके वृत्तिमन्मात्राधिकरणस्य [4]कालादेर्विवक्षितसाध्याभावकूटवत्त्वं तादृशव्यभिचारिहेतावित्यर्थः।**

कृष्णंभट्टीयम्

वह्निमदिति, वह्निमन्मात्रकपालारब्धे पर्वतसंयुक्तघटादौ। दूषणान्तरमित्यन्तरपदं यत्किंचित्संबन्धनिवेशकल्पीयदूषणेतरपरम्। कालः कालत्वविषयितान्यतरवान् द्रव्यत्वादित्यादौ अनतिप्रसङ्गादाह––यत्साध्यके इति।

दीधितिः

साधनसमानाधिकरणत्वेन साध्याभावाः विशेषणीया इति चेद् विशेष्यन्ताम्।

[1] कालिकादि––अ. कालिकसंबन्धावच्छिप्रतियोगिताकसाध्याभावस्य––क.
[2] कालादेः––रा.
[3] विषयितादि––अ, क.
[4] कालादौ––क.

## गादाधरी

(१२०) साध्याभावे साधनसमानाधिकरणविशेषणान्न पूर्वोक्तदोषा इत्याक्षेपः।

द्रव्यत्वसाधनके द्रव्यत्वपृथिवीत्वान्यतराभावशुद्धद्रव्यत्वाभावयोः, वायुत्वादिहेतुके रूपाद्यात्मकसाध्याभावस्य, सत्त्वादिसाध्यके संयोगेन समवायेन वा यत्र [1]हेतुः तत्र सत्तात्वावच्छिन्नाभावस्य च साधनवदवृत्तित्वात्, साधनसमानाधिकरणत्वेनाभावे[2] विशेषिते न [3]तानभावानादायोक्तस्थलेषु अतिव्याप्त्यव्याप्ति-[4]प्रसञ्जनसंभव इत्याशङ्कते––साधनेति। सद्धेतौ व्यधिकरणधर्मावच्छिन्नाभावानामेव[5] साधनसमानाधिकरणतया तादृशाभावकूटाधिकरणं जगदेव। व्यभिचारिणि च साध्यतावच्छेदकावच्छिन्नसाध्याभावस्यापि तथात्वात् तादृशाभावकूटाधिकरणं निःसाध्यमेव। साधनसामानाधिकरण्योपलक्षिताभावाधिकरणत्वमेव निवेश्यम्; न तु तद्विशिष्टाधिकरणत्वम्। तेन व्यतिरेकिणि हेतौ [6]तद्विशिष्टाधिकरणवृत्तित्वाभावस्य वृत्तिमद्वृत्तित्वसंभवेऽपि नाव्याप्तिः। साधनसमानाधिकरणत्वं साधनतावच्छेदकसंबन्धेन साधनतावच्छेदकविशिष्टवद्वृत्तित्वम्। तेन द्रव्यत्वादेः कालिक-

1 हेतुता––क.

2 साध्याभावे––क.

3 तादृशाभावान्––क.

4 प्रसङ्गः––क.

5 साध्याभावानामेव––अ.

6 तद्विशिष्टाधिकरणवृत्तित्वत्वावच्छिन्नाभावस्य––क.

संबन्धेनाधिकरणे स्पन्दादौ,[1] सत्ताधिकरणे गुणादौ च द्रव्यत्व-पृथिवीत्वान्यतरत्वावच्छिन्नाभावस्य सत्त्वेऽपि द्रव्यत्वपृथिवीत्वोभयादिसाध्यके [[2]द्रव्यत्वद्रव्यवृत्तित्वविशिष्टसत्त्वादौ] च नातिव्याप्तिः। न च सत्तायां साध्याभावकूटवद्गुणादिवृत्तित्वसत्त्वाद् विशिष्टसत्त्वे तदभावस्य दुर्लभतया नोपदर्शितसाध्यके विशिष्ट-सत्त्वेऽतिव्याप्तिप्रसक्तिरिति वाच्यम्। [3]साधनतावच्छेदकावच्छिन्नत्वानिवेशे [4]द्रव्यत्वादिसाध्यकविशिष्टसत्त्वेऽव्याप्तिवारणाय [5]विशिष्टानुयोगिकाभावाभ्युपगमस्यावश्यकतया उक्तस्थलेऽतिव्याप्तिप्रसक्तेः। संयोगे साध्ये संयोगेन घटादिहेतौ संयोगत्वावच्छिन्नसंयोगाभावस्योत्पत्तिकालावच्छेदेन साधनवति वृत्तेः व्याप्यवृत्तित्वविशिष्टस्याधिकरणे गुणादौ संयोगेन वृत्तेरप्रसिद्ध्या अव्याप्तिः। संयोगी सत्त्वादित्यादौ जगत एव संयोगाभाववत्त्वेनातिव्याप्तेर्वारणाय व्याप्यवृत्तित्वविशिष्टाभाववत्तानिवेशनस्यावश्यकत्वादित्यतः अनवच्छिन्नैव वृत्तिरत्र प्रवेश्या।

1 अधिकरणस्पन्दादौ—क.

2 [ ] एतदन्तर्गतपाठस्थाने—द्रव्यवृत्तित्वविशिष्टसत्त्वादौ इति पाठः—क.

3 साधनतावच्छेदकावच्छिन्नवत्त्वानिवेशे—क.

4 द्रव्यत्वत्वादिविशिष्टसाध्यके विशिष्टसत्त्वे—अ. द्रव्यत्वादिसाध्यके विशिष्ट-सत्त्वे—क.

5 साधनतावच्छेदके साध्याभावकूटवद्वृत्तितावच्छेदकत्वाभावपर्यन्तनिवेशस्य आवश्यकतया उक्तस्थलेऽतिव्याप्तिप्रसक्तेः इति पाठान्तरम्—क, अ. कृष्णंभट्टीयेऽयं पाठः दूषितः—ख. साधनतावच्छेदकेत्यारभ्य प्रवेश्येत्यन्तं क्वचित् पुस्तके नास्ति। विशिष्टानुयोगिकेत्यादिः तिष्ठति—रा. कृष्णंभट्टीये साधनतावच्छेदकेत्यादिपाठानु-सारेणार्थवर्णनम्—ख.

## कृष्णंभट्टीयम्

[1]विशिष्टानुयोगिकाभावाभ्युपगमस्येति । [2]साधनतावच्छेदके साध्याभावकूटवद्वृत्तितावच्छेदकत्वाभावनिवेशस्येति त्वपपाठः । तत्र साधनतावच्छेदकतापर्याप्त्यवच्छेदकधर्मावच्छिन्नानुयोगिताकत्वनिवेशेऽपि, विशिष्टानुयोगिकत्वस्य स्वहस्तिततत्वात् । व्याप्यवृत्तित्वं निरवच्छिन्नवृत्तिकत्वम् । ननु व्यासज्यवृत्तित्ववैशिष्ट्यानिवेशादेव नाव्याप्तिरित्यत आह—संयोगीति । न चावच्छिन्नवृत्तिकान्यत्वं व्याप्यवृत्तित्वं, तच्च न संयोगाभावे इति व्यधिकरणधर्मावच्छिन्नसंयोगाभावमात्रमुपादाय नाव्याप्तिरिति वाच्यम् । तद्रीत्यैव संयोगी सत्त्वादित्यादावतिव्याप्तेः दुर्वारत्वात् । अत्र, साधनसानाधिकरण्ये । घटकत्वं सप्तम्यर्थः ।

अथ तद्रूपाभाववान् [3]प्रमेयत्वादित्यादौ साध्याभावस्य तद्रूपस्य निरवच्छिन्नवृत्तिकत्वाभावात्, व्यधिकरणधर्मावच्छिन्नाभावमादायातिव्याप्तिः । न च प्राचां मते, रूपस्य स्वात्यन्ताभावासामानाधिकरण्यात् निरवच्छिन्न[4]वृत्तित्वं ब्रूमः । अयं ग्रन्थश्च तन्मत एवेति वाच्यम् । तथा सति घटतद्वायुद्वित्वघटैतद्वायुद्वित्वादिरूपसाध्याभावस्य प्रत्येकं साधनसमानाधिकरणस्य कूटवति घटादौ वायुत्वादेरवृत्तेः सत्तान्यपृथिवीसमवेतशून्यत्वादिसाध्यक साधनसामानाधिकरण्यदानेऽपि अतिव्याप्तिसत्त्वात् भूतत्वमूर्तत्वान्यतराभावसाध्यकानुधावनस्य निर्बीजत्वापातादिति चेन्न । नव्यमते तस्य सद्धेतुत्वात् । एतद्ग्रन्थस्य नव्याभिप्रायकत्वात् । अन्यथा प्राचां मते तद्रूपादेरवच्छिन्नवृत्तिकत्वमेव न एतद्रूपात्यन्ताभाववानित्यादिपूर्वग्रन्थलभ्यमिति अतिव्याप्तेर्दुर्वारत्वात् ।

1 विशिष्टानुयोगिताकाभावाभ्युपगमस्येति प्रतीकधारणम्—अ.

2 एतादृशपाठः गादाधर्यां दर्शितः—स्व.

3 मेयत्वादित्यादौ—अ.

4 वृत्तिकत्वं ब्रूमः—अ.

## गादाधरी

(१२१) साध्याभावे साधनसमानाधिकरणत्वविशेषणे सत्तावान् जातेरित्यत्र अव्याप्तिवारणमशक्यमित्याक्षेपः ।

अथ साधनसमानाधिकरणत्वेन साध्याभावे विशेषितेऽपि सत्तावान् जातेरित्या[1]दावव्याप्तिवारणमशक्यमेव । प्रत्येकं साधनसमानाधिकरणाभ्यां द्रव्यत्वविशिष्टसत्ताभावद्रव्यान्यत्व-विशिष्टसत्ताभावाभ्यां घटिताभावसमुदायस्य सामान्यादावेव सत्त्वात् तत्र च हेतुतावच्छेदकसंबन्धेन वृत्तेरप्रसिद्धेः । यत्तु—द्रव्यत्वादिविशिष्टसत्ताभावप्रतियोगितावच्छेदककोटौ सत्तात्वं न निवेश्यते, द्रव्यत्वादिवैशिष्ट्यमात्रस्यैव तत्प्रतियोगितावच्छेदक-त्वसंभवादिति द्रव्यत्वादिसाधारणद्रव्यत्वादिवैशिष्ट्यावच्छिन्ना[2]-भावप्रतियोगितायाः सत्तात्वसमनैयत्यविरहान्न तादृशाभावस्य लक्षणघटकतेति समाधानम्—[3]तदतितुच्छम् । द्रव्यत्वविशिष्ट-सत्तावान् जातेरित्यादावपीदृशयुक्त्या साध्यतावच्छेदकतादृश-विशिष्टसत्तात्वस्याभावप्रतियोगितानवच्छेदकत्वाद् द्रव्यत्वादिवै-शिष्ट्यावच्छिन्नाभावस्य च साध्यतावच्छेदकसमनियतप्रतियोगि-ताकत्वाभावाद् व्यधिकरणधर्मावच्छिन्नाभावमादायातिव्याप्तेर्दु-र्वारतया एतल्लक्षणवादिना गुरुधर्मस्याभावप्रतियोगितावच्छेदक-त्वमतस्यावलम्बनीयत्वाद् द्रव्यत्वविशिष्टसत्तात्वादेः [4]प्रतियो-

[1] इत्यत्र—अ. [2] तत्प्रतियोगितायाः—क. [3] तत्तुच्छम्—अ.

[4] विशिष्टसत्तानिरूपितसमवायेन साध्यत्व एव जातेर्व्यभिचारित्वेन तादृश-संबन्धेन केवलविशिष्टाभावस्य केवलान्वयितया विशिष्टसत्ताभावस्य लक्षणघटकत्वेन न तत्रातिव्याप्तिरिति भावः । विशेषणतावच्छेदकविशिष्टस्य शुद्धसंबन्धेनाधिकरणता-वादिमते च तत्र विशिष्टाभावोऽक्षतः—इति काचित् टिप्पणी—अ.

गितानवच्छेदकत्वेऽपि समवेतवान् जातेरित्यादौ समवायेन एतद्रूपान्यत्वविशिष्टाभावतद्रूपान्यत्वविशिष्टाभावादीनां समवेतत्वसमनियतप्रतियोगिताकतया प्रत्येकं साधनसमानाधिकरणतया च तद्घटितकूटाधिकरणे सामान्यादौ हेतुतावच्छेदकसंबन्धेन वृत्तेरप्रसिद्ध्या अव्याप्तिवारणासंभवात्। एवं विशिष्टस्यातिरिक्ततामतावलम्बनाद्[1] दर्शितविशिष्टाभावानां साध्यतावच्छेदकसमनियतप्रतियोगिताकत्वविरहोपपादनेन समाधानमपि हेयम्। उक्तस्थल एव द्रव्यत्वतदन्यसमवेतोभयगुणत्वतदन्यसमवेतोभयकर्मत्वतदन्यसमवेतोभयाभावानां साध्यतावच्छेदकसमवेतत्वसमनियतप्रतियोगिताकानां प्रत्येकं साधनसमानाधिकरणानां समुदायवति सामान्यादौ समवायेन वृत्तेरप्रसिद्ध्या अव्याप्तेः तावतापि वारणासंभवात्। न च यादृशसाध्याभावस्तोमाधिकरणं[2] साधनाधिकरणं तादृशस्तोमाधिकरणवृत्तित्वाभावस्य[3] विवक्षितत्वादुक्ताभावसमुदायाधिकरणतायाः साधनवत्यसंभवात् न तत्समुदायस्य लक्षणघटकतेति नाप्रसिद्धिरिति वाच्यम्। एवं सत्यपि तादृशविशिष्टाभावाद्येकतरव्यधि[4]करणधर्मावच्छिन्नसाध्याभावस्तोमस्य तादृशस्याधिकरणे केषांचिद्वृत्तिमतामवृत्तेः साधनस्य च वृत्तेरव्याप्तितादवस्थ्यात्। एतादृशविवक्षानुसरणे भूतत्वमूर्तत्वान्यतराभाववान् स्पर्शवदन्यत्वादित्यत्र भूतत्वमूर्तत्वोभयघटितसाध्याभावकूटवति हेतोरवृत्तितया वक्ष्यमाणातिव्याप्तेरसङ्गति[5]-

1 अवलम्बने—क. 2 समुदायाधिकरणम्—क.

3 समुदायाधिकरणवृत्तित्वाभावस्य—क.

4 एकतरघटितव्यधि—क.

5 असंभवप्रसङ्गाच्च—क.

**प्रसङ्गाच्च। साधनवतो निःस्पर्शस्य कस्यचिदपि तादृशोभयघटितस्तोमाधिकरणत्वविरहेण तादृशस्तोमस्य लक्षणाघटकत्वात् प्रतियोयितायां साध्यतावच्छेदकव्याप्यत्वविशेषणवैयर्थ्यापत्तेश्च। पृथिवी द्रव्यत्वप्रकारकप्रमाविषयत्वादित्यादौ जलावृत्तित्वतेजोऽवृत्तित्वावच्छिन्नाभावघटितकूटवत्त्वस्य[1] क्वचिदपि साधनवत्यसत्त्वेन तादृशकूटस्य लक्षणाघटकत्वाद् यादृशकूटवत्त्वं साधनवतः तद्वद्वृत्तित्वाभावस्य साधनेऽसंभावितत्वादतिव्याप्त्यनवकाशादिति चेत्[2]।**

कृष्णंभट्टीयम्

एतदिति। अत्र च प्रतियोगिताविशिष्टव्यापकतावच्छेदकसाध्यतावच्छेदककत्वं साध्यतावच्छेदकव्याप्यत्वमित्युक्तावपि विशिष्टत्वसाध्यतावच्छेदकके[3]ऽनतिप्रसङ्गः संभवतीति तु न वाच्यम्। सत्तादिसाध्यके विशिष्टसत्ताद्यभावमादाय अव्याप्तेरनुद्धारात्। अत्र प्रयोजनाभावेन साध्यतावच्छेदककोटौ सत्तात्वादेरनिवेशात् द्रव्यत्वविशिष्टसत्तादिसाध्यके नातिव्याप्तिः। न च तत्र तन्निवेशेऽपि साध्यतावच्छेदकव्याप्यत्वस्थाने साध्यतावच्छेदकव्यापकव्याप्यत्वनिवेशात् द्रव्यत्वविशिष्टाभावसङ्ग्रह इति वाच्यम्। तथा [4]सति पृथिवी द्रव्यत्वप्रकारकप्रमाविषयत्वादित्यादौ जात्यभावस्यापि लक्षणघटकत्वापत्त्या, अतिव्याप्तेरित्यभिप्रेत्याह——द्रव्यत्वेति। स्वरूपसमवायोभयघटितसंवन्धेनान्यत्ववैशिष्टचमिति तदवच्छिन्नप्रतियोगितायाः समवेतत्वसमनैयत्यम्। सत्तावान् जातेरित्यादौ उक्तपूर्वपक्षे केषांचित् समाधानमुपन्यस्यति——एवमिति। उक्तस्थल एवेति। एकविशिष्टापरत्वाद् अन्यद्

1 कूटस्य——क.

2 असंभावितत्वादिति अतिव्याप्त्यनवकाशादिति चेत्——क.

3 नातिप्रसङ्गः——अ.

4 सति इति नास्ति तत्स्थाने चकारः——अ.

उभयपदार्थतावच्छेदकमस्ति, द्रव्यत्वपृथिवीत्वोभयसाध्यकस्य तथैव सङ्गमनीयत्वात्। अन्यथा विशिष्टसाध्यकान्तर्भावः स्यादित्युक्ताभावानां लक्षणघटकता।

## न्यायरत्नम्

सत्तात्वस्य साध्यतावच्छेदकेऽपि अनिवेशे त्वाह--द्रव्यत्वविशिष्टेति। एतद्रूपान्यत्वविशिष्टेति। स्वरूपसमवायोभयसंबन्धघटितसामानाधिकरण्यरूपं वैशिष्टयं, तस्य च एतद्रूपेऽपि सत्त्वात् तादृशवैशिष्टयावच्छिन्नप्रतियोगितायाः समवेतमात्रनिष्ठत्वं बोध्यम्। उक्तपूर्वपक्षे केषांचित् समाधानमाह--एवमिति।

## गादाधरी

(१२२) तादृशाक्षेपसमाधानम्।

अत्राहुः--साध्यतावच्छेदकावच्छिन्नसाध्यवद्वृत्तिसमानाधिकरणधर्मावच्छिन्नाभावभिन्नत्वेन साध्याभावविशेषणादुपदर्शितविशिष्टाभावनिरासः। गुणकर्मान्यत्वविशिष्टसत्तावान् जातेरित्यादौ [1]विशिष्टसत्तात्वाद्यवच्छिन्नसत्ताद्यभावस्य संग्रहायावच्छिन्नान्तम्। वृत्तिर्निरवच्छिन्ना ग्राह्या। अन्यथा संयोगी सत्त्वादित्यादौ संयोगत्वावच्छिन्नसंयोगाद्यभावस्य साध्यवद्वृत्तितया व्यधिकरणधर्मावच्छिन्नाभावस्यैव [2]लक्षणघटकत्वेनातिव्याप्त्यापत्तेः। सद्धेतौ साधनसमानाधिकरणस्य साध्यवद्वृत्त्यन्यस्याप्रसिद्धेः समानाधिकरणधर्मावच्छिन्नेति। तथा च व्यधिकरणधर्मावच्छिन्नसाध्याभाव एव विशिष्टभेदप्रसिद्धिः। न चैवं साध्यतावच्छेदक-

1 विशिष्टसत्तात्वावच्छिन्नाभावस्य--क.

2 लक्षणघटकतया--क.

**व्यापकत्वं प्रतियोगिताविशेषणं व्यर्थम्; अभाववान् मेयत्वादित्यादौ घटत्वादिरूपाभावस्योक्तविशेषणेनैव [1]व्यावर्तनादिति वाच्यम् । प्रमेयसाध्यकस्थले घटत्वपटत्वो[2]भयाद्यवच्छिन्नप्रमेयसामान्याभावस्य गगनत्वाद्यवच्छिन्न[3]गगनाभावाभिन्नस्य संग्रहाय साध्यतावच्छेदकव्यापकत्वेन समानाधिकरणधर्मस्यावश्यं [4]निवेशनीयतया [5]घटत्वादिरूपाभावप्रतियोगितावच्छेदकघटत्वाभावत्वादेश्चाभावत्वाव्यापकत्वेन घटत्वादौ विशिष्टभेदस्याक्षतत्वादेतद्विशेषणेन[6] तद्व्यावृत्तेः ।**

### कृष्णंभट्टीयम्

साध्यसमनियततावच्छेदकरूपावच्छिन्नाभावनिवेशे पूर्वपक्षनिरास-संभवेऽपि पुच्छमेव पर्यवस्येत् । पृथिवी द्रव्यत्वप्रकारकप्रमाविषयत्वादित्यादौ जलासमवेताभावादिवारणाय साधनवति संभवदैकाधिकरण्यकत्वरूपसाधनसामानाधिकरण्यस्य लाघवेन निवेश्यतया साध्यव्याप्यतावच्छेदकत्वोपादाने गौरवादिति साध्यतावच्छेदकसमनियतप्रतियोगिताकाभावघटितलक्षणे समाधत्ते––अत्राहुरित्यादिना । यद्यपि सद्धेतुमात्र एव व्यधिकरणधर्मावच्छिन्नसाध्याभावस्य [7]गगनाभावाभिन्नतया [8]असंभवप्रसक्तेः

[1] वारणादिति––क.

[2] उभयावच्छिन्न––क.

[3] एतेन गगनत्वरूपसमानाधिकरणधर्मावच्छिन्नप्रतियोगिताकत्वं दर्शितम्––रा. गगनाद्यभावाभिन्नस्य––क.

[4] विशेषणीयतया––अ.

[5] घटत्वपटत्वादिरूप––क.

[6] विवक्षणेन––अ.

[7] गगनाभावाभिन्नतायाः––अ.

[8] संभवप्रसक्तेः––अ.

प्रमेयसाध्यकानुधावनं विफलम्। तथापि साधनसमानाधिकरणधर्मे साध्यतावच्छेदकसामानाधिकरण्यदानेनैव तद्वारणसंभवाद् व्यापकत्वपर्यन्तप्रवेशार्थं तदनुधावनम् । न च घटत्वेन वह्न्यभावस्य, स्वरूपसंबन्धेन तत्तद्वह्न्याभावाभिन्नतया, व्यापकत्वपर्यन्तसार्थक्यसंभवाद् उक्तानुधावनं व्यर्थमेवेति वाच्यम् । व्यापकत्वपर्यन्तप्रवेशेऽपि स्वरूपसंबन्धेन वह्निसामान्याभाववारणार्थं वक्ष्यमाणसंबन्धावच्छिन्नप्रतियोगिताकस्यैव समानाधिकरणधर्मावच्छिन्नाभावस्य निवेशनीयत्वात् । घटत्वादाविति । न च घटत्वादेर्घटत्वाभावतदन्याभावोभयत्वरूपं यदभावत्वव्यापकं तदवच्छिन्नप्रतियोगिताकत्वसंभवः । तत्र लाघवेन घटत्वाभावत्वस्यैव प्रतियोगितावच्छेदकत्वात् ।

## न्यायरत्नम्

**प्रमेयसाध्यकेति । अथ साध्याभावे साधनसामानाधिकरण्यघटितेऽस्मिन् कल्पे सद्धेतुमात्र एव व्यधिकरणधर्मावच्छिन्नाभावस्यैव लक्षणघटकतया तस्य च साध्यसमानाधिकरणेत्यादिविशेषणाक्रान्तगगनाभावभिन्नत्वासंभवेनासंभवस्यैव प्रसक्तेः प्रमेयसाध्यकेत्यनुपपन्नम् । न च समानाधिकरणधर्मे साध्यवृत्तित्वदाने वह्निसाध्यके गगनाभावमादायप्रसिद्धिः संभवतीत्यभिप्रायेणेदमिति वाच्यम् । वह्निसाध्यकेऽपि व्यधिकरणस्वरूपसंबन्धावच्छिन्नाभावमादायाप्रसिद्धेर्दुर्वारत्वात् । न च स्वरूपादिव्यधिकरणसंबन्धावच्छिन्नाभावानां न विवक्षणीयसमानाधिकरणसंबन्धावच्छिन्नप्रतियोगिताकत्वमिति वाच्यम् । स्वरूपसंबन्धेन वह्नित्वेन प्रमेयसामान्याभावस्य तादृशतया तमादायैवाप्रसिद्धेः संभवात् । न च समानाधिकरणसंबन्धावच्छिन्नत्वमित्यस्य स्वावच्छेदकसंबन्धावच्छिन्नाधेयतावच्छेदकधर्मावच्छिन्नत्वमर्थः; वह्नित्वस्य तादृशाधेयतानवच्छेदकतया न तादृशाभावमादायाप्रसिद्धिरिति वाच्यम् । तथा सति गगनत्वेन प्रमेयसामान्याभावस्यातादृशतया तमादायाप्रसिद्धिवारणाय धर्मे साध्यतावच्छेदकव्यापकत्वविशेषणप्रयोजनकथनासङ्गतेः । न च साध्यवद्वृत्त्यभावे सामानाधिकरण्य-**

संबन्धावच्छिन्नप्रतियोगिताकत्वं परित्यज्य साध्यतावच्छेदकसंबन्धावच्छिन्नप्रतियोगिताकत्वनिवेशकल्पे वह्न्यादिसाध्यकेऽप्रसिद्ध्यभाव इति वाच्यम्। एकत्वप्रागभावविशिष्टवह्नेः संयोगेन योऽभावः तमादायाप्रसिद्धेः तत्कल्पेऽपि दुर्वारत्वात् ।

अत्रेदं समाधानम्——स्वरूपसंबन्धेन वह्न्यभावैकत्वप्रागभावविशिष्टवह्न्यभावादीनादाय वह्निसाध्यकेऽप्रसिद्धिसंभवेऽपि समानाधिकरणधर्मे साध्यतावच्छेदकव्यापकत्वविशेषणेऽपि तादृशाप्रसिद्धेर्वारणासंभवात् तद्विशेषणप्रयोजनतया नैषा अप्रसिद्धिरुद्भावयितुं शक्यत इति प्रमेयसाध्यकस्थलानुधावनमिति । न च एकत्वप्रागभावस्याव्याप्यवृत्तितया न प्रतियोगिवैयधिकरण्याघटितसाध्यतावच्छेदकव्यापकत्वमिति तादृशाभावस्य न साध्यवद्वृत्तीत्यादि विशेषणाक्रान्तत्वमिति वाच्यम् । साध्यवद्वृत्तितादृशाभावश्चोभयत्वादिना साध्याभाव एव प्रसिद्ध इत्युक्तेः प्रतियोगिवैयधिकरण्यघटितसाध्यतावच्छेदकव्यापकत्वस्यैव ग्रन्थकृदभिप्रेतत्वात् । या पुरुषव्यक्तिरेतद्दण्डविशिष्टास्मिन्नेव अधिकरणेऽपरदण्डविशिष्टान्यस्मिन्नेवाधिकरणे वर्तते तादृशदण्डविशिष्टव्यक्तौ साध्यतायां स्वाश्रयदण्डतद्व्यक्तित्वोभयावच्छिन्ननिरूपकताकाधिकरणत्वसंबन्धेन प्रमेयत्वस्य हेतुतायामेतद्दण्डविशिष्टतद्व्यक्त्यभावतद्दण्डविशिष्टतद्व्यक्त्यभावयोः भिन्नभिन्नव्यक्त्यन्तर्भावेन साधनसमानाधिरकरणयोः उक्तविशेषणाक्रान्तत्वेन च तद्घटितकूटाधिकरणे हेतुतावच्छेदकसंबन्धेन वृत्त्यप्रसिद्ध्या अव्याप्तिवारणाय प्रतियोगिवैयधिकरण्यघटितसाध्यतावच्छेदकव्यापकत्वस्य समानाधिकरणधर्मेऽवश्यं निवेशनीयत्वाच्च ।

## गादाधरी

न च वाच्यत्वादिसाध्यकस्थले [1]घटत्वाद्यवच्छिन्नवाच्यत्वाद्यभावस्य [2]संयोगादिव्यधिकरणसंबन्धावच्छिन्नवाच्यत्वत्वा-

[1] घटत्वावच्छिन्नवाच्यत्वाभावस्य——क. [2] संयोगादिरूप——क.

वच्छिन्नवाच्यत्वाद्यभावाभिन्नतया[1] साध्यतावच्छेदकव्यापकसमानाधिकरणधर्मावच्छिन्नप्रतियोगिताकत्वमक्षतमिति तत्संग्रहाय समानाधिकरणसंबन्धावच्छिन्नत्वस्यापि[2] समानाधिकरणधर्मावच्छिन्नाभावप्रतियोगित्वविशेषणताया आवश्यकत्वात् प्रमेयसाध्यकस्थलीयोक्ताभावस्य [3]व्यधिकरणसंबन्धावच्छिन्नगगनाद्यभावाभिन्नत्वेऽपि प्रतियोगितावच्छेदकधर्मे साध्यतावच्छेदकव्यापकत्वविशेषणमन्तरेणैव विशिष्टभिन्नत्वमव्याहतमेवेति[4] वाच्यम् । एवमपि गगनत्वादिना प्रमेयसामान्याभावस्य समानाधिकरणधर्मतादृश[5]संबन्धावच्छिन्नप्रतियोगिताकतयोक्ताभावस्य[6] तदभिन्नत्वेन तत्र विशिष्टभेदनिर्वाहाय [7]तादृशविशेषणस्यावश्यकत्वात् । समानाधिकरणसंबन्धावच्छिन्नत्वविशेषणं परित्यज्य साध्यतावच्छेदकसंबन्धावच्छिन्नत्वं प्रतियोगितायां निवेश्य तत्कार्यस्य साध्यतावच्छेदकव्यापकत्वरूपप्रतियोगितावच्छेदकविशेषणसार्थकत्वस्य चोपपादानसंभवाच्च । साध्यवद्वृत्तिस्तादृशाभावश्चोभयत्वादिना साध्याभाव एव[8] प्रसिद्ध इति न काचिदनुपपत्तिरिति[9] ।

1 वाच्यत्वाभावाभिन्नतया––क.

2 अपिशब्दो नास्ति––क.

3 गगनस्य केनापि संबन्धेनावृत्तेरिति भावः––रा.

4 अक्षतमेवेति––अ. अव्याहतमिति––क.

5 समानाधिकरण––रा.

6 प्रमेयाभावस्य––रा.

7 साध्यतावच्छेदकव्यापकत्वविशेषणस्य––रा.

8 एवकारो नास्ति––अ. न्यायरत्ने एवकारघटितपाठानुसारेण प्रतीकधारणम्––स्व.

9 इतिशब्दो नास्ति––अ. काप्यनुपपत्तिः––क.

## कृष्णंभट्टीयम्

वाच्यत्वादीति। न च वह्न्यादिसाध्यकेऽपि घटत्वावच्छिन्नवह्न्याद्यभावस्य व्यधिकरणसंबन्धावच्छिन्नाभावाभिन्नतया साध्यतावच्छेदकव्यापकसमानाधिकरणधर्मावच्छिन्नाभावभिन्नत्वासंभवाद् अव्याप्तिसंभवे केवलान्वयिपर्यन्तानुधावनं निर्बीजमिति वाच्यम्। साधनसमानाधिकरणत्वेन साध्याभावाविशेषणत्वकल्पे व्यतिरेकिणि साध्यसामान्याभावस्यापि लक्षणघटकतया, तादृशाभावस्य व्यधिकरणसंबन्धावच्छिन्नाभावानात्मकतया, अव्याप्त्यभावात्। तथा च तन्निवेशे तदनिवेशे च केवलान्वयिनि व्यधिकरणधर्मावच्छिन्नाभावस्यैव लक्षणघटकतया एतदनुसृतमिति।

ननु गगनत्वेन प्रमेयसामान्याभावप्रतियोगितायाः गगन एव स्वीकारात् तादृशाभावासङ्ग्रह एव, तादृशप्रतियोगितासमानाधिकरणसंबन्धाभावात्। किञ्च समानाधिकरणधर्मसंबन्धावच्छिन्नाभावनिवेशे साध्यतावच्छेदकसमनियतप्रतियोगितायां साध्यतावच्छेदकसंबन्धावच्छिन्नत्वस्य न व्यावृत्तिसंभवः। तथा हि——समवायेन वह्नौ साध्ये, संयोगेन धूमहेतौ, संयोगसंबन्धावच्छिन्नसाध्याभावो न समानाधिकरणधर्मसंबन्धावच्छिन्नाभावभिन्नः। किन्तु समवायावच्छिन्नवह्न्यभाव एव तादृश इति, तद्वति पर्वतादौ धूमस्य वृत्तेरतिव्याप्त्यसत्त्वात्। अतः समानाधिकरणसंबन्धावच्छिन्नत्वं परित्यज्य साध्यतावच्छेदकसंबन्धावच्छिन्नत्वं निवेशयति——समानेति।

नन्वत्र समानाधिकरणधर्मावच्छिन्नाभावत्वमपेक्ष्य लाघवाद् गगनाभावभिन्नत्वमेव निवेश्यताम्। अन्यथा विशिष्टसत्ताभावादीनां यत्किंचित्समानाधिकरणधर्मावच्छिन्नाभावभिन्नत्वेन वारणानुपपत्तेः। समानाधिकरणधर्मावच्छिन्नप्रतियोगिताकत्वस्योक्तरीत्या ऐक्यासंभवेन एकत्र साध्यवद्वृत्तित्वं निवेश्य, भेदकूटनिवेशे महागौरवात्। एवं च साध्यतावच्छेदकव्यापकत्वं व्यर्थमेवेति। मैवं——विशिष्टसाध्यवद्वृत्तितावच्छेदकीभूतधर्मावच्छिन्नाभावत्वेनानुगतरूपेण अवच्छिन्नभेदनिवेशात् प्रथमावच्छेदकत्वं

प्रतियोगितासंबन्धेन; द्वितीयं तु प्रतियोगितावच्छेदकताघटकसंबन्धेन। न च साध्यसमानाधिकरणो घटाभावादिः तत्प्रतियोगितावच्छेदकीभूतघटत्वावच्छिन्नप्रतियोगिताको घटत्वादिना व्यधिकरणधर्मेणावच्छिन्नप्रतियोगिताकोऽपीति वाच्यम्। यादृशप्रतियोगितासंबन्धेनावच्छेदकत्वं तादृशप्रतियोगिताकाभावत्वस्य वाच्यत्वात्। स्वावच्छेदकावच्छिन्नत्वस्वावच्छेदकसंबन्धतादात्म्ययोभयसंबन्धेन तादृशप्रतियोगितावच्छेदकताविशिष्टप्रतियोगितानिवेशात् न यादृशतादृशनिबन्धनोऽननुगमः। स्वावच्छेदकावच्छिन्नत्वं च, स्वावच्छेदकताविशिष्टावच्छेदकताकत्वम्। वैशिष्टयं च, स्वसामानाधिकरण्यस्वावच्छेदकसंबन्धावच्छिन्नत्वोभयसंबन्धेन। प्रयोजनं तूह्यम्। एवं च व्यधिकरणधर्मावच्छिन्नाभावादावप्रसिद्धया व्यधिकरणधर्मविशिष्टप्रतियोगिनः प्रतियोगितासंबन्धेन वर्तमानत्वासंभवेन तादृशधर्मस्य न तदवच्छेदकतावच्छेदकत्वमिति स्फोरणायैव धर्मे सामानाधिकरण्योपादानम्। यद्वा स्वावच्छिन्नत्वस्वसामानाधिकरण्योभयसंबन्धेन यत्किंचिद्धर्मविशिष्टसाध्यवद्वृत्तितावच्छेदकप्रतियोगिताकाभावत्वमनुगतमिति। उपपादनेति। स्वासमानाधिकरणधर्मावच्छिन्नप्रतियोगित्वानिरूपकत्वरूपसमानाधिकरणधर्मावच्छिन्नत्वनिवेशे तु संबन्धावच्छिन्नत्वसाध्यतावच्छेदकव्यापकत्वयोर्व्यावृत्तिः चिन्त्यैव। स्वव्यधिकरणधर्मावच्छिन्ना या या प्रतियोगिता तदन्यप्रतियोगिताकत्वोक्तौ, वह्निजलोभयत्वेन प्रमेयाभावप्रतियोगिताया व्यधिकरणधर्मावच्छिन्नाया अन्या तदुभयनिष्ठतदुभयत्वावच्छिन्नप्रतियोगितैव, तदनिरूपकाभावाप्रसिद्धिः। आधेयतानवच्छेदकव्यासज्यवृत्तिधर्मानवच्छिन्नत्वस्य प्रतियोगिताविशेषणत्वे महागौरवमिति स्मर्तव्यम्। उभयत्वादिनेति। प्रमेयसाध्यके च घटत्वप्रकारकप्रमाविशेष्यत्वतदन्यप्रमेयोभयाभावप्रसिद्धिः[1]। न चैवं वह्निघटोभयाभाववद् वह्निगगनोभयाभावस्य साध्यवद्वृत्तिसाध्यतावच्छेदकव्यापकसमानाधिकरणधर्मावच्छिन्नप्रतियोगिताकतया व्यधिकरणधर्मावच्छिन्ना-

[1] उभयाभावः प्रसिद्धः—अ.

भावस्य तदन्यत्वाभावाद् असंभव इति वाच्यम् । समानाधिकरणधर्मे वृत्तितानवच्छेदकव्यासज्यवृत्तिधर्मभिन्नत्वस्य निवेश्यत्वात् । न च तादृशाभावस्य गगनत्वमेव प्रतियोगितावच्छेदकमस्त्विति वाच्यम् । गगनत्वमपेक्ष्य द्वित्वस्य लघुत्वात् । गगननिष्ठतद्व्यक्तित्वस्य कथंचित् लघुत्वेऽपि न्यूनवृत्तित्वेनानवच्छेदकत्वाच्च ।

अत्र वदन्ति––उक्तोभयाभाववारणाय लाघवात् प्रतियोगितायां वृत्तिमद्वृत्तित्वं समानाधिकरणधर्मे प्रतियोगितायामेव वा अधिकरणतावच्छेदकत्वमेवोचितम् । अतश्च गगनत्वस्य अधिकरणतानवच्छेदकतया गगनाद्यभावस्यापि वारितत्वात् साध्यतावच्छेदकव्यापकत्वं व्यर्थम् । तच्च कालिकसंबन्धावच्छिन्नाधेयतावच्छेदकवह्निजलोभयत्वाद्यवच्छिन्नाभाववारणाय प्रतियोगितावच्छेदकसंबन्धावच्छिन्नसंबन्धितावच्छेदकत्वम्; अतश्च स्वरूपसंबन्धावच्छिन्नाधेयतावच्छेदकीभूतवाच्यत्वत्वावच्छिन्नसमवायसंबन्धावच्छिन्नाभावस्यापि वारणात् संबन्धावच्छिन्नत्वमपि व्यर्थमेवेति । यद्वा समानाधिकरणधर्मावच्छिन्नाभावत्वं स्वाधिकरणावृत्तित्वस्वावच्छेद्यत्वोभयसंबन्धेन किञ्चिद्धर्मविशिष्टप्रतियोगित्वशून्यत्वं साध्यवद्वृत्त्यभावीयव्यधिकरणधर्मावच्छिन्नप्रतियोगितान्यत्वं वा उपादेयम्। एवं च गगनाभावमादाय दोषात् साध्यतावच्छेदकव्यापकत्वादिकं व्यर्थमेव। प्रयोजनाभावेनय त्किंचित्प्रतियोग्यवृत्तीत्यादिक्रमेणानिवेशात् न वह्निजलोभयत्वेन प्रमेयाभावमादाय दोष इति ।

अत्रेदं समाधीयते––यदि दीधितिकारैरुक्तं साध्यतावच्छेदकव्यापकत्वमुपादेयं, तदा उक्त एव प्रकारः साधीयान् । अन्यथा तु किंचेत्यस्यावतारिकायां वक्ष्यमाणः । न तु साध्यवद्वृत्त्यभावीयव्यधिकरणधर्मानवच्छिन्नप्रतियोगितान्यत्वमपि; गौरवात् । तथा च प्रकारद्वयेऽपि न वृत्तिमद्वृत्तित्वाधिकरणतावच्छेदकत्वादेः विवक्षावसरः । एतेन समानाधिकरणधर्मावच्छिन्नप्रतियोगितायामवृत्त्यवृत्तित्वनिवेशात् व्यापकत्वान्तवैयर्थ्यमि-

त्यपि अनाशङ्क्यमेव। अत एव साधनसमानाधिकरणत्वेन साध्याभाव-विशेषणत्वपक्षे, भूतत्वमूर्तत्वान्यतराभावसाध्यकातिव्याप्तिदानसङ्गतिः। अन्यथा तादृशवृत्तित्वत्वव्याप्यत्ववैयर्थ्यात् तदसङ्गतेः। अस्माकं तु पूर्वं सार्वभौमोक्तविशेषणसद्भावमभिप्रेत्यैव तत्सङ्गतिरिति।

## न्यायरत्नम्

**प्रतियोगितायां समानाधिकरणसंबन्धावच्छिन्नत्वनिवेशे साध्याभावीयप्रतियोगितायां साध्यतावच्छेदकसंबन्धावच्छिन्नत्वं व्यर्थमित्यतः तत्परित्यज्य साध्यतावच्छेदकसंबन्धावच्छिन्नत्वं निवेशयति--समानेति। उभयत्वादिना साध्याभाव [1]एवेति। यद्यपि साध्यवद्वृत्तीत्यादिविशेषणाक्रान्तो यः वह्निगगनत्वोभयत्वावच्छिन्नाभावः तद्भिन्नसाध्याभावाप्रसिद्ध्या असंभवो दुर्वार एव। तथापि समानाधिकरणधर्मे साध्यवद्वृत्तितानवच्छेदकव्यासज्यवृत्तिधर्मभिन्नत्वनिवेशान्नासंभवः।**

**अत्रेदं चिन्त्यम्--समानाधिकरणधर्मे साध्यतावच्छेदकव्यापकत्वोपादानेऽपि ज्ञेयत्वान्यप्रमेयवान् वाच्यत्वादित्यादौ साध्यवद्वृत्तिः तथाविधो यो ज्ञेयत्वान्यप्रमेयत्वेन ज्ञेयत्वगगनान्यतराभावः तस्य केवलान्वयितया तदन्यसाध्याभावाप्रसिद्ध्या अव्याप्तिवारणाय साध्यवद्वृत्त्यभावे स्वन्यनवृत्तिधर्मानवच्छिन्नप्रतियोगिताकत्वविशेषणस्यावश्यकतया तेनैव गगनत्वेन प्रमेयसामान्याभाववारणे समानाधिकरणधर्मे साध्यतावच्छेदकव्यापकत्वविशेषणं व्यर्थम्। न्यूनवृत्तिधर्मानवच्छिन्नप्रतियोगिताकत्वमनिवेश्य अवच्छिन्नत्वव्यापकत्वोभयसंबन्धेन धर्मविशिष्टप्रतियोगिताकत्वविशेषणेन तादृशान्यतराभावव्यावर्तनं तु न सम्यक्। तादृशाभावप्रतियोगितायां ज्ञेयत्वान्यप्रमेयत्वस्येव प्रतियोगिविशेषणान्यतरत्वस्यापि अवच्छेदकतया ग्रन्थकृदभिप्रेततया तस्य तथात्वाक्षतेः। न चोक्तोभयसंबन्धेन साध्यतावच्छेद-**

[1] एवकाराघटितपाठोऽपि गादाधर्यां तिष्ठति--स्व.

कव्यापकधर्मविशिष्टत्वमेव विवक्षणीयमिति शङ्क्यम् । तथापि ज्ञेयत्वान्यप्रमेयत्वेन ज्ञेयत्वज्ञेयत्वान्यप्रमेयोभयाभावस्य उक्तोभयसंबन्धेन तादृशोभयत्वरूपधर्मविशिष्टतया तदव्यावर्तनेन तदन्यसाध्याभावाप्रसिद्धेर्दुर्वारत्वात् तद्व्यावर्तनाय यथोक्तविशेषणस्यैवावश्यकत्वात् ।

यत्तु––साध्यवद्वृत्तिसमानाधिकरणधर्मावच्छिन्नप्रतियोगिताकस्य घटवृत्तित्वविशिष्टाकाशाभावाभावस्य घटवृत्तित्वविशिष्टाकाशाभावात्मनः शुद्धाकाशाभावानतिरिक्ततया तदन्यसाध्याभावाप्रसिद्धिः न्यूनवृत्तिधर्मानवच्छिन्नप्रतियोगिताकत्वविवक्षणेऽपि दुर्वारैव वाच्यत्वादिसाध्यके इति समानाधिकरणधर्मे साध्यतावच्छेदकव्यापकत्वविशेषणमावश्यकमिति–– तत्तु जातिप्रतियोगिकाभाववान् मेयत्वादित्यादौ ग्रन्थकृदुक्तायाः साध्याभावप्रतियोगितायां साध्यतावच्छेदकव्यापकत्वविशेषणव्यावृत्तेः विशिष्टातिरिक्तत्वाभिप्रायेणैव अधस्तादुपवर्णनेन साध्यवद्वृत्तीत्यादिपरिष्कारोपसंहारे पृथिव्यन्यद्रव्यत्ववद् द्रव्यत्वादित्यादावतिव्याप्तेर्वारणस्य विशिष्टातिरिक्ततापक्षमवलम्ब्यचैव गृन्थकृता प्रदर्शितत्वाच्चानुपादेयम् ।

यदपि साध्यतावच्छेदकसंबन्धावच्छिन्नप्रतियोगिताकत्वनिवेशकल्पे स्वरूपसंबन्धेन प्रमेयसाध्यके यथोक्तविशेषणाक्रान्तस्वरूपसंबन्धावच्छिन्नप्रतियोगिताको यो गगनाभावः तदन्यसाध्याभावाप्रसिद्धिवारणाय समानाधिकरणधर्मे साध्यतावच्छेदकव्यापकत्वविशेषणमावश्यकमिति––तदपि मन्दम् । तद्विशेषणदानेऽपि वह्निसाध्यके एकत्वप्रागभावविशिष्टवह्नेः संयोगेन योऽभावः तस्यापि यथोक्तविशेषणाक्रान्ततया तदन्यसाधनसमानाधिकरणसाध्याभावाप्रसिद्धिवारणाय समानाधिकरणधर्मे साध्यतावच्छेदकसंबन्धावच्छिन्नाधेयतावच्छेदकत्वविशेषणावश्यकतया तेनैव स्वरूपसंबन्धावच्छिन्नप्रतियोगिताकगगनाभाववारणे समानाधिकरणधर्मे साध्यतावच्छेदकव्यापकत्वविशेषणानावश्यकत्वाद् एकत्वप्रागभावविशिष्टवह्नित्वस्य अवश्यं विवक्षणीयप्रतियोगिवैयधिकरण्यघटितसाध्यतावच्छेदकव्यापकत्व-

मनुपदमेवोक्तमिति प्रतियोगितायां साध्यतावच्छेदकव्यापकत्वविशेषण-वैयर्थ्यं दुर्वारमेव । न च स्वन्यूनवृत्तित्वं स्वसमानाधिकरणभेदप्रतियोगिताव-च्छेदकत्वम् । तत्र भेदे प्रतियोग्यवृत्तित्वमवश्यं निवेशनीयम् । अन्यथा साध्य-वद्वृत्त्यभावप्रतियोगितावच्छेदकघटत्वादेः स्वसमानाधिकरणव्यधिकरण-धर्मावच्छिन्नप्रतियोगिताकं, व्यधिकरणधर्मावच्छिन्नावच्छेदकताकप्रतियो-गिताकं वा भेदमादाय तत्प्रतियोगितावच्छेदकतापत्त्या स्वन्यूनवृत्तिधर्मा-वच्छिन्नप्रतियोगिताया अप्रसिद्ध्यापत्तेः । तथा च साध्यगगनोभयाभाव-स्यापि तादृशतया तद्भिन्नसाध्याभावाप्रसिद्धिः सद्धेतावस्त्येवेति वाच्यम् । व्यासज्यवृत्तिधर्मसाधारणस्य पर्याप्त्यतिरिक्तसंबन्धावच्छिन्नतादृशभेदप्रति-योगितावच्छेदकत्वरूपन्यूनवृत्तित्वस्य निवेशेनोक्तदोषाभावात् । किंच सत्तासाध्यके द्रव्यगुणाद्यन्यत्वविशिष्टसत्ताभावानां यत्किंचित्समानाधि-करणधर्मावच्छिन्नप्रतियोगिताकाभावभिन्नत्वेन लक्षणघटकत्वं दुर्वारमेव । समानाधिकरणधर्मावच्छिन्नप्रतियोगिताकत्वस्यानुगतस्य एकस्याभावात् तादृशाभावभेदकूटमेव निवेशनीयम् । तदपेक्षया साध्यवद्वृत्त्यभावे गगना-भावभिन्नत्वमेव लाघवाद् देयम् । तेनैव प्रमेयत्वेन गगनाभाववारणाद् व्यर्थं प्रतियोगितायां साध्यतावच्छेदकव्यापकत्वमिति ।

## गादाधरी

(१२३) साधनसमानाधिकरणत्वविशेषणे स्थलान्तरयोरप्यव्याप्त्यतिव्या-प्त्योरभाव इति निरूपणम् ।

**एतेन नीलरूपघटत्वोभयाभाववान् नीलघटान्यत्वादित्यादौ साधनसमानाधिकरणं [1]पटीयनीलरूपं [2]घटत्वं च न घट इति ता-दृशनीलरूपघटत्वात्मकसाध्याभाव[3]घटितकूटाधिकरणाप्रसिद्ध्या**

1 नीलपटीयनीलरूपम्—अ. पटीयं नीलरूपम्—क.

2 घटत्वं च इति पाठो नास्ति—अ, क. 3 घटितेति पाठो नास्ति—क.

अव्याप्तिरित्यपि निरस्तम् । तादृशाभावे उक्तभेदासत्त्वेन व्यधिकरणधर्मावच्छिन्नाभावस्यैव लक्षणघटकत्वात् । एवं घटवृत्तित्वविशिष्टाकाशाभावादेरभावे[1] साध्ये मेयत्वादिहेतौ साध्याभावस्य विशिष्टाकाशाभावादेराकाशाभावानतिरिक्ततया जगत एव साध्याभावकूटाधिकरणतापत्त्या अतिव्याप्तिरिति साध्याभावत्वविशिष्टाधिकरणत्वमेव विवक्षणीयम् । तथा च पटे घटवृत्तित्वविशिष्टाकाशाभावाभावो नास्तीत्यादिप्रत्ययाभावात् पटादेर्न तादृशविशिष्टाभावाधिकरणत्वमिति न [2]दोषः । एवं च साधनाधिकरणेऽपि साध्याभावत्वेन वृत्तिर्विवक्षणीया । अन्यथा [3]जातिमदन्यत्वविशिष्टाकाशाभावस्याभावे साध्ये समवायेन हेतौ साधनसमानाधिकरणाकाशाभावस्य साध्याभावत्वविशिष्टस्याधिकरणे सामान्यादौ समवायेन वृत्तेरप्रसिद्धत्वादव्याप्त्यापत्तेः । [4]तादृशविवक्षयापि उक्तोभयाभावसाध्यकस्थलेऽव्याप्तिवारणं संभवति; प्रत्येकाधिकरणे उभयाभावाभावत्वेनावृत्तेः ।

[5]वस्तुतो घटवृत्तित्वविशिष्टाकाशाभावाद्यभावो घटत्वाद्यभावसमनियततया तदभिन्न इति घटत्वादिरपि तदभावः । [6]इत्थं च तद्घटितकूटाधिकरणता न जगत इति दर्शितातिव्याप्त्यनवकाशात्

[1] आकाशाभावाभावे—क.

[2] तादृशसाध्याभावाधिकरणे घटे हेतोर्वृत्तेर्नातिव्याप्तिः—रा.

[3] सदन्यत्वविशिष्ट—अ.

[4] तथा च तादृशविवक्षयापि—अ.

[5] वस्तुतो स्थाने यदि च इति पाठः—अ.

[6] इत्थं चेति नास्ति—क.

**साध्याभावत्वविशिष्टाधिकरणत्वविवक्षणमफलम्[1] । साध्याभावत्वेन साधनवद्वृत्तित्वं तु साध्याभावत्वविशिष्टाधिकरणत्वाविवक्षणेऽपि घटान्यत्वविशिष्टद्रव्यत्वाभाववान् घटत्वादित्यत्र साध्याभावस्य द्रव्यत्वस्य द्रव्यत्वत्वादिना साधनसमानाधिकरणतया द्रव्यस्यैव तद्घटितकूटाधिकरणत्वेनाव्याप्तेर्वारणाय निवेश्यमेव । न चैवमपि [2]पृथिव्यन्यत्वविशिष्टद्रव्यत्ववद् द्रव्यत्वादित्यादौ साध्यतावच्छेदकविशिष्टवद्वृत्त्योः प्रत्येकं साधनसमानाधिकरणयोः घटान्यत्वविशिष्टद्रव्यत्वाभावघटेतर[3]पृथिव्यन्यत्वविशिष्टद्रव्यत्वाभावयोरधिकरणं गुणाद्येवेत्यतिव्याप्तिर्दुवारैवेति वाच्यम् । विशिष्टस्यातिरिक्ततापक्षमवलम्ब्यैव[1] तादृशातिप्रसङ्गस्य समाधातुं शक्यत्वादिति ।**

कृष्णंभट्टीयम्

अत्राहुरित्याद्युक्तविशेषणाननुसरणेऽपि नीलरूपघटत्वोभयाभावसाध्यकोक्तहेतौ साध्याभावत्वविशिष्टाधिकरणतानिवेशादपि अव्याप्तिवारणं भवतीत्याह––एवमिति । साध्याभावस्येति ।

अथ अत्राहुरित्याद्युक्तविशेषणस्यैव असत्त्वात् तादृशाभावस्य कथं लक्षणघटकता । न चैवं व्यधिकरणधर्मावच्छिन्नाभावमात्रस्यैव तथात्वेन तत्रातिव्याप्तिरिति वाच्यम् । व्यधिकरणधर्मावच्छिन्नाभावस्यापि गगनाभावतया तद्भिन्नत्वाभावेन तादृशाभावाप्रसिद्धेरनतिप्रसङ्गादिति चेन्न । एतत्साध्यकसद्धेतौ तुल्यरीत्या अव्याप्तिरिति साध्यवद्वृत्तिसमानाधि-

1 अफलमित्युच्यते तदापि––अ.

2 पृथिव्यन्यद्रव्यत्ववत्––क.

3 पटान्यत्वविशिष्टेति पाठः––अ,

4 अतिरिक्ततामवलम्ब्यैव––क.

करणधर्मावच्छिन्नाभावस्थाने साध्यतावच्छेदकावच्छिन्नवद्वृत्तितावच्छेदकानुयोगितानिरूपकसमानाधिकरणधर्मावच्छिन्नप्रतियोगिताभिन्नप्रतियोगिताकत्वस्यैव, तादृशावच्छेदकीभूतसमानाधिकरणधर्मावच्छिन्नप्रतियोगितानिरूपितानुयोगिताभिन्नसाध्यनिरूपितानुयोगिताशालित्वस्यैव वा विवक्षितत्वात् तदतिव्याप्तिसङ्गतेः ।

अथैवं समानाधिकरणधर्मे साध्यतावच्छेदकव्यापकत्वविशेषणवैयर्थ्यम्; प्रमेयसाध्यके तद्भिन्नानुयोगितायाः प्रसिद्धेः । समानाधिकरणसंबन्धावच्छिन्नत्वस्य साध्यतावच्छेदकसंबन्धावच्छिन्नत्वस्य च वैयर्थ्यमिति चेन्न । प्रतियोगितायां [1]साध्यतावच्छेदकव्यापकत्वनिरासप्रकारे अत्राहुरित्यादिविशेषणस्य साध्यतावच्छेदकव्यापकसमानाधिकरणधर्मसंवन्धावच्छिन्नाभावत्वेन साध्यवद्वृत्तिः यः समानाधिकरणधर्मावच्छिन्नाभावः तद्भिन्नत्वेन साध्याभावविशेषणत्वे तात्पर्यं वाच्यम् । एवं चोक्तस्थलेऽतिव्याप्तिवारणायैव साध्याभावत्वावच्छिन्नाधिकरणत्वं प्रवेश्यमेव । यद्यपि प्रकृतसाध्यसामानाधिकरण्यावच्छेदकं यत् तादृशधर्मसंबन्धावच्छिन्ननिरूपितानुयोगित्वं तद्वदन्यत्वप्रवेशे वाच्यत्वघटोभयाभावस्य तथाविधतया तद्वदन्यकेवलान्वय्यभावाप्रसिद्धिः । समानाधिकरणधर्मे साध्यतावच्छेदकसंबन्धावच्छिन्नाधेयतावच्छेदकत्वनिवेशे च साध्यतावच्छेदकव्यापकत्वादिवैयर्थ्यम् अतः तत्रैव आधेयतानवच्छेदकव्यासज्यवृत्तिधर्मभिन्नत्वं विरुद्धोभयावृत्तित्वं वा निवेश्यम् । तथा च एतद्रूपवान् एतद्रसादित्यादौ कपालत्वरूपसामान्योभयाभावस्य द्रव्यत्वप्रकारकप्रमाविशेष्यत्वद्रव्यत्वान्यतरत्वेन समवायेन साध्यतायां कथंचित् अन्यतरात्मकसाध्यघटत्वोभयाभावस्य संभवेऽपि तादात्म्येन तद्व्यक्तिसाध्यके साध्यतावच्छेदकसंबन्धावच्छिन्नाभावनिवशकल्पे आधेयतानवच्छेदकेत्यादेर्विरुद्धोभयेत्यादेः[2] प्रयोजनाभावेनानिवेशात् ।

[1] साध्यतावच्छेदकव्यापकत्ववैयर्थ्यनिरासप्रकारे—अ.

[2] आदेश्च—अ.

तादृशस्य तद्व्यक्तितदन्यव्यक्त्युभयभेदस्य केवलान्वयिनः संभवेऽपि साध्याभावे न तदन्यत्वम् । समानाधिकरणसंबन्धावच्छिन्नाभावप्रवेशपक्षे तु प्रतियोगिप्रविष्टाभावाप्रसिद्धिः; उक्ताभावप्रतियोगितावच्छेदकस्य आधेयतावच्छेदकव्यासज्यवृत्तिधर्मत्वाद् विरुद्धोभयवृत्तित्वाच्च। समवायसंबन्धावच्छिन्नतद्व्यक्तितदन्यव्यक्त्युभयाभाववारणाय तादृशधर्मविशेषणस्यावश्यकत्वात् । तथापि धर्मविशेषणसाध्यतावच्छेदकव्यापकत्वस्य साध्यतावच्छेदकसामानाधिकरण्यसाध्यतावच्छेदकवह्निनिष्ठभेदप्रतियोगितावच्छेदकत्वोभयाभावरूपतया अन्यव्यक्तिभेदमादायैव तत्प्रसिद्धिः । एवं च घटाभावस्य संभवेऽपि उभयत्वादिना साध्याभाव एव प्रसिद्ध इति ग्रन्थो यथाश्रुताभिप्रायकः। एवं स्थिते साध्यतावच्छेदकविशिष्टसाध्यवद्वृत्तित्वयथाश्रुतसाध्यतावच्छेदकव्याकपसमानाधिकरणधर्मसंबन्धावच्छिन्नाभावत्वोभयाभावनिवेशस्तु प्रकृते तादृशोभयाभावप्रसिद्धिनिरपेक्षोऽपि [1]निराकार्यः । तथा सति घटवृत्तित्वविशिष्टाकाशाभावाभावसाध्यकसद्धेतौ गगनाभावरूपसाध्याभावे उभयसत्त्वेन तच्छून्याभावाप्रसिद्धेः। न च साध्यतावच्छेदकव्यापकसमानाधिकरणधर्मावच्छिन्नाभावत्वेन साध्यवद्वृत्तित्वसमानाधिकरणधर्मावच्छिन्नाभावत्वोभयाभावनिवेशात् नाप्रसिद्धिः। अत एव तत्साध्यकव्यभिचारिणि अतिप्रसङ्गभङ्गाय साध्याभावत्वावच्छिन्नाधिकरणत्वपर्यन्तप्रवेशसङ्गतिरिति वाच्यम् । तथा सति तादात्म्येन तद्व्यक्तिसाध्यके दर्शितोभयभेदस्य निरुक्तोभयवत्त्वेन साधनसमानाधिकरणसाध्याभावस्य तदात्मकत्वेन तदुभयाभाववत्त्वासंभवात् लक्षणघटकाभावाप्रसिद्धेर्दुर्वारत्वाद् आधेयतानवच्छेदकेत्यादिधर्मविशेषणस्यावश्यकतया ततोऽपि अप्रसिद्धेः साध्यतावच्छेदकव्यापकत्वस्य निरुक्तोभयाभावरूपस्य धर्मविशेषणत्वपक्षेऽपि[2] न कोऽपि दोष इति विभावनीयम् ।

अत्रेदं बोध्यम्——दर्शितोभयभेदात्मकत्वं साध्याभावस्य न युज्यते; तथा सति तस्याव्याप्यवृत्तित्वापत्तेः । नापि साध्यतावच्छेदकव्यापकत्व-

[1] न कार्यः——अ. [2] पक्षे च——अ.

स्यान्यादृशोऽर्थः; तथा सति गगनत्वेन प्रमेयसामान्याभावादेर्वारणानुपपत्तेः। तस्मात् साध्यवद्वृत्तित्वसाध्यतावच्छेदकव्यापकसमानाधिकरणधर्मसंबन्धावच्छिन्नाभावत्वोभयाभाव एव निवेश्यः। दर्शितगगनाभाववारणाय धर्मः साध्यतावच्छेदकानवच्छिन्नप्रकारतावच्छेदकत्वेन विशेषणीयः। दर्शितद्रव्यक्तिसाध्यके च, घटभेदादावेव तादृशाभावत्वान्तप्रसिद्धिः। स्वनिष्ठाधेयतासामान्ये साध्यवन्निरूपितत्वसाध्यतावच्छेदकव्यापकसमानाधिकरणधर्मसंबन्धावच्छिन्नाभावत्वाच्छिन्नत्वोभयाभावनिवेशोऽपि संभवति। सत्तादिसाध्यके घटान्यत्वादिविशिष्टसत्ताभावनिष्ठसामान्यवृत्तितायाः तदुभयाभाववत्त्वात् [1]तत्सङ्ग्रहाय सामान्यपदम्। एवं च घटत्वपटत्वाभ्यां प्रमेयाभावगगनाभावयोरैक्येऽपि अवच्छेदकभेदेन आधेयताभेदाद् दोषवारणाय साध्यतावच्छेदकव्यापकत्वमावश्यकम्। साध्यवद्वृत्तितावच्छेदकत्वतादृशधर्मसंबन्धावच्छिन्नप्रतियोगिताकत्वोभयाभाववदनुयोगितावत्त्वनिवेशे तु उक्ताभावयोर्विभिन्नानुयोगितयोरेकस्यां [2]तदुभयाभावसत्त्वेनानिर्वाहात् आध्यतावच्छेदकव्यापकत्वं व्यर्थम्। अनुयोगितासामान्यं तु [3]निष्प्रयोजनकत्वात् न निवेश्यत इति।

घटवृत्तित्वविशिष्टगगनाभावाभाववान् घटान्यत्वादित्यादौ गगनाभावस्योक्तरीत्या अत्राहुरित्याद्युक्तविशेषणाक्रान्तत्वेऽपि अव्याप्त्यभावादाह––घटान्यत्वेति।

**न्यायरत्नम्**

**घटवृत्तित्वविशिष्टेति। यद्यपि घटवृत्तित्वविशिष्टाकाशाभावाभावे साध्ये साध्यवद्वृत्तीत्यादिविशेषणाक्रान्तगगनाभावभिन्नाभावाप्रसिद्ध्यैव नातिव्याप्तिः। तथापि तुल्ययुक्त्या तत्साध्यके सद्धेतौ तादृशाभावाप्रसिद्ध्या**

[1] तत्सङ्ग्रहवारणाय––अ.

[2] तदुभयाभावसत्त्वेन निर्वाहात्––अ.

[3] निष्प्रयोजनत्वात्––अ.

**अव्याप्तिवारणाय समानाधिकरणधर्मावच्छिन्नाभावत्वेन साध्यवद्वृत्तिः विवक्षणीया । तथा च इयमतिव्याप्तिरिति ध्येयम् ।**

दीधितिः

तथापि भूतत्वमूर्तत्वाद्योरन्यतरत्वेनाभावे साध्ये स्पर्शवदन्यत्वादावतिव्याप्तिः; तादृशसाध्याभावसमुदायवति पृथिव्यादौ तस्यावृत्तेः ।

**गादाधरी**

(१२४) **साधनसमानाधिकरणत्वविशेषणेऽपि स्थलविशेषेऽतिव्याप्त्या लक्षणस्य दुष्टतोपपादनम् ।**

**भूतत्वमूर्तत्वाद्योरिति । उभयत्वावच्छिन्नाभावस्य साध्यत्वे हेतोर्व्यभिचारित्वाभावाद् अन्यतरत्वावच्छिन्नाभावस्य साध्यतानुसरणम्[1] । [पृथिव्यादाविति । आकाशे भूतत्वस्य मनसि च मूर्तत्वस्य साधनसमानाधिकरणतया आकाशस्य मनसः प्रत्येकं तदुभयानधिकरणत्वेन साध्याभावसमुदायानधिकरणत्वादिति भावः ।] [आदिशब्दाद् भूतभेदमूर्तभेदान्यतराभाववान् भूतमूर्तान्यतरत्वादित्यादौ भूतभेदमूर्तभेदात्मकसाध्याभावघटितसमुदायवति कालदिगादौ हेतोरवृत्त्या अतिव्याप्तेः परिग्रहः ।]**

कृष्णंभट्टीयम्

भूतत्वेति । नन्वेवं पृथिवीवृत्तिगुणशून्यं वायुत्वादित्यादौ पृथिवीपदस्य एतत्पृथिवीपरत्वोपवर्णनाद् घटैतद्वायुद्वित्वघटतद्वायुद्वित्वादीनां प्रत्येकं

[1] अनन्तरम् [ ] एतच्चिह्नमध्यस्थपाठः । तदनन्तरम् [ ] एतच्चिह्नमध्यस्थपाठः—अ. साध्यत्वानुसरणम्—क.

साधनसमानाधिकरणतया तद्घटितकूटवद्वृत्तित्वाभावमादायाव्याप्तेः संभवात् तत्परित्यागे किं बीजमिति चेन्न। हेत्वधिकरणस्य ध्वंसाद्यवरुद्धतया प्राचां मते उक्ताभावानां तत्र अनवच्छिन्नवृत्तिकत्वेऽपि नव्यमते तस्यसद्धेतुत्वेन सत्तान्यपृथिवीसमवेतशून्यत्वसाध्यके [1]तेषामनवच्छिन्नवृत्तिकत्वाभावेन लक्षणाघटकत्वमिति।

## गादाधरी

(१२५) **पूर्वोक्तसकलदोषवारकपरिष्कारप्रदर्शनपूर्वकं किंचेत्यादिदीधित्यवतारणम्।**

**[2]ननु साधनाधिकरणे येषां परस्परमैकाधिकरण्यं तत्समुदायस्य विवक्षितत्वान्नायं दोषः। भूतत्वमूर्तत्वाद्योः प्रत्येकं साधनसमानाधिकरणत्वेऽपि साधनवति परस्परमैकाधिकरण्याभावेन तदुभयघटितकूटस्य लक्षणाघटकत्वात्; तदेकतरघटितकूटस्यैव तथात्वात्; तद्वति च हेतोर्वृत्तेः, प्रतियोगितायां साध्यतावच्छेदकव्याप्यत्वविशेषणं त्याज्यमेव। एवं च विशिष्टस्यानतिरिक्तत्वेऽपि पृथिव्यन्यद्रव्यत्ववद् द्रव्यत्वादित्यादौ नोक्तरीत्या अतिव्याप्तिसं[3]भवः। [4]उक्तविशिष्टाभावानां साधनवति द्रव्यादावैकाधिकरण्याभावात्।**

[1] एतेषाम्——अ.

[2] ननुस्थाने अथवा इति पाठः——अ. अथवा साधनाधिकरणेत्यारभ्य दोषान्तरमाह किंचेतीत्यन्तग्रन्थः [ ] एतच्चिह्नान्तर्गतपाठानन्तरं दृश्यते——अ. कृष्णंभट्टीये मूलदर्शितपाठानुसारेणैव अर्थवर्णनम्——स्व.

[3] संभवति——क.

[4] घटान्यत्वविशिष्टद्रव्यत्वाभावपटान्यत्वविशिष्टद्रव्यत्वाभावादीनाम्——रा.

एवं तादृशकूटाधिकरणपृथिव्यादिवृत्तित्वस्य द्रव्यवृत्तित्वत्वादिना योऽभावः तस्यापि तादृशवृत्तित्वत्वव्यापकप्रतियोगिताकयावदभावान्तर्गततया तद्वत्त्वविरहादपि उक्तहेतौ[1] नातिव्याप्तिसंभवः। न च द्रव्यवृत्तित्वत्वावच्छिन्नाभावप्रतियोगिताया आकाशादिवृत्तित्वसाधारणतया तादृशवृत्तित्वत्वाव्याप्यत्वान्न तादृशाभावो लक्षणघटक इति वाच्यम्। साधनसामानाधिकरण्यस्य साध्याभावविशेषणतापक्षे[2] प्रतियोगितायां तादृशवृत्तित्वत्वव्याप्यत्वविशेषणव्यावृत्त्यभावेन तादृशविशेषणस्य परित्याज्यत्वात्। वह्निमान् धूमादित्यत्र [3]आलोकाद्यवृत्तित्वरूपेण निर्वह्निवृत्तित्वाभावस्य प्रतियोगिताया आलोकादिनिष्ठपर्वतादिवृत्तित्वसाधारणं साधनसमानाधिकरणसाध्याभावकूटाधिकरणवृत्तित्वत्वं प्रत्यव्यापकतयैव तादृशाभावव्यावर्तनात्। [[4]साधनाधिकरणे साध्याभावत्वेन वृत्तेर्विवक्षितत्वादेव भूतत्वमूर्तत्वयोरुभयत्वेनाभावे साध्ये स्पर्शवदन्यत्वादौ द्रव्यवृत्तित्वाभावमादाय न दोषः।] व्यासज्यवृत्तिधर्मानवच्छिन्नत्वेन प्रतियोगिताविशेषणात् पर्वतसंयुक्तत्वपर्वतान्यसंयुक्तत्वोभयत्वाद्यवच्छिन्नाभावस्य पर्वतासंयुक्तघटादौ वर्तमानस्य [5]धूमादावसत्त्वेऽपि न क्षतिः। प्रतियोगितायां तादृशवृत्तित्वत्वव्याप्यत्वविशेषणेऽपि तादृशाभावमादायाव्याप्तेरावश्यकतया [6]एतद्विशेषणस्य तद्विशेषेणसत्त्वेऽपि आवश्यकत्वात्।

1 स्पर्शवदन्यत्वे––रा. 2 विशेषणत्वपक्षे––क.

3 आलोकाद्यवृत्तित्वेन रूपेण––क.

4 [ ] एतदन्तर्गतपाठो नास्ति––क.

5 पर्वतमहानसोभयसंयुक्ते––रा.

6 एतस्य विशेषणस्य––क.

**चरमाभावप्रतियोगितायां तादृशवृत्तित्वत्वव्याप्यत्वविशेषणत्यागे[1] यत्किञ्चित्साधनाधिकरणवृत्तिसाध्याभावसमुदायाविवक्षणेऽपि[2] प्रथमाभावप्रतियोगितायां साध्यतावच्छेदकव्याप्यत्वविशेषणं परित्याज्यमेव। पृथिवी द्रव्यत्वप्रकारकप्रमाविषयत्वादित्यादौ जलाद्यसमवेतत्वावच्छिन्नाभावकूटवत्त्वस्य साधनवत्यसत्त्वेऽपि तादृशाभावकूटवत्सामान्यादिवृत्तित्वत्वव्यापकप्रतियोगिताकयावदभावान्तर्गतानां पृथिव्यन्यवृत्तित्वत्वावच्छिन्नाभावानामेव वृत्तिमद्वृत्तीनां हेतावसत्त्वेनातिव्याप्त्यनवकाशात्।**

कृष्णंभट्टीयम्

परस्परमिति। यद्यप्येवं सति वह्निमान् पर्वतवह्न्यवयवसंयोगादित्यादौ न साध्यतावच्छेदकसंबन्धावच्छिन्नत्वनिवेशव्यावृत्तिसंभवः। संबन्धद्वयावच्छिन्नवह्न्यभावस्तोमस्य साधनाधिकरणेऽसत्त्वात्। तथापि साध्यतावच्छेदकेतरसंबन्धावच्छिन्नसाध्यसामान्याभावघटितस्तोममादायासंभववारणायैव तन्निवेशो बोध्यः। त्याज्यमेवेति। पृथिवी द्रव्यत्वप्रकारकप्रमाविषयत्वादित्यादौ दोषासत्त्वादिति भावः। अत्र भूतत्वमूर्तत्वान्यतराभावसाध्यके अतिव्याप्तिदानं तादृशवृत्तित्वत्व[3]व्याप्यत्ववैयर्थ्यानालोचननिवन्धनमिति साध्याभावस्तोमे साधनसामानाधिकरण्यनिवेशनायासो नोपादेयः। साधनाधिकरणे साध्याभावत्वेन वृत्तिनिवेशादेव भूतत्वमूर्तत्वोभयवान् स्पर्शवदन्यत्वादित्यादौ द्रव्यवृत्तित्वाभावव्युदाससंभवाद् इत्याशयेनाह—एवमिति। एतत्कल्पे च वह्निमान् पर्वतवह्न्यवयवसंयोगादित्यादावपि साध्यतावच्छेदकसंबन्धावच्छिन्नत्वव्यावृत्तिर्बोध्या।

1 परित्यागे——क.

2 समुदायस्याविवक्षणेऽपि——क.

3 वृत्तित्व——अ.

वस्तुतस्तु--घटान्यवृत्तित्वाभावो द्रव्यवृत्तित्वाभावश्च नेह लक्षणघटकः। वह्निमान् धूमादित्यादौ भेदत्वेन आलोकभेदजगद्वृत्तित्वान्यतराभावमादायाव्याप्तिवारणाय साध्याभाववद्वृत्तित्वत्व[1]व्याप्यत्वेन प्रतियोगितायाः विशेषणीयत्वात्। न [2]च पर्वतवृत्तित्वपर्वतान्यवृत्तित्वोभयाभाववारणाय न्यूनवृत्तिधर्मानवच्छिन्नत्वस्य प्रतियोगिताविशेषणस्यावश्यकतया तेनैवोक्तविशेषणं[3] व्यर्थमिति वाच्यम्। सार्वभौममते उभयत्वस्य एकविशिष्टापरत्वरूपतया दर्शिताभाववारणात् न्यूनवृत्तिधर्मानवच्छिन्नत्वस्य तन्मते प्रतियोगितायामप्रवेशादित्याशयः। न च एतादृशतात्पर्यवर्णने सत्तावान् जातेरित्यादौ अव्याप्तिवारणाय साध्यवद्वृत्तिसमानाधिकरणेत्यादिविशेषणानुसरणे साध्यतावच्छेदकव्यापकप्रतियोगिताकाभावनिवेशापेक्षया साध्यव्यापकतावच्छेदकरूपावच्छिन्नप्रतियोगिताकत्वमेवोचितमिति पुच्छलक्षणग्रन्थविरोधः; तत्र विशिष्टाभावमादायैव दोषवारणाय तद्विशेषणदानादिति वाच्यम्। जातिमान् सत्त्वादित्यादौ द्रव्यमात्रसमवेतत्वेन द्रव्यमात्रवृत्तिजातिद्रव्यभिन्नजात्यन्यतराभावमादायैवाव्याप्तिसंभवात् तद्वारणायैव तद्विशेषणदाने तात्पर्यात्। यदि चैवमपि प्रसिद्धस्थले पर्वतवृत्तित्वत्वादिना जगद्वृत्तित्वसामान्याभावम्, तदनुपगमेऽपि वा, पर्वतवृत्तिभिन्नत्वेन पर्वतवृत्तित्वपर्वतान्यवृत्तित्वान्यतराभावमादाय दोषवारणाय न्यूनवृत्तिधर्मावच्छिन्नत्वनिवेश आवश्यक इत्युच्यते; तदा कूटाघटितरीत्या साध्याभावसमुदायाधिकरणवृत्तित्वत्वानिरूपितासमानाधिकरणधर्मनिरूपितेत्यादि विवक्षणीयम्। गुरुधर्मस्य प्रतियोगितानवच्छेदकत्वे कूटघटिततादृशवृत्तित्वत्वस्यानवच्छेदकत्वेऽपि तल्लक्षणवदिहापि प्रपञ्चनीयम्। एवं च द्रव्यवृत्तित्वाभावादीनां लक्षणाघटकत्वात् कथमेतत्प्रकारे भूतत्वमूर्तत्वान्यतराभावसाध्यकातिव्याप्तिशैथिल्यमिति।

[1] वृत्तित्व--अ.

[2] चकारानन्तरं तद्विशेषणसत्त्वेऽपि इत्यधिकपाठः--अ.

[3] विवक्षणम्--अ.

अत्रेदं बोध्यम्—कूटघटितमेव दीधितिकृतां न अवतारकत्वेनाभिमतम्, दूषणीयत्वात् । दूषणं परीक्षाकारोक्तस्यैव । तेषां च विशेषरूपेण सामान्याभावासत्त्वात् कूटघटिततादृशवृत्तित्वत्वातिरिक्तेत्यादिविवक्षा नास्त्येव । वैशिष्ट्याद् अन्यद् उभयत्वं च तेषामनुमतमिति व्यासज्यवृत्तिधर्मानवच्छिन्नत्वमात्रं स्वयं दर्शनीयमिति वृत्तित्वत्व[1]व्याप्यत्ववैयर्थ्यालोचनेनातिव्याप्तिशैथिल्यं समञ्जसमेवेति । प्रथमाभावेति । न चैवं मूर्तं वेगादित्यादौ मूर्तत्वगन्धवत्त्वोभयाभावमूर्तत्वपृथिव्यन्यत्वोभयाभावादीनां साधनसमानाधिकरणानां कूटाधिकरणममूर्तं जलान्यवृत्तित्वत्वादिना तद्वृत्तित्वाभावमादायाव्याप्तिरिति वाच्यम् । अत्राहुरित्याद्युक्तविशेषणेनैव तन्निरासात् ।

## न्यायरत्नम्

**साधनाधिकरणे येषां परस्परमैकाधिकरण्यमिति । यद्यप्येवंविवक्षायां वह्निमान् पर्वतवह्न्यवयवसंयोगादित्यत्र संबन्धद्वयावच्छिन्नप्रतियोगिताकसाध्याभावसमुदायस्य साधनाधिकरणेऽसत्त्वात् न तत्रातिव्याप्तिवारणप्रयोजनकत्वं प्रतियोगितायां साध्यतावच्छेदकसंबन्धावच्छिन्नत्वविशेषणस्य संभवति । तथापि साध्यतावच्छेदकसंबन्धातिरिक्तसंबन्धावच्छिन्नप्रतियोगिताकतादृशसाध्याभावसमुदायमादायासंभववारणप्रयोजनं तद्विशेषणस्य बोध्यम् ।**

## गादाधरी

**एवं सत्तावान् जातेरित्यादौ विशिष्टसत्तात्वावच्छिन्नाभावघटितकूटाधिकरणसमवेतत्वाप्रसिद्धिनिबन्धनाव्याप्तिवारणायोपात्तसाध्यवद्वृत्तिसाध्यतावच्छेदकव्यापकसमानाधिकरणधर्मा-**

[1] वृत्तित्व—अ.

वच्छिन्नाभावभिन्नत्व[1]रूपसाध्याभावविशेषणस्थले[2] साध्याभावप्रतियोगितायां साध्यवद्वृत्त्यभावीयसमानाधिकरणधर्मावच्छिन्नप्रतियोगिताभिन्नत्वं निवेश्य व्यधिकरणधर्मावच्छिन्नाभावीयगग[3]नादिनिष्ठप्रतियोगिताभिन्नव्यधिकरणधर्मावच्छिन्नप्रतियोगितामादायैव व्यधिकरणधर्मावच्छिन्नसाध्याभावसंग्रहे समानाधिकरणधर्मे साध्यतावच्छेदकव्यापकत्वस्यानिवेशनीयतया अभावसाध्यकस्थले साध्यतावच्छेदकन्यूनवृत्तिघटत्वाभावत्वाद्यवच्छिन्न[4]प्रतियोगितायां साध्यवद्वृत्त्यभावीयसमानाधिकरणधर्मावच्छिन्नप्रतियोगिताभिन्नत्वाभावेन घटत्वाद्यात्मकाभावव्यावर्तनात् साध्याभावप्रतियोगितायां साध्यतावच्छेदकव्यापकत्वविशेषणमपि परित्यजनीयम् । उक्तरीत्यापि [[5]पृथिव्यन्यद्रव्यत्ववद् द्रव्यत्वादित्यादौ घटान्यत्वविशिष्टद्रव्यत्वाद्यभावकूटस्य] हेतुमत्यसत्त्वेऽपि घटान्यवृत्तित्वत्वादिना गुणादिवृत्तित्वाद्यभावमादायातिव्याप्ति[6]र्वारणीयेत्यतो दोषान्तरमाह––किंचेति ।

1 भिन्नत्वकूटरूप––अ.

2 स्थाने––क.

3 गगनादिकिंचिद्विशिष्टतदभावनिष्ठ––अ, क.

4 प्रतियोगितासु––क.

5 [ ] एतदन्तर्गतपाठो नास्ति; तत्स्थाने पृथिव्यन्यद्रव्यत्वाद्यभावस्येति वर्तते––क.

6 साधनवति संभवदैकाधिकरण्यस्य विवक्षामन्तरेणैव पृथिव्यन्यद्रव्यत्ववद् द्रव्यत्वादित्यादौ घटान्यवृत्तित्वाद्यवच्छिन्नाभावमादायातिव्याप्तिवारणे पृथिवी द्रव्यत्वप्रकारकप्रमाविषयत्वादित्यादावपि तादृशाभावमादायातिव्याप्तिवारणसंभवात् । अयं पाठः वारणीयेत्यनन्तरम् इत्यतः इति ग्रन्थात् प्राक् क्वचिद् दृश्यते । इति काचित् टिप्पणी––अ.

कृष्णंभट्टीयम्

अत्र च पृथिवीभेदविशिष्टजातित्वावच्छिन्नाभावस्य साध्यतावच्छेदकव्यापकप्रतियोगिताकतया तद्घटितकूटवत्यां पृथिव्यां हेतुताघटकसमवायसंबन्धावच्छिन्नवृत्तित्वस्य द्रव्यवृत्तित्वत्वेन अभावमादायैव पृथिव्यन्यत्वविशिष्टद्रव्यत्ववद् द्रव्यत्वादित्यादौ अनतिप्रसङ्गात्, साधनाधिकरणे संभवदैकाधिकरण्यपर्यन्तं न विवक्षणीयम्; पृथिवीवृत्तित्वविशिष्टद्रव्यत्वाभावस्य अत्राहुरित्यादिविशेषणेनैव वारणादिति न समञ्जसम्। जलादिभेदविशिष्टजातित्वावच्छिन्नाभावादेरपि कूटान्तःपातितया द्रव्यसामान्यस्यैव निष्कूटत्वात्। अत्र घटान्यवृत्तित्वत्वेन सामान्यादिवृत्तित्वाभावस्यैवातिव्याप्तिनिरासकत्वात्। अत्राहुरित्यादिविशेषणपरित्यागेऽपि सत्तावान् जातेरित्यादौ अव्याप्तिवारणाय विशेषणान्तरमेव उपादेयम्। तथा सति प्रतियोगितायां साध्यतावच्छेदकव्यापकत्वस्यापि अनिवेशेन लाघवादित्याशयवानाह––एवमिति। साध्यवदिति। संयोगी सत्त्वादित्यादौ द्रव्यत्वाभावसंयोगवत्ताप्रकारकप्रमाविषयत्वाभावादिः सुलभः। घटवृत्तित्वविशिष्टाकाशाभावाभावसाध्यकव्यभिचारिणि साध्याभाव ऊह्यः। एवं च मूर्तं वेगादित्यादौ मूर्तत्वगन्धवत्त्वोभयाभावादेरपि निरासात् नाव्याप्तिशङ्का। उक्तरीत्यापि। रीतिः वृत्तित्वत्वव्याप्यत्वाविशेषितप्रतियोगिताकाभावोपादानम्। तथा च भूतत्वमूर्तत्वान्यतराभावसाध्यकस्थलीयातिव्याप्तिवारणप्रकारेणापीत्यर्थः। अत्र विशिष्टातिरिक्तत्वमतानवलम्बनेऽपि साधनाधिकरणे ऐकाधिकरण्यापन्नत्वानिवेशेऽपि च गुणस्यैव तादृशसाध्याभावकूटाधिकरणत्वेऽपि नातिव्याप्तिरित्यर्थलाभाय अपिकारः।

**न्यायरत्नम्**

**[1]त्याज्यमेवेति। पृथिवी द्रव्यत्वप्रकारकप्रमाविषयत्वादित्यादौ जलासमवेतत्वतेजोऽसमवेतत्वाद्यवच्छिन्नाभावघटितकूटस्य साधनाधिकरणे असत्त्वादतिव्याप्त्यभावादिति भावः।**

[1] परित्याज्यमेवेति गादाधर्यां पाठः––स्व.

## गादाधरी

(१२६) मतान्तरेण किंचेत्यादिदीधितिग्रन्थावतारणम् ।

[1]केचित्तु--[ननु स्ववृत्तिसाधनसमानाधिकरणसाध्याभावसमुदायाधिकरणं यद्यत्साधनाधिकरणं तद्वृत्तिसाध्याभावसमुदायाधिकरणं यद्यत्स्वं तदेव साध्याभावसमुदायाधिकरणेत्यनेन विवक्षितम् । सद्धेतौ तादृशं स्वं जगदेव, वह्न्यधिकरणमहानसादिनिष्ठानां निर्वह्निह्रदादिनिष्ठानां च धूमादिसमानाधिकरणसाध्याभावानां व्याधिकरणधर्मावच्छिन्नप्रतियोगिताकानां समुदायवद् यद्यत् साधनाधिकरणं तद्वृत्तितादृशसमुदायवत्त्वस्य महानसादौ साध्यवति, साध्यशून्ये च ह्रदादौ सत्त्वात् । [2]अतो लक्षणसमन्वयः । भूतत्वमूर्तत्वान्यतराभाववान् स्पर्शवदन्यत्वादित्यादौ तादृशं स्वं [3]गगनं मनश्च । गगनवृत्तिभूतत्वघटितसाध्याभावसमुदायाधिकरणत्वस्य गगनरूपसाधनाधिकरण एव मनोवृत्तिमूर्तत्वघटितसाध्याभावसमुदायाधिकरणत्वस्य मनस्येव सत्त्वेन निरुक्तसाधनाधिकरणवृत्तिसाध्याभावसमुदायाधिकरणत्वस्य तत्र तत्र सत्त्वात् । [4]स्ववृत्तिसाध्याभावे साधनसमानाधिकरणत्वविशेषणानुपादाने [5]वह्न्यादिशून्यह्रदादिनिष्ठसमानाधि-

1 केचित्तु इति नास्ति--अ.

2 अतः इति नास्ति--क.

3 मनो गगनं च--क.

4 स्वनिष्ठसाध्याभावे--क. कृष्णंभट्टीये स्ववृत्तिसाध्याभावे इति प्रतीकधारणम्--स्व.

5 वह्न्यादिरूपसाध्यशून्य--क.

करणधर्मावच्छिन्नसाध्याभावसमुदायाधिकरणत्वस्य[1] साधनाधिकरणेऽसत्त्वात् साध्यवदेव तादृशं स्वम्; तद्वृत्तित्वाभावस्य वृत्तिमद्वृत्तेर्हेतावसत्त्वादव्याप्तिः। अतः तत्र तद्विशेषणप्रवेशः।

प्रथमसमुदायपदादाने भूतत्वमूर्तत्वान्यतराभाववान् स्पर्शवदन्यत्वादित्यादौ गगनं मनश्च न तादृशं स्वम्। तद्वृत्तिव्यधिकरणधर्मावच्छिन्नाभावाधिकरणमनोगगननिष्ठभूतत्वमूर्तत्वघटित[2]साध्याभावसमुदायाधिकरणत्वस्य गगनमनसोः प्रत्येकमसत्त्वात्। किन्तु पृथिव्यादिचतुष्कमेव तथाविधं स्वम्। तद्वृत्तित्वाभावस्य हेतौ सत्त्वादतिव्याप्तिः, अतः तदुपादानम्[3]।

धूमवान् वह्नेरित्यादावपि पर्वतादेः स्ववृत्तिसाध्याभावकूटाधिकरणमहानसादिरूपसाधनाधिकरणवृत्तिसाध्याभावकूटाधिकरणतया[4] जगदेव तादृशं स्वं स्यात्, अतो यद्यदिति। तथा च पर्वतादिवृत्तिसाध्याभावाधिकरणं[5] यद्यत्साधनवदयोगोलकादेरपि तदन्तर्गततया तद्वृत्तिसमानाधिकरणधर्मावच्छिन्नाभावघटितसाध्याभावकूटस्य पर्वतादावसत्त्वात् तादृशं स्वं धूमादिशून्यमेवेति नातिव्याप्तिः।

1 व्यधिकरणधर्मावच्छिन्नसाध्याभावघटितसाध्याभावसमुदायाधिकरणत्वस्य—अ.

2 मूर्तत्वोभयघटित—क.

3 अतिव्याप्तिरिति तदुपादानम्—क.

4 कूटाधिकरणत्वात्—क.

5 साध्याभावकूटाधिकरणम्—क.

**यद्यत्साधनाधिकरणमित्यनुक्त्वा यद्यदधिकरणमित्येतावदुक्तौ भूतत्वमूर्तत्वान्यतराभाववान् स्पर्शवदन्यत्वादित्यादौ गगनादिवृत्तिसाध्याभावकूटाधिकरणं यद्यत् पृथिव्यादेरपि तदन्तर्गततया तद्वृत्तिमूर्तत्वादिघटितकूटस्य गगनादावसत्त्वात् तादृशं स्वं न गगनादिकं भवेत्; अपि तु पृथिव्यादिकमेवेत्यतिव्याप्तिः। अतः [1]साधनाधिकरणत्वनिवेशः। पृथिव्यादेस्तत्र साधनानधिकरणत्वान्न दोषः।**

**धूमवान् वह्नेरित्यादावयोगोलकादिनिष्ठव्यधिकरणधर्मावच्छिन्नसाध्याभावाधिकरणत्वस्य पर्वतादौ सत्त्वाद् जगदेव तादृशं स्वं स्यादिति[2] चरमसमुदायपदोपादानम्। पूर्ववत् तादृशं यद्यत्स्वं तावदन्यतमवृत्तित्वत्वव्यापक[3]प्रतियोगिताकाभावो विवक्षणीयः। अतो नातिव्याप्तिरसंभवो वा] [4]इत्यतो दोषान्तरमाह--किंचेतीत्याहुः।**

कृष्णंभट्टीयम्

स्ववृत्तीति। अत्र सांप्रदायिकाः--प्रथमसाध्याभावः साध्यतावच्छेदकसमनियतप्रतियोगिताको बोध्यः। अन्यथा मूर्तं वेगादित्यादौ अमूर्तनिष्ठसाध्यतावच्छेदकव्यापकप्रतियोगिताकमूर्तत्वगन्धवत्त्वोभयाभावमूर्तत्वपृथिव्यन्यत्वोभयाभावघटितकूटवत्त्वस्य हेत्वधिकरणे अभावात् तादृशं

[1] साधनाधिकरणनिवेशः--क.

[2] स्याद् इति पाठो नास्ति--क.

[3] अत्र कल्पे आलोकावृत्तित्वावच्छिन्नाभावस्य निरुक्तान्यतमवृत्तित्वत्वव्यापकप्रतियोगिताकत्वाभावात् तादृशवृत्तित्वत्वव्याप्यत्वं परित्यक्तमेवेति ध्येयम्--रा.

[4] इत्यतो दोषान्तरमाह किंचेतीत्याहुः इति पाठो नास्ति। प्रागुक्तरीत्या असंभवो वा इति ग्रन्थानन्तरम् अथवेति ग्रन्थारम्भः--अ.

स्वं मूर्तमेवेति, भूतत्वाभावमूर्तत्वाभावान्यतरवान् स्पर्शवदन्यत्वादित्यादौ साध्यतावच्छेदकव्याप्यप्रतियोगिताकभूतत्वमूर्तत्वादिरूपाभावघटितकूटवत्त्वस्य साधनाधिकरणेऽभावात् तादृशं स्वं पृथिव्यादिभिन्नमेवेति चाव्याप्तेः। एवं मूर्तं मनस्त्वादित्यादौ पृथिव्यादेः स्वनिष्ठसाधनसमानाधिकरणसाध्यतावच्छेदकसमनियतप्रतियोगिताकाभावकूटाधिकरणसाधनाधिकरणवृत्तिसाध्यतावच्छेदकव्यापकप्रतियोगिताकमूर्तत्वमनोऽन्यत्वोभयाभावघटितकूटानधिकरणत्वेन पृथिव्यादिभिन्नमेव तादृशं स्वमिति भूतत्वाभावमूर्तत्वाभावान्यतरवान् स्पर्शवदन्यत्वादित्यादौ आत्मादेः स्वनिष्ठसाधनसमानाधिकरणतादृशाभावकूटाधिकरणसाधनाधिकरणवृत्तिसाध्यतावच्छेदकव्याप्यप्रतियोगिताकभूतत्वमूर्तत्वोभयघटितकूटानधिकरणत्वेन मूर्तमेव तादृशं स्वमिति चाव्याप्तेर्वारणाय द्वितीयाभावोऽपि साध्यतावच्छेदकसमनियतप्रतियोगिताको निवेश्य इत्याहुः।

तच्चिन्त्यम्——द्रव्यं पृथिवीत्वादित्यादौ गुणादिनिष्ठघटान्यत्वविशिष्टद्रव्यत्वाभावपटान्यत्वविशिष्टद्रव्यत्वाभावघटितकूटवत्त्वस्य साधनाधिकरणेऽसत्त्वात् स्वं साध्यवदेव; तद्वृत्तित्वाभावस्य वृत्तिमद्वृत्तेः हेतावसत्त्वाद् अव्याप्तिः। एवं सत्तावान् जातेरित्यादौ स्वं घटादि, तन्निष्ठसाध्याभावघटितकूटाधिकरणसाधनाधिकरणकुड्यादिनिष्ठकुड्यान्यत्वविशिष्टसत्ताभावघटितकूटवत्त्वं न घटादेरित्यव्याप्तिरतो अभावद्वयप्रतियोगितायां साध्यवद्वृत्त्यभावीयसमानाधिकरणधर्मावच्छिन्नप्रतियोगितान्यत्वस्य आवश्यकतया उभयत्रापि साध्यतावच्छेदकसमनैयत्यवैयर्थ्यात्। अत्र सत्तावान् जातेरित्यादौ [1]सामान्यादिनिष्ठसत्ताभावघटान्यत्वविशिष्टसत्ताभावघटितकूटवत्त्वस्य साधनाधिकरणेऽसत्त्वेन स्वं साध्यवदेवेति न प्रथमाभावप्रतियोगितायां तद्विशेषणप्रयोजनम्। तदनुक्तावपि तद्वृत्तित्वाभावस्य व्यधिकरणधर्मावच्छिन्नस्यैव वृत्तिमद्वृत्तित्वेनाव्याप्त्यभावात्।

[1] सामान्यादिनिष्ठघटान्यत्वविशिष्टसत्ताभावपटान्यत्वविशिष्टसत्ताभावघटितकूटवत्त्वस्य——अ.

अत्र च भूतत्वमूर्तत्वोभयाभाववान् स्पर्शवदन्यत्वादित्यादौ स्वं न पृथिव्यादि, तन्निष्ठतादृशभूतत्वमूर्तत्वघटितसाध्याभावकूटवत्तायाः साधनाधिकरणे अभावात्; किन्तु मनो गगनं चेति अव्याप्तिरिति शङ्का निरस्ता। भूतत्वमूर्तत्वयोरुक्तसाध्याभावत्वाभावेन लक्षणाघटकत्वात्। न च प्राचीनमते तयोः साध्याभावत्वेऽपि साध्याभावत्वेन साधनसामानाधिकरण्यस्य वाच्यतया न दोष इति वाच्यम्। तथापि स्वं न कालः, तन्निष्ठसाधनसमानाधिकरणसाध्याभावाधिकरणीभूतगगनादिनिष्ठभूतत्वादिघटितसाध्याभावकूटवत्त्वाभावात्। किन्तु पृथिव्यादिपञ्चकं मनश्चेत्यव्याप्तेः। न च साध्याभावत्वेन चरमसाधनसामानाधिकरण्यं विवक्षणीयमिति वाच्यम्। तथा सति समुदायत्वान्तोपादानवैयर्थ्यापत्तेरिति, साधनाधिकरणे समुदायत्वोपादानफलं छलतो दर्शयति––भूतत्वेति। यद्यपि साधनसमानाधिकरणभूतत्वमूर्तत्वोभयघटितकूटवत्त्वस्य साधनाधिकरणेऽसत्त्वेनानतिप्रसङ्गात् स्ववृत्तित्वं व्यर्थं; वृथा च यद्यदिति वीप्सा। तथापि हेतुमति संभवदैकाधिकरण्यकसाध्याभावकूटाधिकरणनिवेशिनां स्तोमैक्यं प्रविष्टं, न [1]त्वेषां साधनसमानाधिकरणसाध्याभावेन साकं हेत्वधिकरणे संभवदैकाधिकरण्यकसाध्याभावकूटाधिकरणनिवेशिनां [2]च। तथा चैतन्मतेऽपि कूटाधिकरणप्रसिद्धावपि अतिव्याप्तिलाभार्थमेव तदुपादानम्। अत एव भट्टाचार्यैः कण्ठतः तत्प्रयोजनं[3] दर्शितम्, लक्षणान्तरत्वाच्च न दोषः।

अत्र च सत्तावान् जातेरित्यादौ [4]घटान्यत्वविशिष्टसत्ताभावपटान्यत्वविशिष्टसत्ताभावादीनां साधनसमानाधिकरणानां कूटाधिकरणसामान्यादौ हेतुतावच्छेदकसंवन्धेन वृत्त्यप्रसिद्धया अव्याप्तिरतः समुदायवत्त्वोपादानम्। तथा च तदुभयघटितकूटवत्त्वस्य साधनाधिकरणेऽसत्त्वान्न दोषः।

1 त्वेतेषाम्––अ.

2 च कारो नास्ति––अ.

3 तत्प्रयोजनं न दर्शितम्––अ.

4 घटान्यत्वविशिष्टसत्ताभावादीनामित्येव पाठः––अ.

तत्रैव चोक्ताभावद्वयघटितकूटवत्साधनाधिकरणाप्रसिद्धिरतः स्ववृत्तित्वनिवेश इति तु न समञ्जसम्। उक्ताभावद्वयस्योक्तरीत्या लक्षणाघटकत्वात्।

अत्र चरमे साध्यवद्वृत्तित्वं निरवच्छिन्नं प्रवेश्यम्। तेन संयोगी सत्त्वादित्यादौ संयोगसामान्याभावसङ्ग्रहः। चरमं साधनसामानाधिकरण्यं साधनाधिकरणेऽनवच्छिन्नवृत्तित्वम्। [1]तेन कपिसंयोगाभाववान् मेयत्वादित्यादौ संयोगरूपसाध्याभावस्यावच्छिन्नवृत्तितया तत्प्रतियोगितायाः साधनवद्वृत्तीत्यादिविशेषणाक्रान्ततया लक्षणघटकत्वात् तद्घटितकूटीयनिरवच्छिन्नाधिकरणत्वाप्रसिद्धिः; तस्य लक्षणाघटकत्वात्। एतादृशप्रथमसाधनसामानाधिकरण्यनिवेशेऽपि एतदव्याप्तेर्दुर्वारतैवेति तन्नोक्तम्। संयोगि सत्त्वादित्यादावतिव्याप्तिवारणाय द्वितीयकूटाधिकरणतायां निरवच्छिन्नत्वं देयम्; निरवच्छिन्नविशेषणतैव विरोधितानियामिकेति मतं वा अन्वेष्टव्यमिति तु अनादेयम्। सर्वत्रापि व्यभिचारिणि व्यभिचारनिरूपकाधिकरणान्यत्वाभावमादायानतिप्रसङ्गात्।

अत्र प्राचीनैः साध्यतावच्छेदकसंवन्धेन यदभावप्रतियोग्याधेयतायां हेत्वधिकरणीभूतयत्किंचिद्व्यक्तिनिरूपितत्वयदभावप्रतियोगितावच्छेदकावच्छिन्नत्वोभयाभावः तत्त्वरूपं प्रतियोगिवैयधिकरण्यं निवेशितम्। संयोगी सत्त्वादित्यादौ संयोगाभावस्य लक्षणघटकतासंपत्तये यत्किंचित्पदमित्युक्तम्। तेषां व्यधिकरणधर्मावच्छिन्नाभावासङ्ग्रहप्रसङ्गः। पूर्वक्षणवृत्तित्वविशिष्टस्वाभावनिष्ठाधेयतायाः निरुक्तोभयवत्त्वात्। यत्किंचिदाधेयतानिवेशे चोक्तस्थले संयोगरूपाभावसङ्ग्रहापत्तेः,[2] घटवृत्तित्वविशिष्टस्वाभावनिष्ठाधेयतायां घटानिरूपितत्वसत्त्वेनोभयाभावसत्त्वात्।

[1] तेन न इति पाठः—अ.

[2] सङ्ग्रहापत्तिः—अ.

[1]स्ववृत्तिसाध्याभावे इति । केचित्तु––स्ववृत्तिसाध्याभावे साधनसामानाधिकरण्यमस्तु[2] । किंतु स्वनिष्ठसाध्याभावकूटाधिकरणसाधनाधिकरणं यद्यत् तत्तद्वृत्तिसाध्याभावकूटवद् यद्यत्स्वमित्येतावतैव न भूतत्वमूर्तत्वान्यतराभावसाध्यकव्यभिचारिणि अतिव्याप्तिः । वह्निमान् धूमादिव्यादावव्याप्तिवारणार्थं साधनाधिकरणवृत्तिमद्वृत्तित्वं निवेशनीयम् । तथा सति वृत्तित्वान्तरानिवेशेन लाघवात् । प्रथमाभावः साध्यतावच्छेदकसमनियतप्रतियोगिताको बोध्यः । न च मूर्त वेगादित्यादौ मूर्तस्यैव, भूतत्वाभावमूर्तत्वाभावान्यतरवान् स्पर्शवदन्यत्वादित्यादौ पृथिव्यादिभिन्नस्यैव चोक्तरीत्या तादृशस्वत्वेऽपि तद्वृत्तित्वसामान्याभावस्य साधनाधिकरणवृत्तिमद्वृत्तित्वाभावाद् व्यधिकरणधर्मावच्छिन्नाभावमादायैवाव्याप्तिनिरासात् तद्विवक्षावैयर्थ्यमिति वाच्यम् । द्रव्यत्वप्रकारकप्रमाविषयः सत्त्वादित्यादौ स्वनिष्ठसाध्यतावच्छेदकव्यापकप्रतियोगिताकगुणावृत्तिद्रव्यत्वाभावोभयाभावकर्मवृत्तिद्रव्यत्वाभावोभयाभावघटितकूटस्याधिकरणं यत्साधनाधिकरणं तद्वृत्तिसाध्याभावकूटाधिकरणं द्रव्यमेव । एवं स्वनिष्ठगुणावृत्त्यभावघटितकूटाधिकरणं यत्साधनाधिकरणं तद्वृत्त्यभावकूटाधिकरणं गुण एव । एवं स्वनिष्ठकर्मावृत्त्यभावघटितकूटाधिकरणं यत्साधनाधिकरणं तद्वृत्त्यभावकूटाधिकरणं स्वं कर्मैव । तथा च तादृशं स्वं सत्तावन्मात्रमेव । एवं भूतत्वमूर्तत्वोभवयवान् भूतमूर्तान्यतरत्वादित्यादौ स्वनिष्ठसाध्यतावच्छेदकव्याप्यप्रतियोगिताकघटान्यत्वविशिष्टमूर्तत्वाभावघटितकूटस्याधिकरणं यत्साधनाधिकरणं तद्वृत्तेरभावकूटस्याधिकरणं स्वं घट एव । एवं स्वनिष्ठपटान्यत्वविशिष्टमूर्तत्वाभावघटितकूटस्याधिकरणं यत्साधनाधिकरणं तद्वृत्तेरभावकूटस्याधिकरणं पटाद्येव । तथा च तादृशं स्वं भूतमात्रं मूर्तमात्रं च; उभयत्रापि तद्वृत्तित्वत्वव्यापकप्रतियोगिताकस्य हेत्वधिकरणवृत्तिमद्वृत्तेः व्यधिकरणधर्मावच्छिन्नाभावस्यैव संभवाद् अतिव्यप्तिरतः तन्निवेशनस्यावश्यकत्वात् ।

[1] स्वनिष्ठसाध्याभावे इत्यपि क्वचित् पाठः––स्व.

[2] सामानाधिकरण्यं मास्तु––अ.

धूमवान् वह्नेरित्यादौ पर्वतादेः स्वनिष्ठसाध्याभावकूटाधिकरणमहानसादिरूपसाधनाधिकरणवृत्तिसाध्याभावकूटाधिकरणं जगदेवेत्यतिव्याप्तिरतः प्रथमं यद्यदिति । द्वितीयसाध्याभावश्च साध्यतावच्छेदकव्याप्यप्रतियोगिताको बोध्यः । न च मूर्तं मनस्त्वादित्यादौ दर्शितरीत्या मनोमात्रं स्वं; व्यधिकरणधर्मावच्छिन्नाभावस्यैव साधनाधिकरणवृत्तिमद्वृत्तेः तद्वद्वृत्तित्वाभावस्य सत्त्वात् । उक्तदोषवारणे एतद्विशेषणवैयर्थ्यमिति वाच्यम् । पृथिवी द्रव्यत्वप्रकारकप्रमाविषयत्वादित्यत्र स्वनिष्टतादृशाभावाधिकरणसाधनाधिकरणवृत्तिसाध्यतावच्छेदकव्यापकप्रतियोगिताकजलावृत्त्यभावतेजोऽवृत्त्यभावघटितकूटवत्त्वस्य साधनाधिकरणे अवृत्तेः तादृशकूटाधिकरणं स्वं सामान्याद्येव; तद्वृत्तित्वाभावस्य हेतौ सत्त्वाद् अतिव्याप्तिरतः तद्विशषणोपादानात् ।

साध्यतावच्छेदकव्यापकत्वं तु प्रतियोगितायां न देयम् । भूतत्वाभावमूर्तत्वाभावान्यतरवान् स्पर्शवदन्यत्वादित्यादौ उक्तरीत्या मूर्तादिकं यत्स्वं साधनाधिकरणवृत्तिमद्वृत्तेः व्यधिकरणधर्मावच्छिन्नतद्वृत्तित्वाभावस्यैव[1] संभवेन अव्याप्त्यनवकाशात् । न च अभाववान् मेयत्वादित्यादौ साध्यतावच्छेदकव्याप्यप्रतियोगिताकघटत्वपटत्वाद्यात्मकाभावकूटाधिकरणाप्रसिद्धिरिति तद्विशेषणमावश्यकमिति वाच्यम् । साध्यतावच्छेदकविशिष्टसाध्यसामानाधिकरण्यसाध्यवृत्तिधर्मावच्छिन्नप्रतियोगिताकत्वोभयाभाववत्त्वेन द्वितीयसाध्याभावस्य विशेषणीयत्वेन तदप्रसिद्धिपरिहारसंभवेन तद्विशेषणस्य [2]निष्प्रयोजनकत्वात् । दर्शितोभयाभावानिवेशे च द्रव्यं गुणादित्यादौ अव्याप्तिः । तथा हि—तत्र स्वनिष्ठतादृशसाध्याभावकूटाधिकरणसाधनाधिकरणवृत्तिसाध्याभावकूटवत्त्वं न कुत्रापि । घटनिष्ठतादृशसाध्याभावकूटाधिकरणसाधनाधिकरणपटनिष्ठपटान्यत्वविशिष्टद्रव्यत्वाभावघटित-

[1] अभावस्यैव च—अ.

[2] निष्प्रयोजनत्वात्—अ.

कूटस्य घटेऽवृत्तेः; पटनिष्ठतादृशसाध्याभावघटितकूटाधिकरणसाधनाधिकरणघटवृत्तिघटान्यत्वविशिष्टद्रव्यत्वाभावकूटवत्त्वस्य पटेऽवृत्तेरिति पटान्यत्वविशिष्टद्रव्यत्वाभावादीनां गुणादौ दर्शितोभयाभाववत्त्वेऽपि तद्विशिष्टस्य साधनाधिकरणवृत्तित्वानिवेशान्नाव्याप्तिः। पृथिव्यन्यद्रव्यत्ववत्, द्रव्यत्वादित्यादौ पृथिव्यन्यद्रव्यत्वाभावस्य दर्शितोभयाभाववत्त्वसंपत्तये तत्र साध्यतावच्छेदकविशिष्टेति। अन्यथा स्वनिष्ठतादृशसाध्याभावकूटाधिकरणसाधनाधिकरणघटादिनिष्ठदर्शितोभयाभाववद्व्यधिकरणधर्मावच्छिन्नयावदभाववत्ताया द्रव्यमात्रे सत्त्वेन साधनाधिकरणवृत्तिमद्वृत्तेः व्यधिकरणधर्मावच्छिन्नतद्वृत्तित्वाभावसत्त्वेनातिव्याप्तेरित्याहुः।

तदसमञ्जसमेव। प्रथमाभावे साध्यतावच्छेदकसमनियतप्रतियोगिताकत्ववैयर्थ्यात्। तदुपादानेऽपि पृथिव्यन्यत्वविशिष्टद्रव्यत्ववत्, द्रव्यत्वादित्यादौ स्वनिष्ठपृथिवीत्वविशिष्टद्रव्यत्वाभावघटितसाध्याभावकूटाधिकरणसाधनाधिकरणवृत्तिसाध्याभावकूटाधिकरणं स्वं पृथिव्यन्यद्रव्यमेव। स्वनिष्ठपृथिव्यन्यत्वविशिष्टद्रव्यत्वाभावघटितसाध्याभावकूटाधिकरणसाधनाधिकरणवृत्तिसाध्याभावकूटाधिकरणं स्वं पृथिव्यपीति सर्वमेव द्रव्यं स्वम्। एवं च द्रव्यवृत्तिः तादृशकूटाधिकरणद्रव्यवृत्तित्वाभावो व्यधिकरणधर्मावच्छिन्नभाव एवेति अतिव्याप्तिस्तद्वरणाय साध्याभावे साध्यतावच्छेदकविशिष्टसामानाधिकरण्यसाध्यवृत्तिधर्मावच्छिन्नप्रतियोगिताकत्वोभयाभावरूपं विशेषणमावश्यकम्। पृथिव्यन्यत्वविशिष्टद्रव्यत्वाभावसङ्ग्रहाय साध्यतावच्छेदकविशिष्टेति। तथा च प्रतियोगिताकत्वान्तं व्यर्थमेव।

यत्तु––साध्यसामानाधिकरण्ये स्वविशिष्टहेत्वधिकरणसामान्यावच्छेद्यत्वं प्रवेश्य उभयाभावपरिष्कारेण द्रव्यत्वप्रकारकप्रमाविषयत्वसाध्यके द्रव्यत्वाभावगुणावृत्त्युभयाभावादेः भूतत्वमूर्तत्वोभयसाध्यके घटान्यत्वविशिष्टमूर्तत्वाभावादेश्च लक्षणघटकत्वं संपाद्य तत्सार्थक्यसंपादनं

तदपेशलम् । तस्यानतिप्रयोजनकत्वात् । एवं च पृथिवी द्रव्यत्वप्रकारकप्रमाविषयत्वादित्यादौ स्वं जलं तद्वृत्तिजलावृत्त्यभावघटितकूटवत्साधनाधिकरणं जलमेवेत्यनतिप्रसङ्गाद् द्वितीयाभावेऽपि साध्यतावच्छेदकव्याप्यप्रतियोगिताकत्वं व्यर्थमेव ।

वस्तुतस्तु सामानाधिकरण्याव्याप्यवृत्तित्वे [[1]पृथिव्यन्यत्वविशिष्टद्रव्यत्ववद् द्रव्यत्वादित्यादौ तादृशहेत्वधिकरणावच्छिन्नत्वपर्यन्तनिवेशेऽपि] पृथिवीत्वविशिष्टद्रव्यत्वाभावो न वार्यते, तस्य गुणाद्यवच्छेदेन साध्यसमानाधिकरणत्वात् । अतः उभयाभावविशिष्टसाध्याभावाधिकरणताकूटं विवक्षणीयम् । एवं [2]उभयाभावविशिष्टसाध्याभावत्वेन साधनसामानाधिकरण्यप्रवेशो दर्शितः । तदपेक्षया साध्यवृत्तीत्यादिप्रकारेण साध्याभावद्वयप्रवेशे लाघवमिति । एवमत्रापि वृत्तित्वत्वव्याप्यत्वस्य वैयर्थ्ये न साध्याभावकूटाधिकरणं यद्यद् इत्यन्तस्य साधनाधिकरणनिरूपितत्वस्य च वैयर्थ्यं बोध्यम् ।

ननु तादृशं यत्स्वमित्युक्तौ अतिव्याप्तिः । यद्यत्स्वमित्युक्तौ च पर्वतवृत्तित्वाद्यभावासत्त्वाद् असंभव इत्यत आह––पूर्ववदिति । तावदन्यतमत्वमप्रसिद्धं तावद्विशेष्यकधीविशेष्यत्वं च सर्वमित्याकारकधीविशेष्यत्वस्य केवलान्वयितया अतिव्याप्तिग्रस्तम् । तावन्मात्रधीविशेष्यत्वे च मात्रार्थाप्रसिद्धिः अतः पूर्ववदिति । तथा च तावदवृत्तिशून्यत्वमेव तावदन्यतमत्वमिति । महानसवृत्तित्वाद्यभावादिवारणाय व्यापकत्वोपादानम् । न च प्रमेयं घटादित्यादौ घटत्वादौ वृत्तिमद्वृत्तितावदन्यतमसमवेतत्वसमवायित्वोभयाभावमादायाव्याप्तिरतस्तादृशवृत्तित्वत्वव्याप्यत्वमावश्यकमिति वाच्यम् । तथापि प्रमेयं सत्त्वादित्यादौ तादृशवृत्तित्वत्वसमनियतप्रतियोगिताकं घटसमवेतत्वघटान्यसमवेतत्वोभयाभावादिकमादायाव्याप्तिवारणाय व्यासज्यवृत्तिधर्मानवच्छिन्नत्वस्यावश्यकतया व्याप्यत्वान्तवैयर्थ्यात् ।

[1] [ ] एतदन्तर्गतपाठो नास्ति––अ. [2] उभयाभावे––अ.

यत्तु——समवेतवान् द्रव्यत्वप्रकारकप्रमाविषयत्वादित्यादौ असमवायिजात्यादिनिष्ठघटमात्रसमवेतघटेतरसमवेतोभयाभावघटसमवेतघटान्यमात्रसमवेतोभयाभावघटितकूटवत्त्वस्य हेत्वधिकरणेऽभावात् तादृशं स्वं साध्यवदेव; तद्वृत्तित्वाभावस्य जातित्वप्रकारकप्रमाविषयत्वादिवृत्तेः हेतावसत्त्वादव्याप्तिः। किं बहुना तद्वह्नितद्भिन्नवह्न्युभयाभावघटितकूटवत्त्वस्य वह्निद्वयवद्धेत्वधिकरणेऽसत्त्वात् तादृशं स्वं वह्निद्वयमेवेति वह्निमान् धूमादित्यादौ अव्याप्तिरिति लक्षणदूषणम्——तदयुक्तम्। उक्ताभावप्रतियोगितानां साध्यतावच्छेदकसमनैयत्येऽपि निरुक्तविशेषणानाक्रान्तत्वेन लक्षणाघटकत्वात्।

नन्वेवं प्रथमसमुदायपदादाने इत्यादिना यद्यत्साधनाधिकरणमित्यादिना च भूतत्वमूर्तत्वान्यतराभावसाध्यकेऽतिव्याप्तिप्रदर्शनमसङ्गतम्। प्रथमसमुदायस्य साधनाधिकरणस्य अनिवेशेऽपि द्रव्यवृत्तित्वाभावस्य तथाविधपृथिव्यादिचतुष्टयवृत्तित्वत्वव्यापकप्रतियोगिताकस्य हेतावसत्त्वेनैवातिव्याप्त्यसत्त्वादिति चेन्न। वृत्तित्वत्वसमव्याप्यत्वनिवेशाभिमानेन केचित्तुकारैः तदुभयनिवेशकरणात्। तादृशाभिमानखण्डनार्थं तदभिमतव्याप्यत्वान्तमुत्क्षिप्य निवेशं दर्शयता स्ववृत्तिसाधनसमानाधिकरणसाध्याभावकूटाधिकरणं यद्यदित्यन्तस्यैव प्रयोजनाभावो व्यञ्जितः। [1]अयमेवात्रास्वरसः।

## दीधितिः

किंच महाकालान्यत्वादिसाध्यके व्यभिचारिणि कालिकविशेषणताविशेषेण हेतावतिव्याप्तिः। तादृशसाध्याभावसमुदायवति॰महाकाले तेन संबन्धेन वृत्तिमन्मात्रस्यैव वृत्तेः।

[1] अयमेव च——अ.

## गादाधरी

(१२७) महाकालान्यो घटादित्यत्रातिव्याप्त्युपपादनम् ।

[1]महाकालेति । कालान्यत्वसाध्यके कालिकविशेषणताविशेषेण हेतौ साध्यसामानाधिकरण्यविशेषणेनातिव्याप्तिवारण-[2]संभवात् महाकालभेदसाध्यकानुसरणम् । यद्यपि महाकालत्वसाध्यकेऽतिव्याप्तिः[3] संभवति, वृत्तिमन्मात्र एव महाकालातिरिक्तकालवृत्तित्वस्यापि सत्त्वात्[4] । तथापि साध्यतावच्छेदकावच्छिन्नव्यापकतावच्छेदकरूपावच्छिन्नाभावघटितवक्ष्यमाणलक्षणे [5]तत्तत्कालमात्रवृत्तितत्तत्कालावृत्तित्वावच्छिन्नाभावकूटाधिकरणाप्रसिद्ध्या नातिव्याप्तिः । साधनाधिकरणे सम्भवदैकाधिकरण्यकसाध्याभावसमुदायाधिकरणत्वस्य प्रयोजनान्तरानुरोधेन निवेशे, तादृशाप्रसिद्धिविरहेऽपि साधनाधिकरणीभूतखण्डकालव्यक्तिविशेषावृत्तित्वावच्छिन्नाभावघटिततादृशकूटाधिकरणतत्कालवृत्तित्वाभावस्य[6] तत्कालावृत्तौ[7] वृत्तिमति वर्तमानस्य साधनेऽभावान्नातिव्याप्तिरित्यग्रिमस्य एतेनेत्यादेरसङ्गतिरिति एकमात्रविपक्षकानुसरणम् । आदिपदात् महाकालत्वाभावादिपरिग्रहः । अवृत्तिहेतौ साध्यसामानाधिकरण्यविशेषणेनातिव्याप्तिवारण-

1 महाकालेति प्रतीकधारणं नास्ति--अ.

2 अतिव्याप्तिवारणात्--अ.

3 महाकालत्वसाध्यकेऽपि अतिव्याप्तिः--क.

4 वृत्तित्वसत्त्वात्--क.

5 प्रत्येकं तत्तकालमात्रवृत्ति--अ.

6 तत्तत्कालवृत्तित्वाभावस्य--क.

7 तत्तत्कालावृत्तौ--क.

संभवाद् व्यभिचारिणीति। [1]वृत्तिमन्मात्रमत्र विवक्षितम्, तन्मात्र-स्यैव व्यावर्तकत्वात्। समवायादिना [2]द्रव्यत्वहेतुके तादृशसंबन्धेन महाकालवृत्तित्वत्वावच्छिन्नाभावस्य वृत्तिमति घटत्वादौ वृत्तेः हेताववृत्तेः [3]नातिव्याप्तिसंभव इति कालिकसंबन्धावच्छिन्नहेतु-ताकानुसरणम्[4]। इदमुपलक्षणम्––ईश्वरज्ञानान्यत्वादिसाध्यके विषयितासंबन्धेन हेतुमात्रे साध्याभावसमुदायवति ईश्वरज्ञानादौ तेन संबन्धेन वस्तुमात्रस्यैव वृत्तेरतिव्याप्तिः द्रष्टव्या।

एतेन वृत्तिमद्वृत्तित्वविशेषणस्थले [5]वृत्तिमदवृत्तित्व-वृत्ति-त्वत्वव्यापकप्रतियोगिताकत्वोभयाभावस्य वृत्तिमदवृत्तित्व-साध्य-वद्वृत्तित्वप्रतियोगिकत्वोभयाभावस्य वा निवेशे महाकालवृत्ति-त्वस्य समानाधिकरणधर्मावच्छिन्नाभावे चरमदलाभावेनोभया-भावसत्त्वेऽपि न निस्तारः। एवं यथाश्रुते घटत्वादिसाध्यके व्यभिचारिणि संयोगेन हेतौ [6]साध्याभाववति संयुक्तमात्रस्यैव संयुक्तत्वादेतद्रू[7]पत्वादिसाध्यके व्यभिचारिणि समवायेन हेतौ समवेतमात्रस्यैव एतद्रूपाद्यतिरिक्तसमवेतत्वादतिव्याप्तिरित्यपि द्रष्टव्यम्॥

1 वृत्तिमत्त्वमात्रमत्र विवक्षितम्––क.

2 द्रव्यत्वादिहेतुके––अ.

3 नातिव्याप्तिरिति––अ.

4 हेत्वनुसरणम्––क.

5 वृत्तिमदवृत्तित्वतादृशवृत्तित्वत्वव्यापकेत्यादि––क.

6 घट वाभाववति गगनादौ संयुक्तमात्रस्य संयोगेन संबद्धत्वात् संयुक्ते वर्त-मानाभावो व्यधिकरणधर्मावच्छिप्रतियोगिताक एवेत्यतिव्याप्तिरिति भावः––रा.

7 वृत्तित्वपदस्य यथाश्रुतार्थकत्वे त्वाह––एतदिति––रा.

## कृष्णंभट्टीयम्

प्रयोजनान्तरेति। तच्च पृथिव्यन्यद्रव्यत्ववत्, द्रव्यत्वादित्यादौ घटेतरपृथिव्यन्यत्वविशिष्टद्रव्यत्वाभावघटान्यत्वविशिष्टद्रव्यत्वाभावघटितकूटाधिकरणगुणाद्यवृत्तित्वस्य द्रव्यत्वे सत्त्वादतिव्याप्तेः, एवं भूतत्वमूर्तत्वान्यतराभावसाध्यकस्पर्शवदन्यत्वादौ भूतत्वमूर्तत्वोभयघटितकूटवति पृथिव्यादिचतुष्टये हेतोरवृत्तेः अतिव्याप्तेश्च वारणरूपम्। यदि च घटान्यवृत्तित्वत्वेन द्रव्यवृत्तित्वत्वेन वा गुणवृत्तित्वमनोवृत्तित्वाद्यभावमादायोभयत्रापि अतिव्याप्तिवारणसंभवात् परस्परमैकाधिकरण्यापन्नत्वं न विवक्षणीयमिति मन्यते, तदा [1]तत्कालमात्रवृत्तितत्कालावृत्तित्वाद्यवच्छिन्नाभावघटितकूटाप्रसिद्ध्या पुच्छलक्षणेऽतिव्याप्तिरसङ्गता स्यादिति प्रथमदूषणं दुर्वारमित्याशयः। अवृत्तिहेताविति। दीधितौ व्यभिचारिणीत्यनुक्त्वा महाकालान्यत्वसाध्यके कालिकविशेषणतया हेतौ अतिव्याप्तिरित्युच्यमाने तत्साध्यके विशेषणतासंबन्धेन गगनहेतोरपि कूटाधिकरणमहाकालवृतित्वस्य व्यधिकरणधर्मावच्छिन्नाभावस्यैव लक्षणघटकत्वेनातिव्याप्तिसंभवेऽपि साध्यसामानाधिकरण्यविशेषणेन तद्वारणसंभवाद् उद्देश्यतावच्छेदकावच्छेदेन विधेयान्वयानुपपत्तिरित्यालोच्य, वृत्तिमत्त्वार्थकं तत्पदमुपात्तम्। तथा च विशेषणतया वृत्तिमत्त्वावच्छेदेनेत्यर्थकतया न दोषः इत्यर्थः। ईश्वरज्ञानेति। न चेश्वरपदं व्यर्थम्; ज्ञानान्यत्वादेः साध्यत्वेऽपि अतिव्याप्तेः संभवात्, हेतोः साध्यसमानाधिकरणत्वाच्चेति वाच्यम्। तस्य पुच्छलक्षणातिव्याप्तिप्रकाशनार्थत्वात्। अन्यथा तत्तज्ज्ञानान्यत्वाभावादिघटितकूटवत्त्वाप्रसिद्धेः तदसंभवात्।

एतेनेति। ईश्वरज्ञानान्यत्वसाध्यकेऽतिव्याप्तिदानेनेत्यर्थः। उभयाभावमनिवेश्य हेतुतावच्छेदकसंबन्धावच्छिन्नशुद्धवृत्तित्वत्वव्यापकप्रतियो-

[1] तत्तत्कालमात्रवृत्ति--अ.

गिताकत्वाभाववन्तो यावन्तो वृत्तित्वाभावा इत्युक्तौ, सद्धेतौ व्यधिकरणधर्मावच्छिन्नाभावमात्रस्य हेतुतावच्छेदकसंबन्धावच्छिन्नवृत्तित्वत्वव्यापकप्रतियोगिताकतया असंभवः स्यादतो वृत्तिमद्वृत्तित्वनिवेशः। वृत्तिमदवृत्तित्वाभावनिवेशे च, महाकालान्यत्वसाध्यकेऽतिव्याप्तिरित्युभयाभावोपादानम्। एवं केवलान्वयिनि स्वरूपसंबन्धावच्छिन्नवृत्तित्वसामान्याभावस्य संयोगावच्छिन्नवृत्तित्वादिसाधारणवृत्तित्वत्वव्यापकप्रतियोगिताकत्वाभावाद् अव्याप्तिरतो हेतुतावच्छेदकसंबन्धावच्छिन्नत्वनिवेशनम्। महाकालवृत्तित्वाभावस्य वृत्तिमदवृत्तेः वृत्तित्वप्रतियोगिकत्वाद् अतिव्याप्त्युद्धारो न स्यादतो वृत्तित्वत्वव्यापकत्वोपादानम्। लाघवेन साध्यवद्वृत्तित्वप्रतियोगिकत्वनिवेशनम्। साध्यवद्वृत्तित्वप्रतियोगिताकाभावमात्रनिवेशने सद्धेतौ व्यधिकरणधर्मावच्छिन्नवृत्तित्वाभावमात्रस्य साध्यवद्वृत्तित्वप्रतियोगिकत्वादसंभव इत्युभयभावनिवेशः। महाकालनिरूपितवृत्तित्वाभावीयप्रतियोगितायां खण्डकालवृत्तित्वसाधारणवृत्तित्वत्वाव्यापकत्वप्रयुक्तोभयाभाववत्साध्यवत्खण्डकालवृत्तित्वप्रतियोगिताकत्वं नास्तीति द्वितीयोभयाभावस्य महाकालवृत्तित्वाभावेऽक्षततया द्वितीयमपि रमणीयमेवेति। न निस्तार इति। ईश्वरज्ञानान्यत्वसमानाधिकरणधर्मावच्छिन्नवृत्तित्वाभावस्याप्रसिद्धतया [1]व्यधिकरणधर्मावच्छिन्नवृत्तित्वाभावमादायातिव्याप्तेर्दुवारत्वादिति भावः। यथाश्रुते इति। उभयाभावानिवेशे इत्यर्थः। घटाधिकरणमात्रसंयुक्तपदार्थो नास्ति तस्य गगनेऽपि संयुक्तत्वादिति रीत्या अतिव्याप्तिदानं वृत्तित्वनिवेशे दुर्घटमिति द्वितीयानुधावनम्। घटादेश्च वृत्तिनियामकसंयोगेन समवायकालिकादिना संबन्धेन वा साध्यत्वं तेन गगनादेः साध्याभाववत्त्वनिर्वाहः।

अथात्र साधनसमानाधिकरणत्वेन साध्याभावो न विशेषणीयः। साध्याभावकूटवद्वृत्तित्वसामान्ये हेतुतावच्छेदकावच्छिन्नत्वहेतुतावच्छेदक-

[1] व्यधिकरणधर्मावच्छिन्नाभावमादाय––अ.

संबन्धावच्छिन्नत्वोभयाभावनिवेशेन सत्तावान् जातेरित्यादौ लक्षणसङ्गतेः। इदं वाच्यं ज्ञेयत्वादित्यादौ च तादृशोभयत्वेन घटाद्यभाव एव सुलभ इति चेन्न। एतल्लक्षणे तादृशोभयाभावे साध्याभावसाजात्यासत्त्वेन व्यभिचारिणि अतिप्रसङ्गापातात्। अथ तादृशोभयाभावकूटं निवेश्यम्। न च घटत्वादौ प्रसिद्धस्य तादृशोभयसामान्याभावस्यासत्त्वेन केवलान्वयिनि अव्याप्तिः। हेतुताघटकसंबन्धावच्छिन्नवृत्तित्ववृत्तितत्कूटनिवेशे धूमाधिकरणतावृत्तित्ववृत्तितया तद्दोषतादवस्थ्यमिति हेतुतावच्छेदकावच्छिन्नहेतुतावच्छदकसंबन्धावच्छिन्नहेतुवृत्तित्ववृत्तितत्कूटं निवेश्यम्। वाच्यम् अभावादित्यादौ अव्याप्तिवारणाय हेतुतावच्छेदकावच्छिन्नेति। हेतुतावच्छेदकसंबन्धावच्छिन्नत्वनिवेशात् न कालिकसंबन्धावच्छिन्नहेतुवृत्तित्वनिष्ठोभयाभावमादायोक्तदोष इति वाच्यम्। तथा सति व्यभिचारिण्यतिव्याप्तेः।

इति चतुर्दशलक्षण्यां कूटघटितलक्षणम्।

---

## पुच्छलक्षणम्

### दीधितिः

एतेन साध्यतावच्छेदकावच्छिन्नव्यापकतावच्छेदकरूपावच्छिन्नप्रतियोगिताकव्याप्यवृत्तिस्वसमानाधिकरणयावदभावाधिकरणवृत्तित्वाभावा यावन्तः वृत्तिमद्वृत्तयः तद्वत्त्वं व्याप्तिः। केवलान्वयिन : संयोगाद्यभावस्याभावाः संयोगादयः न व्याप्यवृत्तयः। एवं साध्यस्य गुणसामान्यस्याभावो द्रव्यत्वाधिकरणे उत्पत्तिकालावच्छेदेन वर्तमानोऽपि न व्याप्यवृत्तिः। उक्तरूपावच्छिन्नप्रतियोगिताकाः क्वचिदप्रसिध्यादिसंपादकाः पुनरभावाः न हेतुत्वाभिमतसमानाधिकरणाः।

उक्तसमुदायाधिकरणवृत्तित्वतदभाववृत्तिमद्वृत्तित्वानि पूर्वोक्तरीत्या प्रत्येतव्यानीत्यादिकमपास्तम्।

### गादाधरी

(१२८) **पुच्छलक्षणावतरणम्।**

**साध्यतावच्छेदकावच्छिन्नव्यापकतावच्छेदकरूपावच्छिन्नाभावकूटाधिकरणत्वस्य नानाविपक्षकस्थले[1]ऽप्रसिद्धावपि साधनसमानाधिकरणतादृशाभावकूटाधिकरणत्वस्य नाप्रसिद्धिरिति**

[1] नानाविपक्षके––अ.

साधनसमानाधिकरणत्वविशेषणपक्षे[1] तादृशाभावकूटाधिकरणतागर्भमेव[2] लक्षणं सम्यक् । साध्यतावच्छेदकव्यापकतापेक्षया[3] साध्यतावच्छेदकावच्छिन्नव्यापकतावच्छेदकत्वस्य[4] गुरुत्वेऽपि साध्यतावच्छेदकव्यापकप्रतियोगिताकाभावघटितलक्षणे सत्तावान् जातेरित्यादौ विशिष्टसत्ताभावादिवारकोक्त[5]विशेषणनिवेशे[6] महागौरवात् । विशिष्टस्यानतिरिक्तत्वे[7] पृथिव्यन्यद्रव्यत्ववद्, द्रव्यत्वादित्यादौ घटान्यत्वविशिष्टद्रव्यत्वाभावादेरपि साध्यतावच्छेदकावच्छिन्नव्यापकतावच्छेदकरूपावच्छिन्नप्रतियोगिताकतया उक्तदिशा अतिव्याप्तिवारणाय [8]तादृशाभावघटितलक्षणेऽपि साधनवति सम्भवदैकाधिकरण्यकतादृशाभाव[9]समुदायस्यावश्यं विवक्षणीयतया पृथिवी द्रव्यत्वप्रकारकप्रमाविषयत्वादित्यादौ समवायसंबन्धावच्छिन्न[10]जलासमवेतत्वाद्यवच्छिन्नाभावघटितकूटाधिकरणसामान्यादिवृत्तित्वाभाववत्त्वेऽपि अतिव्याप्तेरनवकाशात् । साधनवति [11]सम्भवदैकाधिकरण्यविवक्षामन्तरेणैव

1 विशेषणप्रक्षेपे—क.

2 अधिकरणत्वगर्भमेव—क.

3 व्यापकत्वापेक्षया—क.

4 व्यापकतावच्छेदकरूपावच्छिन्नत्वस्य—अ.

5 निरुक्त—क. 6 निवेशेन—क.

7 अनतिरिक्तत्वेऽपि—अ. न्यायरत्ने अनतिरिक्ततयेति प्रतीकधारणात् तादृशपाठोऽपि वर्तत इति गम्यते । कृष्णंभट्टीये अनतिरिक्तत्वकथनं चेत्यभिधानाद् अनतिरिक्तत्वे इति पाठोऽपि प्रामाणिकः—स्व.

8 एतादृश—अ.

9 समुदायाधिकरणस्य—क.

10 जलाद्यसमवेतत्वावच्छिन्ना—अ.

11 सम्भवदैकाधिकरण्यकत्व—अ.

**पृथिव्यन्यद्रव्यत्ववत् द्रव्यत्वादित्यादौ घटान्यवृत्तित्वत्वावच्छिन्ना-भावमादायातिव्याप्तिवारणे उक्तस्थलेऽपि तादृशाभावमादायाति-व्याप्तिवारणसंभवात् प्रतियोगितायां साध्यतावच्छेदकव्याप्यत्व-विशेषणं नोपादेयम् । यद्यपि साधनवति सम्भवदैकाधिकरण्यक-कूटनिवेशे द्रव्यत्वविशिष्टसत्ताभावद्रव्यान्यत्वविशिष्टसत्ताभाव-घटितकूटस्य सत्तावान् जातेरित्यादौ न लक्षणघटकताप्रसक्तिः । तथापि साध्यतावच्छेदकव्यापकप्रतियोगिताकाभावनिवेशे तादृशा-भावैकतरव्यधिकरणधर्मावच्छिन्नाभावघटितकूटस्य तथात्वाद-व्याप्तिरिति तदुपेक्षेति रीत्या[1] सार्वभौमलक्षणपरिष्कारमपि हेतुतावच्छेदकसंबन्धेन वृत्तिमद्यावदधिकरणमहाकालादि[2]मात्रवि-पक्षकव्यभिचारिण्यतिव्याप्त्यापत्त्या[3] निराकुरुते एतेनेति ।**

## कृष्णंभट्टीयम्

उक्तविशेषणम्, साध्यतावच्छेदकविशिष्टसाध्यवद्वृत्तिसमानाधि-करणधर्मावच्छिन्नाभावान्यत्वरूपम् । ननु साध्यव्यापकतावच्छेदकरूपा-वच्छिन्नाभावघटितलक्षणेऽपि पृथिवीत्वसाध्यकव्यभिचारिणि जलासमवेत-त्वाद्यवच्छिन्नाभावादिकमादायातिव्याप्तिभयेन प्रतियोगितायां साध्यता-वच्छेदकव्याप्यत्वमुपादेयमेवेति गौरवं दुर्वारमित्याशङ्कां निरस्यति-- विशिष्टस्येति । साध्यतावच्छेदकसंवन्धेन व्यापकतानिवेशाभिप्रायेण । येन संवन्धेन व्यापकतेति पक्षे तु चिन्त्यम्; पृथिव्यन्यत्वाभावादिकमादाया-नतिप्रसङ्गात् । साव्यतावच्छेदकव्याप्यत्वोपादानेऽपि साधनवतीत्यादि-विवक्षाया आवश्यकत्वार्थं वा एतदभिधानम् । अनतिरिक्तत्वकथनं च

1 उपेक्षितमिति रीत्या--अ.

2 आदिपदं नास्ति--क.

3 अतिव्याप्त्या--अ.

साध्यतावच्छेदकव्याप्यत्वनिवेशेऽपि पृथिव्यन्यत्वविशिष्टद्रव्यत्वादिसाध्यकातिव्याप्तिलाभाय। तद्वारणाय विवक्षान्तरस्यावश्यकत्वे च तेनैव पृथिवीत्वसाध्यकव्यभिचारिणि अतिव्याप्तिवारणसंभवात् तन्न देयमेवेति कुतो गौरवं पुच्छलक्षण इति भावः। [1]आवश्यकमिति। इदमापाततः—साध्यतावच्छेदकसंबन्धावच्छिन्नाभावस्य साध्यतावच्छेदकव्याप्यप्रतियोगिताकत्वस्य वा निवेशमते घटान्यत्वविशिष्टसत्ताद्रव्यत्वाद्यभावादीनामेव लक्षणघटकत्वेऽपि स्वरूपसंबन्धावच्छिन्न[2]घटान्यवृत्तित्वत्वेन तत्कूटाधिकरणसामान्यादिवृत्तित्वाभावासत्त्वेन पृथिव्यन्यद्रव्यत्ववत्, पृथिवी वा, [3]द्रव्यत्वप्रकारकप्रमाविषयत्वाद् द्रव्यत्वाद् वा इत्यादौ अतिव्याप्तिविरहाद् एतद्विवक्षावैयर्थ्यात्। व्यापकताघटकसंबन्धावच्छिन्नप्रतियोगिताकसाध्याभावनिवेशपक्षे पृथिव्यन्यद्रव्यत्वपृथिवीत्वादिसाध्यके स्वरूपसंबन्धावच्छिन्नघटावृत्त्यभावपटावृत्त्यभावघटितकूटस्य स्वरूपसंबन्धावच्छिन्नजलावृत्त्यभावतेजोऽवृत्त्यभावघटितकूटस्य च अधिकरणाप्रसिद्ध्यैव नातिप्रसङ्गप्रसङ्ग इति सूचनाय।

समवायसंबन्धावच्छिन्नेति। [4]लक्षणेति। किन्तु व्यधिकरणधर्मावच्छिन्नाभावस्यैव लक्षणघटकतया व्यधिकरणधर्मावच्छिन्नतद्वद्वृत्तित्वाभावमादायाव्याप्तिवारणसंभवेन अत्राहुरित्याद्युक्तविशेषणं न देयमिति तत्र कुतो गौरवमित्याशयः।

### न्यायरत्नम्

**उक्तविशेषणनिवेश इति। साध्यवद्वृत्तिसमानाधिकरणधर्मावच्छिन्नाभावान्यत्वनिवेश इत्यर्थः। साध्यव्यापकतावच्छेदकरूपावच्छिन्नाभाव-**

[1] अवश्यमिति—अ. गदाधरीये आवश्यकमिति पाठो न दृश्यते।

[2] पटान्य—अ.

[3] द्रव्यत्वप्रमाविषयत्वात्—अ.

[4] न लक्षणेति प्रतीकधारणम्—अ.

निवेशेऽपि पृथिवी द्रव्यत्वप्रकारकप्रमाविषयत्वादित्यत्र जलासमवेतत्वतेजोऽसमवेतत्वाद्यवच्छिन्नाभावकूटमादायातिव्याप्तिवारणाय साध्यतावच्छेदकव्याप्यत्वस्य प्रतियोगितायामावश्यकतया गौरवमिति शङ्कां निरस्यति–विशिष्टस्येति । [1]अनतिरिक्ततयेति । इदं च प्रतियोगितायां साध्यतावच्छेदकव्याप्यत्वनिवेशकल्पेऽपि पृथिव्यन्यद्रव्यत्ववद् द्रव्यत्वादित्यादावतिव्याप्तेरावश्यकत्वसूचनायैव । तथा च तद्वारकदर्शितविवक्षाया मतद्वयावश्यकत्वेन तयैव पृथिवी द्रव्यत्वप्रकारकप्रमाविषयत्वादित्यादौ जलाद्यसमवेताभावमादायातिव्याप्तिवारणे प्रतियोगितायां साध्यतावच्छेदकव्याप्यत्वं न देयमिति न गौरवं पुच्छलक्षण इति भावः । न लक्षणघटकताप्रसक्तिरिति । तथा च तद्वारकसाध्यवद्वृत्तीत्यादिविशेषणानावश्यकतया न कूटघटितलक्षणे गौरवमित्याशयः ।

## गादाधरी

(१२९) साध्यतावच्छेदकेत्यादिविशेषणप्रयोजनम् ।

अत्र प्रतियोगितायामवच्छिन्नान्तविशेषणव्यावृत्तिः अभाववान् मेयत्वादित्यत्रेव वह्निमान् धूमादित्यत्रापि बोध्या । यादृशसाध्याभावकूटाधिकरणं साधनवत् तार्णातार्णदहनोभयाभावादिघटितकूटस्यापि तथाविधकूटतया तथाविधोभयादिमद्वृत्तिपदार्थे वर्तमानस्य तादृशकूटाधिकरणवृत्तित्वाभावस्य हेतावसत्त्वात् ।

[2]अत्र साध्यतावच्छेदकसंबन्धावच्छिन्नत्वेनापि प्रतियोगिता विशेषणीया । अन्यथा वह्निमान् पर्वतवह्न्यवयवसंयोगादित्यत्र[3]

1 अत्र पाठभेदाः गादाधर्यां द्रष्टव्याः—स्व.

2 अत्र च—क.

3 इत्यादौ—क.

[1]संयोगसंबन्धावच्छिन्नवह्न्यभावसमवायसंबन्धावच्छिन्नवह्न्यभावयोः [2]संभवदैकाधिकरण्याभावेन तदुभयघटितकूटस्य लक्षणाघटकत्वात् अतिव्याप्तिविरहेऽपि वह्निमान् धूमादित्यादौ साध्यतावच्छेदकसंबन्धातिरिक्तसंबन्धावच्छिन्नाभावकूटस्योक्तक्रमेण लक्षणघटकतया तद्वति वह्न्यवयवाद्यतिरिक्ते हेतोर्वृत्ते[3]रसंभवापत्तेः। व्यापकतापि साध्यतावच्छेदकसंबन्धेन[4]। अन्यथा समवायेन वह्निसंयोगे साध्ये संयोगेन साध्यव्यापकस्य वह्नेः समवायसंबन्धावच्छिन्नाभावादि[5]घटितकूटाधिकरणवह्न्यवयवातिरिक्तवृत्तौ सद्धेतावव्याप्त्यापत्तेः। इत्थं च [संयोगेन संबन्धेन[6]] व्यापकताप्रसिद्ध्यर्थं व्यापकताघटकाभावे प्रतियोगिवैयधिकरण्यविशेषणस्यावश्यकतया [7]व्याप्यवृत्तिपदसार्थक्यमिति केचित्।

1 संयोगसंबन्धावच्छिन्नप्रतियोगिताकवह्न्यभावसमवायसंबन्धावच्छिन्नप्रतियोगिताकवह्न्यभावयोः—क.

2 संभवदैकाधिकरण्याभावेन इति नास्ति; तत्स्थाने साधनाधिकरणे सामानाधिकरण्याभावेन इति—अ. साधनाधिकरणे संभवदैकाधिकरण्याभावेन इति—क.

3 वृत्तित्वपदं यथाश्रुताभिप्रायेण। अन्यथा वह्न्यवयवसंयुक्तमात्रस्याप्रसिद्धेः, तदन्यगगनसंयुक्तत्वस्यैव सर्वत्र सत्त्वाद् व्यधिकरणधर्मावच्छिन्नाभावमादाय लक्षणसमन्वयात्। अन्यथा अव्याप्तिर्बोध्या—रा.

4 साध्यतावच्छेदकसंबन्धेन बोध्या—अ. साध्यतावच्छेदकसंबन्धघटिता ग्राह्या—क.

5 आदिपदं नास्ति—क.

6 [ ] एतदन्तर्गतपाठस्थाने संयोगसंबन्धेन साध्यतायां तेन संबन्धेन इति पाठः—क.

7 व्याप्यवृत्तित्वोपादानम् इति—अ. व्याप्यवृत्तिपदोपादानसार्थक्यमिति—क.

## कृष्णंभट्टीयम्

अभाववानिति । घटत्वपटत्वादिरूपसाध्याभावघटितकूटाधिकरणाप्रसिद्धिः । साधनाधिकरणे संभवदैकाधिकरण्यकत्वोक्तौ [1]च घटत्वव्यधिकरणधर्मावच्छिन्नाभाव[2]कूटाधिकरणमादायैवाव्याप्तिरित्यर्थः । तत्तत्सपक्षावृत्त्यभावतत्तद्विपक्षावृत्त्यभावघटितकूटाधिकरणाप्रसिद्धिवारणाय यादृशेति । तार्णेति । अत्राहुरित्याद्युक्तविशेषणविरहाद् अत्रायं घटकः, न तु पूर्वलक्षणे इति बोध्यम् । न चैवं तद्वह्न्यभावघटितकूटमादायैवाव्याप्तिसंभवाद् उभयाभावानुधावनं व्यर्थमिति वाच्यम् । साध्यतावच्छेदकव्यापकप्रतियोगिताकाभावनिवेशेऽपि अव्याप्तिरित्याशयात् । नन्वत्र साध्यव्यापकतानवच्छेदकत्वं साध्यवन्निष्ठाभावप्रतियोगितायाः सामानाधिकरण्येनानवच्छेदकत्वम् । तत्र निष्प्रयोजनकं प्रतियोगिवैयधिकरण्यं प्रवेश्य साध्याभावे व्याप्यवृत्तित्वनिवेशनं प्रक्षालनाद्धीति न्यायग्रस्तमित्याशङ्कायां केषांचित् समाधानमाह––अत्रेति । [3]साधनसामानाधिकरण्याभावेनेति । साधनवति संभवदैकाधिकरण्यकत्वाभावेनेत्यर्थः । उक्तक्रमेण, यादृशसाध्याभावस्तोमवत्साधनाधिकरणमिति रीत्या । असंभवापत्तेरिति । केवलान्वयिन्यपि कालिकसंबन्धावच्छिन्नसाध्याभावस्य हेतुमन्नित्ये सत्त्वात्; नित्यावृत्तिहेतौ च, तस्य साधनसामानाधिकरण्याभावेऽपि अतिरिक्तसमवायादिसंबन्धावच्छिन्नाभावसंभवात् । न च वाच्यं वाच्यत्वविषयकजन्यज्ञानत्वादित्यादौ संयोगसमवायादिसंबन्धावच्छिन्नवाच्यत्वाभावः केवलान्वयी । कालिकविषयितादिसंबन्धावच्छिन्नतदभावस्तु न हेतुमति । वाच्यत्वभेदश्च यद्यपि हेतुमति; तथापि तत्समवेतत्वसामान्याभावो न वृत्तिमद्वृत्तिरित्यव्याप्तिर्न संभवतीति वाच्यम् । तत्र ज्ञानत्वत्वमात्रस्य लघुनो हेतुतावच्छेदकत्वं न तु तादृशज्ञानत्वत्वस्येत्याशयात् । तादृशनिष्ठस्य तद्व्यक्तित्वादेः

[1] चकारानन्तरं घटत्वपटत्वोक्तौ च इत्यधिकपाठः––अ.

[2] कूटादिकमादाय––अ.

[3] अत्र पाठभेदा गादाधर्यां दर्शिताः; किन्तु एष पाठः तत्र न वर्तते––स्व.

हेतुत्वे तु वाच्यत्वभेदादिघटितकूटवद्वृत्तित्वाभावस्य वाच्यत्वादौ वृत्तिमद्वृत्तेः हेतावसत्त्वेनाव्याप्तिरिति । वह्न्यवयवातिरिक्त इत्युक्तेश्च वह्न्यवयवमात्रसंयुक्तपदार्थाभावेन संवन्धित्वनिवेशे उक्तरीत्याव्याप्त्यसत्त्वेऽपि वृत्तित्वनिवेशे इयमव्याप्तिः । संबन्धित्वनिवेशे च सत्तावान् जातेरित्यादौ कालिकसंवन्धावच्छिन्नसत्ताभावघटितकूटमादायाव्याप्तिर्बोध्या ।

## गादाधरी

(१३०) व्याप्यवृत्तित्वविशेषणप्रयोजनविचारः ।

**वस्तुतस्तु––येन संबन्धेन व्यापकता [1]तेनैवाभावो ग्राह्यः । साध्यतावच्छेदकसंबन्धस्य विशिष्य निवेशे अवच्छिन्नवृत्तिकान्यत्वरूपव्याप्यवृत्तित्वनिवेशे संयोगेन धूमादिसाध्यके तत्संबन्धावच्छिन्नधूमत्वाद्य[2]वच्छिन्नाभावस्य धूमवति अवच्छिन्नवृत्तिकतया व्यधिकरणधर्मावच्छिन्नाभावमात्रस्य व्याप्यवृत्तित्वेनातिव्याप्त्यापत्त्या [3]अनवच्छिन्नवृत्तिकत्वरूपव्याप्यवृत्तित्वस्यैव निवेशनीयतया [4]एवमित्यादिपङ्क्त्यसङ्गतेर्वक्ष्यमाणत्वात् । अन्योन्याभावघटितव्यापकतानिवेशाच्च व्याप्यवृत्तिपदसार्थक्यम् ।**

**संयोगाभावसाध्यकस्थले संयोगघटितकूटाधिकरणताया द्रव्यमात्रे सत्त्वात् तद्वृत्तिहेतावव्याप्तिवारणरूपं तत्प्रयोजनमाह––केवलान्वयिन इति । एतेन तत्साध्यके द्रव्यवृत्तेः सद्धेतुत्वमक्षतमिति सूचितम्[5] ।**

[1] तेन संबन्धेनाभावो ग्राह्यः––क. [2] आदिपदं नास्ति––क.

[3] अनवच्छिन्नवृत्तिकस्यैव निवेशनीयतया––अ.

[4] एवमित्यादिवक्ष्यमाणपङ्क्त्यसङ्गत्यापत्तेः––क.

[5] सद्धेतुत्वमिति सूचितम्––अ.

गुणवान् द्रव्यत्वादित्यादौ गुणादावनवच्छिन्नवृत्तिकगुणाद्यभाववति नित्यद्रव्यातिरिक्ते हेतोर्वृत्त्या अव्याप्तिवारणरूपमनवच्छिन्नवृत्तिकत्वरूपव्याप्यवृत्तित्वविशिष्टाभावनिरूपिताधिकरणतानिवेशफलमाह[1]——एवमिति। साध्याभावे उत्पत्तिकालावच्छेदेन द्रव्यवृत्तित्वकथनं द्रव्यत्वे तद्वद्वृत्तित्वाभावासत्त्वेनाव्याप्तिप्रसङ्गसूचनाय। न व्याप्यवृत्तिरित्यत्र [2]द्रव्यत्वाधिकरण इत्यनुषज्यते, इति व्याख्यानमसत्। अनवच्छिन्नवृत्तिकत्वरूपव्याप्यवृत्तित्वनिवेशे संयोगी घटादित्यत्रोक्तरीत्या अव्याप्तेर्वारणाय साधनवति व्याप्यवृत्तित्वस्यावश्यनिवेशनीयतया तत [3]एवाव्याप्त्यप्रसक्तेः। साधनवति व्याप्यवृत्तित्वपर्यन्तनिवेशन[4]प्रयोजनपरतया एतत्पङ्क्तिव्याख्या[5] न साधीयसी। व्याप्यवृत्तित्वविशिष्टाधिकरणत्वाप्रवेशे[6] [[7]संयोगी सत्त्वादित्यत्र गुणादौ] व्याप्यवृत्तेः संयोगाभावस्येव द्रव्यत्वाद्यभावस्यापि लक्षणघटकतया जगतः साध्याभावकूटानधिकरणतया[8]तिव्याप्त्यनवकाशेऽपि धूमवान् वह्नेरित्यादौ साध्यतावच्छेदकसंयोगसंबन्धावच्छिन्नप्रतियोगिताक[9]व्यापकतावच्छेदका-

1 निवेशनफलमाह——क.

2 द्रव्यत्वाधिकरणेऽपि इत्यनुषज्यते——क.

3 एवात्राव्याप्त्यप्रसक्तेः——अ. तत्राव्याप्त्यप्रसक्तेः। पूर्वं तत इति नास्ति——क.

4 प्रयोजनप्रदर्शनपरतया——क.

5 व्याख्यापि——क.

6 अनिवेशे——क.

7 [ ] संयोगसाध्यके सत्त्वादिव्यभिचारिहेतौ हेत्वधिकरणगुणादौ——अ.

8 अनधिकरणत्वात्——क.

9 प्रतियोगिताकसाध्यव्यापकतावच्छेदकेत्यादि——अ. साध्यतावच्छेदकावच्छिन्नव्यापकतावच्छेदकेत्यादि——क.

**वच्छिन्नाभावकूटाधिकरणताया विश्वस्मिन् सत्त्वादतिव्याप्ते[1]र्दुर्वारतया [2]तत्प्रवेशनस्यावश्यकतया तावतापि उक्ताव्याप्तिवारणसंभवात् । तस्माद्व्याप्यवृत्तित्वम् अवच्छिन्नवृत्तिकान्यत्वम[3]त्राभिमतम् । अतोऽपि साध्यतावच्छेदकव्यापकप्रतियोगिताकाभावोपेक्षा । तन्निवेशे साध्यतावच्छेदकसंबन्धावच्छिन्नप्रतियोगिताकत्वस्यैव निवेशनीयतया संयोगेन साध्यतायां व्यभिचारिणि व्यधिकरणधर्मावच्छिन्नप्रतियोगिताकस्यैव लक्षणघटकतया संयोगेन द्रव्याभावस्यावच्छिन्नवृत्तिकतया अतिव्याप्तेः, [4]तन्निवेशस्यैव दैशिककालिकाव्याप्यवृत्तिसाध्यकभेदेन स्थलद्वये व्यावृत्तिरभिहितेति सारम् ।**

कृष्णंभट्टीयम्

पूर्वमतं निराकरोति––साध्यतेति । [5]वक्ष्यमाणत्वादिति । तत्पङ्क्तिव्याख्यानावसर इत्यादिः ।

ननु साध्यतावच्छेदकसंवन्धेन व्यापकतानिवेशे एव व्यापकतायां प्रतियोगिवैयधिकरण्यनिवेशावश्यकतया संयोगाद्यभावसाध्यकमेयत्वादौ संयोगाभावत्वस्य प्रतियोगिवैयधिकरण्यघटितसाध्यव्यापकतावच्छेदकतया तदभावमादाय अव्याप्तिवारणाय व्याप्यवृत्तित्वविशेषणसार्थक्यम् । येन संवन्धेन व्यापकता तेन संवन्धेन अभावकल्पे च धूमवान् वह्नेरित्यादौ अयोगोलकान्यत्वाभावमादायातिव्याप्तिनिवारणसंभवेन व्यापकतायां

[1] अतिव्याप्त्यापत्तेः––अ.

[2] तन्निवेशस्यावश्यकतया––अ. कृष्णंभट्टीये तत्प्रवेशस्येति प्रतीकधारणम्––स्व.

[3] अत्रेति नास्ति––अ.

[4] तन्निवेशनस्यैव––क. कृष्णंभट्टीयेऽपि तन्निवेशनस्येति प्रतीकधारणम्––स्व.

[5] अत्र पाठभेदः गादाधर्यां दर्शितः––स्व.

प्रतियोगिवैयधिकरण्यस्य निष्प्रयोजनकतया अनिवेशात् । संयोगाभावत्वस्य तदघटितव्यापकतावच्छेदकत्वासंभवेऽपि वाच्यत्वत्वेन घटाद्यभावमादाय संयोगाभावसाध्यकसद्धेतौ अव्याप्तिवारणसंभवाद् व्याप्यवृत्तित्वविशेषणं व्यर्थं स्यादित्यत आह––अन्योन्येति । एवं च प्रतियोगिवैयधिकरण्यानिवशेऽपि संयोगाभावत्वस्य व्यापकतावच्छेदकत्वसंपत्त्या व्याप्यवृत्तित्वविशेषणं सार्थकमिति भावः । एवमित्यादिपङ्क्त्यप्रदर्शनाय तत्पङ्क्ति सङ्गमयतां पूर्ववादिनां मतमाह––संयोगाभावेति । यद्यपि साधनसमानाधिकरणधर्मानवच्छिन्नवृत्तयो यावन्तस्तादृशाः साध्याभावाः व्याप्यवृत्तित्वविशिष्टतद्वत्तानिवेशेऽनवच्छिन्नवृत्तिकत्वानुपादाने व्याप्यवृत्तित्वविशिष्टतद्वत्ताप्रसिद्धिरेवाव्याप्तिसंपादिका । तथापि स्वमतेऽवच्छिन्नवृत्तिकान्यत्वरूपव्याप्यवृत्तित्वस्य निवेशनीयतया तदनुरोधेन इत्थमभिधानम् । यद्वा मिश्रलक्षणवद् व्याप्यवृत्तिसाध्यके क्षणविशेषवृत्तिसाध्याभावीयव्याप्यवृत्तित्वाधिकरणाप्रसिद्धिनिबन्धनासंभवो न दीधितिकृद्भिर्दर्शितः । संयोगाद्यभावस्येति विशेषणोपादानस्य निर्बीजता स्यादिति व्याप्यवृत्तितानिरूपकत्वनिवेशद्वारा अव्याप्तिरेवेति व्यञ्जनाय [1]वृत्तिहेतौ इत्येतावत्पर्यन्तमुक्तम् । स्वमतानुसारेण तु नायं ग्रन्थः । तथा सति साध्यतावच्छेदकसंबन्धनिवेशखण्डनप्रस्तावविच्छेदप्रसङ्गात् । संयोगाभावपदं च नव्यानुरोधेन । प्राचां तु कपिसंयोगाभावो बोध्यः । [2]द्रव्यवृत्तेरिति । गुणवृत्तेः सद्धेतुत्वेऽपि तत्राव्याप्त्यभावेनाव्याप्यवृत्त्यभावसाध्यकसद्धेतुत्वावच्छेदेन अव्याप्त्यन्वयो न स्यात् । अतः व्याप्यकोटौ द्रव्यवृत्तित्वप्रवेशः आवश्यकः । न चैवं विभागाद्यभावसाध्यकवत् जन्यज्ञानविषयत्वाभावसाध्यकस्यापि परिग्रहात् तत्राव्याप्त्यसत्त्वेन नियमभङ्गो दुर्वार इति वाच्यम् । ग्रन्थकारमते दैशिकाव्याप्यवृत्तित्वघटितनियमेऽदोषात् । कालिकाव्याप्यवृत्तित्वघटित[3]नियमस्थले च

[1] वृत्तौ––अ.

[2] द्रव्यवृत्तेरिति प्रतीकधारणं नास्ति । किन्तु द्रव्यवृत्तेः सद्धेतुत्वेऽपि इति पाठः । गुणवृत्तेरिति नास्ति––अ.

[3] नियमस्य––अ.

केवलान्वयिभिन्नसाध्यकत्वघटितत्वात्। रूपसामान्याभाववान् पृथिवीत्वादित्यादौ अव्याप्त्यसंग्रहेण न्यूनत्वमतो भावसाध्यकत्वत्यागः। एकनियमस्तु दुष्करः। भेदप्रतियोगितावच्छेदकत्वप्रवेशाप्रवेशयोः संयोगाभावजन्यज्ञानविषयत्वाभावयोः अप्रवेशप्रवेशयोरापत्तेरिति भावः।

सद्धेतुत्वमिति। केवलान्वयित्वं भेदप्रतियोगितानवच्छेदकत्वम्, तत्प्रदर्शनं च संयोगाभावे साध्ये गुणादिवृत्तौ सद्धेतावपि नाव्याप्तिः। द्रव्यवृत्ति च साध्याभाववद्वृत्तित्वेन व्यभिचार्येवेति शङ्का साध्याभावस्य प्रतियोगिवैयधिकरण्याभावात् साध्यवदन्यवृत्तित्वस्यैव वा व्यभिचारित्वात् नेति ध्वनयतीत्यर्थः। निरवच्छिन्नवृत्तिकत्वरूपव्याप्यवृत्तित्वव्यावृत्तेः प्रदर्शनाद् एवमिति पङ्क्तिकैमर्थ्यं परिहर्तुं तस्याव्याप्यवृत्तित्वनिरूपकत्वव्यावृत्तिप्रदर्शकतामाह––गुणवानिति। नित्यद्रव्ये गुणसत्त्वादाह––नित्यद्रव्यातिरिक्तेति। ननु दीधितौ उत्पत्तिकालावच्छेदेन द्रव्यवृत्तित्वकथनं स्वरसतः अव्याप्यवृत्तित्वप्रदर्शकम्। अतः न व्याप्यवृत्तिरित्यसङ्गतमित्यतः तस्याव्याप्तिसूचकतां व्याप्यवृत्तिरित्यस्य व्याप्यवृत्तित्वनिरूपकत्वलाभकतां चाह––साध्याभावे इति। उक्तरीत्या व्याप्यवृत्तित्वविशिष्टसंयोगाभावाधिकरणगुणादौ हेतुतावच्छेदकसंयोगसंबन्धेन वृत्त्यप्रसिद्ध्या तत्रेति, गुणवान् द्रव्यत्वादित्यादौ। गुणाभावस्य हेत्वधिकरणे निरवच्छिन्नवृत्तिकत्वाभावेन लक्षणाघटकत्वादव्याप्तिवारणसंभवे व्याप्यवृत्तित्वविशिष्टाधिकरणनिवेशव्यावृत्तिप्रदर्शनपरत्वम्, एवमित्यादिग्रन्थस्यासङ्गतमिति भावः।

ननु व्याप्यवृत्तित्वविशिष्टाधिकरणं न निवेश्यत एव। किन्तु गुणवान् द्रव्यत्वादित्यादौ गुणाभाववन्नित्यद्रव्यभिन्नवृत्तित्वाभावमादायाव्याप्तिवारणाय हेत्वधिकरणे निरवच्छिन्नवृत्तित्वमावश्यकम्। तत्प्रदर्शनपरत्वं च एवमित्यादिपङ्क्तेरिति मतं दर्शयति––साधनवतीति। [1]तत्प्रवेशस्येति।

[1] तत्प्रवेशनस्य इति पाठो दृश्यते। तन्निवेशस्य इति पाठभेदोऽपि वर्तते। तत्प्रवेशस्येति न दृश्यते––स्व.

एवं च हेत्वधिकरणे निरवच्छिन्नवृत्तिकत्वनिवेशेऽपि व्याप्यवृत्तित्वविशिष्टाधिकरणत्वनिवेशस्यावश्यकतया तत एव गुणवान् द्रव्यत्वादित्यादौ अव्याप्तिवारणसंभवे हेत्वधिकरणे निरवच्छिन्नवृत्तिकत्वव्यावृत्तिप्रदर्शनपरत्वमसङ्गतमेवत्यर्थः ।

केचित्तु–संयोगाभाववान् द्रव्यत्वादित्यादौ अव्याप्तिवारणाय व्याप्यवृत्तित्वविवक्षणे धूमवान् वह्नेरित्यादावतिव्याप्तिवारणाय व्याप्यवृत्तित्वविशिष्टाधिकरणत्वपर्यन्तविवक्षणेऽपि गुणवान् संयोगेन घटादित्यादौ पूर्वोक्तरीत्या अव्याप्तिवारणाय साधनाधिकरणे व्याप्यवृत्तित्वपर्यन्तमुक्तमितीयं व्याख्यापि सम्यगेवेत्याहुः । व्याप्यवृत्तित्वप्रयोजनप्रदर्शनानन्तरं गुणवान् द्रव्यत्वादित्यादौ अव्याप्तिशङ्का स्यात्; तद्वारणायैव एवमित्युक्तम् । क्लृप्तप्रयोजनयोः साधनाधिकरणे व्याप्यवृत्तित्वव्याप्यवृत्तित्वनिरूपकत्वयोः निरुक्तिघटकयोरन्यतरेण प्रकृते वारणं बोध्यम् । एतादृशरीत्या एवमित्यादिपङ्क्तिलापनसंभवात् तस्याः तदन्यतरप्रयोजनप्रदर्शकता नोपेयत इत्याहुः । तस्मादिति । पूर्वोक्तयुक्त्या साध्यतावच्छेदकसंबन्धेन व्यापकत्वस्य निवेशयितुमशक्यतया येन संबन्धेन व्यापकता तेनैवाभावस्य निवेशनीयत्वादित्यर्थः । अभिमतमिति ।

अथ व्याप्यवृत्तित्वं [1]निरवच्छिन्नवृत्तिकत्वम्; नानाविपक्षके तत्तद्विपक्षान्यत्वाभावघटितकूटाधिकरणाप्रसिद्धेः; एकविपक्षके तद्विपक्षावृत्त्यभावघटितकूटवति हेतुमत्त्वाच्च अतिव्याप्त्यभावाद् व्याप्यवृत्तितानिरूपकत्वं न प्रवेश्यम् । साधनाधिकरणे निरवच्छिन्नवृत्तित्वमेव लाघवात् पर्यवसितम् । एवमित्यादिपङ्क्तिश्च तावद्विवक्षाप्रयोजनप्रदर्शनार्थैव न तु व्याप्यवृत्तित्तवानिरूपकत्वप्रयोजनप्रदर्शनार्थेति चेत् सत्यम् । पूर्वलक्षणे साधनसामानाधिकरण्यपुच्छीकृतं निरवच्छिन्नत्वं न दीधितिकृद्भिर्व्याहृतम्; अतथाभावेऽपि ऊहितुं शक्यत्वात् । ततश्चेह तद्व्याहरणमनुचितमिति, दोषपरिहा-

[1] निरवच्छिन्नवृत्तित्वम्—अ.

राय अभावविशेषणतानिर्वाहाय च अन्यथा दर्शितम् । [[1]मिश्रादिलक्षणेषु एव एतदिष्टम्; नेहेति व्यञ्जनाय वा] । अथैवं दीधितिकृतां तदुपादानं गौरवावहमिति चेत्; ईदृशास्वरससूचनायाभिमतमित्युक्तम् । कूटघटितलक्षण-[2]परिष्कारे बीजमुक्त्वा बीजान्तरमप्याह——अतोऽपीति । संयोगेनेति । स्वमते व्यभिचारनिरूपकाधिकरणान्यत्वाभावमादायैवानतिप्रसङ्गो बोध्यः। तन्निवेशनस्यैव, अवच्छिन्नवृत्तिकान्यत्वनिवेशनस्यैव । दैशिकेति । यद्यपि वाच्यत्वादिसाध्यकस्थलीयत्वं संयोगाद्यभावस्येत्यादिपङ्क्तेः संभवति । तथापि साध्यात्मकसाध्यव्यापकाभावव्यावृत्तिवर्णनसंभवे तदनात्मकसाध्यव्यापकाभावव्यावृत्तिवर्णनं प्रथमतो[3]ऽनुचितमेव । एवं द्रव्यत्वादिसाध्यके गुणाभावानां व्यावृत्तिसंभवेऽपि गुणादि[4]साध्यपरत्वमुक्तमित्याशयः ।

## न्यायरत्नम्

**वक्ष्यमाणत्वादिति । तत्पङ्क्तिव्याख्यानावसर इत्यादिः । व्याख्यान्तरमुपन्यस्यति——साधनवतीति ।**

## गादाधरी

(१३१) **स्वसमानाधिकरणत्वनिवेशप्रयोजनविचारः ।**

**स्वसमानाधिकरणत्वनिवेशनप्रयोजनमाह——उक्तरूपेति । साध्यतावच्छेदकावच्छिन्नव्यापकतावच्छेदकरूपेत्यर्थः । अप्रसिद्ध्यादीति । सत्तावान् जातेरित्यादौ [5]सत्तात्वावच्छिन्नाभावस्त-**

[1] [ ] मिश्रादिलक्षणेष्वेव एतद्दुष्टं नेहेति व्यञ्जनाय वा——अ.

[2] परित्यागे——अ.

[3] अनुचितम् । एवमेव——अ.

[4] साध्यकरत्वम्——अ.

[5] सत्तात्वाद्यवच्छिन्नाभावकूटाधिकरणे——क.

**त्कूटाधिकरणे हेतुतावच्छेदकसंबन्धेन [[1]वृत्त्यप्रसिद्धिसम्पादकः, रूपाभावादिसाध्यके रूपाद्यात्मकाभावाश्च कूटाधिकरणाप्रसिद्धि-सम्पादकाः]। सम्भवदैकाधिकरण्यापन्नसाध्याभावस्तोमाधिकरण-त्वविवक्षणे सत्तान्यपृथिवीसमवेतशून्यं वायुत्वादित्यादौ आदिपद-ग्राह्याया अतिव्याप्तेः सम्पादका बोध्याः ।**

कृष्णंभट्टीयम्

[2]रूपाद्यात्मकेति । नित्यरूपाद्यात्मकेत्यर्थः । जन्यरूपाणामुत्पत्ति-कालावच्छिन्नवृत्तिकत्वात् । सत्तान्येति । इदमापाततः—वायुत्वाद्यभावा-भावमादायानतिप्रसङ्गात् ।

**गादाधरी**

(१३२) **समुदायाधिकरणवृत्तित्वादिप्रयोजनम् ।**

**पूर्वोक्तरीत्येति । समुदायाधिकरणवृत्तित्वं हेतुतावच्छेदक-संबन्धेन; [3]तदभावस्तादृशवृत्तित्वत्वव्यापकप्रतियोगिताकः; हेतुतावच्छेदकसंबन्धेन वृत्तिमत्त्वं लक्षणघटकं बोध्यमित्यर्थः[4] । अपास्तमिति । न च सार्वभौममते सामानाधिकरण्यस्याव्याप्य-वृत्तितया साध्याभावकूटवन्महाकालवृत्तित्वस्य समानाधिकरण-धर्मावच्छिन्नाभावोऽपि सामानाधिकरण्यानिरूपकखण्डकालाद्य-**

1 [ ] वृत्तित्वाप्रसिद्धिसम्पादकाः, रूपाभावादिसाध्यके रूपाद्यात्मकाभाव-कूटाधिकरणाप्रसिद्धिसम्पादकाः—क.

2 अत्र गादाधर्यां पाठभेदः वर्तते—स्व.

3 तदभावास्तादृशवृत्तित्वत्वव्यापकप्रतियोगिताकाः—क.

4 इत्यर्थः इति नास्ति—अ.

वच्छेदेन घटादिरूपवृत्तिमति [1]वर्तत एवेति [2]महाकालान्यत्वसाध्यके नातिव्याप्तिसंभव इति वाच्यम् । तथा सति वह्न्यादावपि स्वावयवाद्यवच्छेदेन निर्धूमसंयुक्तत्वाद्यभावसत्त्वेन धूमवान् वह्नेरित्यादावतिव्याप्तेरुक्तस्थलेऽतिव्याप्तिवारणस्य सुदूरपराहतत्वात् ।

यत्तु—हेतुतावच्छेदकसंबन्धेन हेत्वधिकरणसामान्यावच्छेदेन तद्वत्त्वस्य विवक्षितत्वान्नातिव्याप्तिः; व्यभिचारनिरूपकाधिकरणावच्छेदेन हेतौ तद्वत्त्वविरहादिति——तन्न । एवं सति स्वावयवावच्छेदेन घटादिवृत्तेः समानाधिकरणधर्मावच्छिन्नजगत्संयुक्तत्वाद्यभावस्य [3]पर्वताद्यवच्छेदेन धूमादावसत्त्वादसंभवापत्तेः । वृत्तिमद्वृत्तिपदेन हेतुतावच्छेदकसंबन्धेन यस्य यदधिकरणं तदवच्छेदेन तद्वृत्तित्वविवक्षायामपि व्याप्यवृत्तेरवच्छेदकानभ्युपगमे व्यधिकरणधर्मावच्छिन्नप्रतियोगिताकस्य साध्याभावकूटाधिकरणवृत्तित्वाभावस्याधिकरणानवच्छिन्नतया असंभवस्य दुर्वारत्वात् । यदि च वृत्तिमत्यनवच्छिन्नवृत्तयो यावन्तः तादृशाभावकूटाधिकरणवृत्तित्वाभावा अनवच्छिन्नतद्वत्त्वं व्याप्तिरित्युच्यते; तदा सामानाधिकरण्यस्याव्याप्यवृत्तितापक्षेऽपि न दर्शितदोषनिरासः सम्भवति । समानाधिकरणधर्मावच्छिन्नमहाकालवृत्तित्वाभावस्य वृत्तिमत्यनवच्छिन्नवृत्तिकत्वविरहेण लक्षणाघटकत्वात् । हेतुतावच्छेदकसंबन्धेन यस्य यदधिकरणं तदवच्छेदेन तद्वृत्तित्वकिंचिदवच्छिन्नत्वोभयाभाववन्तो यावन्तस्तादृशाभावकूटवद्-

[1] वर्तमानः——क.

[2] महाकालान्यत्वादिसाध्यके——क.

[3] पर्वतावच्छेदेन——क.

**वृत्तित्वाभावा अनवच्छिन्नतद्वत्त्वं व्याप्तिरित्युक्तौ न कश्चिद् दोषः। समानाधिकरणधर्मावच्छिन्नमहाकालवृत्तित्वाभावे किंचिदवच्छिन्नत्वसत्त्वेऽपि कालिकसंबन्धेन [1]घटाधिकरणखण्डकालावच्छेदेन घटाद्यवृत्तित्वासत्त्वेनोभयाभाववत्ताया अक्षततया[2] महाकालान्यत्वसाध्यके व्यभिचारिणि तादृशाभावस्य लक्षणघटकत्वेनातिव्याप्तिविरहात्। समानाधिकरणधर्मावच्छिन्नजगत्संयुक्तत्वाद्यभावस्य घटादौ कपालाद्यवच्छेदेन वृत्तेः संयोगादिना यद्घटाधिकरणं तदवच्छेदेन घटादाववृत्तेः निरुक्तोभयाभाववत्त्वविरहात् वह्निमान् धूमादित्यादौ न लक्षणघटकता, अपि तु अवच्छिन्नत्वविरहेणोभयाभाववतो व्यधिकरणधर्मावच्छिन्नतदभावस्यैवेत्यव्याप्त्यनवकाशादिति ध्येयम्।**

## कृष्णंभट्टीयम्

सामानाधिकरण्यस्याव्याप्यवृत्तित्वमते महाकालान्यो घटादित्यादौ नातिव्याप्तिः यतः खण्डकालावच्छेदेन पटादावेव महाकालवृत्तित्वाभावो वृत्तिमद्वृत्तियावदन्तर्गतो न घटादाविति भ्रमेण तदुद्धारं शङ्कते—न चेति। तन्मते व्यभिचारिसामान्ये एवातिव्याप्तिः संभवति। महाकालान्यत्वसाध्यके तु सुतरां, हेतावपि खण्डकालावच्छेदेन महाकालवृत्तित्वाभावसत्त्वादित्याशयेन दीधितिकारोक्तां तां [3]समर्थयति—तथा सतीति। वस्तुतस्तु—वृत्तिमद्वृत्तयो यावन्तस्तादृशसाध्याभावकूटवद्वृत्तित्वाभावाः साध्याभावकूटाधिकरणावच्छेदेन तद्वत्त्वं सामानाधिकरण्याव्याप्यवृत्तितापक्षे लक्षणं परिष्करणीयम्। तथा च महाकालान्यो घटादित्यादौ घटे खण्डकाला-

[1] घटाद्यधिकरणेत्यादि—क.

[2] सत्त्वेन—क.

[3] समर्थयते—अ.

वच्छेदेन महाकालवृत्तित्वाभावसत्त्वेऽपि महाकालावच्छेदेन तद्वत्त्वविरहात् नातिव्याप्तिरित्याशयेन शङ्कते--नचेति। दीधितिकारोक्तातिव्याप्तिनिराकरणार्थमुक्तविशेषणोपादानं स्थलान्तरेऽतिव्याप्तिसंपादकमेवेत्याशयेन आह--तथा सतीति। न च साध्याभावकूटाधिकरणसामान्यावच्छेदेनेति विवक्षितम्; तथापि एवं सतीत्याद्यसंभवस्य दुर्वारत्वात्। वह्न्यादावपीति शङ्कायाः उभयलक्षणाभिप्रायकतया कूटघटिते भवेदेवं समाधानम्, न तु पुच्छे; तत्र तत्तदयोगोलाकान्यत्वाभावघटितकूटाधिकरणाप्रसिद्धेरेवानतिप्रसङ्गात्। यादृशसाध्याभावस्तोमवत्साधनाधिकरणमिति विवक्षायाश्च वैयर्थ्यात्। साध्यतावच्छेदकसंबन्धावच्छिन्नाभावनिवेशस्य स्वयं दूषितत्वादिति चेन्न। साध्याभावाधिकरणावच्छेदेनेत्येव निविष्टं न तु उक्तसमुदायगर्भमित्याशयात्। एतदतिव्याप्त्युद्धारार्थं तद्गर्भत्वे तु महाकालान्यो घटादित्यादावेव अतिव्याप्तिः। केवलखण्डकालस्येव तद्विशिष्टमहाकालस्यापि साध्याभावकूटवन्महाकालवृत्तित्वाभावावच्छेदकत्वसंभवात्। वस्तुतस्तु व्याप्यवृत्तेर[1]वच्छेदकाभावासंभवरूपं चरमदूषणमेव सारम्। अन्यच्च संभवाभिप्रायकमिति।

व्यभिचारिसामान्येऽतिव्याप्तिं निराकर्तुं लक्षणं परिष्कृत्य महाकालान्यत्वसाध्यकातिव्याप्तिं निरस्य दीधितिं दूषयतां मतं दूषयति--यत्त्विति। तथा च खण्डकालावच्छेदेन महाकालवृत्तित्वाभावस्य महाकालान्यत्वसाध्यकहेतौ सत्त्वेऽपि हेतुमत्सामान्यान्तर्गतमहाकालावच्छेदेन तद्वत्त्वविरहाद् आतिव्याप्तिरिति भावः। हेतुतेति। तथा च कपालाद्यवच्छेदेन जगत्संयुक्तत्वाद्यभावस्य घटादौ वृत्तित्वेऽपि संयोगेनाधिकरण[2]भूतलावच्छेदेन घटादाववृत्तितया तस्य लक्षणाघटकत्वमिति नासंभवः[3]। दर्शितदोषः,

[1] अवच्छेदकत्वाभावाद् असंभवरूपम्--अ.

[2] भूतलाद्यवच्छेदेन--अ.

[3] अनन्तरं किंचिदवच्छित्वं, किंचिदवच्छिन्ननिष्ठाधिकरणताकत्वम्। दर्शितदोषः, महाकालान्यत्वसाध्यकातिव्याप्तिरूपः। इति पाठः--अ.

महाकालान्यत्वसाध्यकातिव्याप्तिरूपः । किंचिदवच्छिन्नत्वम्, किंचिदवच्छिन्नतन्निष्ठाधिकरणताकत्वम् ।

## गादाधरी

(१३३) सामानाधिकरण्यस्य व्याप्यवृत्तित्वमते पुच्छलक्षणपरिष्कारः ।

**सामानाधिकरण्यस्य व्याप्यवृत्तित्वे हेतुतावच्छेदकसंबन्धेन किंचित्पदार्थाधिकरणवृत्तयो यावन्तस्तादृशाभावकूटाधिकरणवृत्तित्वनिरूपकत्वाभावा यदधिकरणत्वावच्छेदेन वर्तन्ते तत्त्वमिति वक्तव्यम् । महाकालवृत्तित्वनिरूपकत्वस्य समानाधिकरणधर्मावच्छिन्नाभावः खण्डकालवृत्तिः साधनाधिकरणमहाकाले नास्तीति नोक्तातिव्याप्त्यवकाशः । सद्धेतौ तादृशाभावकूटाधिकरणजगद्वृत्तित्वनिरूपकत्वस्य व्यधिकरणधर्मावच्छिन्नाभाव एव हेतुतावच्छेदकसंबन्धेन किंचिदधिकरणवृत्तिः । स च हेत्वधिकरणसामान्य एव वर्तत इति लक्षणसमन्वय[1] इति कृतं पल्लवितेन ।**

## कृष्णंभट्टीयम्

स्वयं सामानाधिकरण्यस्याव्याप्यवृत्तिताकल्पे तद्वयाप्यवृत्तिताकल्पे च क्रमेण दीधितिकारोक्तदूषणमुद्धरति––हेतुतेति ।

[1] अनन्तरम् 'अथवा वृत्तिमद्वृत्तयो यावन्तस्तादृशसाध्याभावसमुदायाधिकरणवृत्तित्वाभावास्तद्वत्स्वाधिकरणतासामान्यकधर्मवत्त्वमेव विवक्षणीयम् । वृत्तिमत्त्वादिकं च दैशिकविशेषणतासंबन्धेनैव ग्राह्यम् । इत्थं च कालिकसंबन्धावच्छिन्नघटत्वावच्छिन्नाधिकरणतायां संबन्धान्तरावच्छिन्नाधिकरणतावद्वृत्तेः दैशिकसंबन्धावच्छिन्नमहाकालवृत्तित्वाभावस्यासत्त्वादिति कृतं पल्लवितेन' इत्यधिकपाठः––क.

## न्यायरत्नम्

हेतुतावच्छेदकसंबन्धेन किंचित्पदार्थाधिकरणवृत्तय इति । अत्र साध्याभावकूटाधिकरणनिरूपितवृत्तित्वांशे हेतुतावच्छेदकसंबन्धावच्छिन्नत्वानिवेशेऽपि तादृशवृत्तित्वनिरूपकत्वस्य समानाधिकरणधर्मावच्छिन्नप्रतियोगिताकस्य यावदन्तर्गतस्य हेत्वधिकरणत्वावच्छेदेनासत्त्वाद् अतिव्याप्तिविरहेण हेतुतावच्छेदकसंबन्धेन यत्किंचित्पदार्थाधिकरणवृत्तित्वमिति विशेषणमफलम् । सद्धेतौ तादृशवृत्तित्वनिरूपकत्वस्य व्यधिकरणधर्मावच्छिन्नाभावस्यैव प्रसिद्धेः । परंतु हेतुतावच्छेदकसंबन्धेन वृत्तिमद्वृत्तयो यावन्तस्तादृशसाध्याभावकूटाधिकरणवृत्तित्वाभावा इति लक्षणघटकविशेषणापरित्यागेनैव सामानाधिकरण्यस्य व्याप्यवृत्तित्वकल्पे लक्षणपरिष्कारः संभवतीति ज्ञापयितुं साध्याभावकूटाधिकरणवृत्तित्वांशे हेतुतावच्छेदकसंबन्धावच्छिन्नत्वघटितमेव लक्षणमभिप्रेतं, तथा च न तद्वैयर्थ्यम् । वृत्तित्वांशे हेतुतावच्छेदकसंबन्धावच्छिन्नत्वविशेषणस्य तु अखण्डाभावसंपादकतयैव सार्थक्यमिति बोध्यम् ।

विदुषां कण्ठभूषायै रघुनाथेन निर्मिते ।
संन्यायरत्ने संपूर्तिमगमन्मनुलक्षणी ।

इति मीमांसान्यायपञ्चास्यश्रीमद्राघवाचार्यशिष्यस्य पर्वते इत्युपनामकरघुनाथस्य कृतौ गदाधरीयपञ्चवादटिप्पण्यां न्यायरत्नाभिधायां चतुर्दशलक्षणी समाप्ता ।

इति चतुर्दशलक्षण्यां पुच्छलक्षणम्

———

## व्यधिकरणधर्मावच्छिन्नाभावखण्डनम्

### तत्त्वचिन्तामणिः

प्रतियोग्यवृत्तिश्च धर्मो न प्रतियोगितावच्छेदकः; तद्विशिष्टज्ञानस्याभावधीहेतुत्वात् । अन्यथा तन्निर्विकल्पकादपि घटो नास्तीति बुद्ध्यापत्तेः । गवि शशश्रृङ्गं नास्तीति प्रतीतेरसिद्धेः । शशश्रृङ्गं नास्तीति च शशे श्रृङ्गाभाव इत्यर्थः ॥

इति तत्त्वचिन्तामणौ व्यधिकरणधर्मावच्छिन्नाभावविचारः ॥

### गादाधरी

(१३४) प्रतियोग्यवृत्तिश्चेत्यादिमणिग्रन्थलभ्यानुमानशोधनम् ।

**मूले--प्रतियोग्यवृत्तिश्च धर्मो न प्रतियोगितावच्छेदक इति व्यधिकरणधर्मावच्छिन्नाभावनिराकर्तुः [[1]प्रतिज्ञावाक्यम् । तत्र] धर्मत्वमनुपादेयम्; अवृत्तेरपि प्रतियोगितावच्छेदकत्वस्य निराकर्तव्यत्वात् । तत्त्वे साधकाभावादिति[2] हेतुरूह्यः[3] । [[4]पक्षताव-च्छेदके साध्यतावच्छेदके च] सामान्यतः प्रतियोगिप्रतियोगित्वयोर्न**

[1] [ ] प्रवृत्ते प्रतिज्ञावाक्ये--अ:

[2] साधकाभाव एव--क.

[3] पूरणीयः--अ.

[4] [ ] पक्षतावच्छेदकीभूतप्रतियोग्यवृत्तित्वशरीरे साध्यतावच्छेदकशरीरे--अ.

प्रवेशः; सर्वेषामेव [1]किंचिदभावप्रतियोगिनि सम्बद्धतया किंचिदभावप्रतियोगितावच्छेदकतया च विशिष्टपक्षाद्यप्रसिद्धेः; किन्तु विशिष्य वाच्यत्वत्वादिना। तथा च वाच्यत्वाद्यवृत्तित्वावच्छिन्ने वाच्यत्वादिनिष्ठप्रतियोगितानवच्छेदकत्वं साधनीयम्। समूहालम्बनानुमितिरुद्देश्या। तत्तदभावीयप्रतियोग्यवृत्तित्वावच्छिन्ने तत्तदभावप्रतियोगितानवच्छेदकत्वसाधनं न सम्यक्। समनियताभावैक्यमते समवायित्वादिना वाच्यत्वाद्यभावस्य घटत्वाद्यवच्छिन्नपटाद्यभावाभिन्नतया समवायिपटादीनामपि तथाविधवाच्यत्वाद्यभावप्रतियोगितया तद्वृत्तिसमवायित्वादेः वाच्यत्वाद्यभावीयप्रतियोग्यवृत्तितायाः दुर्घटत्वात्। प्रतियोगिताः विशिष्योपादाय तत्तत्प्रतियोगितावदवृत्तित्वावच्छिन्ने तत्तत्प्रतियोगितावच्छेदकत्वाभावसाधनमपि हेयम्। वाच्यत्वादिनिष्ठायाः प्रसिद्धसमानाधिकरणद्वित्वाद्यवच्छिन्नाभावप्रतियोगिताया उपादाने सिद्धसाधनात्। सौन्दलोपाध्यायैरपि व्यधिकरणसमवायित्वादिधर्मस्य समानाधिकरणधर्मावच्छिन्नप्रतियोगितावच्छेदकत्वानङ्गीकारात्। व्यधिकरणधर्मावच्छिन्नायाश्च प्रतियोगिताया उभयवाद्यसिद्धतया विशिष्योपादानासंभवात्।

केचित्तु—विशिष्य समवायित्वत्वादिकं पक्षतावच्छेदकीकृत्य वाच्यत्वादिनिष्ठप्रतियोगितानवच्छेदकत्वं साधनीयम्; तादृशप्रतियोगितावदवृत्तित्वमेव हेतुः; यो यदवृत्तिः स तन्निष्ठप्रतियोगितानवच्छेदक इति सामान्यतो व्याप्तिप्रदर्शकः प्रतियोग्यवृत्तिश्चेति ग्रन्थः। वीप्साद्यभावेऽपि प्राथम्येन व्याप्तेर्लाभसं-

[1] किंचिद्धर्मावच्छिन्नकिंचिदभावप्रतियोगिनि—अ.

भवात्। वाच्यत्वाद्यवृत्तिधर्ममात्रस्यैव व्यधिकरणतया वाच्यत्वादिनिष्ठप्रतियोगितायां तन्मतेऽवच्छेदकतया यद्यप्यत्रान्वयदृष्टान्तदुर्भिक्षम्। तथापि व्यतिरेकेण वाच्यत्वादिनिष्ठोभयत्वादिकमेव[1] दृष्टान्तः सम्भवतीत्यदोषः। अथवा यो यद्वदवृत्तिः स तदनवच्छेदक इति सामान्यव्याप्तौ कारणत्वादिव्यधिकरणः कारणत्वाद्यनवच्छेदक एवान्वयेन दृष्टान्तः। प्रतियोगितावच्छेदकत्वविषयतावच्छेदकत्वोभयसाधारणावच्छेदकतात्वस्यैक्ये भ्रमविषयताव्यधिकरणतदवच्छेदकरजतत्वादौ उक्तसामान्यव्याप्तेर्भङ्गवारणाय विषयतान्यत्वेन यत्पदार्थो विशेषणीय इत्याहुः।

अथ कालिकादिसंबन्धेन पटादिवृत्तिघटत्वादेः समवायादिना पटादिनिष्ठप्रतियोगितावच्छेदकत्वखण्डनाय तत्तत्संबन्धेन प्रतियोग्यवृत्तित्वं तत्तत्संबन्धेन प्रतियोगितावच्छेदकत्वाभावसाधने पक्षतावच्छेदकतया हेतुतया वा विवक्षणीयम्। तथा च समवायादिसंबन्धेन वाच्यत्वादिवृत्तित्वाप्रसिद्ध्योक्तरीत्या [2]समवायादिसंबन्धावच्छिन्नघटत्वाद्यवच्छिन्नवाच्यत्वाद्यभावखण्डनानुपपत्तिः। न च प्रतियोग्यवृत्तित्वमित्यनेन प्रतियोगिनिष्ठावच्छेदकताघटकसंबन्धावच्छिन्नाभावप्रतियोगित्वमेव विवक्षणीयम्। तथा च घटत्वादेरेव वाच्यत्वादिनिष्ठसमवायादिसंबन्धावच्छिन्नाभावप्रतियोगितया नाप्रसिद्धिरिति वाच्यम्। अव्याप्यवृत्तेः संयोगाभावप्रतियोगितावच्छेदकस्य प्रतियोगिनिष्ठाभावप्रतियोगितयोक्तधर्मस्य पक्षतावच्छेदकत्वे बाधस्य, हेतुत्वे च व्यभिचारस्य,

[1] वाच्यत्वत्वादिकमेव दृष्टान्त इत्यपि पाठः--अ.

[2] समवायादिसंबन्धेन घटत्वाद्यवच्छिन्नवाच्यत्वाभावखण्डनानुपपत्तिः--क.

दुर्वारत्वात् । प्रतियोगिनिष्ठभेदप्रतियोगितायामवच्छेदकताघटक-संबन्धेनावच्छेदकत्वस्य विवक्षणे व्यधिकरणसंयोगादिसंबन्धेन घट-त्वाद्यवच्छिन्नवाच्यत्वाद्यभावनिराकरणानुपपत्तिः। तेन संबन्धेन घटत्वादेः [1]भेदप्रतियोगितायामवच्छेदकत्वस्य [2]वादिनोरननुमत-त्वात् । एवं घटत्वादौ समवायादिसंबन्धेन [3]वाच्यत्वादिनिष्ठप्रति-योगितावच्छेदकत्वस्याभावः प्रतियोग्यप्रसिद्ध्या साधयितुम-शक्यः । मैवम्––स्वप्रतियोगिकत्व-यदनुयोगिकत्वोभयाभाववद्या-दृशसंबन्धसामान्यको यः स स्वनिष्ठत्व-तत्संबन्धावच्छिन्नत्वोभया-भाववत्तन्निष्ठप्रतियोगितावच्छेदकतासामान्यक इत्यर्थविवक्षाया-मेव सामञ्जस्यात् । संयोगादिसंबन्धसामान्ये घटत्वादिप्रति-योगिकत्ववाच्यत्वाद्यनुयोगिकत्वोभयाभावसत्त्वात् प्रथमस्वपदेन घटत्वाद्युपादानस्य मतद्वय [4]एव संभवात् तत्र स्वनिष्ठत्वसंयो-गादिसंबन्धावच्छिन्नत्वोभयाभाववद्वाच्यत्वादिवृत्तिप्रतियोगिता-वच्छेदकतासामान्यकत्वसाधनेनोद्देश्यसिद्धिः[5] ।

## कृष्णंभट्टीयम्

मानाभावादिति पाठः; पाठान्तरं तु क्रोडं व्याख्यायते––मूल इति । तत्त्वे साधकाभावात्, प्रतियोगितावच्छेकत्वप्रकारकत्वविशिष्टप्रमित्य-

1 भेदप्रतियोगितावच्छेदकत्वस्य––क.

2 वादिनोऽप्यननुमतत्वात्––क.

3 वाच्यत्वादिनिष्ठप्रतियोगितायामवच्छेदकत्वस्याभावः––क.

4 एवकारो नास्ति––अ.

5 अनन्तरं प्रतियोग्यवृत्तेश्चेति मूलस्य तथात्वे मानाभावादिति पूरणीयः इत्यधिकपाठः––अ. प्रतियोग्यवृत्तिश्च धर्मो न प्रतियोगितावच्छेदक इति मूलग्रन्थस्य तथात्वे मानाभावादिति शेषः––क.

भावात्, तादृशप्रमित्यविशेष्यत्वाद्वा। तादृशप्रमितेर्वा प्रतियोगितावच्छेदकतासाधकत्वेनैव हेतुघटकता। साधकत्वं च, अप्रामाण्यज्ञानाभावविशिष्टतन्निश्चयं प्रति जनकत्वम्। तच्च व्यवसायस्यानुव्यवसायजनकत्वात् नासिद्धम्। न च साधकाभावः तत्त्ववाद्यसिद्ध एवेति वाच्यम्। साधकमव्यवस्थाप्य [1]तदभावासिद्ध्युपन्यासे तद्वति विरोधस्याशक्यत्वात्। बाधवारणाय वाच्यत्वनिष्ठेति। द्वित्वावच्छिन्नप्रतियोगितासाधारणेन वाच्यत्वनिष्ठप्रतियोगितात्त्वेन निवेशात् न वक्ष्यमाणसिद्धसाधनप्रसङ्गः। घटत्वेन पटाद्यभावस्यानिरासभयादाह––समूहेति। न च धर्माणामानन्त्यात् तत्तद्धर्माणां पक्षीकृत्य प्रतियोगितावच्छेदकत्वाभावसाधनं दुर्घटमिति वाच्यम्। यावतां धर्माणामुपस्थितिः तावतामेव पक्षीकारात्। तेषु तत्साधनेनैव वादिविजयसंभवात्। अन्येषामप्रसिद्धतयैव परमते प्रतियोगितावच्छेदकत्वाप्रसक्तेः तद्व्यतिरेकसाधनानपेक्षणात्। मतान्तरमाह––तत्तदिति। रङ्गाद्यवृत्तेः रजतत्वादेः तन्निष्ठानवच्छेदकत्वं न संभवति, तन्निष्ठविषयतावच्छेदकत्वादतः प्रतियोगितेति। व्याप्तिप्रदर्शकः, व्याप्तिबोधकत्वाद् उदाहरणरूपः। ननु वीप्साद्यभावेन तद्ग्रन्थस्य न उदाहरणरूपत्वमत आह––वीप्साद्यभावेऽपीति। प्राथम्येन, न प्रतियोगितावच्छेदक [2]इत्येदपेक्षया प्रतियोग्यवृत्तिश्चेत्यस्य पूर्वमुच्चरितत्वेन। व्याप्यस्य वचनमिति न्यायात् प्रथमोच्चरितस्यैव उद्देश्यतावच्छेदकतया तद्वाक्याद् उद्देश्यविधेयभावमहिम्ना उद्देश्यतावच्छेदकीभूतप्रतियोग्यवृत्तित्वव्यापकत्वस्य प्रतियोगितानवच्छेदकत्वे [3]बोध इति व्याप्तिबोधकत्वाद् उदाहरणबोधकत्वमेतद्वाक्यस्याक्षतमेवेति। कारणत्वादि, घटकारणत्वादि। प्रतियोगितावच्छेदकत्वं विषयतानात्मकं स्वरूपसंबन्धविशेषः; विषयतावच्छेदकत्वं तु

[1] तदभावासिद्ध्युपन्यासेन वादिनिरोधस्याशक्यत्वात्––अ.

[2] इतिपदापेक्षया––अ.

[3] बोधकत्वाद् उदाहरणबोधकत्वमेतद्वाक्यस्य। व्याप्तिबोधकत्वादिति नास्ति ––अ.

तदात्मकं स इति भेदपक्षे विषयतावच्छेदकतायामवच्छेदकतात्वानुपगमाद् विषयताव्यधिकरणे रजतत्वादौ विषयतानवच्छेदकत्वसंभवात् नोक्तसामान्यव्याप्तिभङ्गः। अवच्छेदकतासंबन्धावच्छिन्नतदभावस्य विवक्षणात् नाप्रसिद्धिः। यद्वा यच्छब्देन घटत्वादेरुपादानसंभवाद् व्यभिचारवारणाय यत्पदार्थे किंचिद्धर्मावच्छिन्नत्वमावश्यकम्। एवं च विषयताया निरवच्छिन्नत्वपक्षे यत्पदेन नोपादानमिति तदनवच्छेदकत्वं यथाश्रुतमेव साध्यम्। एवमग्निमैवमित्यादिपङ्क्तिसङ्गतिरित्यत आह--ऐक्ये इति। आहुरित्यस्वरसबीजं च प्रतियोगिताया विशिष्य द्वित्वावच्छिन्नाया उपादाने व्यधिकरणधर्मावच्छिन्नाभावस्य न निराकरणसिद्धिः। व्यधिकरणधर्मावच्छिन्नप्रतियोगिता च असिद्धैवेति नोपादानसंभवः। वाच्यत्वनिष्ठप्रतियोगितात्वेन उपादानार्थं च यादृशाश्रयावृत्तित्वादिकं वाच्यम्। तथा च कारणत्वादेः न दृष्टान्तत्वनिर्वाह इति।

## गादाधरी

(१३५) **प्रतियोगितावच्छेदकविशिष्टप्रतियोगिज्ञानस्याभावज्ञानं प्रति हेतुत्वव्यवस्थापनम्।**

**ननु समवायितया वाच्यत्वं नास्तीत्याकारकः समवायित्वादेः वाच्यत्वादिनिष्ठप्रतियोगितावच्छेदकत्वावगाहिप्रत्यय एव मानमित्युक्तहेतोः असिद्ध्याशङ्कायामाह--तद्विशिष्टज्ञानस्येति।**

**अत्र च प्रतियोगितावच्छेदकविशिष्टप्रतियोगिज्ञानस्य अभावलौकिकप्रत्यक्षत्वावच्छिन्नहेतुत्वादित्यर्थः। यद्यपि अन्यथा घटनिर्विकल्पकानन्तरं [1]घटाभावप्रत्यक्षापत्तेरिति मूलदर्शितयुक्त्या वाच्यत्वं न समवायीति विशेषदर्शप्रतिबध्यवाच्यत्ववत्त्वावच्छिन्न-**

[1] घटाभावप्रत्ययापत्तेः--क.

**धर्मिकसमवायित्वप्रकारकज्ञानपर्यन्तापेक्षा समवायित्वावच्छिन्न-वाच्यत्वाभावप्रत्यक्षे नायाति। तथापि स्वतन्त्रमहानसीयत्व-वह्नित्वप्रकारकज्ञानात् महानसीयवह्निर्नास्तीति बुद्ध्यनुदयात् महानसीयवह्निर्नास्तीत्याद्यभावबुद्धौ [1]महानसीयत्वाद्यवच्छिन्नत्वेन वह्न्यादिनिष्ठप्रतियोगितावगाहिन्यां यथा महानसीयत्वप्रकारेण वह्नित्वाद्यवच्छिन्नविषयकं ज्ञानं हेतुः, तथा समवायितया वाच्यत्वं नास्तीत्यादिबुद्धेः वाच्यत्वादिनिष्ठप्रतियोगितायां समवायित्वाद्यवच्छिन्नत्वाद्यवगाहित्वे समवायित्वादिना वाच्य-त्वत्वाद्यवच्छिन्नधर्मिकज्ञानं [2]हेतुतया [3]अपेक्ष्यते। तथा च वाच्यत्वं न समवायीति विशेषदर्शनदशायामप्यनुभूयमाना [4]तदा-कारा प्रतीतिः कथमुपपद्यताम्[5]। [6]तत्र तस्या वाच्यत्वाद्यनुयोगिक-समवायित्वाभावावलम्बनत्वोपगमे [7]सर्वत्रैव तथात्वमुपेयतामिति गतं व्यधिकरणधर्मस्य प्रतियोगितावच्छेदकत्वेनेत्यभिप्राय इति मिश्राद्यनुसारिव्याख्यानम्।**

## कृष्णंभट्टीयम्

मानमिति। केचित्तुमते च अप्रयोजकत्वशङ्कावतारिका बोध्या। अत्र चेत्यस्य व्याख्यानमित्यनेनान्वयः।

1 महानसीयवह्नित्वावच्छिन्नत्वेन--क.

2 हेतुतयेति नास्ति--क.

3 अपेक्षितम्--क.

4 तथाकारा--क.

5 उपपद्यते--अ. उपपद्येत--क.

6 तत्रेति नास्ति--क.

7 विशेषदर्शनकाले--रा.

## गादाधरी

(१३६) मिश्रानुसारिव्याख्याने अनुपपत्तिशङ्का ।

तत्रेयमनुपपत्तिरवतरति--तद्धर्मावच्छिन्नतन्निष्ठप्रतियोगिताकाभावबुद्धौ तद्धर्मप्रकारकतज्ज्ञानत्वेन हेतुत्वासंभवः । घटत्वेन यत्किंचिद्घटज्ञानादपि यावद्घटप्रतियोगिकसामान्याभावबुद्ध्युत्पत्त्या व्यभिचारात् । संभवेऽपि वा दर्शितविशेषदर्शनकाले निर्धर्मितावच्छेदककवाच्यत्वादिधर्मिकसमवायित्वादिभ्रमसंभवेन व्यधिकरणधर्मावच्छिन्नाभावप्रतीतिनिर्वाहात् तादृशकारणताया [1]अकिंचित्करत्वम् । न च वह्नित्वधर्मितावच्छेदककमहानसीयत्वप्रकारकबुद्धिं विना [2]विशृङ्खलमहानसीयत्वप्रकारकज्ञानसत्त्वेऽपि महानसीयवह्नित्वाद्यवच्छिन्नाभावप्रत्यक्षानुत्पत्त्या तद्धर्मसमानाधिकरणतद्धर्मावच्छिन्नप्रतियोगिताकाभावबुद्धौ तद्धर्मावच्छिन्नधर्मिकतद्धर्मप्रकारज्ञानत्वेन हेतुता वाच्येति वाच्यत्वत्वावच्छिन्नधर्मिकसमवायित्वप्रकारकज्ञानं विना न समवायित्वावच्छिन्नवाच्यत्वत्वसमानाधिकरणप्रतियोगिताकाभावभानसंभव इति वाच्यम् । महानसीयवह्नित्वाद्यवच्छिन्नप्रतियोगितायां द्रव्यत्वादेरपि सामानाधिकरण्यादुक्तकार्यकारणभावोपगमे द्रव्यत्वाद्यवच्छिन्नधर्मिक[3]महानसीयत्वप्रकारकज्ञानस्यापि तादृशप्रतियोगिताकाभावबुद्धावपेक्षणीयत्वापत्तेः ।

[1] अकिंचित्करत्वात्--क.

[2] विशृङ्खलमहानसीयत्ववह्नित्वप्रकारकज्ञानसत्त्वेऽपि--क.

[3] महानसीयवह्नित्वप्रकारकज्ञानस्यापि--क.

**अथ तद्धर्मवद्वृत्तित्वेन भासमानप्रतियोगित्वे तद्धर्मावच्छिन्नत्वावगाहिन्यामभावबुद्धौ तद्धर्मावच्छिन्नधर्मिकतद्धर्मप्रकारकज्ञानत्वेन हेतुता। महानसीयवह्निर्नास्तीत्यत्र च वह्नित्वावच्छिन्ननिष्ठत्वेन संसर्गघटकतया भासमानप्रतियोगित्वे महानसीयत्वावच्छिन्नत्वं भासते, स्वावच्छिन्नवह्निवृत्तिप्रतियोगिताकत्वस्याभावांशे प्रतियोगिविशेषणतापन्नमहानसीयत्वस्य [1]संबन्धघटकत्वादिति तत्र वह्नित्वावच्छिन्नधर्मिकमहानसीयत्वप्रकारकज्ञानस्यापेक्षा; न तु धर्मान्तरावच्छिन्नधर्मिकस्य। धर्मान्तरविशेषितवह्निवृत्तित्वेन तत्र प्रतियोगिताया अभानादिति चेत्——तर्हि प्रतियोगितावच्छेदकप्रकारकज्ञानमन्तरेणापि अभावप्रत्यक्ष[2]सामान्यापत्तिः, प्रत्यक्षविशेष एव तद्धेतुतायाः स्वीकृतत्वात्। एवमपि अनतिप्रसङ्गेन प्रतियोगिविशेषिताभावबुद्धौ विशेषणतावच्छेदकप्रकारकज्ञानमुद्रया प्रतियोगितावच्छेदकप्रकारकज्ञानस्य हेतुत्वादेव निर्वाहेण स्वतन्त्रतद्धेतुताया निर्बीजत्वापाताच्च। अस्तु वैतादृशरीत्यैव हेतुहेतुमद्भावः। तथापि समवायितया वाच्यत्वं नास्तीत्यत्र वाच्यत्वत्वसामानाधिकरण्याविशेषितस्वावच्छिन्नप्रतियोगिताया एव समवायित्वसंसर्गघटकतया भानोपगमसंभवेन वाच्यत्वत्वावच्छिन्नधर्मिकसमवायित्वप्रकारकज्ञानस्य [3]तत्रानपेक्षणीयत्वमुपपद्यत इति।**

कृष्णंभट्टीयम्

सामान्याभावबुद्धेः सकलघटप्रतियोगिविषयकत्वमतानुरोधेनाह——संभवेऽपि वेति। [4]अपेक्षणीयत्वेति। महानसीयवह्निर्नास्तीति बुद्धिः कदापि

[1] संबन्धत्वादिति——क.  [2] बुद्धि——अ.  [3] अत्र——क.

[4] अपेक्षणीयतेति प्रतीकधारणम्——अ.

न स्यात् प्रतियोगितासमानाधिकरणधर्माणामानन्त्याद् इति भावः। तद्धर्मेति। तद्धर्मविषयतानिरूपितसामानाधिकरण्यविषयतानिरूपितप्रतियोगित्वविषयता[1]निरूपितावच्छिन्नत्वविषयतानिरूपकेत्यर्थः। अप्रसिद्धत्वात् नापत्तिरिति चेद् ब्रूयात् तदाप्याह--एवमिति। महानसीयवह्निर्नास्तीत्यादौ तद्धर्मसामानधिकरण्यं भासत [2]इति तदनुरोधेन तद्धर्मवद्वृत्तित्वेन भासमानप्रतियोगित्वे तद्धर्मावच्छिन्नत्वावगाहिप्रतीतौ तद्धर्मधर्मितावच्छेदककतद्धर्मप्रकारकज्ञानत्वेन हेतुता अस्तु। न तु सा समवायित्वेन वाच्यत्वं नास्तीत्यत्रापि कल्पयितुं शक्यते; संबन्धघटकतया भासमानप्रतियोगित्वे वाच्यत्वत्वसामानाधिकरण्यस्यैव अभानादित्याशयेन तत्र कारणीभूतज्ञानापेक्षां निराकरोति--अस्तु वेत्यादिना।

## गादाधरी

### (१३७) मिश्रानुसारिव्याख्याने अनुपपत्तिशङ्कायाः समाधानम्।

**अत्रेदं समाधानमवधेयम्[3]--तदुभयधर्मावच्छिन्नप्रतियोगिताकाभावबुद्धौ तदुभयैकतरधर्मावच्छिन्नधर्मिकतदितरप्रकारकज्ञानत्वेन हेतुता। समवायितया [4]वाच्यत्वाभावस्य व्यधिकरणसमानाधिकरणयोः समवायित्ववाच्यत्वत्वयोरुभयोरेव प्रतियोगितावच्छेदकत्वपर्याप्तिरवश्यमङ्गीकार्या। समवायित्वमात्रस्य प्रतियोगितावच्छेदकत्वे वाच्यत्वत्वप्रकारकज्ञानमन्तरेणापि तादृशाभाव-**

1 निरूपिततद्धर्मविषयतानिरूपितावच्छिन्नेत्यादि--अ.

2 न तु महानसीयो नास्तीत्यादौ--अ.

3 अवधेयम् इति नास्ति--क.

4 वाच्यत्वाभावस्य च--क.

प्रतीत्यापत्तेः। अत्र समवायितया वाच्यत्वं नास्तीति प्रतीत्या समवायित्ववाच्यत्वत्वोभयपर्याप्तप्रतियोगितावच्छेदकत्वानवगाहने तस्याः समवायिवाच्यत्ववदिदमिति भ्रमविरोधित्वानुपपत्तेश्च। तं प्रति समवायितया प्रमेयत्ववाच्यत्वोभयं नास्तीत्यादिनिश्चयव्यावृत्तेन तदुभयांशे प्रतियोगितावच्छेदकतापर्याप्त्यवगाहिनिश्चयत्वेनैव प्रतिबन्धकत्वात्। न च विलक्षणवाच्यत्वप्रकारतानिवेशेनैव[1] दर्शितनिश्चयव्यावृत्तिसंभवे तदुभयांशेऽवच्छेदकत्वपर्याप्त्यवगाहित्वमप्रयोजकमिति वाच्यम्। यतस्तद्धर्मेऽभावप्रतियोगितावच्छेदकत्वपर्याप्तिः तदवच्छिन्नस्याभावविरोधित्वप्रयोजिका [2]तत्र तदवगाहित्वमेवाभावबुद्धेः तदवच्छिन्नविशिष्टज्ञानप्रतिबन्धकतायां तन्त्रम्। समवायितया वाच्यत्वप्रमेयत्वोभयं नास्तीति [3]बुद्धेः समवायित्ववाच्यत्वत्वोभयविशिष्टवत्ताबुद्धयप्रतिबन्धकत्वे[4] उभयांशे प्रतियोगितावच्छेदकतापर्याप्त्यनवगाहित्वमेव बीजम्। तस्य च समवायितया वाच्यत्वं नास्तीति धीसाधारण्ये तस्यास्तादृशधीप्रतिबन्धकत्वम्[5]; न तु उक्तोभयाभावबुद्धेरिति विशेष एव नोपपद्यते[6]। यदि चैतस्याः प्रतीतेः प्रतिबन्धकत्वम्, नान्यस्या इत्यत्र विषयतावैचित्र्यमात्रं बीजमास्थीयते, तदा समानाधिकरणधर्मावच्छिन्नाभावविषयिण्या घटो नास्तीत्यादिबुद्धेरपि प्रतियोगिता-

[1] निवेशादेव––क.

[2] तत्रेति नास्ति––क.

[3] प्रतीतेः––क.

[4] अप्रतिबन्धकत्वेऽपि––क.

[5] तादृशविशिष्टधीप्रतिबन्धकत्वम्––क.

[6] नोपपद्यत इति––क.

**वच्छेदकत्वावगाहित्वं विलीयताम्। न हि तत्र घटत्वादिविशिष्टधीप्रतिबन्धकत्वानुरोधमन्तरेण युक्त्यन्तरं परिस्फुरति; स च भवतामकिंचित्कर एव; कपालसमवेतद्रव्यं नास्ति, नीलघटो नास्ति, इत्यादिप्रतीतिव्यावृत्तप्रकारताविशेषस्यैव तादृशधीप्रतिबन्धकताबीजत्वसंभवात्। तथा च तत्रैव समवायितया वाच्यत्वं नास्तीत्यादिव्यधिकरणधर्मावच्छिन्नाभावबुद्धावपि वाच्यत्वत्वांशे प्रतियोगितावच्छेदकत्वावगाहनमशक्यापह्नवमेवेति वाच्यत्वत्वाद्यवच्छिन्नधर्मिकसमवायित्वादिप्रकारकज्ञानमन्तरेण न तत्संभवः।**

कृष्णंभट्टीयम्

वाच्यत्वत्वप्रकारकज्ञानमन्तरेणापीति च अन्यथा निर्विकल्पकानन्तरमिति मूलस्य प्रकृतत्वसूचकम्। प्रकारताया एव पर्याप्तिरुपगम्यते लाघवात्, न तु प्रतियोगिविशेषणे अवच्छेदकतापि; तत्संबन्धस्वीकारे गौरवादित्याशङ्कते——न चेति।

## गादाधरी

**(१३८) प्रतियोगिविशेषणतापन्नस्यैव प्रतियोगितावच्छेदकत्वमिति निरूपणम्।**

**अथ यत्त्वतत्त्वाननुगमेन प्रतियोगितावच्छेदकभेदेन तत्प्रकारकज्ञानहेतुताभेदस्यावश्यकतया महानसीयत्ववह्नित्वादिरूपसमानाधिकरणधर्मावच्छिन्नाभावप्रत्यक्षं [1]प्रति एकधर्मावच्छिन्नविशेष्यकापरधर्मप्रकारकज्ञानत्वेन हेतुता वाच्या; न तु व्यधिकरणसमवायित्वसमानाधिकरणवाच्यत्वत्वाद्युभयधर्मावच्छिन्न-**

[1] प्रत्येव—अ, क.

**प्रतियोगिताकाभावप्रत्यक्षे । समवायित्वाद्यवच्छिन्नप्रतियोगिताकाभावप्रत्यक्षत्वावच्छिन्नं प्रति[1] समवायित्वादिप्रकारकज्ञानत्वेन क्लृप्तकारणतयैव तन्निर्वाहान्न[2] तत्र वाच्यत्वत्वावच्छिन्नधर्मिकसमवायित्वप्रकारकज्ञानापेक्षेति चेन्न । प्रतियोगिविशेषणतापन्नस्यैव प्रतियोगितावच्छेदकत्वमभावप्रतीत्या अवगाह्यते, न तु स्वातन्त्र्येणेति नियमेन, समवायिवाच्यत्वं नास्तीत्याद्याकारिकाया एव व्यधिकरणधर्मावच्छिन्नाभावप्रतीतेरुपगन्तव्यतया समवायित्वविशिष्टवाच्यत्वत्वावच्छिन्नवैशिष्ट्यावगाहिन्यां तादृशबुद्धौ [3]च वाच्यत्वं समवायीति विशेषणतावच्छेदकविशिष्टविशेषणज्ञानस्यापेक्षितत्वेन[4] विशकलितसमवायित्वादिप्रकारकज्ञानदशायां तादृशाभावप्रत्यक्षस्य अनुत्पत्त्या तदानीं तदापत्तिवारणाय तादृशाभावप्रत्यक्षेऽपि वाच्यत्वत्वाद्यवच्छिन्नधर्मिकसमवायित्वादिप्रकारकज्ञानस्य हेतुताया[5] आवश्यकत्वादिति ।**

## कृष्णंभट्टीयम्

अपेक्षितत्वेनेति । अन्यथा वाच्यत्वं समवायीति ज्ञानं विनापि स्वरूपादिसंबन्धेन समवायिवाच्यत्ववदिदमिति प्रत्ययापत्तेरित्यनुपदं स्फुटम् ।

1 प्रत्यक्षं प्रति––क.

2 तन्निर्वाहादिति न––क.

3 चकारो नास्ति तत्स्थाने तुकारः––क.

4 अपेक्षिततया––क. दण्डो नास्ति रक्तो नास्ति इत्यादिज्ञानदशायां नियमतो रक्तदण्डो नास्तीत्यादिज्ञानोत्पादविरह एव विशिष्टवैशिष्ट्यबोधे विशेषणतावच्छेदकप्रकारकविशेषणधीहेतुताकल्पकः––ख.

5 ज्ञानहेतुताया––क.

दीधितिः

तद्विशिष्टेति । विशेषणतावच्छेदकविशिष्टज्ञानस्य विशिष्टवैशिष्ट्यप्रत्ययहेतुत्वात् ।

अभावप्रत्ययो हि घटत्वादिविशिष्टस्य घटादेः प्रतियोगित्वमवगाहमानो विशेषणस्यापि घटत्वादेः तदवच्छेदकत्वमवगाहते, न स्वातन्त्र्येण; घटो नास्तीत्येव प्रतीतेः । तदिहाभावप्रत्ययो यदि व्यधिकरणधर्मेणावच्छिन्नं प्रतियोगिनं नावगाहते, नावगाहत एव तदा तस्यापि प्रतियोगितावच्छेदकत्वम् । अथावगाहते तर्हि भ्रम एव; न च ततोऽर्थसिद्धिरिति भावः ।

## गादाधरी

(१३९) **विशेषणतावच्छेदकप्रकारकज्ञानस्य विशिष्टवैशिष्ट्यधीहेतुत्वनिरूपणम् ।**

**अत्र च विशिष्टवैशिष्ट्यबोधं प्रति विशेषणतावच्छेदकप्रकारकधीहेतुत्वमनङ्गीकुर्वतां घटत्वादिनिर्विकल्पकाद् घटो नास्तीत्यादिप्रत्ययस्येव[1] निर्धर्मितावच्छेदककसमवायित्वादिप्रकारकज्ञानादपि समवायित्वावच्छिन्नवाच्यत्वाद्यभावविषयकस्य समवायिवाच्यत्वं नास्तीत्यादिप्रत्ययस्यो[2]पगमसंभवाद्[3] वाच्यत्वत्वाद्यवच्छिन्नधर्मिकसमवायित्वादिप्रकारकज्ञानत्वेन[4] प्रतियो-**

1 प्रत्यक्षस्येव––क.

2 प्रत्यक्षस्य––क.

3 'घटत्वादिप्रकारकज्ञानत्वेन' इति संभवादित्यनन्तरमधिकपाठः––अ.

4 ज्ञानत्वेन च––क, अ.

**गिज्ञानस्याभावप्रत्यक्षहेतुता न सिद्ध्यतीति विशिष्टवैशिष्ट्यबोधे विशेषणतावच्छेदकप्रकारकज्ञानहेतुतामतमाश्रित्यैवोक्तरीत्या [[1]अभावलौकिकत्वावच्छिन्नहेतुभूतप्रतियोगितावच्छेदकविशिष्टप्रतियोगिज्ञानरूपकारणबाधपरतया] मूलं व्याख्येयम् । तच्चानुचितम् । उक्तविशेषकारणताकल्पनोपजीव्यविशिष्टवैशिष्ट्यबोधसामान्यहेतुताश्रयविशेषणतावच्छेदकविशिष्टज्ञाना[2]भावस्यैव दर्शयितुमुचितत्वात् । अतो मूले हेतुत्वादित्यस्यापेक्षणीयत्वादित्यर्थ इत्याशयेन प्रतियोगितावच्छेदकविशिष्टप्रतियोगिज्ञानस्याभावधिया अपेक्षणे विशिष्टवैशिष्ट्यबोधे[3] विशेषणतावच्छेदकविशिष्टविशेषणज्ञानहेतुत्वमेव हेतुत्वेनाभिमतम् । तथा च जन्यताया अभावविषयकत्वावच्छिन्नत्वमविवक्षितम्[4] । विशेषणतावच्छेदकविशिष्टविशेषणज्ञानस्य विशिष्टवैशिष्ट्यबोधत्वावच्छिन्नाभाव-**

1 [ ] अभावलौकिकत्वावच्छिन्नं प्रति प्रतियोगितावच्छेदकविशिष्टप्रतियोगिज्ञानस्य कारणतया तादृशकारणबाधेन व्यधिकरणधर्मावच्छिन्नाभावाप्रत्ययादिति परतया—अ. इति परतयेति नास्ति—क.

2 ज्ञानस्यैव इति । अभावस्य इति नास्ति—अ.

3 विशेषणान्तररक्तत्वादिविशेष्यतापन्नदण्डादिप्रकारकं ज्ञानं द्विविधम्—रक्तत्वाद्यवच्छिन्नप्रतियोगिकत्वेन दण्डादिवैशिष्ट्यावगाहि, तद्रूपानवच्छिन्नतद्वैशिष्ट्यावगाहि च । तादृशविशिष्टप्रतियोगिकत्वं च दण्डादिप्रकारतानिरूपकसंसर्गतायामवच्छेदकतया भासते, तद्विशिष्टसंयोगादेरेव दण्डादिसंसर्गतया भानात् । दण्डादिविशेषणतापन्नरक्तत्वादेरेव वा स्वावच्छिन्नप्रतियोगिकसंयोगात्मकपरंपरासंबन्धेन पुरुषादौ प्रकारता । तादृशे विशिष्टवैशिष्ट्यबोधे एव विशेषणतावच्छेदकप्रकारकधीः कारणम्, न तु विशिष्टविशेषणावगाहिन्यपि । रक्तत्वादिकं वैशिष्ट्यप्रतियोगिन्युपलक्षणतयावगाहमाने द्वितीयबोधे यद्यपि विशिष्टविशेषणावगाहिज्ञानमात्र एव विशिष्टज्ञानापेक्षायां मणिकारादेः स्वरसः । तथापि दीधितिकारादीनां दर्शितविशेषादरः । इति भट्टाचार्येणानुमितिप्रकरणे सूक्ष्मतरमुपपादितमत्रानुसन्धेयम्—स्व.

4 अनिवेश्यमेवेति—अ. अविवक्ष्यम्—क.

**धीनिष्ठजन्यताप्रतियोगिभूतस्याभावेन समवायितया वाच्यत्वं नास्तीत्यादिप्रतीतेः व्यधिकरणधर्मावच्छिन्नाभावावगाहित्वासंभव इत्यर्थपरतया तद्व्याख्यानमेवोचितम्; न तु विशिष्टवैशिष्ट्यबोधहेतुतामुपजीव्य कल्प्यहेतुत्वान्तरपरतया इत्याशयेनाह——दीधितौ विशेषणतावच्छेदकेति। अयं भावः——वाच्यत्वं समवायीति ज्ञानमन्तरेण समवायिवाच्यत्ववानयमिति विशिष्टवैशिष्ट्यबोधानुत्पत्त्या वाच्यत्वत्वावच्छिन्ननिरूपितत्वेन भासमानवैशिष्ट्ये समवायित्वावच्छिन्ननिरूपितत्वावगाहिनि ज्ञाने वाच्यत्वत्वावच्छिन्नधर्मिकसमवायित्वादिप्रकारकज्ञानत्वेन हेतुताकल्पनमावश्यकम्। [1]समवायिवाच्यत्वं नास्तीति व्यधिकरणधर्मावच्छिन्नबुद्धे[2]रपि वाच्यत्वत्वावच्छिन्नीयत्वेन भासमानेऽनुयोगितारूपवैशिष्ट्ये समवायित्वावच्छिन्नीयत्वावगाहितया तत्र तादृशज्ञानमवश्यापेक्षणीयमिति।**

कृष्णंभट्टीयम्

कल्प्यहेतुत्वान्तरेति। इदानीमापाततः तदुपेत्य अग्रे वस्तुतस्त्वित्यादिना तस्य दूषणीयत्वात्।

## गादाधरी

(१४०) **अभावबुद्धेर्विशिष्टवैशिष्ट्यावगाहित्वसमर्थनम्।**

**ननु वैशिष्ट्यांशे वाच्यत्वत्वनिष्ठधर्मितावच्छेदकतानिरूपकविशेषणतापन्नसमवायित्वावच्छिन्नप्रतियोगिताकत्वावगाहि-**

[1] समवायितया वाच्यत्वम्——अ.

[2] बुद्धौ इति पाठः। अपिशब्दो नास्ति——अ.

बुद्धावेव तदवच्छिन्नधर्मिकसमवायित्वप्रकारकज्ञानं हेतुः। व्यधिकरणधर्मावच्छिन्नाभावबुद्धौ च वाच्यत्वत्वावच्छिन्ने समवायित्वस्य विशेषणत्वं नोपेयते; अपि तु तद्विशेषणतानापन्नस्यैव। तस्य स्वावच्छिन्नप्रतियोगिताकत्वसंबन्धेनाभावांशे विशेषणत्वमुपेयते। वाच्यत्वसंसर्गतावच्छेदकतयैव वा तथाविधतदवच्छिन्नत्वस्य प्रतियोगितांशे भानमुपेयते। तथा च तत्र नोपदर्शितज्ञानापेक्षेत्याशङ्कां परिजिहीर्षुर्भावं व्याचष्टे--अभावप्रत्ययो हीति। विशेषणस्य--प्रतियोगिघटादिनिरूपितविशेषणतापन्नस्य घटत्वादेः। प्रतियोगितावच्छेदकत्वमवगाहते--प्रतियोगितया भासमानघटादिनिरूपितविशेषणतावच्छिन्ना या स्वावच्छिन्नप्रतियोगिताकत्वसंबन्धावच्छिन्ना घटत्वादिनिष्ठप्रकारता तच्छाली भवतीति यावत्। न तु स्वातन्त्र्येण--प्रतियोग्यविशेषणत्वेन घटत्वादेः प्रतियोगितावच्छेदकत्वमवगाहते इत्यनुषङ्गेणान्वयः। तादृशसंबन्धावच्छिन्नघटत्वादिनिष्ठप्रकारता प्रतियोगिनिरूपितप्रकारतानवच्छिन्ना न भवतीत्यर्थः। घटो नास्तीत्येवेति। अभावांशे स्वातन्त्र्येण घटत्वादिवैशिष्ट्योल्लेखरहिताया एवेत्यर्थः। प्रतीतेः--अनुभवादिति शेषः। एतावता किमायतमित्यत[1] आह--तदिहेति। अवच्छिन्नम्--विशेषितम्। तस्यापि प्रतियोगितावच्छेदकत्वम्--तस्य प्रतियोगितावच्छेदकत्वमपि। तथा च मानाभावेन व्यधिकरणधर्मस्य प्रतियोगितावच्छेदकत्वासिद्धिरिति भावः।

अथ व्यधिकरणधर्मस्य प्रतियोगिविशेषणतयैव व्यधिकरणधर्मावच्छिन्नाभावबुद्धौ भानमुपेयते। न[2] चैवं तादृशबुद्धेः समवायि-

[1] किमायातमत आह--अ.  [2] न चैवं सति--अ.

त्वादिरूपविशेषणतावच्छेदकप्रकारकवाच्यत्वादिज्ञानजन्यतावच्छेदकाक्रान्ततया तादृशज्ञानं विना व्यधिकरणधर्मावच्छिन्नाभावबुद्ध्यनुपपत्तिरिति वाच्यम्। भ्रमात्मकतादृशज्ञानदशायामेव तद्बुद्ध्युपगमात्। विशेषदर्शनदशायामपि आहार्यतत्प्रकारकज्ञानादेव तद्बुद्धिसंभवात्। अनाहार्यस्यैव विशेषणतावच्छेदकप्रकारकज्ञानस्य विशिष्टवैशिष्ट्यप्रत्ययहेतुत्वे विशेषदर्शनकालीनायाः समवायितया वाच्यत्वं नास्तीत्यादिबुद्धेरगत्या वाच्यत्वाद्यधिकरणकसमवायित्वाद्यभावावगाहित्वमुपेयते। वाच्यत्वं समवायीत्यादिभ्रमानन्तरं समवायिवाच्यत्वं नास्तीत्याकारकप्रत्यय एव व्यधिकरणधर्मस्य प्रतियोगितावच्छेदकत्वे मानमास्ताम्। तत्र तदवगाहितायाः सर्वानुभवसिद्धत्वेनापह्नोतुमशक्यत्वात्। तादृशप्रतितेर्वाच्यत्वे समवायित्वाभावावगाहित्वोपगमे तत्पूर्वं वाच्यत्वं समवायीति भ्रमापेक्षानुपपत्तेरित्याशयेनाशङ्कते—अथावगाहत इति। समाधत्ते—तर्हि भ्रम एवेति। व्यधिकरणधर्मस्य प्रतियोगितावच्छेदकत्वांशे भ्रम एवेत्यर्थः। वैशिष्ट्यभान एवावच्छेदकताया भानादवच्छेदकताया वैशिष्ट्यनियततया तद्बाधे तस्या अपि बाधादिति भावः।

न चैवं[1] गवि शशशृङ्गं नास्तीति प्रतीतेरसिद्धेरिति मूलासङ्गतिः। तादृशप्रतीतेः शृङ्गांशे शशियत्वावगाहित्वानभ्युपगमे शशीयत्वे शृङ्गनिष्ठप्रतियोगितावच्छेदकत्वावगाहनासंभवः[2]। तदवगाहित्वे भ्रमत्व[3]मित्युभयथापि व्यधिकरणधर्मावच्छिन्ना-

[1] न चैवं सति—अ. [2] असंभवात्—अ. [3] भ्रमत्वात्—अ.

**भावासाधकत्वात् तादृशप्रतीतिनिराकरणस्यानुपयुक्तत्वादिति वाच्यम् । अभ्रान्तानामपि गवि शशशृङ्गं नास्तीति व्यवहारमूलप्रतीतिसत्त्वेन उक्तनियमस्यैवासिद्धया व्यधिकरणधर्मावच्छिन्नाभावसिद्धिर्निष्प्रत्यूहैव । तादृशप्रतीतेर्गोशृङ्गाधिकरणकशशीयत्वाभावावगाहित्वोपगमे तस्याः गवाधिकरणकाभावावगाहितानुभवविरोध इत्याशङ्कामुत्थाप्याभ्रान्तपुरुषीयगवाधिकरणकाभावावगाहितादृशभावप्रतीतिनिराकरणपरतया तद्ग्रन्थस्यावतरणीयत्वात् । नन्वभ्रान्तानां गवि शशशृङ्गं नास्तीति प्रतीतिर्मा भूत्; शशशृङ्गं नास्तीति प्रतीतिर्नापह्नोतुं शक्यते । सर्वेषामेव तथाविधव्यवहारदर्शनादित्याशङ्कायां शशशृङ्गं नास्तीत्यादिमूलावतारो बोध्यः। यद्यपि शशशृङ्गं नास्तीति शब्देन शशे शृङ्गाभाव इत्याकारकः शाब्दबोधो न शक्यते जनयितुम्। अनुयोगिवाचकपदोत्तरं सप्तमीविरहेण निराकाङ्क्षत्वात्। तथापि पदार्थोपस्थित्यादिमूलकतादृशमानसबोधजननेच्छया व्युत्पन्नानां तथा प्रयोग इत्याशयः ।**

कृष्णंभट्टीयम्

व्यधिकरणेति । शशीयत्वेन शृङ्गं नास्तीत्यादिबुद्धौ। ननु शृङ्गं न शशीयमिति बाधकाले व्यधिकरणधर्मावच्छिन्नप्रतीत्यपलापे सर्वत्रैव तदपलापसंभवात् तत्र तस्य निर्युक्तिकत्वापत्तिरत आह––विशेषेति । अत्र अनाहार्यत्वमपि कारणतावच्छेदके निवेश्यम् । अन्यथा रक्तो दण्ड इत्याहार्यनिश्चयोत्तरं रक्तारक्तदण्डो नास्तीति संशयात्मकविशिष्टवैशिष्टयबोधापत्तेः। न च तत्र तन्निवेशे शङ्खो न पीत इति विशेषदर्शनदशायां प्रतारकेण इह पीतः शङ्खो नास्ति किन्तु द्वीपान्तरे इति वाक्यं कथं प्रयुज्येत। विशिष्टवाक्यार्थमजानानस्य वाक्यरचनाया असंभवात्। अनाहार्यवाक्यार्थज्ञाने विशेषदर्शनस्य विरोधित्वादिति वाच्यम् । विशिष्ट-

वाक्यार्थमबुद्ध्वापि तत्प्रकारकतद्विशेष्यकज्ञानत्वेन वाक्यार्थं ज्ञात्वा परकीयतादृशज्ञानेच्छया प्रतारकस्य तादृशवाक्यप्रयोगसंभवाद् इत्यभिप्रेत्याह—[1]अनाहार्यस्येति। अगत्येति सर्वत्र तदपलापनिराकरणम्। अवच्छेदकताया इति। तन्निष्ठप्रतियोगितावच्छेदकतायास्तदनुयोगिकवैशिष्टयप्रतियोगिताव्याप्यत्वादित्यर्थः[2]।

असमानाधिकरणैरवच्छिन्ना न केचन।
अतोऽत्र दूषिताः सर्वास्तादृश्यः प्रतियोगिताः॥
पराङ्गनापाङ्गभिन्नाः स्वा इवान्ये न रेमिरे।
असमानाधिकरणैराच्छिन्ना[3] अपि सेहिरे॥
नित्यदुष्टा [4]विषयिता असमानाश्रयैर्यदि।
[5]आच्छिन्नास्तत्कोविदैस्ताः प्रामाण्याद् विनिर्वातिताः॥

[6]इति आरडोपाह्वमहामहोपाध्यायकृष्णंभट्टविरचिते गादाधरीव्याख्याने व्यधिकरणधर्मावच्छिन्नाभावखण्डनविवरणम्।

## गादाधरी

(१४१) **प्रतियोगिविशेषणतापन्नस्यैव प्रतियोगितावच्छेदकत्वधीरितिनियमखण्डनम्।**

**ननु घटत्वेन घटो नास्तीत्याकारकस्याभावप्रत्ययस्यानुभाविकतया प्रतियोगिविशेषणतापन्नस्यैव प्रतियोगितावच्छेदकत्वम-**

1 अनाहार्यस्यैवेति—अ.

2 अनन्तरम् इत्यारडोपाह्वकृष्णंभट्टकृतव्यधिकरणधर्मावच्छिन्नाभावग्रन्थस्य विवृतिः—अ.

3 आच्छन्ना—अ.

4 विषयता—अ.

5 आच्छन्ना—अ.

6 एतादृशपाठः नास्ति—अ.

भावप्रत्ययोऽवगाहते इति न नियमः। तादृशप्रतीत्या स्वातन्त्र्येण भासमाने [1]घटत्वादौ प्रतियोगितावच्छेदकत्वावगाहनात्। अन्यथा घटत्वेनेत्याकारकतानुपपत्तेः। तथा च घटत्वेन पटो नास्तीत्यादावपि [[2]घटत्वादौ पटादिनिष्ठप्रतियोगितावच्छेदकत्वावगाहनं] निराबाधमेवेति व्यधिकरणधर्मावच्छिन्नाभावसिद्धिर्निष्प्रत्युहैव। न च तत्र व्यधिकरणधर्मस्यावच्छेदकत्वावगाहनसंभवेऽपि [3]अतिरिक्ताभावकल्पनागौरवभयेन तादृशप्रतीतेः पटाद्यधिकरणकघटत्वाद्यभावावगाहित्वमेव स्वीक्रियत इति वाच्यम्। असति बाधके तच्छब्दोल्लेखिप्रतीतेः तच्छब्दप्रतिपाद्यार्थविषयकत्वापरित्यागात् पटाद्यधिकरणकघटत्वाद्यभावस्य च घटत्वेन पटो नास्तीत्यादिशब्दात्कथमप्यप्रतीतेः प्रतीतिबलात्पदार्थान्तरसिद्धौ तत्पदार्थकल्पनागौरवस्य फलमुखत्वेनाबाधकत्वात्। न च प्रतियोगितावच्छेदकविशिष्टप्रतियोगिज्ञानरूपकारणबाधेन तादृशप्रतीतेर्व्यधिकरणधर्मावच्छिन्नाभावावगाहिता न संभवतीति युक्तम्। पटत्वावच्छिन्नधर्मिकघटत्वादिप्रकारकज्ञानत्वेन प्रतियोगिज्ञानहेतुतायां मानाभावात्। तादृशज्ञानं विनैव घटत्वेन पटो नास्तीत्याकारकस्य घटत्वादिविशिष्टपटादिवैशिष्ट्यानवगाहिनोऽभावप्रत्यक्षस्य स्वीकारात्।

## गादाधरी

(१४२) प्रतियोगितावच्छेदकविशिष्टप्रतियोगिज्ञानस्याभावधीहेतुत्वखण्डनपूर्वकं व्यधिकरणधर्मावच्छिन्नाभावसाधनम्।

[1] समानाधिकरणघटत्वादौ—अ.

[2] [ ] घटत्वावच्छिन्नपटादिनिष्ठप्रतियोगितावगाहनम्—अ.

[3] अतिरिक्ताभावविषयकत्वकल्पनागौरवभयेन—अ.

वस्तुतस्तु—कुत्राप्यभावबुद्धौ स्वातन्त्र्येण प्रतियोगितावच्छेदकविशिष्टप्रतियोगिज्ञानस्य न हेतुतास्ति। न च तदकल्पने प्रतियोगिज्ञानशून्यकाले नास्तीत्याकारकप्रतियोग्यविषयकाभावप्रत्यक्षस्य, घटत्वादिनिर्विकल्पकानन्तरं विशेष्ये विशेषणमिति रीत्या घटाभावप्रत्यक्षस्य चापत्तिरिति वाच्यम्। प्रतियोगिज्ञानहेतुतामतेऽपि [1]घटाभावे प्रतियोगितया घटादिरूपप्रतियोगिज्ञानविरोधिबाधादिग्रहसत्त्वे प्रतियोग्यविषयकाभावग्रहापत्तेर्दुर्वारत्वात्। यदि च निर्धर्मितावच्छेदकप्रतियोगिभाने बाधकाभावात् प्रतियोग्यविषयकाभावप्रत्ययो नापादयितुं शक्यते; [2]तदापि तादृशबाधदशायां प्रतियोगिधर्मितावच्छेदकतानापन्नाभावत्वप्रकारकस्य स्वातन्त्र्येण प्रतियोगिविषयकस्य 'नास्ति, घटीयश्च' इत्याद्याकारकसमहालम्बनप्रत्यक्षस्यापत्तिः। एवं घटत्वावच्छिन्नप्रतियोगिताकाभावस्य यदा भानं तदा निर्विकल्पकोपस्थितद्रव्यत्वादेः विशेष्ये विशेषणमिति रीत्या घटाद्यंशे भानापत्तिः कारणबाधेन न शक्यते वारयितुम्। तादृशाभावस्य द्रव्यत्वावच्छिन्नप्रतियोगिताकत्वविरहेण तद्भाने द्रव्यत्वादिप्रकारकज्ञानस्यानपेक्षणात्। यदि च यादृशप्रकारतावच्छिन्नधर्मे स्वावच्छिन्नप्रतियोगिताकत्वसंबन्धावच्छिन्नधर्म्यन्तरनिरूपितप्रकारता तदन्यप्रकारतानिरूपितविशेष्यतापन्नविशेषणविषयतानिरूपितसंसर्गतासंबन्धेन भानं प्रति अभावीयानुयोगिताविशेषभेदस्य कारणतां कल्पयित्वा ईदृशापत्तिः, प्रतियोगिप्रकारतानिरूपितधर्मितावच्छेदकतापन्नावृत्तिप्रकारताविशेषसंबन्धेन लौकिकप्रत्यक्षं प्रत्यभावत्वभेदस्य कारणतां कल्पयित्वा

[1] अभावे इत्येव पाठः—अ. [2] तथापि—अ.

च पूर्वापत्तिश्च वार्यते, तदा तावतैव सकलापत्तिवारणादलं प्रतियोगिज्ञानहेतुतया ।

न चैवमपि प्रतियोग्यविषयकस्य अभावत्वाप्रकारकप्रत्ययस्यापत्तिर्विना प्रतियोगिज्ञानहेतुतां न शक्यते वारयितुमिति वाच्यम् । प्रतियोगिज्ञानं विना प्रतियोग्यविषयकस्य इदंत्वादिना अभावप्रत्यक्षस्य इदंत्वादिरूपतादृशविशेषणज्ञानासत्त्वे च तादृशाभावनिर्विकल्पकस्येष्टत्वात् । अभावनिर्विकल्पकानभ्युपगमे प्रतियोगिज्ञानहेतुतयापि तद्वारणासंभवात् । इदंत्वादिना अभावप्रत्यक्षे व्यभिचारवारणायाभावत्वप्रकारकाभावप्रत्यक्षं प्रत्येव प्रतियोगिज्ञानस्य हेतुताया वाच्यत्वाद् विशेषणानवच्छिन्नविषयतासंबन्धेन प्रत्यक्षं प्रति अभावभेदस्य हेतुतां स्वीकृत्य तद्वारणे च मयापि तस्य तथैव वारणीयत्वात् ।

वस्तुतस्तु—अपाद्याप्रसिद्ध्यैव तादृशफलापत्त्यनवकाशः । प्रसिद्धाया घटो नास्तीत्यादिबुद्धेर्घटत्वादिविशिष्टवैशिष्ट्यावगाहितया तत्र प्रतियोगितावच्छेदकघटत्वादिप्रकारकज्ञानस्य विशेषणतावच्छेदकप्रकारकज्ञानविधया हेतुतायाः क्लृप्तत्वात् तादृशकारणविरहादेव न तच्छून्यकाले तदापत्तिः ।

दीधितिः

यदि पुनरानुभाविको लोकानां स्वरसवाही घटत्वेन पटो नास्तीत्यादिप्रत्ययः, तदा तादृशाभाववारणं गीर्वाणगुरूणामप्यशक्यमिति मन्तव्यम् ॥

इति श्रीमद्रघुनाथभट्टाचार्यशिरोमणिविरचितायां तत्त्वचिन्तामणिव्याख्यायां दीधित्यपराख्यायां व्यधिकरणधर्मावच्छिन्नाभावविचारः समाप्तः ।।

## गादाधरी

(१४३) **मिश्रोक्तव्यधिकरणधर्मावच्छिन्नाभावनिराकरणप्रकारस्य खण्डनपूर्वकं तादृशाभावस्थापनम् ।**

**यस्तु--अनाहार्यप्रतियोगितावच्छेदकविशिष्टप्रकारकोपलम्भविरहो विशेष्यीभूतधर्मिप्रत्यासन्नोऽभावग्रहे हेतुः । तथा च यस्य पुंसः समवायित्वादिविशिष्टवाच्यत्वादिप्रकारकोऽनाहार्यभ्रमोऽप्रसिद्धः, तदीयः समवायितया वाच्यत्वं नास्तीत्याकारकप्रत्ययो न व्यधिकरणधर्मावच्छिन्नाभावमवगाहितुमीष्टे । तदीयतादृशप्रतियोग्युपलम्भविरहरूपतदीयाभावप्रत्यक्षकारणस्याप्रसिद्धेरिति तत्पुरुषीयतादृशप्रत्ययस्य वाच्यत्वाद्यनुयोगिकसमवायित्वाद्यभावविषयकत्वावश्यकत्वे सर्वत्रैव तद्विषयकत्वमुचितम् । एकाकारप्रतीतेः पुरुषभेदेन विषयतावैचित्र्यविरहादिति मिश्रोक्तो व्यधिकरणधर्मावच्छिन्नाभावनिराकरणस्य पन्थाः--सोऽपि न साधीयान् । अभावबुद्धौ स्वप्रतियोगितावच्छेदकविशिष्टस्वप्रतियोग्युपलम्भाभावत्वेन एककारणतायाः स्वत्वाननुगमेन दुर्वचतया विशिष्य कारणताकल्पनस्यावश्यकत्वे, यत्र तादृशोपलम्भः प्रसिद्धः तत्रैव तादृशोपलम्भानन्तरमभावप्रत्ययवारणाय तदभावहेतुत्वोपगमात् व्यधिकरणधर्मावच्छिन्नाभावबुद्धौ क्वचिदप्रसिद्ध्या तदभावहेतुत्वासंभवेऽपि सन्निकर्षादिघटितसामग्रीतः तदुत्पत्तौ बाधकाभाव इत्यत आह--यदि पुनरिति । स्वरसवाही--विवादशून्यः ।**

घटत्वेन घटो नास्तीति पाठः; घटत्वेन पटो नास्तीति पाठो न साधुः; तादृशप्रतीतेः पटाद्यनुयोगिकघटत्वाद्यभावावगाहिताया एव व्यधिकरणधर्मावच्छिन्नाभावानभ्युपगन्तृभिरुपगमात् प्रतियोगिविशेषणतापन्नस्यैव प्रतियोगितावच्छेदकत्वं भासत इति नियमस्य तदाकारप्रतीतिबलेना[1]शक्यवारणत्वात् । आनुभाविक इत्यस्य व्यधिकरणधर्मस्यावच्छेदकत्वावगाहितया अनुभवसिद्ध इत्यर्थकतया वा कथंचित् सङ्गमनीयः । [2]गीर्वाणगुरूणामपि न शक्यमित्यनेन प्रतीतिकारणबाधेन तादृशाभावनिराकरण[3]निर्भरा मिश्रादय आक्षिप्ताः । यदि तदेत्यनेन तादृशप्रतीतेरानुभाविकत्वे विवादं प्रदर्श्य तादृशाभावस्यापारमार्थिकत्वं सूचितम् ।।

इति महामहोपाध्यायगदाधरभट्टाचार्यचक्रवर्तिविरचिते तत्त्वचिन्तामणिदीधितिव्याख्याने व्यधिकरणधर्मावच्छिन्नाभावखण्डनम् ।।

**चतुर्दशलक्षणी समाप्ता ।।**

---

[1] अशक्यवारणात्––अ.

[2] गीर्वाणगुरूणामप्यशक्यमित्यनेन––अ. अशक्यमिति दीधितिपाठमनुसृत्य–स्व.

[3] प्रवृत्ताः––अ. निराकरणवन्तः––क.